श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# श्रीमन्महैतरेयोपनिषद्भाष्यम्

## श्रीभगवन्तरायविरचितभावप्रदीपाख्यव्याख्योपबृंहितम्

नवदेहलीस्थराष्ट्रियसंस्कृतसंस्थानेन विद्यावारिधिः (Ph.D.)
इत्युपाधिप्रदानेन सम्मानितोऽयं शोधप्रबन्धः



[redacted]




मार्गदर्शकः
डा. ए.वि. नागसम्पिगे
निदेशकः, पूर्णप्रज्ञसंशोधनमन्दिरम्, बेङ्गलूरु
सम्पादकः
डा. प्रह्लादाचार्यः जोषि

२०१८

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# श्रीमन्महैतरेयोपनिषद्भाष्यम्

## श्रीभगवन्तरायविरचितभावप्रदीपाख्यव्याख्योपबृंहितम्

नवदेहलीस्थराष्ट्रियसंस्कृतसंस्थानेन विद्यावारिधिः (Ph.D.)
इत्युपाधिप्रदानेन सम्मानितोऽयं शोधप्रबन्धः


मार्गदर्शकः

डा. ए.वि. नागसम्पिगे

निदेशकः, पूर्णप्रज्ञसंशोधनमन्दिरम्, बेङ्गलूरु

सम्पादकः

डा. प्रह्लादाचार्यः जोषि



प्रकाशनम्

पूर्णप्रज्ञसंशोधनट्रस्ट्

पूर्णप्रज्ञसंशोधनमन्दिरम्, पूर्णप्रज्ञविद्यापीठम्,

बेङ्गलूरु - ५६००२८

२०१८

श्रीविश्वेशतीर्थग्रन्थमाला - १९

# श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# श्रीमन्महैतरेयोपनिषद्भाष्यम्

## श्रीभगवन्तरायविरचितभावप्रदीपाख्यव्याख्योपबृंहितम्

नवदेहलीस्थराष्ट्रियसंस्कृतसंस्थानेन विद्यावारिधिः (Ph.D.) इत्युपाधिप्रदानेन सम्मानितोऽयं शोधप्रबन्धः

ISBN No. : 978-93-81275-31-3

सम्पादकः - डा. प्रह्लादाचार्यः जोषि

प्रकाशनम् - पूर्णप्रज्ञसंशोधनट्रस्ट्

पूर्णप्रज्ञसंशोधनमन्दिरम्, पूर्णप्रज्ञविद्यापीठम्, बेङ्गलूरु - २८

पत्राणि : १०० + ८४४

प्रथममुद्रणम् : २०१८

मुद्रितपुस्तकसङ्ख्या : ५००

मूल्यम् : ४०० रूप्यकाणि

मुद्रणम् : अनिरुद्ध क्रियेशन्स्, बेङ्गलूरु

**Srīmadānaṇdatīrthabhagavatpādācāryaviracitam**

# Srīmanmahaitareyopaniṣad-bhāṣyam

**Sri Bhagavantarāya-viracita-**
**Bhāvapradīpākhya-vyākhyopabṛmhitam**

**Approved by Rashtriya Sanskrit Sansthan, New Delhi for the award of Vidyavaridhi (Ph.D.)**

*Guide*

**Dr. A.V. Nagasampige**
Director, Poornaprajna Samshodhana Mandiram, Bengaluru

*Edited by*

**Dr. Prahladacharya Joshi**

**Published by:**

**Poornaprajna Samshodhana Trust**
**Poornaprajna Samshodhana Mandiram,**
**Poornaprajna Vidyapeetha,**
**Bengaluru - 560028**

**2018**

Sri Vishveshatirtha Granthamala - 19

**Srīmadānaṇdatīrthabhagavatpādācāryaviracitam**

# Srīmanmahaitareyopaniṣad-bhāṣyam

**Sri Bhagavantarāya-viracita-**

**Bhāvapradīpākhya-vyākhyopabṛmhitam**

**ISBN No. : 978-93-81275-31-3**

Edited by : **Dr. Prahladacharya Joshi**

Published by : **Poornaprajna Samshodhana Trust**
Poornaprajna Samshodhana Mandiram
Poornaprajna Vidyapitha,
Katriguppa Main Road, Bangalore- 28

First Edition : 2018

Copies : 500

Pages : 100 + 844

Price : Rs. 400/-

Printed by : Aniruddha Creations, Bangalore

जगद्गुरुश्रीमन्मध्वाचार्यमूलमहासंस्थान-
श्रीपेजावराधोक्षजमठाधीशानाम्

## श्रीश्रीविश्वेशतीर्थश्रीपादानाम्

# अनुग्रहसन्देशः

श्रीमद्भागवते 'देवर्षित्वमुपेत्य सः' इत्युल्लिखितः भगवान् ऐतरेयः सकलवाङ्मनोऽभिमानिदेवतां भगवतीं रमां चतुराननं चोद्दिश्य स्वस्वरूपमुपदिदेश । तदेव हि ऐतरेयोपनिषत्पदेन व्यपदिश्यते । 'आरण्यकेषु ऋते विष्णुं नैवान्यत् किञ्चिदुच्यते' इति विष्णुप्रतिपादकत्वमेव आरण्यकानां स्वभाव इति तेषामनितरसाधारणं महत्त्वं विजानन्त्येव सूरयः । इमां चोपनिषदं भाष्यं च साक्षान्मध्वभगवत्पादैः श्रीमत्सत्यतीर्थ-श्रीमच्चरणाः त्रिवारं श्रुतवन्त इति मध्वविजये स्फुटं प्रत्यपादि । अत्र गृत्समद-वसिष्ठ-विश्वामित्र-वामदेवप्रभृतिपदानां योगवृत्त्या (परममुख्य-वृत्त्या) भगवत्परत्वनिरूपणव्याजेन समेषां शब्दानां ब्रह्मणि प्रवृत्तिरिति क्रियासमभिव्याहारेणोपपादितम् । अनेन च लक्षणया वृत्त्या शब्दसमन्वयं प्रतिपादयन्तः परास्ता वेदितव्याः । अपूर्वप्रमेयगर्भितेयम् उपनिषद् भगवत्पादाचार्याणाम् अतीव प्रियेति निश्चप्रचम् । अस्याश्चोपनिषदः नैकाष्टिप्पण्यः भगवत्पादीयाशयविशेषविद्योतिकाः विराजन्तेतमाम् । इमाश्च तत्र प्रथिताः प्रकाशिताश्च- ताम्रपर्णीआचार्यैः विरचितया टिप्पण्या समलङ्कृतं महैतरेयोपनिषद्भाष्यम् अस्मदीयपूर्णप्रज्ञसंशोधनमन्दिरेण संशोध्य प्रकाशितम् । अस्मत्पूर्वाचार्यैः पद-वाक्य-प्रमाणपारावारपारीणैः श्रीमद्विश्वेश्वरतीर्थश्रीमच्चरणैः प्रणीता ऐतरेयोपनिषट्टिप्पणी प्राकाश्यं नीता विद्वत्प्रवरैः श्रीप्रभञ्जनाचार्यैः । अधुना भेदोज्जीवनादिनैकग्रन्थटिप्पणी-

प्रणयनेन प्रथितविभवानां भगवन्तरायमहोदयानां टिप्पण्या समलङ्कृतं भाष्यं प्रकाश्यत इति विदित्वा नितरां प्रमुदिता वयम् ।

ग्रन्थस्यास्य शोधकः, श्रीमदुत्तरादिमठाधीशानां श्रीमत्सत्यात्मतीर्थ-श्रीमच्चरणानां विनेयप्रवरः जोषीत्युपाह्वः डा. प्रह्लादाचार्यः, शास्त्र-ग्रन्थाध्ययन-अध्यापनादौ बद्धादरः लब्धप्रतिष्ठश्चायं विद्यत इति महतः प्रमोदस्य विषयः । अनेन च विदुषा शास्त्रसेवा सन्ततं प्रवर्ततामिति अस्मदुपास्यं मध्ववल्लभं श्रीकृष्णं प्रार्थयामहे ।

डा. गिरिधर बोरेमहाशयः ग्रन्थस्यास्य प्रकाशनार्थं समुचितवित्त-प्रदानेन सेवां व्यधात् । सकुटुम्बस्य तस्य श्रीकृष्णः आयुरारोग्यप्रदानेन समनुगृह्णात्विति प्रार्थयामहे ।

इत्यनेकनारायणस्मरणानि

श्रीश्रीविश्वेशतीर्थश्रीपादाः

पेजावराधोक्षजमठः, उडुपि

।। श्रीदिग्विजयरामो विजयते ।।

जगद्गुरुश्रीमन्मध्वाचार्यमूलमहासंस्थानश्रीमदुत्तरादिमठाधीशानां

## श्री १००८ श्रीसत्यात्मतीर्थश्रीपादानाम्

# अनुग्रहसन्देशः

'आरण्यकेष्वृते विष्णुं नैवान्यत् किञ्चिदुच्यते' इत्याचार्यवाणीमनुरुद्ध्य आरण्यकानां भगवदेकनिष्ठत्वं विज्ञायते । आरण्यकेष्वपि ऐतरेयारण्यकान्तर्गता महैतरेयोपनिषद् विशेषतो भगवद्धर्मचारिणीति उपनिषन्मर्मविदां धर्मविदां निश्चप्रचम् ।

प्राणस्य सर्वचिदचित्परमेश्वरत्वं नारायणस्य तन्नियामकत्वं वर्णात्मकध्वन्यात्मकाशेषशब्दबोध्यत्वं अत एव निखिलपूर्णगुणैकदेहत्वं सर्वज्ञत्वं अच्युतत्वं अपेतसमस्तदोषत्वं चेत्यादिकान् बहून् विषयान् प्रतिपादयन्तीयं उपनिषद् रराजतेतमाम् ।

श्रीमदानन्दतीर्थभगवत्पादाचार्याणां प्रेष्ठेयमुपनिषत् । अत एव स्वपूर्वाश्रमे तोटन्तिल्लायाय स्वगुरवे गुरुदक्षिणात्वेन इयमेवोपनिषत् प्रदत्ता । स्वशिष्यान् प्रत्यपि पौनःपुन्येन पाठिता । अन्ते बदरिकाश्रमगमनवेलायामपीमामेवोपनिषदं पाठयन्त आसन् । तादृश्या उपनिषदः श्रीमदाचार्यकृतं दिव्यं प्रमाणसन्दर्भगर्भं भगवद्गुणगणादर्शं भाष्योत्तमं विभ्राजतेतमाम् । तदध्येता धन्यो मान्यश्च । तदध्ययनं चर्ते टिप्पणीर्दुष्करम्। कृते तस्य श्रीमज्जयतीर्थपूज्यचरणमार्गानुवर्तिन्यो बह्व्यः टिप्पण्यः समुदबोभूयन्त ताश्च विश्वेश्वरतीर्थीया ताम्रपर्णीया बाळाचार्यकृता भगवन्तरायकृता इत्यादयः । तदिदानीं भगवन्तरायकृत'भावप्रदीपाख्य'-अन्वर्थाभिधटिप्पण्युपबृंहितं श्रीमन्महैतरेयोपनिषद्भाष्यं पूर्णप्रज्ञ-

संशोधनट्रस्ट्द्वारा प्रकटीक्रियते । महता परिश्रमेण सा भगवन्तरायकृता टिप्पणी अस्मत्प्रियशिष्येण पण्डितेन डा. प्रह्लादाचार्येण जोशीत्युपाह्वेन सम्पादिता । पाठान्तरादिकमपि संयोजितम् । आकराश्च प्रादायिषत । अन्यच्च विदुषां विद्यार्थिनां च यदुपकारि तदत्र न्यवेशि । प्रमाणपद्धत्याः अनुवादोऽपि कन्नडभाषायां अनेन कृतः । पाठयति च विद्यार्थिनो जयतीर्थविद्यापीठे । मण्डयति च प्रबन्धान् विद्वत्सदस्सु । अनेन एतादृश्यः सेवाः इतोऽप्यतिशयेन कारयन्तु इति अस्मदुपास्यान् श्रीमन्मूलसीतासमेत-मूलरामदिग्विजरामवेदव्यासादीन् सम्प्रार्थयामहे ।।

हेमलम्बि ज्येष्ठ कृष्ण सप्तमी

विजयपुर १६-६-२०१७

इत्यनेकनारायणस्मरणानि

श्रीमत्सत्यात्मतीर्थ श्रीपाद...
उत्तरादिमठ

श्री श्री १००८ श्रीसत्यात्मतीर्थश्रीपादाः

उत्तरादिमठः

# निदेशकवचांसि

'एकं सत् विप्रा बहुधा वदन्ति', 'सर्वे वेदा यत्पदमामनन्ति', 'यो देवानां नामधा एक एव', 'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति' इत्यादिश्रुतयः, 'शब्दस्य हि ब्रह्मण एष पन्थाः', वेदैश्च सर्वैः अहमेव वेद्यः' इत्यादिस्मृतयश्च भगवान् विष्णुः सकलशब्दवाच्य इति स्फुटमवगमयन्ति । विष्णोरनन्तकल्याणगुणपरिपूर्णत्वे अनन्तशब्दवाच्यत्वमपि प्रधानं निदानम् । उक्तं च भगवत्पादैः- 'अतोऽनन्तगुणं ब्रह्म यच्छब्दा योगवृत्तयः' इति । एवं च अनन्तशब्दवाच्यत्वेन, अनन्तजगन्निर्मातृत्वेन चानन्तकल्याणगुणपरिपूर्णं ब्रह्म विष्ण्वाख्यं सर्वैरुपास्यमिति वेदान्तानां निर्गलितः पन्थाः । एतमेव तत्त्वम् ऐतरेयोपनिषदारण्यकभाष्ये शुश्रुमः- 'सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राणऋच इत्येव विद्यात्' इति । अत्रोक्तः प्राणशब्दः 'स उ प्राणस्य प्राणः' इति केनोपनिषदुक्तरीत्या विष्णोरेव वाचक इति निश्चप्रचम् । अत्रोपनिषदि विष्णोः सकलशब्द-वाच्यत्वं निरवकाशतयोपपादितम्- 'एष उ बिभ्रद्वाजः प्रजा वै वाजस्ता एष बिभर्ति यद् बिभर्ति तस्माद् भारद्वाज इत्याचक्षते एतमेव सन्तम्' एवमादिक्रमेण समेषां शब्दानां परममुख्यवृत्त्या विद्वद्रूढ्या च विष्णुप्रतिपादकत्वं विद्यत इति समर्थितमस्यामुपनिषदि । सकलशब्दवाच्यत्वेन विष्णोर्गुणपूर्णत्वाख्योऽ-यमौपनिषदः सिद्धान्तः श्रीमदानन्दतीर्थभगवत्पादाचार्यैः परमादरेण स्थापितः। यतः वेदोक्तमेव प्रमेयं सम्यग् प्रत्यपीपदन् भगवत्पादाचार्याः, अत एव परमवैदिका इति गेगीयन्ते आर्षेषु ग्रन्थेषु । भगवत्पादाचार्याणां प्रेष्ठेयमुपनिषत् त्रिवारमुपदिष्टा शिष्यप्रवराणां श्रीमत्सत्यतीर्थश्रीमच्चरणानाम् । तदुक्तम्- 'यस्त्रिवारमितरासुतशाखास्वर्थमग्र्यमशृणोत् पुरुसङ्घ्यात्' इति । स्वीयम् अवतारकार्यं परिसमाप्य रजतपीठपुरान्निर्गमनसमये भगवत्पादाचार्या इमामेवोपनिषदं व्याचक्षाणाः परमादरेण देवोत्तमैः गेगीयमानविभवाः विशालाक्षेत्रं

प्रययुरिति विदितमेव विपश्चिताम् । अस्याश्चोपनिषदः ताम्रपर्णीआचार्यैः प्रणीता व्याख्या अस्मदीयसंशोधनमन्दिरद्वारा विदुषा वेङ्कटरमणोपाध्यायेन संशोध्य प्रकाशिता । पेजावरमठाधीशैः नैकव्याख्याग्रन्थप्रणयनेन विश्रुतविभवैः श्रीमद्विश्वेश्वरतीर्थश्रीमच्चरणैः प्रणीता च व्याख्या विद्वत्तल्लजैः श्रीप्रभञ्जनाचार्यैः प्राकाश्यं नीता । अधुना भेदोज्जीवनादिग्रन्थटिप्पणीप्रणयनेन प्रथितयशसां श्रीमतां भगवन्तरायमहाभागानां व्याख्यया समुल्लसितेयमुपनिषद् सभाष्यं विदुषां करकमलयोः समर्पयितुं नितरां सन्तुष्यामहे ।

ग्रन्थस्यास्य शोधकः विद्वत्तल्लजः श्रीमदुत्तरादिमठाधीशानां श्रीसत्यात्मतीर्थश्रीमच्चरणानामन्तेवासिप्रवरः, तेषामेवानुग्रहेण लब्धविद्यः लब्धप्रतिष्ठश्च जोषीत्युपाह्वः डा. प्रह्लादाचार्यः । नव्यन्याय-वेदान्तोद्ग्रन्थानां पाठनेऽतीव समर्थः, वाक्यार्थप्रवीणश्चायं जयतीर्थविद्यापीठे शास्त्रग्रन्थपाठनेन, द्वैत-वेदान्ताध्ययनप्रतिष्ठानेऽपूर्वग्रन्थशोधनप्रकाशनेन च विदुषां मध्ये लब्ध-प्रतिष्ठः । ग्रन्थरत्नस्यास्य शोधनेनायं 'विद्यावारिधिः' (पिहेच्.डि.) इत्युपाधिना विभूषितः । ग्रन्थस्यास्य शोधनावसरे प्रकृष्ट उपोद्घातोऽनेन विरचितः । तत्रतत्र समुचिता टिप्पणी प्रदत्ता । विदुषां विद्यार्थिनां चोपकारायोपयुक्ताः विषयाः परिशिष्टेष्वायोजिताः । नूनमिदं ग्रन्थरत्नं समेषामुपकारकं भवतीत्यत्र न सन्देहगन्धः । अयं प्रबन्धा एवंविधग्रन्थशोधनेन प्रकाशनेन च श्रीहरिवायु-गुरूणां विशिष्टां सेवां वितनोत्विति समभिनन्द्योपरमामि ।

ग्रन्थस्यास्य प्रकाशनार्थं डा. गिरिधरबोरेमहाभागः लक्षरूप्यकपरिमितं धनं प्रदाय विशिष्टां श्रीहरिगुरुसेवां व्यधात् । तस्मै भैष्मीसत्यापतिः श्रीकृष्णः आयुरारोग्याभिवर्धनेन एतादृशीं सेवां सदा स्वीकरोत्वित्याशास्महे ।

**डा. ए.वि. नागसम्पिगे**

**निदेशकः, पूर्णप्रज्ञसंशोधनमन्दिरम्, बेङ्गलूरु**

# सङ्केतसूची

| | |
|---|---|
| अनु | अनुव्याख्यानम् |
| आथ.उ. | आथर्वणोपनिषत् |
| ऋक्.भा | ऋग्भाष्यम् |
| ऋक्.सं | ऋक्संहिता |
| ऐत.आ. | ऐतरेयारण्यकम् |
| ऐत.उ. | ऐतरेयोपनिषत् |
| ऐत.भा. | ऐतरेयभाष्यम् |
| कर्म.नि. | कर्मनिर्णयः |
| काठ.उ | काठकोपनिषत् |
| गी.भा. | गीताभाष्यम् |
| छान्दो.उ | छान्दोग्योपनिषत् |
| छान्दो.भा | छान्दोग्योपनिषद्भाष्यम् |
| त.द्यो. | तत्वोद्योतः |
| तत्त्व.प्र. | तत्वप्रकाशिका |
| तल.उ. | तलवकारोपनिषत् |
| तल.उ.भा | तलवकारोपनिषद्भाष्यम् |
| तै.उ. | तैत्तरीयोपनिषत् |
| तैत्त.भा. | तैत्तरीयभाष्यम् |

| | |
|---|---|
| दे.मी.सू. | देवमीमांसासूत्रम् |
| पा.सू. | पाणिनीयसूत्रम् |
| पु. | पुटम् |
| पु.सू. | पुरुषसूक्तम् |
| ब.सू. | बळित्थासूक्तम् |
| बृ.उ. | बृहदारण्यकोपनिषत् |
| बृह.भा. | बृहदारण्यकभाष्यम् |
| (बृहद्भाष्यम्) | |
| ब्र.सू.भा. | ब्रह्मसूत्रभाष्यम् |
| ब्र.सू | ब्रह्मसूत्रम् |
| भ.गी. | भगवद्गीता |
| भा.ता. | भागवततात्पर्यम् |
| भाग.पु. | भागवतमहापुराणम् |
| म.भा.ता.नि. | महाभारततात्पर्यनिर्णयः |
| महा.ना.उ. | महानारायणोपनिषत् |
| महा.भा.आदि.प. | महाभारतादिपर्व |
| महा.भा.उ.प. | महाभारतउद्योगपर्व |
| महा.मोक्ष.प. | महाभारतमोक्षधर्मपर्व |
| मुं.उ. | मुण्डकोपनिषत् |
| मुक्त.उ | मुक्तिकोपनिषत् |

| | |
|---|---|
| वि.त.नि.उ.श्रु | विष्णुतत्वनिर्णयोदाहृतश्रुतिः |
| वि.स.ना | विष्णुसहस्रनामस्तोत्रम् |
| शत.ब्रा. | शतपथब्राह्मणम् |
| षट्.उ. | षट्प्रश्नोपनिषत् |
| सि.कौ.सू.सं. | सिद्धान्तकौमुदीसूत्रसंख्या |
| सु.वि. | सुमध्वविजयः |
| सू.भा.उ.प्र. | सूत्रभाष्योदाहृतप्रमाणम् |
| सू.भा.उ.श्रु | सूत्रभाष्योदाहृतश्रुतिः |

# भूमिका

## १) वेदः

'धर्मं जिज्ञास्यमानानां प्रमाणं परमं श्रुतिः'[१]

इति प्रमाणात् वेदोऽखिलो धर्ममूलम् । विश्वेऽस्मिन् सकल-कर्तव्यकर्मणां ज्ञानानां निरूपणं वेदादेव भवति । धर्मे तत्त्वज्ञाने च वेदा एव परमं प्रमाणम् । अत एव मानवानां मूलसंविधानरूपाः वेदाः ॥

भगवद्विषये च वेदा एव परमं प्रमाणम् । एत एव वेदाः मानवसंस्कृतेः सिद्धान्तस्य ज्ञानविज्ञानयोर्विधिनिषधयोर्देवानां कर्मणां च स्वरूपनिर्णायकाः । भगवदाज्ञारूपाश्च । 'श्रुतिस्मृती ममैवाज्ञे'[२] इति प्रमाणात् ।

सकलदर्शनानां सकलशास्त्राणां खगोल-भूगोलादिविद्यानां ज्योतिश्शास्त्र-गणित-सङ्गीत-शास्त्राणां निधिभूताः वेदाः । जनजीविकायाः, शिष्टाचारस्य, आहारविहारयोश्च इतिकर्तव्यतारूपाः (आकरग्रन्था) वेदा एव । धार्मिक-राजकीय-सांस्कृतिक-आघातेश्वपि परिवर्तनेषु पराधीनतयामपि भारतीयसंस्कृतिं धर्मं च यथावस्थितरीत्या वेदाः समर्थयन्तः राराजन्तेऽद्यापि ।

वेदैरेव संरक्षितैषा संस्कृतिः । वेदैः परिवर्धिता प्रवृद्धा प्रबुद्धा समृद्धा च अद्यापि । तदिदं विश्वकोशमेव ।

'सर्वं वेदात् प्रसिद्ध्यति । सर्वं वेदे प्रतिष्ठितम् । सर्वं वेदयति अस्मात् इत्येव वेदाः' ।

---

१. महा.भा.आदि. २८-२५ २. महा.भा.आदि. ३०-५५

वेदयन्ति आवेदयन्ति इति वेदाः । वेदनमेव वेदः । स्वयं सर्वं वेत्ति अन्यान् सर्वान् आवेदयति इति वेदाः ।

वदानवलम्ब्यैव कर्ममीमांसा दैवीमीमांसा ब्रह्ममीमांसा च कृता वर्तते । वेदार्थनिर्णायकानि बादरायणकृतानि ब्रह्मसूत्राण्यपि । वेदोपनिषदां सारभूता एव भगवद्गीता । अत एव अध्यायान्ते 'भगद्गीतासु उपनिषत्सु ब्रह्मविद्यायां' इति पठ्यते ।

वेदाः भारतीयानां आद्याः धर्मग्रन्थाः । तेषां आज्ञा अत्र देशे धर्मत्वेन स्वीकृता । वर्तमाने भारते यावन्त्यपि दर्शनानि भिन्नानि प्रसृतानि सन्ति तेषां मूलस्रोतो वेदेभ्य एव निर्गतमस्ति । ज्ञानस्य धाराः समस्तेऽपि भूमण्डले सर्वास्वपि दिक्षु वेदेभ्य एव प्रसस्रुः । न केवलं वेदाः भारतीयानां अपितु पाश्चात्यानामपि (सर्वसामपि मानवजातीयानां) अत्यादरणीयाः विमर्शनीयाः ग्रन्थाः सन्ति । अस्मदीयाः पूर्वजाः केन प्रकारेण जीवनं यापयामासुः? काभिः क्रीडाभिः स्वकीयं मनः मोदयामासुः? का देवता ते सम्पूजयामासुः? वासादिकं च कथं चक्रुः? इत्यादि सर्वमपि प्रचीनं इतिहासं वेदादेव प्राप्नुमः नान्येन । तदर्थं अस्माभिः वेदाः पौनःपुन्येन अध्येयाः आवर्तनीयाः अनुसन्धेयाश्च ।।

**२) वेदानां विभागः**

'अनन्ताः वै वेदाः' इति स्वयमेव कण्ठरवेण घोषयति वेदः स्वयमनन्त इति । इयदेव इति परिमातुमशक्येयं श्रुतिः । परन्तु अल्पमेधसोऽस्मानवलोक्य भगवान् व्यासः परमकरुणालुः वेदान् विभज्य चत्वारो वेदा इति सञ्जगाद । ऋग्वेदः यजुर्वेदः सामवेदः

अथर्ववेद इति । अत एव पराशरात्मजः व्यास इति प्रथां भेजे ।

तत्रापि विभाव्यन्ते अनेके शाखाः प्रतिविभागम् ।

यथा– ऋग्वेदे शाकलबाष्कलादयः ।

यजुषि– तैत्तरीय-कठ-मैत्रायणीयादयः ।

साम्नि– कौथुम-जैमिनीय-रायणी-शट्यायनीप्रभृतचयः ।

एषां वेदानां प्रतिवेदं सामान्यतश्चतुर्धा विभागो विहितः ।

१) संहिता २) ब्राह्मणं

३) आरण्यकं ४) उपनिषत् इति

उपनिषदां आरण्यके एवान्तर्भावात् त्रयः विभागा इति कैश्चित् परिगणिताः ।

१) संहिता- मन्त्रभागः संहिता ।

२) ब्राह्मणं- संहितापरिशिष्टं ब्राह्मणम् । यथा महाभारतस्य हरिवंशः ।

३) आरण्यकं- ब्राह्मणानां सारात्मकं आरण्यकम् ।

४) उपनिषत्- आरण्यकानां सारः उपनिषत् ।

**३) उपनिषत्**

'ब्रह्मविद्या' इत्येतया संज्ञया सुविदिताः जगत्युपनिषदः । भारतीदर्शनसाहित्ये सन्ति त्रयः प्रस्थानग्रन्थाः । ते वेदानवलम्बमाना मानवजीवनस्य चरमं लक्ष्यं तत्प्राप्तिसाधनं च उपदिशन्ति । भारतीयविचारशास्त्रस्य उपजीव्यग्रन्थत्वत् मोक्षाख्यप्रकृष्टस्थानगमयितृत्वाच्चोपनिषदः प्रस्थानत्रय्यां प्राधान्यं भजन्ते ।

वेदार्थनिर्णायकानि बादरायणीयब्रह्मसूत्राणि तदनन्तरमुल्लेखार्हाणि भवन्ति । तत उपनिषत्सारभूता गीता ।

**सर्वोपनिषदो गावः दोग्धा गोपालनन्दनः ।**

**पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत् । इत्युक्तेः ।**

भारतीयवैदिकधर्मग्रन्था दर्शनानि च इमामेव प्रस्थानत्रयीमवलम्बन्ते । उपनिषदां गीताब्रह्मसूत्रयोराश्रयप्रदायिनीत्वात् ताः सन्ति महनीयतमाः ।

उपनिषदां कथनमेतत्– वर्तमानसमये जीवाः स्वकीये जीवने यादृशं कर्म आचरन्ति ते भाविनि काले तादृशमेव जीवनमपि लप्स्यन्ते । सन्ति कर्माण्येव जीवनघटकानि । 'नासतो विद्यते भावो नाभावो विद्यते सतः'[४] इत्युक्तेः । जीवनं ह्युत्तमं सर्वविधतया समुन्नतश्च कर्तुं सततं शुभान्येव कर्माणि कर्तव्यानि । ज्ञानादृते न मुक्तिस्तस्मात् । ज्ञानमार्जनीयम् । ज्ञानाधिगमनं योगाभ्यासेन सम्भवं निष्कामकर्माचरणेन च । सत्कर्मकर्ता जीव उपरते सति तत्स्वरूपं सद्देशं सच्छरीरं चाश्नुते । एतेनैव स्फुटं जीवस्यास्मात् लोकात् परलोकगमनं तत्तद्भोगाधिगमनम् च । तपश्चरणात् पुण्यानां ह्यभ्युदयाच्च ज्ञानबलेन वासना विनश्यति । क्रियमाणानि कर्माणि विलीयन्ते । सञ्चितानि च कर्माणि हतशक्तिकानि भवन्ति । एवमपरोक्षज्ञानित्वदशां सम्पन्ना एव जना जीवन्मुक्ता उच्यन्ते । जीवन्मुक्ततायां प्रारब्धकर्मानुरूपं जीवस्य स्थूलं शरीरं सन्तिष्ठते । नष्टे च सति प्ररब्धकर्मणि शरीरमपि पतति । ततश्च जीवः स्वकीयं

---

४. भ.गी.२-१६

स्वरूपानन्दं अनुभवति । अतः मोक्षसाधनापरोक्षनानसाधनत्वात् उपनिषदामस्ति गुरतमा महतिः ।।

आत्मवेत्ता जन एव तं लोकोत्तरं निरतिशयमानन्दमनुभवति । परं तमानन्दमध्यारूढो हि पुरुषो भवत्यवरुद्धवाग्व्यापारः । वस्तुतः स आनन्दो न वाग्गम्य नान्येनापि केनापि साधनेन लभ्यः । स तु परमात्मानुग्रहेणैव आत्मज्ञानेनैव गम्यो वेद्यो ज्ञेयश्च । एतस्या एव ब्रह्मापरोक्षानुभूतेः प्रतिपादनमेवोपनिषदामभीष्टमन्त्यम् । अतोऽस्त्युपनिषदां श्रैष्ठ्यं ज्यैष्ठ्यं पारमेष्ठ्यं च ।।

**४) उपनिषच्छब्दार्थः**

एवं स्वरूपानन्दकारणस्य अस्योपनिषच्छब्दस्य कोऽर्थः? यतो हि उपनिषत्सु क्वचित् रहस्यं इत्यर्थे उपनिषच्छब्दः प्रयुज्यते 'इत्युपनिषत्'[५] । क्वचिच्च ग्रन्थसमाप्तौ 'एषा वेदोपनिषत्'[६] 'इत्युपनिषत्'[७] इति । अतो ग्रन्थ इत्यर्थो लभ्यते । क्वचिच्च 'उपनिषदमब्रूम'[८] इति श्रवणात् रहस्यार्थ इति अर्थो भवति । तस्मात् कोऽर्थः इति चेत्,

१) 'गहने हि इमा विद्या उपनिषण्णा' इति वाक्यकारकवाक्यम् । गहने=दुर्ज्ञेये ब्रह्मणि इयं विद्या उप+निषण्णा= इयमेव विद्या अत्यन्तं साक्षात् ब्रह्मणि वर्तते इति ब्रह्मविद्या उपनिषच्छब्दप्रतिपाद्या भवति । तत्प्रतिपादकत्वात् वाक्यसमुदायात्मकग्रन्थोऽपि उपनिषच्छब्दार्थः ।

---

५. तै.भृ.३ ७. तै.ब्र. २३ ८. तल.२-८

६. तै.शि.२४

२) उप निषादयति इत्युपनिषत् ।

उप,नि इत्युपसर्गद्वयपूर्वकस्य विशरणगत्यवसादनार्थकस्य षदलृ-धातोः क्विबन्तस्य रूपमिदं उपनिषदिति । निषादो नाम नाश इत्यर्थः । उपनिषदामध्ययनेन संसारस्य बीजभूता अविद्या अस्तङ्गता भवति दुःखानि च क्षीणानि भवन्ति ब्रह्म प्राप्नोति । अत इयं उपनिषत् इति शङ्कराचार्यभगवत्पादाः अभिप्रयन्ति ।

३) षदलृधातोः गतिरप्यर्थः पूर्वमुक्तः । 'ये गत्यर्था ते ज्ञानार्थाः' इति वचनात् षदधातुनिष्पन्ननिषादशब्दस्य गतिः ज्ञानमर्थः । उप निषादयति भगवत्तत्वं ज्ञापयतीत्युपनिषत् । ब्रह्मतत्त्वं सम्यग्ज्ञापयन्ति एता उपनिषदः अत उपनिषत् ।

४) उप निषादयति उपगमयति ब्रह्म इति उपनिषत् ।

परं ब्रह्म उपगमयन्ति उपनिषदां अध्ययनेन अत एता उपनिषदः इत्यर्थः ।

५) गुरुकुलवासान्ते गुरुणा स्वसमीपे शिष्यमुपवेश्य दीयमान-रहस्योपासनोपदेश एव उपनिषदित्यत्र तैत्तरीयोपनिषदेव प्रमाणम् । तत्र हि शिक्षावल्ल्यां प्रमानुवाके 'वेदमनूच्यार्योऽन्तेवासिनमनुशास्ति' इत्यारभ्य 'एषा वेदोपनिषत्' इत्युक्तम् । एवं बहुधा अर्थमत्र निरूपयितुं शक्यते ।

**५) उपनिषत्संख्या**

उपनिषत्संख्याविषये विदुषामस्त्यभिप्रायभेदः । केचित् ११८० उपनिषद इति जगदुः । अन्ये च (२००) द्विशतमिति । अपरे च अष्टोत्तरशतमिति (१०८) । यथा वेदा अनन्तास्तथा उपनिषदोऽपि ।

तथापि अष्टोत्तरशतोपनिषदां संग्रहः कृतो दृश्यते । 'सर्वोपनिषदां मध्ये सारमष्टोत्तरं शतम्'[१०] इति मुक्तिकोपनिषद्वाक्येन ज्ञायते । प्राप्तास्वष्टोत्तरशतसंख्यास्वुपनिषत्सु प्रायेण दशोपनिषनिदां महत्व-मस्ति । विशदतया विषयस्य प्रतिपादकत्वात् अतितरां ब्रह्म प्रमापकत्वाच्च ताः दशोपनिदः विशिष्टाः गरिष्ठाश्च भवन्ति । ताश्च उपनिषदः मुक्तिकोपनिषदि एवं संग्रहीताः–

**ईश-केन-कठ-प्रश्न-मुण्ड-माण्डुक्य-तित्तिरिः ।**
**ऐतरेयं च छान्दोग्यं बृहदारण्यकं तथा[११] ।। इति ।**

आभिः साकं सुबला-श्वेताश्वतर-कौषितकीनामपि प्राधान्यमस्ति । लोके तावत् प्रथिता दशोपनिषदः । नैकाचार्यकृतानि भाष्याण्यपि एषां दशोपनिषदामेव दरीदृश्यते ।

एवं चात्र संग्रहः–

१) ऋग्वेदीयोपनिषत्सु- ऐतरेय-कौषीतकी

२) सामपरकोपनिषत्सु- छान्दोग्यकेनोपनिषदौ

३) कृष्णयजुर्वेदिकासु उपनिषत्सु-तैत्तरीय-महानारायण-कठ-श्वेताश्वतर-मैत्रायण्युपनिषदः ।

४) शुक्लयजुरधिकृत्य- बृहदारण्यकं

आथर्ववेदे च परिगणिताः उपनिषदः- मुण्डक-माण्डूक्य-प्रश्नोपनिषदः ।

---

१०. मुक्ति.उ. ४४

११. मुक्ति.उ. ३०

**६) उपनिषदां बोधक्रमः**

विषयमेकं निरूपयितुं अनेके प्रकारा भवन्ति । विधिः,निषेधः,आख्यायिका, फलाभिरुचिः,प्रश्नोत्तरी इत्यादयः प्रकाराः ।

१) एतदेवमेव कार्यमिति विधिः ।

२) नैवं कार्यमिति निषेधः ।

३) कथामेकां निरूप्य तन्मूलकतया तत्त्वनिरूपणमाख्ययिका ।

४) फलमुक्त्वा तत्राभिरुचिमुत्पाद्य तद्वारा तत्वविचारे आभिमुख्यसम्पादनं फलाभिरुचिः ।

५) शिष्येन पृष्टस्य उत्तररूपेण विषयनिरूपणं हि प्रश्नोत्तरी ।

एकैकस्मिन्नुपनिषदि यथायोग्यं एते प्रकारा उपयोजिताः दृश्यन्ते । यथा ईशावास्ये 'कुर्वन्नेवेह कर्माणि'[१२] इत्यादौ विधिः । 'मा गृधः कस्यचिद्धनम्'[१३] इत्यादौ निषेधः । छान्दोग्याद्युपनिषदि च तत्त्वनिरूपणार्थं अनेका आख्यायिका उपयुक्ताः दृश्यन्ते । तथैवानेकविद्यासु फलनिरूपणपुरस्सरं विचारप्रस्तावेन फलाभिरुचिप्रकारः निरूपितः । षट्प्रश्नोपनिषदि प्रश्नोत्तरप्रणाल्या विषयनिरूपणं दरीदृश्यते । एवं प्रसङ्गानुसारेण तत्र तत्र यथायोग्यप्रकारं बहुधोपयुज्य विषयं निरूपयन्त्युपनिषदः ।

एवं एता उपनिषदः गद्यपद्यात्मिकास्सन्ति । काचित् पद्यात्मिका । काचिच्च गद्यात्मिका । अन्या च गद्यपद्यात्मिका उपलभ्यते । विषयनिरूपणायेयं व्यवस्था अत्यन्तं समीचीना भवति, साहित्येनापि परिपूर्णा । ईशादिकं पद्यात्मकं चेत् छान्दोग्यप्रभृति गद्यात्मकम् ।

१२. ईश.उ.२ १३. ईश.उ.१

उभयात्मकं केनादिकम् । प्रकृते ऐतरेयोपनिषत् गद्यात्मिका विराजते । ऐतरेयेषु आख्यायिकास्तत्र तत्र दृश्यन्ते । देवानां विवादः । वायो र्जीवोत्तमत्वे आख्यायिकेत्यादि । तत्र तत्र उपासनार्थं फलाभिरुचिरपि उत्पादिता दृश्यते ॥

## ७) ऐतरेयोपनिषत्

ऋग्वेदीयऐतरेयारण्यके अस्ति आरण्यकपञ्चकम् । तत्र प्रथमा-रण्यके गवामयनसत्रयागसम्बन्धिन्यः विचाराः प्रस्तुताः । विशेषतो महाव्रतसम्बन्धिसूक्तादीनां विनियोगादिप्रकारः प्रपञ्चितः । द्वितीया-रण्यके बृहतीसहस्रादीनां विचारः प्राप्तः । तृतीयारण्यके संहिता-विषयकोपासानादिविचाराणां विवरणं कृतमस्ति । चतुर्थारण्यके महानाम्निव्रतस्य सम्बन्धिन्यः मन्त्रास्तथा तदीयविचाराश्च वर्तन्ते । पञ्चमे आरण्यके पुनर्महाव्रतविचारः विशेषतः कृतोऽस्ति । तत्र

१) ऐतरेयप्रथमारण्यके- पञ्च अध्यायाः (५)।

२) ऐतरेयद्वितीयारण्यके- सप्त अध्यायाः (७)।

३) ऐतरेयतृतीयारण्यके- अध्यायद्वयम् (२)।

४) ऐतरेयचतुर्थारण्यके- एकोऽध्यायः (१)।

५) ऐतरेयपञ्चमारण्यके- अध्यायत्रयम् (३) ॥

एवं च पञ्चारण्यात्मकेऽस्मिन् ऐतरेयारण्यके द्वितीयतृतीया-रण्यकौ प्रोच्येते ऐतरेयोपनिषन्नाम्ना ।

तत्र द्वितीयारण्यके सन्ति सप्ताध्याया इत्युक्तम् । तेष्वपि अध्यायेषु सन्त्यनेके काण्डाः प्रत्यध्यायम् ।

१) द्वितीयारण्यके प्रथमेऽध्याये- अष्टौ काण्डाः(८) ।

२) द्वितीयारण्यके द्वितीयेऽध्याये- चत्वारि(४) ।

३) द्वितीयारण्यके तृतीयेऽध्याये- अष्टौ काण्डाः(८) ।

४) द्वितीयारण्यके चतुर्थाध्याये- त्रयः खण्डाः(३) ।

५) द्वितीयारण्यके मञ्चमाध्याये- एकः खण्डः(१) ।

६) द्वितीयारण्यके षष्ठाध्याये- एकः खण्डः(१) ।

७) द्वितीयारण्यके सप्तमाध्याये- एकः खण्डः(१) ॥

तृतीये आरण्यकेऽध्यायद्वमस्ति इत्युक्तम् । तत्रापि प्रत्यध्ययं खण्डभेदः अस्ति ।

१) तृतीयारण्यके प्रथमाध्याये– षट् खण्डाः(६) ।

२) तृतीयारण्यके द्वितीयाध्याये– षट् खण्डाः(६) ॥

आहत्य नव(९) अध्यायाः । त्रयस्त्रिंशत्खण्डाः(३३) विद्यन्तेऽस्यामुपनिषदि ॥

**८) उपनिषत्सु ऐतरेयस्थानम्**

१) सूत्रप्रस्थाने उद्धृतैरुपनिषदीयवाक्यैः सामान्यत उपनिषदां स्थानं परिगण्यते । छान्दोग्यबृहदारण्यकयोरनया दृष्ट्या प्रथमं स्थानमस्ति वेदान्ते । द्वितीयं तावत् ऐतरेयोपनिषदः । यतो हि ज्ञानिवरैः सर्वैरपि स्वीयभाष्येषु बहुत्र उदाहृतानि ऐतरोयोपनिषद्वाक्यानि । इदं प्रथमं कारणम् ।

२) द्वितीयं कारणन्तु, उपनिषदोऽस्याः सामस्त्येन ब्रह्मविद्या-बोधकत्वमस्ति अत ऐतरेयस्योपनिषत्सु अस्ति महती गरिमा ।

३) ऐतरेयोपनिषदः शङ्कर-रङ्गरामानुज-मध्वाचार्यैः भाष्यं कृतमस्ति ।

४) एकैकस्मिन्नपि वेदे सन्त्यनेका उपनिषदः । तत्र एकैकवेदगताया उपनिषदः एकैकः शान्तिमन्त्रः पठ्यते । कौषीतकि-ऐतरेयप्रभृतीनां दशानां ऋगुपनिषदां 'वाङ्मे मनसि प्रतिष्ठिता'[१४] इति मन्त्रश्शान्तिमन्त्रत्वेन पठ्यते । मन्त्रोऽयं ऐतरेयोपनिषदि द्वितीयारण्यके सप्तमाध्याये पठित इति अस्या वैशिष्ट्यम् ।

५) त्रिवारं इयमुपनिषत् भागवत्पादैः श्रीमदानन्दतीर्थैः सत्यतीर्थादियतीन्द्राणां कृते पाठिता इति सुमध्वविजये श्रूयते-

**यस्त्रिवारमितरासुतशाखास्वर्थमग्र्यमश्रुणोत्पुरुसङ्ख्यात्**[१५] । इति ।

क्रियासमभिव्याहारेण यद् पाठ्यते तत्र प्रमेयाधिक्यं सूक्ष्मप्रमेयविशिष्टत्वं च भवतीति नातीव विदां प्रतिपादनीयमस्ति ।

६) केरलप्रदेशे विद्वत्सभायां नैकशास्त्रपारङ्गतैर्विद्वन्मणिभिः प्रार्थितः श्रीमदानन्दतीर्थभगवत्पादास्तत्पृच्छाविषयं ऐतरेयगं कञ्चनसूक्तं त्रेधा व्याचख्यावित्यपि सुमध्वविजये श्रूयते । सर्वाभ्य उपनिषद्भ्य अस्या व्याख्यानं क्लिष्टमित्यनेन विदितं भवति ।

**ऐतरेयमथ किञ्चन सूक्तं सूचयन् सदसि तत्र गरिष्ठः ।**
**श्रोतुमिच्छति सभा भगवद्भ्यः सूक्तभावमिति तावदुवाच**[१६] ।।

७) समेषां सर्वेषां ध्वन्यात्मक-वर्णात्मक-लौकिक-वैदिकशब्दानां व्युत्पत्तिप्रदर्शनपूर्वकं भगवद्वाचकत्वं समर्थयति कोश इवेयमुनिषत् ।

---

१४. ऐत.उ.२-७-१ १५. सु.वि.६-५०

१६. सु.वि. ६-१

८) लौकिक-वैदिक-तात्विक-वैज्ञानिक-साहित्यकविषयाः बह्वोऽत्र प्रतिपादिताः ।

९) स्वगुरवे तोटन्तिल्लाय गुरुदक्षिणारूपत्वेन इमामेवोपनिषदमुपदिदिशुः । यथोक्तं सुमध्वविजये–

**साक्षादथोपनिषदो विभुरैतरेय्याः**

**पाठच्छलेन विजनेर्थरसान् ब्रुवाणः ।**

**अध्यापकाय विततार विमोक्षबीजं**

**गोविन्दभक्तिमुचितां गुरुदक्षिणां सः**[१७] ।। इति ।

अत उपनिषत्सु ऐतरेयोपनिषदः स्थानं महदस्तीति गम्यते ।

**९) उपनिषद आगतिक्रमः**

उपनिषदः आगतिक्रममनुसृत्यानेकधा कथाः श्रूयन्ते । हरीत-मुनिवंशीयः माण्डूक्यनामधेयः कश्चन ऋषिः । तस्यां जात ऐतरेयो वासुदेवद्वादशाक्षरमन्त्रबलादस्या उपनिदः प्रवक्ता । प्रागयं मूक इव स्वात्मानं दर्शयामास । माण्डूकिः पिङ्गानाम्नीं द्वितीयामूढ्वा तस्यां चतुःपुत्रान् लेभे । ते च शास्त्रपारङ्गताः यज्ञादिकर्मणि व्यापृताः पितरं तोषयामासुः । पुत्रस्य (ऐतरेयस्य) बुद्धिमान्द्येनासन्तुष्टा माता तं निनिन्द । तदा मौनमपहाय ऐतरेयस्तस्यास्तत्त्वोपदेशं व्यधात् । तदनन्तरं वासुदेवरूपिणा भगवता प्रेरितः हरिमेधसो ब्राह्मणस्य यज्ञशालां प्रविवेश । स्वजप्तवासुदेवमन्त्रप्रभावेन ऐतरेयब्राह्मणमन्त्रान् सम्पठित्वा सर्वैः पूजां स्वीचकार । एवमितरापुत्रदृष्टानां मन्त्राणां ऐतरेयमन्त्रा इति प्रसिद्धिः समजनीति स्कान्दे कौमारिकाख्ये उपखण्डे श्रूयते ।

---

१७. सु.वि. ३-५५

सायणाचार्यकृतऋग्भाष्यभूमिकायां तु किञ्चिद्व्यत्यासेन कथेयं श्रूयते । याज्ञवल्क्यमहर्षेः पत्नी इतरा वर्णावरा च । अस्यां जातः ऐतरेयः । बाल्ये रोदनावसरे मात्रा प्रतिरुद्धो मूक इव तस्थौ । कस्मिंश्चनाध्वरे पित्रा भ्रातृभिश्चानादृतः वासुदेवमन्त्रानुग्रहबलात् चत्वारिंशदध्याय-परिमितान् मन्त्रानुपदिदेश । तदा मह्या (भूदेव्या) दत्तासनो महिदास इति प्रथितः समभवत् । इयं च कथा ऐतरेयब्राह्मणसुख-प्रदानामकव्याख्याने षड्गुरुशिष्यप्रणीते उपलभ्यते ।

श्रीमदानन्दतीर्थभगवत्पादाचार्यास्तु एवं व्याचक्षते । स्वायुम्भुवेऽन्तरे चतुर्मुखब्रह्मणः विशालनामा पुत्रस्समजनि । तस्य पत्नी इतरा । अस्यां भगवान् नारयणः ऐतरेयनाम्ना प्रादुर्बभूव । कचिदध्वरे रमा-ब्रह्मादीनां देवोत्तमानां उपदिदेश च इमां रहस्यविद्याम् । महान्तः ब्रह्मादयो यतस्तस्य दासाः बभूवुः अतोऽयं 'महिदासः' इति विख्यातः । तदुक्तमैतरेयभाष्योदाहृतऋक्संहितायाम्–

प्रादुर्बभूव भगवान् तपसेतराया
नारायणोऽब्जजसुतस्य विशालनाम्नः ।
तस्मिन् गतेऽध्वरमभूत् सुरविप्रसङ्घो
निश्चेतनस्तदनु पद्मभवोऽमुमस्तौत् ॥

तेन स्तुतः स भगवान् गिरिशेन्द्रमुख्यान्
सर्वानबोधयदजेन सहैव तेऽथ ।
दासत्वमापुरत एव महत्सुराणां
दासत्वतः स महिदास इति प्रसिद्धः ॥

शृण्वत्सु तेषु भगवानवदद्रमायै
दिव्यां श्रुतिं स परमोऽतिमुदैतरेयीम् ।
सा बह्वृचैः प्रपठिता चतुराननास्यात्
यस्यां रहस्यमुदितं परमं हि विष्णोः ।।

महाभूतिःश्रुतिः सैषा महाभूतिर्यतो हरिः ।
विशेषेणात्र कथितः सर्वज्ञः शाश्वतः प्रभुः[१८] ।। इति ।

**१०) ऐतरेयोपनिषत्सारः(ऐतरेयोपनिषत्प्रतिपाद्यप्रधानविषयाः)**

अस्यामुपनिषद्यनेके विषयाः प्रतिपादिताः । ते चात्र प्राधानभूताः प्रस्तूयन्ते । सृष्टिः, भगवतः सर्वशब्दवाच्यत्वं, वायोर्जीवोत्तमत्वं, बृहतीसहस्रमहत्वं, देहस्य रथसादृश्यं वीणासादृश्यं च, बाह्याः स्वाप्नाश्च मरणसूचकाः, तत्परिहारश्च, स्त्रीणां स्थानं, इत्यादयोऽनेके विषया अत्र निरूपिताः । तथापि ते विषया अत्र स्थालीपुलाकन्यायेन पश्यामः ।

**१०.१) भगवान् आश्रयणीयः**

लोके जनाः भगवदन्यत्र विश्वसिनः स्वहानिमेव प्राप्नुवन्ति । इयमुपनिषच्चोपदिशति हरावनन्यविश्वासिनः नैव दुर्गतिरिति । 'तस्मात् न प्रमाद्येत'[१९] इति । ये भगवन्तं निन्दन्ति ते दुर्गतिं प्राप्नुवन्ति । सर्वथा भगवन्तं न विस्मरेत् । नित्यमुक्ता श्रीरप्यद्यापि न विस्मृतवती । ब्रह्माद्या अपि जीवाः भगवदत्यागात् संसृतेर्मुक्ता अभूवन् । अतो विश्वसनीयं ब्रह्म । उपनिषदुदाहरत्यस्मिन् विषये आर्षवाणीं- 'प्रजाः तिस्रः'[२०] इत्यादि ।

---

१८. ऐत.उ.भा. पु.१०. १९. ऐत.उ २-१-१ २०.ऐत.उ.२-१-१

## १०.२) सृष्टिः

बहुषु भारतीयप्राचीनग्रन्थेषु सृष्टिर्निरूपिता । पुराणादिषु श्रीमद्भागवतमहाभारतादिष्वुपनिषत्सु च सृष्टिः निरूपिता । अनेकत्र बहुविधा जगत्सृष्टिः जीवसृष्टिः ब्रह्माण्डसृष्टिरुक्ता दरीदृश्यते । अद्यापि विज्ञाने सृष्टिः कथंभूता इति जिज्ञासा वरीवर्ति । परिदृश्यमानस्यास्य जगतः उत्पत्तिविषयेऽनेके वादाः प्रवृत्ताः । अभावकारणवादः, असत्कार्यवादः, परमाण्वारम्भवादः, ईश्वरकारणवादः, सत्कार्यवाद इत्यादि । एवमेवास्यामुपनिषदि सृष्टिर्भगवतः सकाशादेव सञ्जाता । देवादयस्तत्रा-समर्था इति निरूपितम् ।

प्रजापतिनामकभगवत एते ब्रह्मादयो देवाः जाताः । ब्रह्मादिभ्यः वृष्टिः सञ्जायते । वृष्टेः ओषधयः । ओषधीभ्योऽन्नम् । अन्नाच्च रेतः रेतसः प्रजाः प्रजायन्ते । हृदयाभिधः सङ्कल्पः प्रजाभ्य एव प्रजायते । मनआत्मकं विकल्पं सङ्कल्पात् सञ्जायते । विकल्पाच्च वाक्प्रचारः । वाचा च कर्म अजनि । कर्मणः पुनर्जगदुत्पद्यते । एवमन्ततो भगवानेव तत्तत्स्थानेषु स्थित्वा जगदुत्पादयतीति भगवानेव सृष्टिकर्ता ।

द्वितीयब्राह्मणस्थप्रथमाध्यायसप्तमखण्डे 'अथातो विभूतयोऽस्य'[२१] इत्यादिना परमपुरुषस्य भगवतोऽङ्गेभ्यः सर्वे देवा उत्पन्ना इत्यभिहितम् । भगवतो मुखेन पृथिवी अग्निश्चेत्युभौ सृष्टौ । अभिमानिदेवौ च । भगवत उत्पन्नत्वादेव एतौ पचनीयं तण्डुलादिकं 'आहरत आहरत' इत्युक्त्वा जीवैराहृताः सर्वाः ओषधयः भगवत्सेवात्वेन स्वदयतः ।

---

२१. ऐत.उ.२-१-७

भगवतो घ्राणात् भूताकाशाभिमानी विघ्नेशो जातः । अतो विघ्नेशदत्तावकाशेन सर्वे प्राणिनस्तीर्थक्षेत्राद्यटनं कुर्वन्तो भगवन्तं परिचरन्ति । तत्प्रेरणयैव श्रोत्रेण सर्वे शृण्वन्ति ।

भगवतश्चक्षुषा द्यौ आदित्यश्च सृष्टौ । अत एव द्यौः वृष्टिमन्नं च सम्प्रयच्छति भूतेभ्यः ।

भगवतः श्रोत्रेण दिगभिमानिनश्चन्द्रमाश्च सृष्टाः । भगवतो मनसा अबभिमानिनो वरुणश्च सृष्टाः । उपपादिता च भगवतैवेयं सृष्टिः इति भगवता आचार्यमध्वेण ।

द्वितीयारण्यके चतुर्थाध्याये च सृष्टिरभिहिता । 'आत्मा वा इदमेक'[२२] इत्यादिना । भगवानेव सृष्टेः पूर्वं (प्रलये) आसीत् नान्यत् । ततो भगवान् इच्छन् ब्रह्मादिदेवान् तदभिमन्यमानसत्यादिजडलोकांश्चासृजत । ततो भगवान् देवानां पूज्यत्वसिद्धये तानेव लोकान् ब्रह्माण्डान्तः सृष्टवान् । पूर्वं सृष्टा अपि देवाः ब्रह्माण्डान्तः पुनः प्रजातरूपान्तरेण सृष्टाः । एवं महदादितत्वात्मकाचेतनभागानप्यंशत उद्धृत्य ब्रह्माण्डान्तः ब्रह्मणः शरीरं सृष्टवान् । तत्र पुनः मुखाद्यङ्गानि यथा निरभिद्येरन् तथा मूर्तमकरोत् । ततः शरीरात् मुखाद्यभिमानिदेवास्तत्राजायन्त । एवं सृष्टिस्तत्र तत्र निरूपिता दृश्यते ।

### १०.३.१) भगवतः सर्वशब्दवाच्यत्वम्

इयमुपनिषत् कण्ठरवेण भगवतः सर्वशब्दवाच्यत्वमभिदधति । सर्वशब्दवाच्यत्वं प्रत्यध्यायं प्रतिकाण्डं चोपपादितमस्यामुपनिषदि । किञ्चिदेवात्र पश्यामः–

---

२२. ऐत.उ.२-४-२

१) प्रथमारण्यके प्रथमाध्याये- 'एष पन्था'[२३] इत्यत्र भगवतः पन्था-सत्य-कर्म-ब्रह्मादिशब्दवाच्यत्वमभिहितम् । सर्वे शब्दाः भगवदन्यं मुख्यवृत्या न बोधयन्ति । सर्वस्वामिनं अत एव तत्तच्छब्दप्रतिपाद्यं नारायणमेव मुख्यवृत्या प्रतिपादयन्ति । पृथिव्यादितत्वबोधकशब्दो न केवलं भौतिकवस्तुतत्वाभिमानिबोधकोऽपितु पदार्थान्तर्यामिणं भगवन्तमेव मुख्यवृत्त्या प्रतिपादयन्ति शब्दाः । तथापि शब्दास्तं तमर्थममुख्यया वृत्त्या बोधयन्ति क्षीरव्यापि जलं बोधयत् पयश्शब्द इव । सर्वत्र भगवत्सान्निध्यात् सर्वे शब्दाः भगवन्तमेव प्रतिपादयन्तीत्यनया दृष्ट्या उपनिषदियं विश्वामित्रादिऋषिबोधकशब्दजातं नारयणबोधकमेवेति प्रत्यपादि ।

**१०.३.२) आख्यायिका भगवतः सर्वशब्दवाच्यत्वं समर्थयति**

इन्द्रो वृत्रं हत्वा पापमवाप । पापपरिहारार्थं महेन्द्रत्वप्राप्त्यर्थं च महाव्रताख्यं कर्म चक्रे । तत्र कौशिको विश्वामित्रः हौत्रं कृत्वा बृहतीसहस्रमन्त्रैरिन्द्राविष्टं केशवं तुष्टाव । वायुना सह प्रीतो नारायणः पुनः शंसितुमाज्ञापयामास । एवं त्रिवारं कौशिकः शशंस । तेन प्रीतो भगवान् वरं ददौ । 'इन्द्राविष्टः त्वं कोऽसि' इति उपदेष्टुमर्हसि इति वरं वृणीतवान् विश्वामित्रः । भगवांस्तु तद्व्याजेन सर्वनामत्वं ममास्तीति सर्वशब्दवाच्यत्वमुपदिदेश– 'प्राणो वा अहमस्मि ऋषे'[२४] इत्यादिना । तथा च भगवतः सर्वचेष्टकत्वात् प्राणशब्दवाच्यत्वम् । सर्वैरप्यहेयत्वादहंशब्दवाच्यत्वम् । शत्रुनाशकत्वात् सर्वज्ञत्वाच्चास्मिशब्दवाच्यत्वं भगवतः । एवमेव

---

२३. ऐत.उ.२-१-१ २४. ऐत.उ.२-२-३

'सर्वाणि भूतानि'[२५] इत्यादिना सर्वशब्दवाच्यत्वं भगवतोऽस्तीति अख्यायिकया प्रतिपादयतीयमुपनिषत् ।

एवमेव द्वितीयारण्यके 'एष इमं लोकमभ्यार्चत्'[२६] इत्यादिना शतर्चि-मध्यम-गृत्समद-विश्वामित्र-वामदेव-अत्रि-प्रभृतिशब्दाः भगवति नारायण एव मुख्यया वृत्या विद्यन्त इति भगवती श्रुतिरेव प्रत्यपीपदत् ॥

एवमेव प्रत्यध्यायं प्रतिखण्डं च भगवतः सर्वशब्दवाच्यत्वं प्रधानतया अस्यां महैतरोयोपनिषदि प्रतिपादितम् ।

**१०.४) देवोत्तमो वायुदेवः**

एते ब्रह्मण उत्पन्नाः देवाः 'अहमस्मि उत्तमः अहमस्मि श्रेष्ठः' इति परस्परमनिन्दन् विविदुः । भगवांस्तु आदिदेश 'योऽस्मात् शरीरादुत्क्रान्त इदं शरीरं पत्स्यति यस्मिंश्च प्रविशतीदं शरीरमुत्तिष्ठति स ज्येष्ठः स उत्तमः' इति । वागभिमानी अग्निर्निष्क्रान्तः । शरीरं नैवापतत् । चक्षुरभिमानी सूर्य उदक्रामत् । तथापि शरीरं नैवापतत् । केवलं दृष्टिहीनमभवत् । श्रोत्रभिमानी मनोभिमानी एवं सर्वेन्द्रियाभिमानिन उदक्रामन् परन्तु शरीरं नैवापतत् । केवलं तत्तदिन्द्रियव्यापारकरणेऽसमर्थमभवत् । परन्तु वायावुत्क्रामति सति शरीरं क्षितौ पपात । अतो वायुः 'जीवोत्तमः' इति प्रथां भेजे । वायुमृते सर्वे देवाः शरीरं प्रविशुः । तदा तत्तदिन्द्रियकार्याणि नैव सञ्जातानि तच्छरीरेण । यदा वायुः प्रविवेश तदोदतिष्ठदिदं शरीरम् । अतः प्राणनामा वायुदेव उत्तमो ज्येष्ठः

---

२५. ऐत.उ. २-२-३ २६. एत.उ. २.२.१.

श्रेष्ठश्च । एवं वायुः देवादीन् प्रति परं ब्रह्मोपदिदेश । ते च देवाः शिष्यप्रशिष्यादिषु वायुनोदितं तत्त्व प्रससुः । अनेन च तत्त्वज्ञानेन सर्वेऽपि संसारान्मुक्ताः सन्तः स्वानन्दानुभवं भजन्ते ॥

### १०.५.१) बृहतीसहस्रमहत्त्वम्

महाव्रतयज्ञे बृहतीसहस्रमन्त्रा अवश्यं पठनीयाः । विश्वामित्रः बृहतीसहस्रमन्त्रान् पपाठ । तत्रागते महेन्द्रे वायुविष्णू सन्निहितौ तच्छुश्रुवुः । त्रिवारं मन्त्रपठितुर्विश्वामित्रस्य वरत्रयमन्वगृह्णत् विष्णुः । प्रथमेन वरेण निजसालोक्यं प्रददौ । द्वितीयेन वरेण नारायण-पुरप्राप्तिमनुजग्राह । तृतीयेन च वरेण त्वामेव जीनीयामिति विश्वा-मित्रेण पृष्टः विष्णुः 'प्राणो वा अहमस्मि ऋषे'[२७] इति स्वात्मानं उपदिदेश ।

शस्त्रात्मकमिदं बृहतीसहस्रं सर्वं भगवतो वायोश्चान्नमिव । यथा प्रसिद्धान्नं जीवजातस्य तृप्तिकरं तथा इदं बृहतीसहस्रमपि । बृहतीसहस्रपठनेन सन्तुष्यति भगवाननुगृह्णाति च । अतः इदं अन्नमिव भगवतः (वस्तुतः नित्यतृप्तस्य तृप्तिकराभावात् इवशब्दः) ।

### १०.५.२) बृहतीसहस्रपठनफलम्

विश्वामित्रः त्रिवारं बृहतीसहस्रेण भगवन्तमिन्द्राविष्टं तुष्टाव । प्रथमस्तवेन प्रीतो भगवान् सालोक्यरूपं फलं ददौ । द्वितीयेन स्तवेन स्वपुरप्राप्तिं प्रददौ । तृतीयेन स्तवेन चान्तःपुरप्राप्तिं स्वविषयकज्ञानं च फलत्वेन विश्वामित्राय प्रायच्छत् । अतः बृहतीसहस्रपठनेन मुक्तिरेव फलं इति ज्ञायते ।

---

२७. ऐत.उ.२-२-३

### १०.९.३) बृहतीसहस्रदेवतानिरूपणम्

यावतीभिः ऋग्भिः शंसिताभिः द्वात्रिंशत्सहस्राणि (३२०००) अक्षराणि भवन्ति तत् बृहतीसहस्रम् । न बृहतीच्छन्दस्कर्कसहस्रेणैव भाव्यमिति नियमः ।

तत्र बृहतीसहस्रे यानि व्यञ्जनानि कादिमावसानानि स्पर्शाक्षराणि तानि स्वायुम्भवमनुदेवताकानि । यानि च यरलवरूपाणि घोषापरपर्यायाणि तानि जीवाभिमानी चतुर्मुखदेवताकानि । शषसहाः ऊष्माणः वायु-देवताकाः । एवमुपासनेन वशिष्ठो वशिष्ठपदं प्रापेतीयं उपनिषत् (२-२-२) प्रतिपादयति । इमां विद्यां इन्द्रः विश्वामित्राय भरद्वाजाय च प्रोवाच ॥

### १०.९.४) बृहत्याः गरिमा

इतरच्छन्दोपेक्षया बृहत्या एव विशेषतो गरिमोपपादिता अस्यां उपनिषदि ।

१) अनुष्टुप् एव छन्दसां वरा इति कश्चिदृषिमतं अनूद्य निराकुरुते इयं महैतरेयोपनिषत् । महिदासः ऐतरेयः बृहत्या एव गरीयस्त्वमवादीत् ।

२) अनुष्टुप्छन्दः उमादैवत्यः । बृहत्यास्तु वायुरेवाभिमानी । अतो अभिमान्यपेक्षयापि बृहत्याः एव गरीयस्त्वम् ।

३) अकारः भगवन्नामत्वेनोपनिषत्सु परिगृहीतः । 'अः इति ब्रह्म'[२८] इति श्रुतेः । नारायणशब्दोऽपि अकारव्याख्यानरूप एव ।

---

२८. ऐत.उ.२-३-८

तथा बृहतीसहस्रमपि अकारव्याख्यानपरमेव इतीयमुपनिषत् प्रतिपादयति । अतोऽपि बृहत्याः महत्वं प्रतीयते ।

४) इयं बृहती चतुर्मुखमध्यदेहोत्पन्ना अतो वरा । तृचाशीतित्रयमध्ये इयं बृहती पठ्यमाना सप्तच्छन्दोरूपवैष्णप्रतिमायाः मध्याङ्गा च अतः इयं श्रेष्ठा । (सोऽयमात्मा २-३-५) ।

६) इदं बृहतीसहस्रं विष्णुसहस्रनामप्रतिपाद्यरूपाभिधयकं पृथक् पृथक् । उक्तं च उपनिषदि- 'तदेतत् सहस्रम्'[२९] । अत इदं बृहतीसहस्रमितरापेक्षया महत्वमावहति ।

**१०.६) ऐतरेयोपनिषद्युक्ताः मरणसूचकाः**

अस्यामैतरेयोपनिषदि प्रत्यहमनुभवगोचराः विचाराः बहवः प्रतिपादिताः । तत्र मरणसमये (जीवस्य देहवियोगे सन्निहिते) मरणसूचका अनुभवसिद्धा अत्रान्तिमारण्यके निरूपिताः ।

**१०.६.१) जाग्रदवस्थायां दृश्यमानाः मरणसूचकाः**

हृदयचक्षुषोः स्थितौ अनिरुद्धप्रद्युम्नौ यदा देहादपगच्छतस्तदा जीवस्य मरणसूचकाः दृश्यन्ते । आदित्यः प्रकाशमानोऽपि चन्द्रमा इव दृश्यते । आदित्यस्थरश्मयः न प्रादुर्भवन्ति (रश्मिप्रादुर्भावदर्शनं अस्य जीवस्य न जायते ) । द्यौ रक्तवर्णा परिदृश्यते । गुदद्वारं विवृतं भवति । अस्य शिरः काकस्य कुलायवत् दुर्गन्धयुक्तं वाति ।

आदित्यः छिद्रहीनोऽपि छिद्रवानिव दृश्यते । स्वस्यैव छायां छिद्रवतीं पश्यति । आदर्शे जले वा स्वप्रतिबिंबं वक्रशिरस्कं

---

२९. ऐत.उ.२-३-४

शिरोहीनं वा पश्यति । कर्णावपिधाय श्रूयमाणो ध्वनिः प्रज्वलतः अग्नेः शब्द इव आगच्छतो रथस्य शब्द इव श्रुणोति । यदा एतानि अरिष्टानि जीवस्यानुभूयन्ते तदाऽयं मृतप्राय एव भवति । ततः परं चिरं न जीविष्यति ।

**१०.६.२) परिहारोपायश्च तत्रैवोक्तः**

एतानि मरणसूचकानि यदा जायन्ते तदाऽयं पुरुषः 'यदन्ति यच्च दूरके'[३०] इत्यादि सप्त ऋचः जपेत् । तज्जपेनाकालमृत्युश्चेत् परिहृतो भवति । कालमृत्युश्चेदपरोक्षज्ञानद्वारा मोक्षो भविष्यति ।।

**१०.६.३.) स्वप्ने परिदृश्यमानाः मरणसूचकाः**

मरणकाले सम्प्राप्ते जीवः स्वप्ने कृष्णं कृष्णदन्तं वा पुरुषं पश्यति । तादृशपुरुषश्च स्वप्नद्रष्टारं हिनस्ति । वराहः एनं हन्ति स्वप्ने । मर्कटः उपर्याक्रमते । वायुः एनं ऊढ्वा प्रयाति स्वप्ने । अपूपसहितं बृहत्तमं मध्वत्ति स्वप्नद्रष्टा । एकमेव रक्ताब्जं शिरसा धारयति स्वप्नावस्थायाम् ।

**१०.६.४) परिहारोपायः**

पुमान् एतेषां मध्ये यदि किञ्चित् पश्येत् तर्हि तत्सूचितापमृत्युपरिहारार्थं उपोष्य, स्थालीपाकं कृत्वा पायसं च कृत्वा जुहुयात् रात्रीसूक्तेन 'रात्री व्यख्यदायती'[३१] इत्यनेन । प्रत्यृचं रात्रिशब्दवाच्यस्त्रीरूपभगवन्मूर्तिं दुर्गां चोद्दिश्य जुहुयात् । पायसेनेष्टो हरिः दुर्गा चापमृत्युश्चेत् परिहरतः । कालमृत्युश्चेत् ज्ञानद्वारा मोक्षं प्रापयतः ।

---

३०. ऋक्.सं. ९-३७-२१ ३१. ऋक्.सं. १०-१२७-१

एवं सकलजीवानां दृश्यमानाः दुःस्वप्राः परिहाराश्चोपनिषदि सविस्तरं प्राणिनां उद्धाराय निरूपिताः सन्ति ॥

**१०.७) वाक्सिद्धिमन्त्रः**

विद्वत्सभायां यत्र क्वापि अध्ययने अध्यापने वा प्रवृत्तः सिद्धिमन्विच्छन् साधकः अवश्यं मन्त्रमेतं जपेत् ।

**ओष्ठा पिधाना न कुली दन्तैः परिवृता पविः ।**
**सर्वस्यै वाच ईशाना चारु मामिह वादयेत्[३२] ॥**

विवृतं चात्र भगवत्पादाचार्यैः- वागिन्द्रिये विष्णुः संस्थितः । स हि द्वाराविव विद्यमानयोः ओष्ठयोः सन्निहितः । निर्दोषत्वात् कुली उच्यते । स्वपालकत्वात् सर्वोत्तमत्वाच्च एषः पविः इत्युच्यते । स्त्रीरूपिणमेनमुपास्य वाक्सिद्धिं साधकः लभते ॥

अन्ते चेयमुपनिषदुपसंहारवाक्ये विष्णोर्वेदप्रतिपाद्यत्वं प्रतिपादयति– 'णकारो बलं षकारः प्राण आत्मा'[३३] इति । भगवन्नाम्नि विष्णुशब्दे षकारणकारौ स्तः । णकारो भगवतः बलं वक्ति । षकारस्तु भगवतः व्याप्तिं नियामकत्वं च बोधयति । विशब्दस्तु गुणानां वैशिष्ट्यं प्रतिपादयति । बलं शक्तिः पूर्णता नियामकत्वं च भगवति स्वभावत एव सन्ति इत्येव विष्णुशब्दार्थः ॥

एवं सर्वशब्दवाच्यत्व-वायुजीवोत्तमत्व-बाह्यस्वाप्नमरणसूचक-तत्परिहार-सृष्टि-बृहती-सहस्रमहत्वादयः विषयाः प्रधानतया उपनिषदि अस्यां सविस्तरं प्रतिपादिताः । केचिदेवात्र निरूपिताः । अन्ये च

---

३२. ऐत.उ. ३-२-५ ३३. ऐत.उ ३-२-६

लौकिकाः विचाराः स्त्रीणां स्थानं, देहस्य अध्यात्मरथत्ववर्णनं, देहस्य रथसादृश्यं, ज्ञानेच्छुकर्तृकप्रार्थना इत्यादयः विषयाः मोक्षोपयोगिनः निरूपिताः । ते च विस्तरभयान्न विव्रियन्ते ।।

## ११) श्रीमदानन्दतीर्थभगवत्पादाचार्यकृतभाष्यवैशिष्ट्यम्

श्रीमदानन्दतीर्थभगवत्पादकृतमैतरेयभाष्यमत्यन्तं वैशिष्ट्यपूर्ण-मधीयमानं मनोल्लासं च जनयतीति परं विदितमेव समेषां सर्वेषाम् । जगतः सत्यत्वं, विष्णोः सर्वोत्तमत्वं, भगवतः सकल-गुणपूर्णत्वं, जीवेशयोः भेदं चानुभवबलेन परीक्ष्य प्रमाणानुसारेण वैज्ञानिकरीत्या विवेचनं श्रीमदानन्दतीर्थीयभाष्ये परिजृम्भते । सर्वप्रमाणेभ्योऽनुभवस्य प्राबल्यं लौकिके विषये, वैदिके च श्रुतेरेव प्राबल्यं सयुक्तिकं विमर्शयन्ति श्रीमदाचार्याः स्वीये भाष्ये ।।

न कदाऽप्याचार्यैः स्वकपोलकल्पितं प्रमाणातीतमभाणि । यथा मधुकरः विविधेभ्यः कुसुमेभ्यः सारभूतं रसं सङ्गृह्य मधु विदधाति एवमेव आचार्याः माध्वायिताः सारभूतं भगवतः गुणपूर्णत्वं सकल-दोषविदूरत्वं विविधप्रमाणेभ्यः उद्धृत्य प्राणिनां वितरन्ति । अत एव श्रुतिरवादीत् 'माध्वीर्गावो भवन्तु नः'[३४] इति ।

परमास्तिकशिखामणय आचार्याः स्वनिरूपितं प्रमेयं प्रमापयितुं सर्वसम्मतमनन्तं वेदराशिं प्रमाणयन्ति । अत एव आचार्यकृतीनां 'सर्वमूलं' इति अन्वर्थसंज्ञा । सर्वः वेदराशिः स्वकृतेर्मूलं सर्वमूलम् ।।

प्रकृते ऐतरेयभाष्ये च उपनिषदां आध्यात्मिकोऽर्थः, भगवतः सर्वशब्दवाच्यत्वं इत्यादयः बहवः प्रमेयाः सप्रमाणं अनुभवारूढं प्रतिपादिताः । तदत्र लेशतः पश्यामः ।

३४.ऋक्.सं. १-१९-२०

**११.१) आचार्याः ऐतरेयोपनिषद्भाष्ये आध्यात्मिकमर्थं प्रकटयन्ति**

तद्यथा- 'एष पन्था'[३५] इत्यत्र वासुदेवाद्याश्चतस्रो मूर्तयः प्रतिपादिताः । उक्तं हि ऐतरेयभाष्ये– 'ब्रह्म पन्थाः सत्यं कर्म इत्यत्र नारायणस्य वासुदेवाद्याः क्रमेण चतस्रो मूर्तयः' इति ॥

१) 'वासनात् सूतेर्देवनात् वासुदेवः' इत्युक्तदिशा ब्रह्म वासुदेवः ।

२) शरीरेभ्यः सम्यक् कर्षणेन प्रलये स्वोदरप्राप्तिहेतुत्वात् पन्थाः सङ्कर्षणः ।

३) सत्वेन प्रकृष्टतया अवगम्यत इति सत्यम् । प्रकृष्टतया द्युतिमेयत्वं हि प्रद्युम्नपदप्रवृत्तिनिमित्तम् । प्रकर्षेण सृष्ट्या जगतो द्योतकः प्रद्युम्नः ।

४) अन्नपानादिकर्तृत्वात् रक्षणाय प्राप्तोपद्रवज्ञातृत्वात् लयकर्तृत्वाच्च अनिरुद्धः कर्म ।

**उदाहरन्ति च प्रमाणं स्वोक्तार्थे–**

**एष एव सदा पन्था भगवान् पुरुषोत्तमः ।**
**नित्यं स्वप्राप्तिहेतुत्वात् कर्तृत्वात् कर्म मातृतः ।**
**ब्रह्मैष गुणपूर्णत्वात् सत्यं साधुस्वरूपतः[३६] । इति ॥**

२) अन्यत्र च द्वितीयारण्यकतृतीयाध्याये अष्टमखण्डेऽयं मन्त्रः अस्ति । 'अथ देवरथः तस्य वागुद्धिः श्रोत्रे पक्षसी युक्ते मनः सङ्ग्रहीता तदयं प्राणोऽधितिष्ठति'[३७] इति । अस्या उपनिषदः श्रीमदाचार्योक्ताध्यात्मिकोऽर्थोऽध्येतृणां मनः प्रसादयति ।

---

३५. ऐत.उ.२-१-१ ३६. ऐत.भा.२-१-१ (पु.१३)

३७. ऐत.उ.२-३-८

अयं देहरथः विष्णोः वायोश्च रथः । देवनिर्मितो रथः । देहाख्य-रथस्य वागभिमानिन्युमा उद्धरणरज्जुरूपा । चक्षुरादिदेवानांमुद्धा-रणहेतुत्वात् । वामदक्षश्रोत्रगतचन्द्रतद्भार्ये पक्षयोः दक्षवामभागयोर-श्वरूपेण स्थिते । दक्षवामचक्षुर्गतसूर्यतद्भार्ये पुरतो योजिताश्वरूपे । मनोगतो मनोभिमानी रुद्रः सारथिः । एतादृशदेहाख्यरथे विष्णवायू अधितिष्ठतः । इमममर्थं ऐतरेयसंहिताप्रमाणोनोदाहरन्ति न केवलं स्वकपोलकल्पितम् ।

**आदित्या वसवो रुद्राः विश्वे ऋभव इत्यपि ।**
**सर्वदेवसमाख्या च द्वादशाष्टादिकेश्वपि ।**

**निर्मितो दैवतैः सर्वैर्विष्णुना वायुना सह ।**
**अधिष्ठितो रथो दिव्यः सोऽध्यात्मं देहनमकः[३८] ।**

स्वयं ऐतरेयोपनिदेवास्मिन्नर्थे ऋङ्मत्रमुदाहरति -

**आतेन यातं मनसो जवीयसा रथं यं वामृभश्चक्रुरश्विना ।**
**यस्य योगे दुहिता जायते दिव उभे अहनी सुदिने विवस्वतः[३९] ।।**

भाष्यमप्यस्य ऋङ्मत्रस्य अपूर्वमेवार्थं द्योतयति-

**सम्यग्योगो यदा तस्य मनोवाक्कायकर्मभिः ।**
**देहाख्यस्य रथस्यैव तदा नारायणात्प्रभोः ।**

**विविधं वासवत्वात् तु विवस्वन्नामकाच्छुभम् ।**
**संसारवारकं ज्ञानं दिवो दुहितृनामकम् ।**

---

३८. ऐत.भा.२-३-८ (पु.४६३) ३९. ऋक्.सं.१०-३१-१२

**११.१) आचार्याः ऐतरेयोपनिषद्भाष्ये आध्यात्मिकमर्थं प्रकटयन्ति**

तद्यथा- 'एष पन्था'[३५] इत्यत्र वासुदेवाद्याश्चतस्रो मूर्तयः प्रतिपादिताः । उक्तं हि ऐतरेयभाष्ये– 'ब्रह्म पन्थाः सत्यं कर्म इत्यत्र नारायणस्य वासुदेवाद्याः क्रमेण चतस्रो मूर्तयः' इति ॥

१) 'वासनात् सूतेर्देवनात् वासुदेवः' इत्युक्तदिशा ब्रह्म वासुदेवः ।

२) शरीरेभ्यः सम्यक् कर्षणेन प्रलये स्वोदरप्राप्तिहेतुत्वात् पन्थाः सङ्कर्षणः ।

३) सत्वेन प्रकृष्टतया अवगम्यत इति सत्यम् । प्रकृष्टतया द्युतिमेयत्वं हि प्रद्युम्नपदप्रवृत्तिनिमित्तम् । प्रकर्षेण सृष्ट्या जगतो द्योतकः प्रद्युम्नः ।

४) अन्नपानादिकर्तृत्वात् रक्षणाय प्राप्तोपद्रवज्ञातृत्वात् लयकर्तृत्वाच्च अनिरुद्धः कर्म ।

**उदाहरन्ति च प्रमाणं स्वोक्तार्थे–**

**एष एव सदा पन्था भगवान् पुरुषोत्तमः ।**
**नित्यं स्वप्राप्तिहेतुत्वात् कर्तृत्वात् कर्म मातृतः ।**
**ब्रह्मैष गुणपूर्णत्वात् सत्यं साधुस्वरूपतः**[३६] **। इति ॥**

२) अन्यत्र च द्वितीयारण्यकतृतीयाध्याये अष्टमखण्डेऽयं मन्त्रः अस्ति । 'अथ देवरथः तस्य वागुद्धिः श्रोत्रे पक्षसी युक्ते मनः सङ्ग्रहीता तदयं प्राणोऽधितिष्ठति'[३७] इति । अस्या उपनिषदः श्रीमदाचार्योक्ताध्यात्मिकोऽर्थोऽध्येतॄणां मनः प्रसादयति ।

---

३५. ऐत.उ.२-१-१

३६. ऐत.भा.२-१-१ (पु.१३)

३७. ऐत.उ.२-३-८

अयं देहरथः विष्णोः वायोश्च रथः । देवनिर्मितो रथः । देहाख्य-रथस्य वागभिमानिन्युमा उद्धरणरज्जुरूपा । चक्षुरादिदेवानांमुद्धा-रणहेतुत्वात् । वामदक्षश्रोत्रगतचन्द्रतद्भार्ये पक्षयोः दक्षवामभागयोर-श्वरूपेण स्थिते । दक्षवामचक्षुर्गतसूर्यतद्भार्ये पुरतो योजिताश्वरूपे । मनोगतो मनोभिमानी रुद्रः सारथिः । एतादृशदेहाख्यरथे विष्णवायू अधितिष्ठतः । इमममर्थं ऐतरेयसंहिताप्रमाणोनोदाहरन्ति न केवलं स्वकपोलकल्पितम् ।

**आदित्या वसवो रुद्राः विश्वे ऋभव इत्यपि ।**
**सर्वदेवसमाख्या च द्वादशाष्टादिकेश्वपि ।**

**निर्मितो दैवतैः सर्वैर्विष्णुना वायुना सह ।**
**अधिष्ठितो रथो दिव्यः सोऽध्यात्मं देहनमकः[३८] ।**

स्वयं ऐतरेयोपनिदेवास्मिन्नर्थे ऋङ्मन्त्रमुदाहरति -

**आतेन यातं मनसो जवीयसा रथं यं वामृभश्चक्रुरश्विना ।**
**यस्य योगे दुहिता जायते दिव उभे अहनी सुदिने विवस्वतः[३९] ॥**

भाष्यमप्यस्य ऋङ्मन्त्रस्य अपूर्वमेवार्थं द्योतयति-

**सम्यग्योगो यदा तस्य मनोवाक्कायकर्मभिः ।**
**देहाख्यस्य रथस्यैव तदा नारायणात्प्रभोः ।**

**विविधं वासवत्वात् तु विवस्वन्नामकाच्छुभम् ।**
**संसारवारकं ज्ञानं दिवो दुहितृनामकम् ।**

---

३८. ऐत.भा.२-३-८ (पु.४६३) ३९. ऋक्.सं.१०-३१-१२

**विष्णुतत्त्वापरोक्षाख्यमहनी द्वे च शोभने ।**
**ज्ञानावस्था मुक्त्यवस्थेत्युभे एवाहनी परे[४०] ।।**

एवमेव द्वितीयारण्यके 'एष इमं लोकमभ्यार्चत्'[४१] इत्यारभ्य शतर्चि-मध्यम-गृत्समद-विश्वामित्र-वामदेव-अत्रिप्रभृतिशब्दाः भगवति नारायणे मुख्यया वृत्या विद्यन्ते इति भगवती श्रुतिरेव प्रत्यर्पीपदत् । अनेन च भगवत्पादीया व्याख्या शुद्धवैदिकसम्प्रदाय-निबद्धेति विदुषामतिरोहितम् । सर्वत्राध्यात्मिकमर्थं सुस्पष्टमनुसन्धानाय कथयन्ति आचार्याः । अतोऽस्ति भाष्यस्यास्य वैशिष्ट्यम् ।

**११.२) विष्णुरेव सर्वशब्दवाच्यः**

उपनिषदि आरण्यके वा कर्मदेवतास्वरूपप्रतिपादकानि बहूनि वचनानि दृश्यन्ते । भगवदन्यत्र अन्यत्रैव वा प्रसिद्धानां तादृशानां शब्दानां भगवति समन्वयो नैव शक्यते सुखेन कर्तुम् । भगवत्याः श्रुतेस्तु नारायणस्य सकलशब्दवाच्यत्वप्रतिपादनद्वारा गुणपूर्णत्व-समर्थन एव ऐदम्पर्यमस्तीति वैदिकानमतिरोहितम् । अनया दृष्ट्या श्रीमदानन्दतीर्थैरन्यपरतया प्रतीयमानानां शब्दानां भगवति समन्वयद्वारा अपूर्वः कश्चनार्थविशेष उपवर्णितः ।

अस्यामुपनिषदि 'ता वा एताः सर्वा ऋचः'[४२] 'सर्वे वेदाः सर्वे घोषाः एकैव व्याहृतिः प्राण ऋच इत्येव विद्यात्'[४३]. इति सर्व-शब्दवाच्यत्वं प्राणस्याभिहितम् । 'स उ प्राणस्य प्राणः'[४४] इति

---

४०. पु.४६४ ४१. ऐत.उ.२-२-१ (पु१४०)
४२. ऐत.उ २-२-२ (पु.१६२) ४३. ऐत.उ २-२-२ (पु.१६२)
४४. केन.उ. १-२

केनोपनिषदुक्तदिशा 'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति'[४५] 'मम योनिरप्स्वन्तःसमुद्रे'[४६] 'यमन्तःसमुद्रे कवयोऽवयन्ति'[४७] 'तदेव ब्रह्म परमं कवीनां'[४८] 'तन्नो विष्णुः' इत्यादिना च परममुख्यवृत्या विष्णुरेव प्राणशब्दवाच्यः । अत्र श्रीमदानन्दतीर्थभगवतपदाचार्याः श्रुतिगतप्राणपदं यथा विष्णुपरं तथैवामुख्यया वृत्या समस्तकलिदोषविदूरं विशुद्धज्ञानस्वरूपं मुख्यप्राणं प्रतिपादयतीति तस्य अज्ञानाभिवभवास्पृष्टत्वादिहेतुना सर्वशब्दवाच्यत्वं प्रत्यपीपदन् । तथाहि– ऐतरेयभाष्योदाहृतप्रमाणवचनानि-

**अज्ञानाभिभवास्पृष्टौ वायर्नारायणश्च तौ ।**
**तदन्ये चेतनास्सर्वे प्राणाश्चात्मन एव च ।**

**आज्ञानाभिभवस्पृष्टास्तस्मात्ते ह्यधमाः स्मृताः ।**
**मध्यमो वायुरेवैक उत्तमः केवलो हरिः ।**

**सर्वशब्दोदितौ तस्मात् एतौ द्वावेव नापरः ।**
**अन्ये चैव मितैः शब्दैरुच्यन्ते नामितैः कचित् ।**

**श्रीरप्यखिलशब्दोक्ता विष्णुवन्न तु मुख्यतः ।**
**तस्मादमितनामानावपि तौ मितनामवत् ।**

**श्रीश्च वायुश्च, विष्णुस्तु मुख्योक्तेरमिताभिधः ।**
**अनन्तनामवत्वाच्च सोऽनन्तगुण ईरितः**[४९] ।। इति ।

---

४५. ब्र.सू.भा.१-१-१ इत्यत्रोदाहृता भल्लवेयश्रुतिः

४६. ऋक्.सं १०-१२५-७

४७. महा.ना.उ १-३

४८. महा.ना.उ १-७

४९. ऐत.भा. (पु.१७६)

अत्र 'सर्वशब्दोदितौ तस्मात् एतौ द्वावेव नापरः'[६०] इति प्रमाणवचनमवलम्ब्यार्वाचीनाः केचित् वायोरसङ्कुचितसर्वशब्दवाच्यत्वं व्याचक्षते । तत्तु प्रकरणविरुद्धं निरवकाशप्रमाणान्तरविरुद्धं चोपेक्षणीयमेव ।

१) तथा हि– अत्रैव ऐतरेयभाष्ये उत्तरत्र भगवत्पदाचार्यैः वायोः सङ्कुचितसर्वशब्दवाच्यत्वमेव स्पुटमभ्यधायि । एवं ताम्रपर्णिव्याख्यानेऽपि । इत्रेदमवधेयम्– 'यच्छब्दा योगवृत्तयः'[६१] । अतोऽनन्तगुणं ब्रह्म'[६२] इत्यणुभाष्योक्तदिशा, 'इत्यशेषक्रियानामशब्दैरेको जनार्दनः । उच्यते मुख्यतो यस्मात् पदवर्णस्वरादिभिः । तस्मादन्तगुणता श्रुतितात्पर्यतोऽस्य हि'[६३] इत्यनुभाष्योक्तदिशा च विष्णोरनन्तकल्याणगुणपरिपूर्णत्वे सर्वशब्दवाच्यत्वमेव प्रधानं निदानम् । यदि च वायौ सर्वशब्दवाच्यत्वमङ्गीक्रीयेत तदा तस्याप्यनन्तगुणपरिपूर्णत्वमापद्येत । एतच्च सर्वग्रन्थविरुद्धम् । न चात्र परममुख्यवृत्या विष्णौ समेषां शब्दानां प्रवृत्तिः वायौ तु मुख्यवृत्या इति वायोरपि यथायोग्यगुणपूर्णत्वमानन्त्ये तारतम्यश्च अङ्गीक्रियत इति वाच्यम् । उपचारादेव भगवत्पदाचार्यैः भगवन्नाम्नामन्यत्र प्रवृत्त्यङ्गीकारात् । 'मुख्यार्थस्य शब्दप्रवृत्तिनिमित्तातिरिक्तगुणयोगेन वृत्तिरुपचारतः' इति कल्पनोपदेशाधिकरणटीकोक्तदिशा पावित्र्यादियुते माणवकेऽग्निशब्द इव मुख्यप्राणादावपि भगवन्नामप्रवृत्तिरङ्गीकृता ।

---

६०. ऐत.भा. पु.१२८

६१. अणु.भा.१-८

६२. अनु.१-१-१११

६३. अनु१.४.१४

तदुक्तमाचार्यैः–

**यो गुणैः सर्वतो हीनः यश्च दोषविवर्जितः ।**
**हेयोपादेयरहितः स आत्मेत्यभिधीयते ।**

**एतदन्यस्वभाावो यः सोऽनात्मेति सतां मतः ।**
**अनात्मन्यात्मशब्दस्तु सोपचारः प्रयुज्यते । इति[५४] ।**

**चन्द्रसूर्यादयः शब्दाः विष्णावेव हि मुख्यतः ।**
**उपचारात् तदन्येषां विष्णुनैव कृताः पुरा ।।[५५] इति च ।**

एवं च मुख्यप्राणादौ उपचारादेव शब्दप्रवृत्तिमङ्गीकुर्वद्भिः मुख्यप्राणस्य गुणपूर्णत्वमसहमानैः श्रीमदाचार्यैः असङ्कुचितसर्वशब्दवाच्यत्वं प्रतिषिद्धमत्रैव (यद्यप्यत्र वृत्तिभेदेन सर्वशब्दवाच्यत्वं प्राणस्योक्तमिति भाति । तथापि [५६]'ऋते तत्र प्रसिद्धाश्च' इत्यादिनिरवकाशप्रमाणानुसारेण नारायणादिप्रसिद्धऋगतिरिक्तऋगादिभिरमुख्यवाच्यत्वं विज्ञेयम्)

**श्रीरप्यखिलशब्दोक्ता विष्णुवन्न तु मुख्यतः ।**
**तस्मादमितनामानावपि तौ मितनामवत् ।**

**श्रीश्च वायुश्च, विष्णुस्तु मुख्योक्तेरमिताभिधः ।**
**अनन्तनामवत्वाच्च सोऽनन्तगुण ईरितः[५७] ।। इति ।**

श्रीमदाचार्यैः श्रीप्राणादौ मुख्यवृत्या शब्दप्रवृत्त्यभावात् मितनामभिर्देवैः तौल्यमेवोपपादितम् ।

---

५४. ब्र.सू.भा.१.१.६
५५. ऐ.भा.२-४
५६. ऋक्.भा. १-५०
५७. ऐत.भा.२-२-२(१७६पु)

२) अत्रैव ऐतरेयभाष्ये आचार्यपादैः श्रियः प्राणस्य चोत्तरत्र कण्ठरवेणैव नारायणादिशब्दवाच्यत्वं प्रतिषिद्धम्–

**'यो देवानां नामधा एक एव' इत्यवधारणान्नान्यस्य सर्वनामवत्वम् । स च विष्णोर्नान्यः । पद्मनाभत्वादेव । श्रियो वायोरपि न नारायणादिनामवत्वम्'**[६८] । इति ।

अत्र हि श्रीमदाचार्यैः 'यो देवानां नामधा एक एव' इत्याद्येवाकारशिरस्क-श्रुत्यानुगुण्येन विष्णोरेव सर्वशब्दवाच्यत्वं रमाप्राणयोः नारायणादिशब्दावाच्यत्वं च स्फुटं प्रतिपादितम् ।

३) अत्रैवोत्तरत्र अकारनामा विष्णुरेव, न ब्रह्मादयो देवा अकारशब्दवाच्या इत्युक्तम् । यद्यपि नारायणादिनामानि नारायणस्मृतिसम्पादनार्थं पुत्रपौत्रादिषु सङ्केतितानि । तथाऽपि गुणपरिपूर्णत्वनिर्दोषत्वादिमहागुणसन्तत्यभिधायकोऽकारस्तु न क्वापि नामक्रियासु निर्दिष्टः । ब्रह्मवायू अकारदेवते । न अकारवाच्यौ । विष्णुसूक्तेन केवलस्य विष्णोरभिधेयत्वेऽपि विष्णुसूक्तदेवतावत्वं वेदाभिमानिनीनां विष्णोरवराणां भारत्यादिदेवीनां यथोपपन्नं तद्वत् अकाराभिमानित्वमात्रं ब्रह्मादीनामुपपन्नं न त्वाकारशब्दवाच्यत्वं इति भगवत्पादैः अत्र प्रतिपादितम्–

**अकारनामा नान्योऽस्ति तमृते पुरुषोत्तमम् ।**
**ब्रह्मरुद्रादिनामानि ब्रह्मादिष्वप्यमुख्यतः ।।**

**वर्तन्ते न त्वकारोऽयं वर्तते केशवं विना ।**
**नारायणादिनामानि नृणां नामक्रियास्वपि ।।**

---

६८. पु.-२०२

**विहितान्यकारो नैवायं विहितस्तमृते प्रभुम् ।**
**वायुर्ब्रह्मापि चाकारदेवते न तु नामिनौ ।।**

**यथा वेदाभिधेयोऽन्यो वेदाख्या देवता परा ।**
**एवं नामाभिमानी तु वायुर्वाच्यो जनार्दनः ।**
**तस्माद इति नामेतद्विष्णोः केवलमेव हि**[५९] **।।** इति ।

५) अनुव्याख्याने सुधायामपि 'नामधा एक एव' इति एवकार-शिरस्कप्रमाणानुरोधेन विष्णोरन्यत्र नाम्नां प्रवृत्तिः प्रतिषिद्धा-

**अतो न मुख्यतो नाम तदन्यस्य हि कस्यचित्**[६०]

सुधापि– 'यो देवानां नामधा एक एव'[६१] इति प्रतिषेधात् परमेश्वरादन्यस्य नामैव नास्ति । दूरे विष्ण्वादिनामेत्यर्थः । नामाभावे व्यावहारविलोपादिप्रसज्येत इत्यत उक्तम्- **मुख्यत इति ।**

६) भागवततात्पर्ये एवं श्रीमद्यादवाचार्यकृतटिप्पण्यां च भग-वन्मात्रवाचकशब्दातिरिक्तशब्दवाच्यत्वमेव ब्रह्मणः प्रतिपादितमित्यपि तस्यासङ्कुचितसर्वशब्दवाच्यत्वाभावे लिङ्गम्-

**स्वराः सप्तविहारेण भवन्ति स्म प्रजापतेः ।**
**शब्दब्रह्मात्मनस्तात व्यक्ताव्यक्तात्मनः प्रभोः**[६२] **।।**

तात्पर्ये–

**शब्दब्रह्मात्मको ब्रह्मा सर्वशब्दाभिधेयतः ।**

---

५९. ऐत.भा.३८६.पु
६०.अनु.व्या.पृ.सं-१०५८
६१. ऋक्.सं.१०-८२-३
६२. भाग.३.१२.४७

**ऋते नारायणादीनि नाम्नां स विषयो यतः ।**

**व्यक्तं ब्रह्माण्डमुद्दिष्टं अव्यक्तं महदादि च ।**

**तद्व्यापकत्वात् ब्रह्मा तु व्यक्ताव्यक्तात्मकः स्मृतः[६३] ।**

यादुपत्ये– 'एवंविधस्य सृष्टिकर्तृत्वं ब्रह्मणो नासम्भावितम् । तस्य भगवन्मात्रवाचकशब्दतिरिक्तसर्वशब्दवाच्यत्वात् । इति ।

अत्र विरिञ्चस्य सकलशब्दवाच्यत्वमभिधाय तदपि नारायणादि-शब्दातिरिक्तवाच्यत्वमेवेति विवृतमाचार्यपादैः ।

अतोऽत्र प्रमाणानुगुण्येन भगवत एवासङ्कुचितसर्वशब्दवाच्यत्वम् । प्राणादीनां सङ्कुचितशब्दवाच्यम् । तदपि अमुख्यतः इत्युक्तम् आचार्यैः ॥

ऐतरेयोपनिषदः मध्वाचार्याणां अपूर्वार्थप्रकाशकं भाष्यं विलसति । श्रूयते यत् 'ऐतरेयोपनिषदि' श्रीमध्वाचार्याणां विशेषादरः आसीदिति । अल्पीयस्येव वयसि गुरदक्षिणारूपत्वेन इमामेव उपनिषदं स्वगुरवे तोटन्तिल्लाय इति नाम्ने रहस्यार्थानाविश्चकार इति श्रीमध्वविजये कथितम्-

**साक्षादथोपनिषदो विभुरैतरेय्याः**
**पाठच्छलेन विजनेऽर्थरसान् ब्रुवाणः ।**
**अध्यापकाय वितताार विमोक्षबीजं**
**गोविन्दभक्तिमुचितां गुरुदक्षिणां सः[६४] ॥**

६३. भाग.ता.३.१३.४७

६४. सु.वि.३-५५

नैकवारं स्वशिष्येभ्यः इमामेवोपनिषदं व्याख्याति स्म इत्यपि ।

**यस्त्रिवारमितरासुतशाखास्वर्थमग्र्यमश्रुणोत् पुरसङ्गात्**[६५] ।

श्रीमध्वाचार्याः इमामेवोपनिषदं व्याचक्षाणा अन्तर्हिताः भूत्वा बदरीकाश्रमं ययुः अधुनापि वेदव्यासनिकटे तत्रैवास्ते इति सम्प्रदायविदः ।।

**१२) ऐतरेयोपनिषद्भाष्यव्याख्यानानि**

मध्वाचार्यकृतस्य ऐतरेयभाष्यस्य व्याख्यानानि बहूनि समुल्लसन्ति । तेषु केचन उपलब्धाः केचनानुपलब्धाश्च । उपलब्धेष्वपि व्याख्यानेषु केचित् प्रकटिताः केचिदप्रकटिताश्च विद्यन्ते । तानि च व्याख्यानानि–

१) ऐतरेयोपनिषद्भाष्यटीका व्यासतीर्थकृता

(महैतरेयखण्डार्थो व्यासतीर्थादिभिर्लघु । सङ्गृहीतः स एवार्थो विस्ताल्लिख्यते माया' इति ऐतरेयखण्डार्थे कृष्णाचार्यकृतेऽस्ति । अनेन ज्ञायते व्यासतीर्थैरपि व्याख्या कृतेति परन्तु नोपलभ्यते ।)

२) ऐतरेयोपनिषद्भाष्यटीका रघूत्तमतीर्थकृता

(होसपेटस्थउत्तरादिमठीयग्रन्थालये अस्ति)

३) ऐतरेयोपनिषद्भाष्यटीका विजयीन्द्रतीर्थकृता

४) ऐतरेयोपनिषद्भाष्यटीका विश्वेश्वरतीर्थकृता प्रकटिता (ऐरेयप्रकाशनम् बेङ्गळूरु.)

---

६५. सु.वि. ६.५०

५) ऐतरेयोपनिषद्भाष्यटीका वरदतीर्थकृता

(कुम्भकोणीयगोपालविलासग्रन्थालयपत्रसूचीपुस्तके निर्दिष्टम्)

६) ऐतरेयोपनिषद्भाष्यटीका रामचन्द्रतीर्थकृता

(कुम्भकोणीयगोपालविलासग्रन्थालयपत्रसूचीपुस्तके निर्दिष्टा)

७) ऐतरेयोपनिषद्भाष्यटीका वेदेशतीर्थकृता

(होसपेटस्थउत्तरादिमठीयग्रन्थालयेऽस्ति)

८) ऐतरेयोपनिषद्भाष्यटीका बिदरहळ्ळि श्रीनिवासतीर्थकृता

(होसपेटस्थउत्तरादिमठीयग्रन्थालयेऽस्ति)

९) ऐतरेयोपनिषद्भाष्यटीका ताम्रपर्णि विठ्ठलभट्टकृता

(कुम्भकोणीयगोपालविलासग्रन्थालयपत्रसूचीपुस्तके निर्दिष्टा)

१०) ऐतरेयोपनिषद्भाष्यटीका अनन्तभट्टकृता

११) ऐतरेयोपनिषद्भाष्यटीका नारायणाचार्यकृता

(ओरियन्टल् रीसर्च इन्स्ट्यूट् मैसूरु सि. २३९५)

१२) ऐतरेयोपनिषद्भाष्यटीका ताम्रपर्णि श्रीनिवासाचार्यकृता

(इदं व्याख्यानं पूर्णप्रज्ञसंशोधनामन्दिरेण मुद्रितम् २०१०)

१३) ऐतरेयोपनिषद्भाष्यटीका श्रीमुष्णं वासुदेवाचार्यकृता

(होसपेटस्थउत्तरादिमठीयग्रन्थालयेऽस्ति)

१४) ऐतरेयोपनिषद्भाष्यटीका सातारा राघवेन्द्राचार्यकृता

(जयतीर्थसंस्कृतग्रन्थालयः व्यासनकेरे)

१५) ऐतरेयोपनिषद्भाष्यदुर्गमवाक्यार्थविवरणं श्रीनिवासाचार्यकृतम्

(जयतीर्थसंस्कृतग्रन्थालयः व्यासनकेरे)

१६) ऐतरेयोपनिषद्भाष्यार्थविचारः त्यक्तश्रीनिवासतीर्थकृता

(ओरियन्टल् रीसर्च इन्स्ट्यूट्ट् मैसूरु सि. १६२६)

१७) ऐतरेयोपनिषन्मन्त्रार्थसंग्रहः राघवेन्द्रतीर्थकृतः

(इदं व्याख्यानं आनन्दतीर्थप्रतिष्ठानम् कत्तरिगुप्पे बेङ्गळूरु अनेन मुद्रितं १९९७)

१८) खण्डार्थप्रकाशः विद्याधीशशिष्य नृसिंहभिक्षुकृतः

(तञ्जाऊरु प्यालेस् ग्रन्थालयः १५४७५)

१९) ऐतरेयोपनिषत्खण्डार्थप्रकाशः धीरेन्द्रतीर्थकृतः

२०) खण्डार्थः स्मृतिमुक्तावली कृष्णाचार्यकृतः

(होसपेटस्थउत्तरादिमठीयग्रन्थालये अस्ति)

२१) ऐतरेयोपनिषत्खण्डार्थः मृत्तिकानारायणाचार्यपुत्र श्रीनिवासाचार्यकृतः

२२) ऐतरेयोपनिषद्भाष्यभावप्रदीपः वेङ्कटवराहाचार्यशिष्य भगवन्तरायकृतः

(इदं च व्याख्यानं वेङ्कटवराहाचार्यशिष्यभगवन्तरायेण कृतम् । अप्रकटितमिदं व्याख्यानं संशोध्य सविमर्शं पाठसमीक्षात्मकं सम्पादनं अधुना कृतमस्ति ।)

२३) ऐतरेयभाष्यटीकाविवरणम् वेङ्कटवराहाचार्यशिष्य भगवन्तरायकृतम्

(विश्वेश्वरतीर्थकृतटीकायाः व्याख्यानात्मकम् । )

२४) ऐतरेयोपनिषत्खण्डार्थः वेङ्कटवराहाचार्यशिष्य भगवन्तरायकृतः

(इदं मैसूरु नगरतः मुद्रितम्)

२५) ऐतरेयजूषणनिरसनम्(?) वादिराजाचार्यकृतम्

(होसपेटस्थउत्तरादिमठीयग्रन्थालये अस्ति)

२६) ऐतरेयरहस्यरसश्चिनी आरण्यकाचार्यशिष्य मौद्गलबालाचार्यकृता

(होसपेटस्थउत्तरादिमठीयग्रन्थालये अस्ति)

(एते विषया ऐतरेयोपनिषत् नामके पुस्तके डा.व्यासनकेरे प्रभञ्जनाचार्यैः स्वीयभूमिकायां निर्दिष्टास्सन्ति)

**१३) ऐतरेयभाष्यभावप्रतीपकर्तारः भगवन्तरायाः तद्देशकालकृतीनां च परिचरयः**

**१३.१) भगवन्तरायाः (क्रि.श. १७८३-१८९५)**

व्याख्याकर्तृणां जन्मस्थळं बळ्ळारीनामकनगरम् । अस्य पितुः नाम नागेशराय इति । क्रि.श.१७८३ तमे वर्षे प्राप्तजन्माऽयम् । जातस्यास्य भगवन्तराय इति नामाकुरुतां पितरौ ।

बाल्ये वयस्येव संस्कृत-आङ्ग्ल-पार्सिभाषासु प्राप्तनैपुण्योऽयं महाप्रतिभाशलीति प्रसिद्धमाप्नोत् । नित्यकर्मानुष्ठानसम्पन्नः सदाचार-सम्पन्नश्च आसीत् । जीवनस्य पूर्वार्धे एते सदाचारशीलाः गुत्ति-रायदुर्गनामकस्थलयोः तहसील्दाराख्यमाधिकारिकपदवीं निरवहन् । समीचीनतया प्रामाणिकतया च कर्म अकुर्वन् । जनप्रियाश्चासन् । कालक्रमेण द्वैतवेदान्तेतिहासे प्रमुखस्थानभाजां श्रीजगन्नाथदासानां सान्निध्येन 'प्राणनाथविठ्ठल'इति अङ्कितं(शुभनाम) नाम प्राप्नुवन् । ततः दासवर्याणां परमानुग्रहेण जीवने परिवर्तनं प्राप्य श्रीमदानन्द-तीर्थभगवत्पादाचार्याणां ग्रन्थेषु आसक्तोऽभूत् । ततः तेषां अध्ययनार्थं 'भक्रि वराहाचार्य' नामकं गुरुं स्वगृहमामन्त्र्य तस्य

शिष्यत्वं प्राप्य गुरोः परमानुग्रहेण द्वैतवेदान्ताध्ययनं कृत्वा तस्मिन् तलस्पर्शिपाण्डित्यमाप । 'हूविनहळ्ळि' ताल्लूकू मध्ये आवर्षपञ्चकं 'मामलेदार्' नामकपदवीमध्यासत् । पण्डितप्रियो ब्राह्मणप्रियश्चासौ प्रतिदिनं पञ्चाशदधिकपण्डितानां कृते निरन्तरपाठप्रवचनेष्वासक्तः बहुशिष्यगणपरिवृतश्चायं पण्डितमण्डल्यां गौरवादरभाक् बभूव ॥

### १३.२.) भगवन्तरायस्य गुरुः भक्रिवराहाचार्यः

श्रीमन्न्यायसुधादिग्रन्थानां टिप्पणीकाराः भवन्ति भक्रिवंशीयाः । तादृशप्रसिद्धवंशे जातोऽयं भक्रि वराहाचार्यः । न्यायशास्त्रे वेदान्ते च प्राप्तप्रावीण्यो पाठप्रवचनग्रन्थलेखनेष्वासक्तश्चासीत् । अस्य शिष्येषु बहवः पण्डिताः प्रसिद्धाः । तेषु चिक्कोडि भगवन्तरायाः मूर्धन्यतमाः प्रकृत-व्याख्याकाराः । अयमेव 'बृहतीसहस्रव्याख्याभूता सुमुक्तामञ्जरीकर्ता ।

### १३.३.) भगवन्तरायशिष्याः

अस्य शिष्येषु प्रमुखाश्चेते भवन्ति ।

१) गोवेकर् वेङ्कटरायः
२) बेटदूर् दासप्पः
३) मान्वि सीनप्पः
४) कौताळ श्रीनिवासरायः
५) कन्दि सुब्बरायः
६) रोट्टि वेङ्कटाचार्यः
७) भक्रि वेङ्कोबाचार्यः

### १३.४.) भगवन्तरायस्य कृतयः

१) ब्रह्मसूत्रभाष्यभावप्रदीपः मुद्रितः

(होसपेटस्थउत्तरादिमठीयग्रन्थालये अस्ति)

२६) ऐतरेयरहस्यरसञ्चिनी आरण्यकाचार्यशिष्य मौद्गलबालाचार्यकृता

(होसपेटस्थउत्तरादिमठीयग्रन्थालये अस्ति)

(एते विषया ऐतरेयोपनिषत् नामके पुस्तके डा.व्यासनकेरे प्रभञ्जनाचार्यैः स्वीयभूमिकायां निर्दिष्टास्सन्ति)

**१३) ऐतरेयभाष्यभावप्रतीपकर्तारः भगवन्तरायाः तद्देशकालकृतीनां च परिचयः**

**१३.१) भगवन्तरायाः (क्रि.श. १७८३-१८९५)**

व्याख्याकर्तृणां जन्मस्थळं बळ्ळारीनामकनगरम् । अस्य पितुः नाम नागेशराय इति । क्रि.श.१७८३ तमे वर्षे प्राप्तजन्माऽयम् । जातस्यास्य भगवन्तराय इति नामाकुरुतां पितरौ ।

बाल्ये वयस्येव संस्कृत-आङ्ल-पार्सिभाषासु प्राप्तनैपुण्योऽयं महाप्रतिभाशलीति प्रसिद्धमाप्नोत् । नित्यकर्मानुष्ठानसम्पन्नः सदाचार-सम्पन्नश्च आसीत् । जीवनस्य पूर्वार्धे एते सदाचारशीलाः गुत्ति-रायदुर्गनामकस्थलयोः तहसील्दाराख्यमाधिकारिकपदवीं निरवहन् । समीचीनतया प्रामाणिकतया च कर्म अकुर्वन् । जनप्रियाश्चासन् । कालक्रमेण द्वैतवेदान्तेतिहासे प्रमुखस्थानभाजां श्रीजगन्नाथदासानां सान्निध्येन ‘प्राणनाथविठ्ठल’इति अङ्कितं(शुभनाम) नाम प्राप्नुवन् । ततः दासवर्याणां परमानुग्रहेण जीवने परिवर्तनं प्राप्य श्रीमदानन्द-तीर्थभगवत्पादाचार्याणां ग्रन्थेषु आसक्तोऽभूत् । ततः तेषां अध्ययनार्थं ‘भक्रि वराहाचार्य’ नामकं गुरुं स्वगृहमामन्त्र्य तस्य

शिष्यत्वं प्राप्य गुरोः परमानुग्रहेण द्वैतवेदान्ताध्ययनं कृत्वा तस्मिन् तलस्पर्शिपाण्डित्यमाप । 'हूविनहळ्ळि' ताल्लूकु मध्ये आवर्षपञ्चकं 'मामलेदार्' नामकपदवीमध्यासत् । पण्डितप्रियो ब्राह्मणप्रियश्चासौ प्रतिदिनं पञ्चाशदधिकपण्डितानां कृते निरन्तरपाठप्रवचनेष्वासक्तः बहुशिष्यगणपरिवृतश्चायं पण्डितमण्डल्यां गौरवादरभाक् बभूव ॥

**१३.२.) भगवन्तरायस्य गुरुः भक्रिवराहाचार्यः**

श्रीमन्न्यायसुधादिग्रन्थानां टिप्पणीकाराः भवन्ति भक्रिवंशीयाः । तादृशप्रसिद्धवंशे जातोऽयं भक्रि वराहाचार्यः । न्यायशास्त्रे वेदान्ते च प्राप्तप्रावीण्यो पाठप्रवचनग्रन्थलेखनेष्वासक्तश्चासीत् । अस्य शिष्येषु बहवः पण्डिताः प्रसिद्धाः । तेषु चिक्कोडि भगवन्तरायाः मूर्धन्यतमाः प्रकृत-व्याख्याकाराः । अयमेव 'बृहतीसहस्रव्याख्याभूता सुमुक्तामञ्जरीकर्ता ।

**१३.३.) भगवन्तरायशिष्याः**

अस्य शिष्येषु प्रमुखाश्चेते भवन्ति ।

१) गोवेकर् वेङ्कटरायः    २) बेटदूर् दासप्पः

३) मान्वि सीनप्पः    ४) कौताळ श्रीनिवासरायः

५) कन्दि सुब्बरायः    ६) रोट्टि वेङ्कटाचार्यः

७) भक्रि वेङ्कोबाचार्यः

**१३.४.) भगवन्तरायस्य कृतयः**

१) ब्रह्मसूत्रभाष्यभावप्रदीपः    मुद्रितः

२) भागवततात्पर्यभावदीपः मुद्रितः

३) ब्रह्मसूत्रयुक्तिसंग्रहः मुद्रितः

४) ब्रह्मसूत्रपूर्वपक्षसिद्धान्तयुक्तिसंग्रहः मुद्रितः

५) ब्रह्मसूत्रपञ्चिका अप्रकाशिता

६) शब्दपरम्परोत्पादवादः स्वतन्त्रोऽयंग्रन्थः अमुद्रितः

७) पवमानसूक्तव्याख्यानम् अमुद्रितम्

८) नरसिंहस्तुतिव्याख्यानम् अमुद्रितम्

९) बृहतीसहस्रव्याख्यानम् मुद्रणस्थम्

१०) ऐतरेयोपनिषद्भाष्यभावप्रदीपः

११) ऐतरेयोपनिषत्खण्डार्थः

१२) ऐतरेयोपनिषट्टीकाटिप्पणी

(इयं च व्याख्या विश्वेश्वरतीर्थकृतटीकायाः व्याख्यानात्मिका ।)

**१४) व्याख्यानवैशिष्ट्यम्**

अथैषा भगवन्तरायैः कृता ऐतरेयोपनिषद्भाष्यव्याख्यानात्मिका दीपनेव तमो विनाशयन्ती 'भावप्रदीपः' इत्यन्वर्थाभिदा व्याख्या स्वस्याः विशिष्ठगुणैराढ्या सती व्याख्यानपरम्परायां अनितरसाधारणं स्वस्थानं भजते । व्याख्यानस्य यल्लणमुक्तमभियुक्तैः-

**पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना ।**
**आक्षेपश्च समाधानमिति व्याख्यानलक्षणम् ।।**

**अतिरिक्तं पदं त्याज्यं हीनं वाक्ये निवेशयेत् ।**
**विप्रकृष्टं च सन्दध्यादानुपूर्वीं च कल्पयेत् ।।**

**लिङ्गं धातुं विभक्तिं च योजयेच्चानुलोमतः ।**
**वाक्यार्थस्यानुसारेण तेषाञ्च व्यत्ययोऽपि वा[६६] ।।**

इति तस्य लक्षणस्येदं व्याख्यानं मुख्यलक्ष्यभूतं सत् बुधानां मोदमावहति । तदहमत्र याख्यागतान् कांश्चन विशिष्टांशान् स्थालीपुलाकन्यायेन तोषाय प्रस्तौमि ।

भगवन्तरायैरेव ऐतरेयस्य व्याख्यानत्रयं कृतमस्ति ।

१) ऐतरेयखण्डार्थः

२) ऐतरेयभाष्यभावप्रदीपः

३) ऐतरेयभाष्यस्य विश्वेश्वरतीर्थकृतव्याख्यानस्य टिप्पणी । इति ।

एतेन ज्ञायते एषां ऐतरेयोपनिषदि महानादरः आसीदिति । प्रायः एते रघुत्तमतीर्थ-वेदेशतीर्थ-यादवार्याणां शैलीमेवानुकुर्वन्तो व्याख्यास्यन्ते । रघूत्तमतीर्थादिभिस्तु प्रथमतः भाष्यव्याख्यानमनन्तरं च खण्डार्थकथनम् क्रियते । एतैरप्ययमेव क्रमोऽनुसृत आन्तम् । प्राचीनव्याख्यानपरम्परामनुस्मारयन्तीयं व्याख्या अध्येतृणां अत्युपकारिण्यपूर्वार्थप्रकाशिका च ।

तथा च ऐतरेयोपनिषद्भाष्यभावप्रदीपे भगवन्तरायैरनुसृता रीतिरेवं परिगणितुं शक्यते ।

---

६६. भा.टि.वि.पुट-९

१) अवतरणिकापुरःसरं भाष्यार्थविवरणम्

२) वाक्यार्थनिरूपणं अभिप्रायकथनम् च

३) भाष्योक्तरीत्या खण्डार्थस्फुस्टीकरणम्

४) पूर्वव्याख्यानोल्लेखनम्

५) स्वोक्तार्थे प्रमाणोदाहरणम्

६) ऋङ्मन्त्रार्थव्याख्यानम्

७) तत्र तत्र व्याकरणविशेषः

८) प्रमेयस्पष्टीकरणम्

९) साहित्यकीदृष्टिः

१०) क्वचिच्च ग्रन्थान्तरविरोधपरिहारः इत्यादि ।

एवं परिगणितानां विषयाणां विस्तारसन्ततिरामूलाग्रं व्याख्याने परिपूर्णा चकास्ति । तदस्मिन् विषये भगवन्तरायाणां व्याख्यानमिदं सम्पूर्णतयेतरव्याख्याः अतिशेते इति वचनं नोत्प्रेक्षावहम् । तदत्र निर्दिष्टविषयाणां स्थालीपुलाकन्यायेन वैशिष्ट्यं पश्यामः ।

**१४.१) अवतरणिकापुरःसरं भाष्यार्थविवरणम् ।**

भगवन्तरायैः भाष्यमङ्गलपद्यस्य सप्तधा अवतरणिकापुरस्सरं व्याख्यानं कृतम् ।

**१४.१.१) एतदुपनिषत्प्रतिपाद्यनारायणस्तवनरूपतया व्याख्यानम्**

**नारायणं निखिलपूर्णगुणैकदेहं सर्वज्ञमच्युतमपेतसमस्तदोषम् ।**
**प्राणस्य सर्वचिदचित्परमेश्वरस्य साक्षादधीश्वरमियां शरणं रमेशम्** [६७]॥

---

६७. ऐत.भा.पु.१

एवं चास्य मङ्गलपद्यस्य अवतरणिका– '...प्रारिप्सितपरिसमाप्त्यादिप्रयोजनमेतदुपनिषत्प्रतिपाद्यनारायणाख्यदेवताशरणप्राप्तिरूपमङ्गलं शिष्यशिक्षार्थमनुष्ठितमादावुपनिबध्नाति– **नारायणमिति'** ।। इति ।

एवं चात्र भगवन्तरायैरस्य मङ्गलपद्यस्य नारायणस्तवन-रूपत्वेन व्याख्या कृता ।

**१४.१.२) नम्यत्वप्रयोजकधर्मपरतया व्याख्यानम्**

इष्ट-विशिष्ट-अधिकृता देवता एव वन्द्या भवति नान्या । न हि देवतावन्दनं व्यसनितया क्रियते । किन्तु अशेषविघ्नपरिहारार्थत्वेन । विघ्नपरिहर्ता च स एव भवति यो विशिष्टः । वन्दनं च भक्त्याद्युपेतमेव सफलम् । भक्त्यादि च इष्टायां देवतायामेवोपद्यते । अतोऽत्र नारायणे नम्यत्वप्रयोजकाः धर्माः इष्टत्वादयः सन्तीति मङ्गलपद्येन सूचयति भगवानाचार्यः इति व्याख्यास्यन्ति भगवन्तरायाः ।

'सर्वज्ञत्वादयो गुणा अनितरसाधारणाः नारायणे सन्तीति ज्ञापनाय **'सर्वज्ञमच्युतं'** इत्यादिविशेषणमुपात्तम् । 'एतेन शरण्यत्वे प्रयोजकं वैशिष्ट्यमन्यदेवतापरित्यागेन शरणप्राप्तौ च प्रयोजकं सर्वोत्तमत्वं चोपपादितं भवतीति' । (पु.६)

'ईश्वरं' इति विशेषणेनेष्टत्वं । 'स्वामीहि भृत्यस्येष्टः' । (पु.६) **'प्राणस्य सर्वचिदचित्परमेश्वरस्य'** इति विशेषणान्तरोपादनस्यापि सार्थक्यमुपपादितं तत्रैव ।

**१४.१.३) भगवतो नारायणस्य लक्षणकथनपरतया व्याख्यानम्**

यस्य कस्यचित्पुरुषस्य परिज्ञान एव तस्य स्वकर्तृक-

स्तुतिविषयत्वं सम्भवति । स्वाज्ञातपुरुषविषयकस्तुतिः कुत्रापि केनापि कृतास्ति । अतो नारायणज्ञानाभावात् कथं तस्य स्तुति-विषयत्वं इत्याशङ्क्य अस्मिन् मङ्गलपद्ये नारायणलक्षणानि स्वरूप-ज्ञापकान्युक्तानीत्यवतरणिका कृता भगवन्तरायैः । 'निखिलेत्यनेन निखलगुणत्वं, पूर्णगुणत्वं, स्वतोगुणैकदेहत्वं,चेति विवक्षाभेदेन त्रीणि लक्षणान्युदितानि । अपेतसमस्तदोषमित्यनेनैकम् । तत्र सार्वज्ञा-दिगुणाः नाशादिदोषाभावाश्च प्रत्येकं लक्षणानीत्यभिप्रेत्योक्तम्– **सर्वज्ञ-मच्युतमिति** । प्राणस्याधिश्वरमित्यनेनैकम् । रमेशमित्यनेनैकम् । इति (पु.५) ॥

**१४.१.४) नारायणशब्दव्याख्यानपरतया व्याख्यानम्**

अत्र मङ्गलपद्ये नारायणशब्दव्याख्यानमाचार्यैः कृतेति भावप्रदीपे सुधोक्तरीत्या अवतरणिका प्रदत्ता ।

'अथवा नायं नारायणशब्दो डित्थादिशब्द इव भगवति साङ्केतिको, नापि घटादिशब्द इव रूढिमात्रप्रवृत्तः । किन्तु विशिष्टगुणानप्याचष्ट इति ज्ञापयंस्तदर्थमनेन कथयति । एतदपि स्तुत्यर्थमित्यवगन्तव्यम् । तथाहि– अराः दोषास्तद्विरुद्धत्वाद्गुणाः नाराः, तदयनत्वान्नारायणः । नराश्चेतनास्तत्समूहो नारम् । तथा 'सर्वमचेतनं चेतनार्थम्' इति नरोपभोग्यत्वान्नारमचेतनम्, तदुभयमयते जानातीति वा । 'रीङ् क्षये' इति धातोः स्वार्थे ण्यन्ताल्ल्युटि रायणं क्षयः, च्युतिर्विनाशाद्यपरनामा । तद् यस्य नास्ति स नरायणः । स एव नारायणः । स्वार्थेऽणिति वा । अराणामयनं न भवतीति वा । नराणां चेतनानां नराणामचेतनानां चाधिपतिर्नारो मुख्यप्राणः । तस्य साक्षादधीश्वरतयाऽयनत्वाद्वा । निर्दोषत्वान्नारा रमा, तस्येशतयाऽयनत्वाद्वेति यथाक्रममवगन्तव्यम् ॥' इति ॥

**१४.१.५) ऐतरेयोपनिषदर्थसंक्षेपव्याख्यानरूपत्वेन**

संक्षेपतोऽर्थे ज्ञाते एव विस्तारं जिज्ञासन्ति जिज्ञासवः । अतः प्रथमतः संक्षेपतः प्रतिपादयिष्यमाणोऽर्थः वक्तव्यः । अत आचार्यैरत्र मङ्गलपद्ये समस्तैतरेयोपनिषदर्थः व्याचिख्यासित संक्षेपतः अभिहित इति अवतारयन्ति भगन्तरायाः । तथा हि–

| उपनिषत् | उक्तार्थः | सूचकपदम् |
|---|---|---|
| १) स एष पुरुषः[६८] | जगज्जन्मादिकर्तृत्वादिगुणाः | निखिलपूर्णगुणैकदेहं |
| २) एतत् कर्म एतद्ब्रह्म[६९] | जगज्जन्मादिकर्तृत्वादिगुणाः | निखिलपूर्णगुणैकदेहम् |
| ३) कतरः स आत्मा[७०] | जगज्जन्मादिकर्तृत्वादिगुणाः | निखिलपूर्णगुणैकदेहम् |
| ४) चक्षुर्मयः श्रोत्रमयः[७१] | जगज्जन्मादिकर्तृत्वादिगुणाः | निखिलपूर्णगुणैकदेहम् |
| ५) णकारो बलं षकारः[७२] | जगज्जन्मादिकर्तृत्वादिगुणाः | निखिलपूर्णगुणैकदेहम् |

६८. ऐत.उ २-३-३ ६९. ऐत.उ २-१-१ ७०. ऐत.उ २-६-१ ७१. ऐत.उ ३-२-२
७२. ऐत.उ ३-२-६

| | | |
|---|---|---|
| ६) यो ह्येव प्रभवः[७३] | जगज्जन्मादिकर्तृत्वादिगुणाः | निखिलपूर्णगुणैकदेहम् |
| ७) श्रोता मन्ता द्रष्टा[७४] | जगज्जन्मादिकर्तृत्वादिगुणाः | निखिलपूर्णगुणैकदेहम् |
| ८) ता वा एता सर्वा[७५] | सर्वशब्दवाच्यत्वपुरःसरं सर्वगुणपूर्णत्वम् | निखिलपूर्णगुणैकदेहम् |
| ९) अकारो वै सर्वा वाक्[७६] | सर्वशब्दवाच्यत्वपुरःसरं सर्वगुणपूर्णत्वम् | निखिलपूर्णगुणैकदेहम् |
| १०) यद्वाच ओमिति[७७] | सर्वशब्दवाच्यत्वपुरःसरं सर्वगुणपूर्णत्वम् | निखिलपूर्णगुणैकदेहम् |
| ११) अथातः संहिताया[७८] | सर्वशब्दवाच्यत्वपुरःसरं सर्वगुणपूर्णत्वम् | निखिलपूर्णगुणैकदेहम् |
| १२) स जातो भूतानि[७९] | सर्वज्ञत्वम् | सर्वज्ञम् |
| १३) संज्ञानमाज्ञानं विज्ञानं[८०] | सर्वज्ञत्वम् | सर्वज्ञम् |
| १४) स इदं भुवनं विचष्टे[८१] | सर्वज्ञत्वम् | सर्वज्ञम् |

(एभिः वाक्यैः अभीप्सितोऽर्थः कथं लभ्यत इति आकरे स्पष्टम् । दिङ्मात्रमत्र प्रदर्शितम्)

---

७३. ऐत.उ ३-२-६ ७४. ऐत.उ.३-२-४ ७५. ऐत.उ २-२-२ ७६. ऐत.उ.२-३-६
७७. ऐत.उ.२-३-७ ७८. ऐत.उ. ३-१-१ ७९. ऐत.उ. २-४-३ ८०. ऐत.उ. २-६-१
८१. ऐत.उ. ३-१-६

| | | |
|---|---|---|
| १५) स एतेन प्रज्ञानेनात्मना[८२] | मोक्षदातृत्वम् मौक्तभोगदातृत्वम् | सर्वज्ञम् |

('ज्ञ शुद्धभावे' इति धातोर्ज्ञाः शुद्धाः, मुक्ता इति यावत् । सर्वे मोक्षाधिकारिणो ज्ञाः यत्प्रसादाद्भवन्तीति स सर्वज्ञः । तथा सर्वे मुक्ताः सर्वान् कामान् जानन्त्यनुभवन्त्यनेनेति सर्वज्ञस्तमिति ।)

| | | |
|---|---|---|
| १६) स्त्रियां सिञ्चति[८३] | रेतःसेचकत्वम् | अच्युतम् |

('च्युतिर् आसेचने' इति धातोः कर्तरि क्तप्रत्यये निष्पन्नः च्युतशब्दः सेक्तारमाचष्टे । तथाच अश्वासौ च्युतः स्त्रियां रेतस्सेचकश्चेत्युच्यत इति ।)

| | | |
|---|---|---|
| १७) ओष्टा पिधाना[८४] | निर्दोषत्वम् | अपेतसमस्तदोषम् |
| १८) स भूतानामधिपतिः[८५] | सर्वोत्तमत्वम् | प्राणस्य सर्वचिदचित्परमेश्वरस्य साक्षादधीश्वरम् |
| १९) सूर्य आत्मा[८६] | सर्वोत्तमत्वम् | प्राणस्य सर्वचिदचित्परमेश्वरस्य साक्षादधीश्वरम् |
| २०) सर्वं तत्प्रज्ञानेत्रं[८७] | सर्वोत्तमत्वम् | प्राणस्य सर्वचिदचित्परमेश्वरस्य साक्षादधीश्वरम् |

---

८२. ऐत.उ. २-६-१ ८३. ऐत.उ. २-५-१ ८४. ऐत.उ. ३-२-५

८५. ऐत.उ. २-३-७ ८६. ऐत.उ २-२-४ ८७. ऐत.उ. २-६-१

| | | |
|---|---|---|
| २१) त्वमुक्थमसि[८८] | प्राणस्य चिदचिदाधिक्यं हर्यधीनत्वं च | सर्वचिदचित्परमेश्वरस्य साक्षादधीश्वरम् |
| २२) अन्नायुर्वा एष[८९] | प्राणस्य चिदचिदाधिक्यं हर्यधीनत्वं च | प्राणस्य सर्वचिदचित्परमेश्वरस्य साक्षादधीश्वरम् |
| २३) अपाङ् प्राङेति[९०] | प्राणस्य चिदचिदाधिक्यं हर्यधीनत्वं च | सर्वचिदचित्परमेश्वरस्य साक्षादधीश्वरम् |
| २४) प्राणो वंशः[९१] | प्राणस्य चिदचिदाधिक्यं प्राणस्य हर्यधीनत्वं च | सर्वचिदचित्परमेश्वरस्य साक्षादधीश्वरम् |

(एभिः वाक्यैः अभीप्सितोऽर्थः कथं लभ्यत इति आकरे स्पष्टम् । दिङ्मात्रमत्र प्रदर्शितम्)

---

८८. ऐत.उ. २-१-४   ८९. ऐत.उ. २-४-३   ९०. ऐत.उ. २-१-८   ९१. ऐत.उ. ३-२-१

## १४.१.६) सर्वशाखानिर्णायकब्रह्मसूत्रार्थकथनपरतया व्याख्यानं

अत्रोपनिषदि सर्वशाखानिर्णायकब्रह्मसूत्रार्थः प्रतिपादितः । तत्कथनार्थमेवाचार्यैः मङ्गलपद्ये एतानि विशेषणान्युपात्तानि । तथा हि–

१) 'निखिलपूर्णगुणैकदेहं' इति विशेषणेन प्रथमाध्यायार्थोक्तिः ।

२) 'अपेतसमस्तदोषं' इत्यनेन द्वितीयाध्यार्थोक्तिः ।

३) 'सर्वज्ञं' इत्यनेन तृतीयाध्यायार्थोक्तिः । (सर्वैर्मोक्षाधिकारिभिः यथायोग्यं सर्वैर्वेदादिभिः ज्ञायते इति)

४) 'सर्वज्ञम्' इत्यनेन चतुर्थाध्यायार्थोक्तिः । (सर्वेऽधिकारणः ज्ञाः शुद्धाः मुक्ताः भवन्तीति)

५) 'अच्युतम्' इति विशेषणेन 'नात्मा श्रुतेः'[९२] इति सूत्रार्थोक्तिः ।

६) 'प्राणस्य सर्वचिदचित्परमेश्वरस्य' इति विशेषणेन 'इयदा-मननात्'[९३] 'व्यतीहारो विषिंशन्ति हीतरवत्'[९४] इति सूत्रद्वयार्थोक्तिः ।

७) 'रमेशम्' इत्यनेन 'आदरादलोपः'[९५] इति सूत्रार्थोक्तिः ।

अनेन मङ्गलपद्यव्याख्ययानेन ज्ञायते भगवन्तरायाः स्वकीय-कौशलेन सरलतया सुस्पष्टतया च मूलं योजयन्तीति । अतोऽस्त्यस्य व्याख्यानस्य महती विशिष्टता ॥

---

९२.ब्र.सू.२-३-१९

९३. ब्र.सू.३-३-३५

९४. ब्र.सू.३-३-३८

९५. ब्र.सू.३-३-४१

## १४.२) वाक्यार्थनिरूपणं अभिप्रायकथनं च

भगवन्तरायाः सर्वत्र भाष्यवाक्यार्थविवरणं कुर्वन्तोऽभिप्रायं मूलसूचितं सुस्पष्टं 'तथा च' 'एवं च' 'इत्थं च' इत्याद्यवतरणिकारूपेण उपपादयन्ति । तथाहि-

**प्रादुबर्भूव भगवान् तपसेतराया**
**नारायणोऽब्जजसुतस्य विशालनाम्नः ।**
**तस्मिन् गतेऽध्वरमभूत् सुरविप्रसङ्गो**
**निश्चेतनस्तदनु पद्मभवोऽमुमस्तौत्[०६] ॥**

इति भाष्यस्य व्याख्यानावसरे व्यासावतारस्य नारायणस्य जन्म नास्तीति भाष्यसूचितमुपपादयन्ति । 'नारायणो विशानाम्नः ऋषेरितरायां तत्पत्न्यां प्रादुर्बभूव' इत्यनेन न तस्य प्राकृतवच्छुक्रशोणितसंबन्धाज्जन्म किन्तु तद्वारा रूपान्तरेणाभिव्यक्तिमात्रमित्यह । अत एवाब्जजसुतस्य इति षष्ठीप्रयोगः । अन्यथा पञ्चमी स्यात्' । (पु.११) इति ।

पञ्चमी खलु उपादाने श्रूयते 'ध्रुवमपायेऽपादानं' इति । अत्र अब्जजसुतात् इति पञ्चमीप्रयोगं विहायाब्जजसुतस्येति षष्ठीप्रयोगेण ज्ञायते न नारायणावतारस्य व्यासस्योपादानं किञ्चिदस्तीति । 'गोमयात् वृश्चिको जायते' इत्यत्र गोमयस्य वृश्चिकशरीरं प्रत्युपादनत्वात् । तद्वदत्रापि व्यासस्य (तच्छरीरस्य) यद्युपादानं स्यात् तर्हि आचार्या अब्जजसुतात् इति पञ्चमीं प्रयुञ्जेरन् । न तथा । किन्तु षष्ठी एव । षष्ठी च नोपादानं गमयति । एवमभिप्रायं प्रकटयन्ति भगवन्तरायाः स्वकीयव्याख्यानकौशलेन ।

---

०६. ऐत.भा. पु.७

एते तु विश्वेश्वरतीर्थव्याख्यानं अस्पष्टयन्त । तत्रापि (पु.५) एवमेव व्याख्यातत्वात् संक्षेपेण ।

ताम्रपर्णीश्रीनिवासाचार्यास्तु 'सकाशात्' इति पदं अध्याहृत्य 'अब्जजसुतस्य सकाशात्' इति व्याख्यातवन्तः । (पु.४)

**अन्यत्रापि** (पु.५७-५८)

भगवदङ्गेन सर्वे देवाः प्रजज्ञिरे इति उपनिषदि (२-१-७) प्रतिपादितम् । तद्भाष्ये आचार्यैः प्रमाणेन देवानां भगवदङ्गेनोत्पत्तिं, तत्तदङ्गोत्पन्नदेवानां भगवत्परिचरणं च प्रतिपादितम् । 'स्वोत्पत्यङ्गं च ते विष्णोः शुश्रूषन्ते पृथक् पृथक्'[९७] इति । प्राणादिदेवाः कथं भगवदङ्गपरिचरणं कुर्वन्ति इति स्फष्टं न ज्ञायते भाष्यवाक्येन । भगवन्तरायास्तु तं परिचरणप्रकारं भाष्यप्रतिपदव्याख्यानं कृत्वा सप्रमाणं 'अयमभिप्रायः' इति प्रकटयन्ति । तथा हि–

'अयमर्थः । समस्तान्यपि जैवकर्माणि प्राणवायुकार्याणि । [९८]'प्राणं तत्कर्मणि स्फुटम्' इति बृहद्भाष्योक्तेः । एवं हरेरपि कर्माणि तदीयप्राणवायुकार्याणि ।

[९९]'वाय्वादिप्राणशक्यं न यत्तत्कर्ता हरेर्गतः ।
प्राणस्तेन पृथग्वर्त्म' इति छान्दोग्यभाष्योक्तेः ।

श्रोत्रेन्द्रियं च भूताकाशात्मकम् । पञ्चेन्द्रियाणां पञ्चभूतजन्यत्वात् । यथोक्तं सूत्रभाष्ये–

---

९७. ऐत.भा. (पु.७४)

९८. बृह.भा. ३-६(सप्तान्नब्राह्मणम्)

९९. छान्दो.भा. ५-१४-१

**'नित्यान्येतानि सौक्ष्मेण हीन्द्रियाणि तु सर्वशः ।**
**तेषां भूतैरुपचयः सृष्टिकाले विधीयते'[१००] इति ।**

प्रकृते च विष्णुप्राणजातमन्तरिक्षं भूताकाशमेव । प्राणिनां सञ्चारोऽपि तदायत्त एव । 'नभो ददाति श्वसतां मार्गं यन्नियमाददः'[१०१] इत्यादेः । तथा च विष्णुप्राणजातमन्तरिक्षं तदीयस्य कर्मणो जगत्सर्जनादेर्जीवानां श्रवणलक्षणभोगार्थं श्रोत्रप्रदं भवति । ततश्च तत्कर्मप्रख्यापितं भवति । तथाच तदुद्देशेन क्रियमाणस्य तीर्थक्षेत्रयात्रादिजैवप्राणकर्मणो भोगार्थं निष्पत्त्यर्थं चारदं सञ्चारोपयोग्यवकाशप्रदं च भवति । अत इदमन्तरिक्षस्य सर्वप्राणिप्राणगतविष्णुप्राणसेवारूपं कर्म भवतीति ॥ (पु.७८)

एवं तत्र तत्रास्पष्टं विषयं स्वीयव्याख्यानैपुण्येन स्पष्टयन्तो विदुषां मनः परितोषयन्तीति निश्चप्रचम् ।

### १४.३) भाष्योक्तदिशा उपनिषदर्थकथनम्

आनन्दतीर्थभगवत्पादा उपनिषदपूर्वार्थकथनेऽग्रेसरा इति विदुषां प्रथितमेव । आचार्यास्तु उपनिषदर्थं प्रमाणानुसारेण आध्यात्मिकपरतया योजयन्ति । तदनु च स्वावाचा इतोऽपि प्रमाणविशेषानुदाहृत्य विशदयन्ति । तथाहि– 'तस्य अग्निरर्कः'[१०२] इत्युपनिषत् । अत्र तु अर्कपदस्यानेकधा अर्थः कथितः आचार्यैः । भगवति च निर्वचनम् मुख्यतया अभिहितम्–

---

१००. ब्र.सू.भा.२-४-२  १०१. अनु. १-१-२४५

१०२. ऐत.उ.२-२-२ पु.१४

**अरणं गमनं यस्मादर्कः शीघ्रगतित्वतः ।**
**श्येन एव तदाकारा चितिरर्कपदोदिता ।।**

**सुपर्णप्रतिमा सा यत्तदारूढो जनार्दनः ।**
**तस्मात् तस्यार्क इति सा प्रोच्यते वैदिकैः पदैः ।।**

**योऽसौ चितिगतो वीन्द्रः सोऽग्निवातरविष्वपि ।**
**तथा वाक्प्राणचक्षुष्षु तस्मात् तेऽर्काः प्रकीर्तिताः।।**

**तेषु स्थिते सुपर्णे च रूपभेदैः पृथक् पृथक् ।**
**स्थितो विष्णुस्तदर्कास्ते तस्मादेव प्रकीर्तिताः**[१०३] ।। इति ।

अत्रेमं सर्वमर्थं बुध्यारूढाय भगवन्तरायाः एकत्र संगृह्य खण्डार्थकथनपुरस्सरं योजयन्ति । तथाहि-

'**तस्य** पृथिवीस्थितस्य विष्णोः **अग्निरर्कः** । अत्रार्कपदेन 'ऋ गतौ' इति धातोः शीघ्रगतित्वतः श्येन उच्यते । तदाकारत्वाद् यज्ञे क्रियमाणा चितिरिष्टकासन्निवेशविशेषलक्षणाऽर्कपदेन गौण्या वृत्त्या प्रतिपाद्यते । सा च सुपर्णप्रतिमारूपा । स एव सुपर्णोऽग्नावपि स्थितः । स च हरेर्वाहनमिति प्रसिद्धमेव । अतोऽग्निस्थस्यैव गरुडस्यार्कपदोदितचितिगतत्वादग्निस्तस्य वाहनरूपोऽर्क इत्युच्यते । अथवा **अग्निः** अग्निस्थितोऽग्निशब्दवाच्यो भगवद्रूपविशेषः **तस्य** पृथिवीस्थस्य हरेः **अर्कः** शीघ्रगतित्वादर्कपदोदितगरुडस्थितस्तदाकारः स्वयमेव वाहनरूप इत्यर्थः । एवमुत्तरत्र वायुरर्क आदित्योऽर्क इत्यादौ सर्वत्रार्थान्तरं व्याख्येयम् ।' इति । (पु.१११)

---

१०३. ऐत.भा. (पु.२५-२५)

इमं सर्वमर्थं विना खण्डार्थेन न जानीमो वयं मन्दबुद्धिनः । अन्ये व्याख्याकाराः पूर्वजाः विश्वेश्वरतीर्थ-ताम्रपर्णिआचार्यप्रभृतयः न खण्डार्थं सर्वत्रालिखन् । भगवन्तरायास्तु सर्वत्रैव खण्डार्थं भाष्यानुसारेण संगृह्य वर्णयन्तीति हेतोरस्त्यस्य व्याख्यानस्य व्याख्यापरम्परायां महती गरिमा ।

**अन्यत्रापि-** 'आत्मा वा इदमेक एवाग्र आसीत्, नान्यत् किञ्चन मिषत्'[१०४] इत्युपनिषदस्थं 'अग्र' इति 'मिषत्' इति च पदं नैकधा व्याख्यातवन्तः आचार्याः ।

**इदं सर्वमपेक्ष्याऽसौ कालतो गुणतस्तथा ।**
**अग्र्य एव समस्तेभ्यस्तद्वशत्वाद् रमाऽपि सा ।।**

**विद्यमानापि नाग्रस्था गुणैरूना ततो यतः ।**
**न ब्रह्मा न शिवश्चासीन्नैवान्यच्च मिषत् क्वचित् ।।**

**सुप्तास्तत्र यतो जीवाः सर्वे ब्रह्मशिवादिकाः ।**
**असुप्ता श्रीश्च मुक्ताश्च स्वतन्त्रोन्मेषवर्जनात् ।।**

**अनुन्मेषा एव तेऽपि स्वतन्त्रोन्मेष एकराट् ।**
**नारायणो न चान्योऽस्ति पूर्णोन्मीलद्गुणात्मकः ।।**

**पराधीनेन वित्तेन भुंजन्नपि हि भिक्षुकः ।**
**वित्तवानिति नैवोक्तस्तथा श्रीर्मुक्तिगा अपि ।।**

**मिषन्तोऽप्यन्यतन्त्रत्वान्न मिषन्तः कथञ्चन ।**
**सर्वदाप्येक एवायं स्वतन्त्रो नापरः क्वचित्**[१०५] **।। इति ।**

---

१०४. ऐत.उ. (पु.४८३)        १०५. ऐत.भा. (पु.४८३)

एष सर्वोऽप्यर्थजातः नास्माभिरुपनिषदर्थत्वेन बुध्यते । तं सर्वमर्थं संगृह्य भगवन्तरायाः संगृह्य विवृण्वन्ति । तथा हि-

'ततश्चायं खण्डार्थः । **आत्मा** नित्याततगुणत्वादात्मशब्दवाच्यो विष्णुरेक एव एव **इदं** अस्य जगतो **अग्रे** प्रलयकाले आसीत् । रमायास्तदानीं सत्वेन ब्रह्माद्यपेक्षयैवेयमुक्तिः । अथवा **इदं** रमाब्रह्मादिकं सर्वमपेक्ष्य **आत्मा** विष्णुरेक एव कालतो गुणतश्च **अग्रे** पुरःसरः श्रेष्ठ आसीदित्यर्थः । अत्र रमायाः प्रलये सत्वेऽपि भगवदधीनतयैव सत्वात्स्वातन्त्र्येण स्थित्यभावादेवमुक्तिः । गुणाग्र्यत्वं त्वव्याहतमेव । यद्वा **इदं** रमाब्राह्मादिकं सर्वमपेक्ष्य **आत्मैवाग्रे** विष्णुरेव सर्वगुणैरग्र्य आसीदित्येवार्थः । तत्र हेतु**र्नान्यदिति** । ततोऽन्यत्किंचन **मिषत्** स्वातन्त्र्येण ज्ञानादिगुणैर्भासमानं नासीदित्यर्थः । मिषतां रमादीनां सत्वेऽपि स्वातन्त्र्येण मिषणाभावादेवमुक्तिः' । इति । (पु.५३१)

एवं सर्वत्रापि स्वीयबुद्धिकौशलेनोपनिषदर्थं भाष्योक्तरीत्या संगृह्य कथयन्ति व्याख्याकारा अमी ।

### १४.४) स्वोक्तार्थे प्रमाणोदाहरणम्

व्याख्यानस्य इदमप्यपूर्वं वैशिष्ट्यं यत् स्वोक्तार्थे प्रमाणोदाहरणम् । अन्यथा प्रामाणिकाः न परिगृह्णेरन् । प्रमापितमेव च विषयं बुद्ध्यारूढं भवति । अतः सर्वत्रापि यः कश्चनार्थः कथ्यते तत्र सर्वत्र प्रमाणं उदाहर्तव्यमेव । अस्मिन् विषये भगवन्तरायाः न च्युताः । स्वोक्तार्थे सर्वत्र प्रमाणमुदाहरन्ति । अतोऽस्त्यस्य व्याख्यानस्य वैशिष्ट्यम् । तथा हि–

समुद्रघोषादीनां भगवद्गुणाभिधायकत्वे आचार्यैः बृहत्संहितावाक्यं

प्रमाणत्वेनोदाहृतम् । (पु.१६८) मेघध्वनिः ओमिति नित्यं स्वनते । ओङ्कारस्याधिकोच्चत्वमर्थः । अस्मिन् विषये छान्दोग्यभाष्यं प्रमाणयन्ति भगवन्तरायाः–

**अकारेणाधिकं प्रोक्तमुकारेणोच्चमुच्यते ।**
**तथामितं सर्ववेदैर्मकारेणाभिधीयते**[१०६] **।। इति ।(पु.१६९)**

कर्मनिर्णयवाक्यमपि–

**नदीसमुद्रघोषाश्च नादत्वाच्छ्रैष्ट्यवाचकाः ।**
**नादो हि श्रैष्ट्यवाची स्यात् एवं घोषा परेऽपि च**[१०७] **। इति (पु.१६९)**

एवमेव 'तस्य मेऽन्नं मित्रं दक्षिणं'[१०८] इत्युपनिषद्व्याख्यानसन्दर्भे दक्षिणापतेः भगवतः सर्वोत्तमत्वं स्थापयितुं प्रमाणमुदाहृतम्-

'सा दक्षिणा मानिनी देवता च सा च स्थिता बहुरूपा मदर्धा ।
वामार्धो मे तत्प्रविष्टो यतो हि ततोऽहं स्यामर्धनारायणाख्यः ।

तदाप्यस्या उत्तमोऽहं सुपूर्णो न मादृशः कश्चिदस्त्युत्तमो वा ।
इत्येवावादीद् दक्षिणाभिस्सहेति सर्वोत्तमत्वं दक्षिणानां स्मरन् सः'[१०९] । इति

एवं सर्वत्रापि स्वोक्तार्थे निर्मूलत्वशङ्कापनोदनाय प्रमाणमुदाहरन्ति । अतो नास्या व्याख्याया व्याख्यानाङ्गन्यूनता । अत एव चास्य व्याख्यानस्य वैशिष्ट्यं गाम्भीर्यम् च ।

---

१०६. छान्दो.भा. १-१-१

१०७. कर्म.नि.३-६

१०८. ऐत.उ. २-२-३

१०९. म.भा.ता.नि २०-७४,७५

## १४.९) प्रमेयस्फुटीकरणम्

आनन्दतीर्थभगवत्पादाः सर्वमूलग्रन्थेषु तत्राप्यैतरेयोपनिषद्भाष्ये महान्तं प्रमेयजातं मोक्षोपयोगि साधनानुष्ठानोपयोग्यनुसन्धानार्थं निरूपितवन्तः । कुत्रचित् तन्न सुस्पष्टं बुध्यामहे विना व्याख्यान-साहाय्येन । अतस्तत्र स्पष्टताऽपेक्षिता जिज्ञासुना । तत्र च भगवन्तरायाः स्वव्याख्याने भावप्रदीपे विशदयन्ति प्रमेयजातं विना सन्देहेन ।

तद्यथा–

आचार्यैः चेतनतारतम्यकथनसन्दर्भे क्षितिपमारभ्य ब्रह्मपर्यन्तं सर्वेषां तत्त्वाभिमानिदेवानां शतगुणाधिकत्वं केषाञ्चित् केषाञ्चित् शतगुणिताधिकत्वं इत्यभिहितम् ।

**क्षितिपा मनुष्यगन्धर्वा देवाश्च पितरश्चिराः ।**
**आजानजाः कर्मदेवास्तात्त्विका दक्ष एव च ।।**

**शक्रश्चोमा च रुद्रश्च भारती वायुरेव च ।**
**मुक्ता उक्ताः शतगुणा बलज्ञानसुखादिभिः**[११०] **।। इति ।**

तत्र तारतम्यपर्यालोचनया कर्मदेवापेक्षया अन्तिमस्य प्रवहवायोः किञ्चिदधिकषोडषगुणाधिकत्वं कथितं न शतगुणाधिकत्वं । तदवराणां किमुवक्तव्यम् । तथापि अत्र छत्रिन्यायेनैव आचार्यैः कथितम् । न शतगुणाधिकत्वम् । न प्रवहस्य कर्मदेवापेक्षया वस्तुतः शतगुणाधिकत्वं इति सुस्पष्टं प्रतिपादयन्ति । (पु.१५५)

---

११०. ऐत.भा पु.१५३

एवमन्यत्रापि पञ्चभेदनिरूपणसन्दर्भे आचार्यैर्भेदानां पञ्चत्वमभिहितम् ।

**जीवेश्वरभिदा चैव जीवभेदः परस्परम् ।**
**जडेश्वरभिदा चैव जडभेदस्तथैव च ॥**

**जडजीवभिदा चैव सत्योऽयं भेदपञ्चकः ।**
**न कदाचिन्निवर्त्योऽयं मुक्तौ संसार एव च ।**
**य एतदन्यथा ब्रूयुस्ते हि यान्त्यधरं तमः**[१११] ॥ इति ।

अत्रायं प्रश्नः समुदेति भेदानां पञ्चत्वं कथमिति । प्रातिस्विकरूपेण वा ? धर्मितावच्छेदकरूपेण वा ? नाद्यः । प्रातिस्विकरूपेण भेदानां पञ्चत्वगणनमसम्भावितमेव । यतो भेदानामनन्तत्वात् । धर्मितावच्छेदकरूपेणेति द्वितीयपक्षोऽपि न सम्यक् । जीवेश्वरजडानां धर्मिणां त्रित्वेन तद्भेदानां त्रित्वे एव पर्यवसानात् । न पञ्चत्वमुपपद्यते । अतो भेदानां पञ्चत्वं कथमिति ।

अत्र भगवन्तरायाणां समाधानं विद्वज्जनमनोरञ्जकमेव । (पु.२२०-२२१) तथाहि– परस्परविभाजकोपाधीनां पञ्चत्वविवक्षया भेदानां पञ्चत्वोपपत्तिः ।

१) परस्परप्रतियोग्यनुयोगिभावापन्नजीवेश्वरभेदः एकः ।

२) परस्परप्रतियोग्यनुयोगिभावापन्नजीवजीवभेदः द्वितीयः ।

३) परस्परप्रतियोग्यनुयोगिभावापन्नजडेश्वरभेदः तृतीयः ।

४) परस्परप्रतियोग्यनुयोगिभावापन्नजडजडभेदः चतुर्थः ।

५) परस्परप्रतियोग्यनुयोगिभावापन्नजडजीवभेदः पञ्चमः ।

---

१११. ऐत.भा. (पु.२२०)

इति विभाजकोपाधीनां पञ्चत्वेन भेदानामपि पञ्चत्वमुपपन्नं । नच परस्परं जीवभेदे जडभेदे च (द्वितीय-तृतीयकल्पे) धर्मितावच्छेदकं प्रतियोगितावच्छेदकं च जीवत्वं जडत्वं च एकमेव भवति । एकस्यैव कथं धर्मितावच्छेदकत्वं प्रतियोगितावच्छेदकत्वं इति वाच्यम् । जीवत्वानां जडत्वानां च सादृश्येनैकजातीयत्वेऽपि साक्षादैक्यानङ्गीकारात् । न ह्येकमेव जडत्वं जीवत्वं वा अनुगतम् । [११२]'भिन्नाश्च भिन्नधर्माश्च पदार्था निखिला अपि' इति अनुभाष्योक्तेः । किन्तु प्रतिव्यक्ति भिन्नमेव । तत्र यदा जीवज्जीवान्तरस्य जडाज्जडान्तरस्य वा भेदः उपगम्यते तदा प्रतियोगिगतं जीवत्वं जडत्वं च प्रतियोगितावच्छेदकं । धर्मिगतं प्रतियोगितावच्छेदकभिन्नं धर्मितावच्छेदकं जीवत्वादिकं भवतीति न कोऽपि विरोधः इति । एवं मनोज्ञं भेदानां पञ्चत्वमुपपादयन्ति ।

**अन्यत्रापि–** (पु.२३०)

कर्तृकर्मविरोधपरिहारक्रमः अतीव सम्यक् । तथा हि- भगवति कर्तृत्वं कर्मत्वं अस्तीत्यत्र न किञ्चिन्मानम् । न तावत्प्रत्यक्षमागमो वाऽस्मिन्नर्थे मानम् । तदभावात् । नाप्यनुमानम् । तत्प्रतिबद्धलिङ्गाभावात् । क्रियाश्रयः कर्ता, परसमवेतक्रियाफलशालि कर्मेति कर्तृकर्मणोर्लक्षणविरोध एव कर्तृत्वकर्मत्वयोरेकत्र विरोधे मानमिति चेन्न । कर्मलक्षणस्यातिव्याप्त्यादिदुष्टत्वात् । तथाहि– 'देवदत्तो ग्रामाद् ग्रामं गच्छति' इत्यादौ देवदत्तसमवेतगतिक्रियाफलसंयोगशालित्वं यथोत्तरग्रामे तथा पूर्वग्रामेऽपि तत्क्रियाफलविभागशालित्वसत्त्वेन तस्यापि कर्मतापत्तिः । अनागतादिविषयेच्छादिक्रियाफलशालित्वमनागतादेरसत्वेन नास्तीति तत्कर्मत्वं न स्यात् । वर्तमानेऽपि घटादौ न

---

११२. अनु. २-२-१२४

ज्ञानादिजन्यफलमुपलभ्यते । ज्ञातताया ज्ञानातिरिक्ताया अभावात् । संस्कारादेरात्मन्येवोत्पादात् । व्यवहारस्य च व्याहरणरूपस्य कर्तृ-निष्ठत्वात् । उपादानादिरूपस्योपेक्षणीयाव्याप्तेः । अतः क्रिया-स्वातन्त्र्यं कर्तृत्वं तद्विषयत्वं कर्मत्वमिति वाच्यम् । न च तयोः कमपि विरोधं पश्याम इति' ॥

एवं कर्तृकर्मविरोधं प्रमाणाभावेन निराकृत्य भगवति कर्तृत्वं कर्मत्वं चास्तीत्यत्र श्रुतिजातमप्युदाहरन्ति । तथा हि–

'तत्र श्रुतिस्तावद् 'यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येद्'[११३] इत्याद्युक्त्वा 'विज्ञातारमरे केन विजानीयात्'[११४] इति । अत्र हि विज्ञातारं स्वात्मानं केन विजानीयात् न केनापि, तस्मान्मुक्तौ जीवस्य मनआद्यनङ्गीकारे स्वज्ञानमपि न स्यात् । अस्ति च स्वज्ञानम् । तेन तत्करणं मनआदिकमङ्गीकरणीयमिति मनआद्यनङ्गीकारे जीवस्य स्वज्ञानाभाव आपद्यते । तेन ज्ञायते स्वदर्शनं श्रुतिसिद्धमिति । तथा 'अहमित्येव यो वेद्यः'[११५] इत्याद्याश्च स्पष्टार्था एव । अनुभवोऽप्यस्मिन्नर्थे मामहं जानामीति साक्षिरूपः । आदिपदेन स्वकर्मकं करणम् । इदमपि मामहं ज्ञानिनं सुखिनं तत्साधनोद्योगिनं च करोमीत्याद्यनुभवसिद्धम् । एवं श्रुतिरप्यूह्या । तथाचैवं स्वदर्शनादेः श्रुत्यादिसिद्धत्वेन कर्तृकर्मविरोधवादस्तद्बाधित इति भावः' ॥

एवं भगवन्तरायाः सर्वत्रापि प्रमेयं स्पष्टीकुर्वन्तः स्वव्याख्यास्थानं इतरव्याख्यानेभ्य वैशिष्ट्यपूर्णं विभावयन्ति ।

---

११३. बृ.उ ४-४-१४ ११४. बृ.उ ४-४-१४

११५. वि.त.नि इत्यत्रोदाहृता परमश्रुतिः (प्रथमपरिच्छेदः)

### १४.६) ऋङ्मन्त्रव्याख्यानम्

आनन्दतीर्थभगवत्पादाः ऋग्भाष्यनामकं ग्रन्थं विरचय्य ऋङ्मन्त्रव्याख्यानप्रकारमदर्शयन् । तं प्रकारमनुसृत्य सर्वेऽपि व्याख्या-काराः मन्त्रजातं व्याख्यास्यन्ति । तत्रापि भगवन्तरायाः सुमनोहरं मन्त्रजातं ऐतरेयभाष्योदाहृतं व्याख्यातवन्तः । न केवलमेतावदेव बृहतीसहस्रमपि समग्रं व्याख्यातवन्त एते । अतोऽस्त्यस्य व्याख्याकारस्य तत्कृतव्याख्यानस्य च वैशिष्ट्यम् । एतेषामस्यां व्याख्यायां रात्रिसूक्तव्याख्यानं सुमनोहरम् ।

**ऋचां पदान्युपादाय तेषां भाष्यपदैः सह ।**
**कुर्मः संवादितामात्रं ऋगर्थस्पष्टतार्थतः ।।**

इति प्रतिज्ञाय भाष्यानुसारेण व्याख्यास्यन्ति । तथा हि–

'रात्री व्यख्यदायती पुरुत्रा देव्य१क्षिभिः । विश्वा अधि श्रियोऽधित'[११६]।।

रतिदत्वात् रात्रीशब्दवाच्यो **देवी** द्योतमानो विष्णु**रायती** आयन् आगच्छन् **अक्षिभिः** बहुभिः नयनैः **पुरुत्रा** बहुधा **इदं** जगत् **व्यख्यत्** ददर्श । तेनैव रात्रीनामकेन विष्णुना **विश्वाः** समस्ताः **श्रियः** सम्पदः **अधि** सर्वेषु लोकेषु **अधित** धृताः स्थापिताः । 'सुप्तिङि'ति वचनाद्व्यत्ययेन बहुवचनस्यैकवचनम् ।। (पु.७२६) इति ।।

एवं बळित्थासूक्तव्याख्यानमपि ।

एवं चाचार्याः यत्र यत्र मन्त्रं वा उपनिषदं वा उदाहरन्ति तत्र

११६. ऋक्.सं. १०-१२७-१

सर्वत्रापि तं मन्त्रमुपनिषदं च समग्रं व्याख्यास्यन्त एवेति अस्त्यस्य व्याख्यानस्य वैशिष्ट्यम् ।

एवं तत्र तत्र पूर्वव्याख्यानोल्लेखनम् व्याकरणविशेषः, इत्यादि-दृष्ट्या पर्यालोचनया सामस्त्यं प्रद्योततेऽस्यां व्याख्यायाम् । अतः व्याख्यानस्य महती बृहती गरिमा । यद्यपि वक्तव्यं बहु विद्यते विस्तारभयात् नैव लिख्यते । इति ।

**१५) पाठशोधः (मातृकासम्पादनम्)**

**१५.१) भावप्रदीपस्य सम्पादनोपयुक्ताः मातृकाः**

**क–** श्रीउत्तरादिमठीयविश्वमध्वमहापरिषत्संस्थया स्वीकृता ।

('क''ग' संज्ञिते द्वे अपि मातृके गुरुवर्यैः श्रीउत्तरादिमठाधीशैः **श्री १००८ श्रीसत्यात्मतीर्थैः** सानुग्रहं प्रदत्ते)

**ख–** इयं मातृका स्वीयव्यासमध्वसंशोधनपरिषदा पं. व्यासनकेरे प्रभञ्जनाचार्यैः प्रदत्ता ।

**ग–** इयमपि मातृका श्रीउत्तरादिमठीयविश्वमध्वमहापरिषत् संस्थया स्वीकृता ।

**१५.१.२) 'क' मातृका प्रथमा**

क'संज्ञितेयं प्रथमा मातृका बेङ्गळूरुनगरस्थविश्वमध्वमहापरिषत् संस्थया श्री १००८ श्री सत्यात्मतीर्थैः सानुग्रहं प्रदत्ता । सम्पूर्णा चेयं मातृका । इयमेव मातृका प्रधानतयाऽत्र विमर्शनेन उपयोगम-धिरोहति । प्रायः शुद्धपाठात्मिका तृटिहीना चेयं मातृका । लिपिश्च नात्यन्तं स्थूला । परन्तु शुद्धिभूयिष्ठा । यद्यपि लिपिकाराणां दोषा

दृश्यन्ते तथाप्यध्येतृभिः पूर्वतनैः ते दोषाः तत्र तत्र विनिवारिताः । २६० पत्रात्मिकेयं मातृका प्रधानतयाऽत्र शंशोधनोपयुक्ता । अन्ते एवं लिखितमस्ति 'वृषनामकहायनफाल्गुणकृष्णोपोष्यद्वादश्यां गुरवारयुक्तायां पर्याप्तमिदं पुस्तकम् । अवरूरु श्रीपादाचार्येण तत्पुत्रेण नरसिंहेन च लिखितम्' इति । अनेन ज्ञायते अस्याः मातृकायाः लेखकौ द्वौ इति । १) अवरूरु श्रीपादाचार्यः २) तत्पुत्रः नरसिंहश्च इति ।

अस्यां मातृकायां तत्र तत्र पङ्क्तिः लुप्ता । काप्यधिका । तथापि मातृकान्तरसाहाय्येन संम्पूर्णतया मूलानुसारेण शोधिता । सर्वत्र च तत्र निम्नटिप्पण्यां प्रदर्शिता । पत्राणां परिमाणं २१*११.५ सेन्टीमीटर्स । १५ तः १७ पर्यन्तं प्रतिपत्रं पङ्क्त्यः सन्ति ।

**१५.१.३) द्वितीया 'ख' मातृका**

'ख'संज्ञिता द्वितीया मातृका पं.पू. व्यासनकेरे प्रभञ्जनाचार्यैः स्वीयव्यासमध्वसंशोधनापरिषदा प्रदत्ता । इयं च मातृका एकलिपिकारकर्तृका । नास्त्यत्र अक्षरविन्यासः । २७१पत्रात्मिकेयं मातृका प्रायः शुद्धा सम्पूर्णा च । तथापि तत्र तत्र पङ्क्त्यः पदानि च न सन्ति । तथापि अन्यमातृकासाहाय्येन शोधयितुं शक्यते । इयं मातृका कैर्लिखिता इति न ज्ञायते यतो प्रारम्भे अन्ते वा 'क'मातृकावत् नामनिर्देशः न कृतः । परन्तु 'शक १७७२ साधारणसंवत्सरयुक्ते आश्विनकृष्णत्रयोदश्यां पर्याप्तम्' इति लिखितेति । अतः ज्ञायते इयं १८५१क्रिस्तशके लिखतमिति । 'क'मातृका 'ख'मातृकयोः प्रायः सर्वत्रैव साम्यमस्ति । न विरोधः । २०*११ सेन्टीमीटर् परिमिता पत्रात्मिका । १२तः१५पर्यन्तं प्रतिपत्रं पङ्क्त्यः सन्ति ॥

### १५.१.४) तृतीया 'ग' मातृका

तृतीया इयं 'ग' संज्ञिता मातृका बेङ्गळूरुनगरस्थविश्वमध्वमहा-परिषत्स्थापकैः **श्री १००८ श्री सत्यात्मतीर्थैः** उत्तरादिमठाधीशैः सानुग्रहं प्रदत्ता । १७४पत्रात्मिका सम्पूर्णा उपलब्धेषु स्थूलाक्षराऽपि अशुद्धिभूयिष्ठा । केवलं उट्टङ्कनोपयोगितया इयं मातृका उपयुक्ता । तत्र तत्र प्रतीकं वर्णेनानुरक्ता । 'क' 'ग'संज्ञिते मातृके पूर्वं होसपेटस्थउत्तरादिमठीय ग्रन्थालये आस्ताम् । नन्तरं एते मातृके बेङ्गळूरुनगरस्थउत्तरादिमठीयविश्वमध्वमहापरिदि उपलब्धे । २५*१३ सेन्टीमीटर् परिमितपत्रात्मिका । १५तः१६पर्यन्तं पङ्क्तयः प्रतिपत्रं विद्यन्ते । इयं च मातृका हेविलम्बिनामसंवत्सरज्येष्ठशुद्धैकदश्यां समाप्ता । गदाधर भट्टेत्युपनामक वेङ्कटरायसुत खेटमण्णूरस्थकृष्णनाम्ना लिखिता । तथाऽन्ते निर्देशात् ॥

### १६) सम्पादनरीतिः

एवमिदं भावप्रदीपव्याख्यानं सभाष्यं मतृकात्रयसाहाय्येन सुसम्पन्नं जातम् । तथापि मातृकात्रयेषु 'क'संज्ञिता मातृकैव प्रधानतया शोधनोपयितया परिग्रहिता । निम्नटिप्पण्यां ये अन्यमातृकाणां पाठान्तराणि प्रदत्तानि । तत्र व्याख्यानमातृकायां अशुद्धपाठात् सम्पादने क्लेशः जातः । तथापि गुरवराणां समेशामनुग्रहेण पाठाः शोधिताः । यद्यपि अन्यं कमपि विषयमधिकृत्य विद्यावारिधिपदवी सम्पादनीया इति मतिरासीत् । तथापि स्वरूपोद्धारकाः उत्तरादि-मठाधीशाः **श्री श्री १००८ श्री सत्यात्मतीर्थाः** अप्रकटितेयं व्याख्या भावपूर्णा विदुषां धुरि नेया इति विचिन्त्य मां आज्ञयाऽनुग्रहेण च अन्वगृह्णन् । अस्य अप्रकाशितपूर्वत्वं

अपूर्वार्थत्वं चान्ववेक्ष्य अहमपीममेव ग्रन्थं शोधार्थं स्वीकृतवान् । महान् परिश्रमश्च सञ्जातः ।

**१६.१) ग्रन्थसम्पादने अनुसृतरीतिः**

१) भूमिकारचनम् २) विषयानुक्रमणिका

३) भाष्यपाठान्तराणि (तत्रैवाधस्तात् सूचिता)

४) भावप्रदीपव्याख्यानस्य परिशुद्धपाठः पाठान्तरं (तत्रैवाधस्तात् सूचिता)

५) भाष्योदाहृतनां उपलब्धानां प्रमाणानां आकरदानं (तत्रैवाधस्तात् सूचिता)

६) भावप्रदीपोदाहृतप्रमाणां उपलब्धनां आकरदानं (तत्रैवाधस्तात् सूचिता)

७) सङ्केतसूची

८) अकारादिक्रमेण भाष्योदाहृतप्रमाणश्लोकार्धानुक्रमणिका (परिशिष्टभागः)

९) अकारादिक्रमेण भाष्योदाहृतश्रुतिसूची (परिशिष्टभागः)

१०) अकारादिक्रमेण भाष्योदाहृतब्रह्मसूत्रसूची (परिशिष्टभागः)

११) अकारादिक्रमेण भावप्रदीपोदाहृतप्रमाणसूची (परिशिष्टभागः)

१२) अकारादिक्रमेण भावप्रदीपोदाहृतश्रुतिसूची (परिशिष्टभागः)

१३) अकारादिक्रमेण भावप्रदीपोदाहृतब्रह्मसूत्रसूची (परिशिष्टभागः)

१४) अकारादिक्रमेण भावप्रदीपोदाहृतपाणिनीयसूत्रसूची । इत्यादि ।

एवं रीत्या सम्पादनविषये मध्ये दण्डविराम-अर्धविरामादिचिह्नानां प्रदानेन प्रतीकानां स्थौल्यतासम्पादनेन अनुवाद्यपदस्य स्थौल्यता एवं खण्डार्थकथनावसरे अनुवाद्योपनिषदस्थ पदानां स्थौल्यता-सम्पादनद्वारा इत्यादिरीत्या प्रवाचकानां सौकर्याय महान् प्रयत्नः कृतः । सूरयः नीरक्षीरन्यायेन अनुमन्यन्त इति च विश्वसिमि ।।

**१७) उपसंहारः**

सन्त्येवं बहवो विचाराः विद्वन्मनोहराः । केवलं दिङ्मात्रप्रदर्शनाय केचनैवात्रोदहृताः । एवमिदं व्याख्यानं अनितरसाधारणीं मनोल्लासिनीं शैलीं बभ्रती वैशिष्ट्यमावहितीति नात्र सन्देहः ।

व्याख्यानस्यास्य भगवन्तरायकृतस्य संशोधनावकाशः हरिगुर्व-नुग्रहेणास्मत्पूर्वजानां पुण्यलेशेन च मम सम्प्राप्त इति महान् सन्तोषः । ग्रन्थसम्पादनावसरे तत्र तत्रानवधानेन वाऽज्ञानेन वा दोषाः समदृश्येरन् तान् महान्तः कारुणिकाः क्षाम्यन्तु इति सप्रश्रयं निवेद्यते । सदा प्रोत्साहिनः करुणाशीलाश्च किल महान्तः ।। इति शम् ।।

**सुजनविधेयः**

**डा. प्रह्लादाचार्यः जोशि**

**।। श्रीकृष्णार्पणमस्तु ।।**

# भूयिष्ठां ते नम उक्तिं विधेम

'ओं कृतो स्मर कृतँ स्मर' इति उपनिषन्मूलिका आभाणिका 'कृतघ्नो मा भूत् कृतज्ञः स्यात्' इति । अतोऽत्र ये प्रत्यक्षतः परोक्षतश्च साहाय्यं कृतवन्तस्तेभ्यः सर्वेभ्योऽपि कृतज्ञतां निवेदयामि ।

१) तत्रादौ अनन्तकल्याणगुणपरिपूर्णः समस्तदोषविदूरः भारती-रमणमुख्यप्राणान्तर्गतसमस्तगुर्वन्तर्गतो मत्कुलस्वामी श्रीलक्ष्मीनृसिंहः मयि स्थित्वा मतिं प्रेरयित्वा अत्यायाससाध्यमिदं संशोधनकार्यं अकारयत् । **तस्मै श्रीलक्ष्मीनृसिंहाय नमांसि भूयांसि** ।

२) उपनिषदर्थं सज्जनेभ्यो विस्तारयिषुः श्रीमुख्यप्राणः मध्वा-चार्यरूपेण भुव्यवतीर्य भाष्यं व्यरचयत् । येन च सकलजैवकर्माणि प्रेरितानि तस्मै सर्वकर्मप्रेरकाय **श्रीमुख्यप्राणाय नमांसि भूयांसि ।**

३) स्थापितश्रीजयतीर्थविद्यापीठानां पञ्चाशद्वर्षश्रीन्मूलरामदि-संस्थानार्चापूजकानां कारुणिकारुणिकानां मां विद्यापीठमानीतां उत्तरादिमठाधीशानां प्रतःस्मरणीयानां **श्री श्री १००८ श्रीत्यप्रमोद-तीर्थश्रीचरणानं चरणकमलनलिनयोः साष्टाङ्गप्रणतयः** ।

४) न्यायवेदान्तव्याकरणमीमांसादिशास्त्रेषु कृतभूरिपरिश्रमाणां कारुण्ये समुद्रं दिक्कुर्वाणानां अनवरतं सुधादिसच्छास्त्रपाठकानां नैकशिष्य-सम्पत्तिमतां मम स्वरूपोद्धारकाणां उत्तरादिमठाधीशानां **श्री श्री १००८ श्री सत्यात्मतीर्थश्रीमच्चरणानां चरणनलिनयोः साष्टाङ्गप्रणतयः** ।

५) सकलशास्त्रविशारदानां शमदमादिगुणादिसम्पत्तमतां शिष्यवत्सल्यवतां पूर्णपज्ञविद्यापीठ-पूर्णप्रज्ञसंशोधनामन्दिरादिनानासंस्थासंस्थापकानां पेजावरमठाधीशानां **श्री श्री १००८ श्री विश्वेशतीर्थश्रीमच्चरणानां चरणनलिनयोः साष्टाङ्गप्रणतयः ।**

६) जयतीर्थविद्यापीठकुलपतिपदभाजां सुधाविशारदानां सर्वदा लेखकानां न्यायामृतादिग्रन्थपाठकानां विद्वत्कुलमणीनां मम गुरूणां **पं.पू. गुत्तलाचार्याणां (गुत्तल रङ्गाचार्याणां) चरणेषु भूयांसि नमांसि ।**

७) परश्शतप्रबन्धप्रणयनेन विद्वत्कुलसम्मानितेभ्यः अधुना राष्ट्रियसंस्कृतसंस्थानस्य कुलपतिपदभाग्भः **श्री राधावल्लभ त्रिपाठी महोदयेभ्यः वन्दनानि ।**

८) श्रीजयतीर्थविद्यापेठे मां अनुदिनं शिक्षितेभ्यः **पं. सत्य-ध्यानाचार्येभ्यः पं.आलूरु श्रीनिवासाचार्येभ्यः पं.कट्टि नरसिंहाचार्येभ्यः** तथा प्राध्यापकवृन्देभ्यः **सादरप्रणतयः ।**

९) पूर्णप्रज्ञसंशोधनामन्दिरस्य निदेशकेभ्यः अन्यान्यशास्त्रेषु निष्णातेभ्यः नैकप्रशस्तिभाग्भः नैकग्रन्थसंशोधकेभ्यः शोधप्रबन्धस्यास्य मार्गनिर्देशकेभ्यः समूचीनमार्गदर्शनेन सूपकृतवभ्द्यः विद्वभ्द्यः डा. ए.वि. **नागसम्पिगे महोदयेभ्यः सादरप्रणतयः ।**

१०) न्यायवेदान्दशास्त्रेषु कृतभूरिपरिश्रमेभ्यः वाक्पटुत्वादिनैकगुणभाग्भ्यः मातृकाप्रदानेन बहूपकृतवभ्द्यः विश्वमध्वमहापरिषत् संस्थायाः निदेशकेभ्यः पं. **गुत्तल विद्याधीशाचार्येभ्यः सादरप्रणतयः ।**

११) राष्ट्रपत्यादिनैकप्रशस्तिभाग्भ्यः नैकग्रन्थसम्पादकेभ्यः नैकग्रन्थलेखकेभ्यः परोपकारादिनैकगुणभाग्भ्यः मातृकाप्रदानेन सूपकृतवद्भ्यः विद्वद्भ्यः **डा. व्यासनकेरे प्रभञ्जनाचार्येभ्यः सादरप्रणतयः ।**

१२) साधनशरीरमिदं प्रदाय श्रीमदाचार्यशास्त्रे रुचिमन्तं कृतवतोः मातापितृभूतायोः **श्रीमति शामला-पुरुशोत्तमाचार्यदम्पत्योः** चरणनलिने साष्टाङ्गप्रणतयः ।

१३) अस्मिन् संशोधनकर्मणि अनेकविधमार्गदर्शनं कृतवद्भ्यः: नैकग्रन्थप्रणेतृभ्यः प्रवचनपटुभ्यः **पं. जयतीर्थाचार्य मळगि महोदयेभ्यः सादरप्रणतयः** ।

१४) गणकयन्त्रे सहाय्यं कृतवद्भ्यः **पं महिदासाचार्येभ्यश्च** कृतज्ञतां निवेदयामि ।

१५) पुनरपि अस्मिन् शोधनकर्मणि परोक्षतः अपरोक्षतश्च सूपकृतवद्भ्यः सर्वेभ्यः कृतज्ञातां निवेदयामि ।।

**प्रह्लादः जोषि**

# विषयानुक्रमणिका

## ऐतरेयब्राह्मणद्वितीयारण्यके प्रथमोऽध्यायः

## अथ द्वितीयारण्यके द्वितीयोध्यायः

## अथ द्वितीयारण्यके तृतीयोऽध्यायः

## द्वितीयारण्यके चतुर्थोऽध्यायः

## अथ द्वतीयारण्यके पञ्चमोऽध्यायः



## अथ द्वतीयारण्यके षष्ठोऽध्यायः

## अथ द्वितीयारण्यके सप्तमोऽध्यायः



## अथ तृतीयारण्यके प्रथमोऽध्यायः

## अथ तृतीयारण्यके द्वितीयोऽध्यायः

# अथ ऐतरेयोपनिषत्

## ऐतरेयब्राह्मणद्वितीयारण्यके प्रथमोऽध्यायः

भगवान् न त्याज्यः

**एष पन्था एतत्कर्म एतद्ब्रह्मैतत्सत्यम् । तस्मान्न प्रमाद्येत तन्नातीयात् । न ह्यत्यायन् पूर्वे येऽत्यायंस्ते परा बभूवुः ।**

अथ श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिम्

# ऐतरेयोपनिषद्भाष्यम्

## प्रथमोध्यायः

मङ्गलाचरणम्

नारायणं निखिलपूर्णगुणैकदेहं
सर्वज्ञमच्युतमपेतसमस्तदोषम् ।
प्राणस्य सर्वचिदचित्परमेश्वरस्य
साक्षादधीश्वरमियां शरणं रमेशम् ॥

भगवन्तरायकृतः भावप्रदीपः

सुखमुखगुणभासं सर्वदोषव्युदासं
सुरवरमहिदासं श्रीरमाभूविलासम् ।
दशमतिमतिवासं वेदमूर्धोद्विकासं
भज हृदय सदा संसेवदापन्निरासम् ॥१॥

पद्मापद्मादिपद्मानां बोधो यत्पादसङ्गतः ।
तं वन्दे शुभसञ्ज्ञेतं बादरायणभास्करम् ।।२।।

श्रीमदानन्दतीर्थार्यचरणौ शरणे सताम् ।
संश्रये संश्रिये चेटीकृतामरतरूतराम् ।।३।।

शुचिस्वादुसुधास्यन्दिस्तनभारविभूषिताम् ।
जयाय जयराजाह्वां कामधेनुमुपास्महे ।।४।।

वेदेशगुरुसिन्धूत्थं यादवार्यसुरद्रुमम् ।
व्याख्यासमाख्यशाखाढ्यं सुमनस्सान्द्रमाभजे ।।५।।

भासतां भासतां स्वान्ते सन्तापध्वान्तकृन्तनः ।
श्रीमत्किटिपदाचार्यचारुचिन्तामणिर्मणिः ।।६।।

ऐतरेयोपनिषदो भाष्यं व्याकर्तुमिच्छतः ।
मन्तुं क्षाम्यन्तु सन्तो मे कृपयाऽपहसन्तु मा ।।७।।

मुग्धा मद्वाङ्गाक्षी कुशलतरमहद्वाग्वधूभिर्विधाभिः
बह्वीभिस्साधु राद्धं स्वयमलमबला सम्परिष्वक्तुकामा ।
अप्येनं भाष्यसञ्ज्ञं नृपतिमतिभयाल्लज्जया स्तम्भिताऽऽस्ते
हृद्या देव्योऽनवद्या रमणमुपनयन्त्वादरात्प्रेर्य चैनाम् ।।८।।

**भावप्रदीपः**

इह खलु संसारापारपारावारे निपतितमधिकारिणं जनं जननी तनयमिव परमात्मतत्त्वज्ञानप्लवेनोद्दिधीर्षुरियमैतरेयोपनिषदितिकर्तव्यतामन्तरेण न तत्त्वज्ञानकरणता[1]मापद्यते । अतस्तदितिकर्तव्यता-

---

१. कारणता इति 'ख'पाठः

रूपन्यायगर्भं भाष्यं करिष्यन्नाचार्यः प्रारिप्सितपरिसमाप्त्यादिप्रयोजनमेतदुपनिषत्प्रतिपाद्यनारायणाख्यदेवताशरणप्राप्तिरूपमङ्गलं शिष्यशिक्षार्थमनुष्ठितमादावुपनिबध्नाति– **नारायणमिति** ।।

अत्र नारायणं शरणं **इयां** प्राप्नुयामित्यन्वयः । उत्तमपुरुषप्रयोगबलादेवाहमिति कर्ता लभ्यते । निखिलेत्यादीनां तु शरणप्राप्तिकर्मणा नारायणेन विशेषणतया सम्बन्धः । प्रयोजनं च स्तुतिपदानां विशेष्यप्रशंसैव । तत्रार्थिकपुनरुक्तेः स्तुतित्वमेव समाधानमवधातव्यम् ।।

अथवा, कुतो नारायणस्य शरण्यत्वम्, तथात्वेऽपि कुतोऽन्यासु देवतासु सतीष्वस्यैव शरण्यत्वमिति । तत्प्रयोजकधर्मवत्त्वात् सर्वेभ्योऽप्युत्तमत्वाच्चेति ब्रूमः । एतदुभयं कथं नारायणस्येत्यतोऽभिहितम्– **निखिलेत्यादि** ।। निखिलाः निःशेषाः पूर्णाः प्रत्येकमप्यनवधिका गुणाः । एकशब्दः केवलार्थः । त एव देहो यस्य । न पुनः प्राकृतादिरिति निखिलपूर्णगुणैकदेहस्तम् । अपेताः समस्ता दोषा यस्मात् सोऽपेतसमस्तदोषस्तम् । तत्र के ते गुणाः? कथं च तेषां निरवधिकत्वम्? के च दोषाः? यदभावो नारायणस्योच्यत इत्यत उदाहरणत्वेन गुणं दोषाभावं च दर्शयितुमुक्तम्– **सर्वज्ञमच्युतमिति** ।। ज्ञानादयो गुणाः । तेषां स्वपरगताखिलविशेषविषयकत्वादिकं निरवधिकत्वम् । **च्युतिः** विनाशस्तदादयो दोषा नारायणस्य न सन्तीति भावः । एतेन शरण्यत्वे प्रयोजकं वैशिष्ट्यं, अन्यदेवतापरित्यागेन शरणप्राप्तौ च प्रयोजकं सर्वोत्तमत्वं चोपपादितं भवति । इष्टत्वाच्चास्योपपन्नं शरण्यत्वमित्याशयेनोक्तं–

**ईश्वरमिति** ।। स्वामिनमित्यर्थः । स्वामी हि भृत्यस्येष्टः । अन्यदेवतास्वपीश्वरत्वसत्वात्तद्व्यावृत्त्यै: **अधीति** ।। अधिकेश्वरमित्यर्थः । एतदपि कथञ्चिद् ब्रह्मादिदेवेषु शक्यनिरूपणम् । रुद्रादिस्वामित्वात्तेषामपीत्यतः **प्राणस्येत्युक्तम्** । एतत्तु नान्येषां सम्भवतीत्याशयेनोक्तम्– **सर्वचिदचित्परमेश्वरस्येति** ।। एतदुपपादयितुम्– **साक्षादिति** ।। प्राणस्याव्यवधानेनाधीश्वरमित्यर्थः । तथा च प्राणस्य भगवन्निष्ठाधीश्वरत्वं प्रति साक्षादवधित्वेन मध्येऽन्यस्याभावाद्युक्तं तस्य सर्वचिदचित्परमेश्वरत्वमिति भावः । 'चिदचिद् यद्वशे विश्वं स रुद्रश्चिदचिन्मयः'[२] इत्यादेः रुद्रादीनामपि चिदचिदीश्वरत्वसत्त्वात्– **परमेति** ।।

ननु प्राणेश्वरताया रमायामपि सत्वात्कथं तद्व्यावृत्तिरनेनेति चेन्न । ईश्वरतासत्त्वेऽप्यधीश्वरताभावात् । अधीश्वरत्वं चेश्वरान्तरसद्भावमपेक्षते । न हि प्राणलक्ष्म्योर्मध्ये कश्चनेश्वरोऽस्ति । अतः प्राणस्याधीश्वरो हरिरेवेति । अत्र प्राणस्येश्वरमितीष्टत्वमुपपाद्य 'तमहं शरणमियां' इत्यनेन स्वस्य प्राणावतारत्वं सूचयति भगवान्भाष्यकारः । अन्यथाऽन्येष्टत्वस्यान्यशरणप्राप्तौ प्रयोजकतानुपपत्त्याऽसङ्गतत्वापत्तेरिति । ग्रन्थारम्भे सकलवाङ्मनसदेवताया रमाया अवश्यं वन्द्यत्वात् पृथग्वन्दनस्य च 'क्लेशोऽधिकतरस्तेषां'[३] 'पृथक् श्रियमुपासताम्'[४] इत्यादिश्रुतिस्मृतिनिन्दितत्वाद् भगवत्परिवारत्वेन वन्द्यताज्ञापनाय प्रकारान्तरेण भगवत इष्टत्वोपपादनाय च **रमेश**मिति विशेषणम् ।

---

२. भा.ता. ११-२४-७

३. भ.गी.२-५

४. गी.ता. १२-२

यद्वा नानिर्धारितस्वरूपस्य शरणप्राप्तिर्युक्ता । न चान्तरेण लक्षणं वस्तुनिर्धारणमित्यतो विभवादनेकानि नारायणस्य लक्षणान्यनेनोच्यन्ते । तत्र निखिलेत्यनेन निखिलगुणत्वं, पूर्णगुणत्वं, स्वतो गुणैकदेहत्वं, चेति विवक्षाभेदेन त्रीणि लक्षणान्युदितानि । अपेतसमस्तदोषमित्यनेनैकम् । तत्र सार्वज्ञ्यादिगुणाः नाशादिदोषाभावाश्च प्रत्येकं लक्षणानीत्यभिप्रेत्योक्तम्– **सर्वज्ञमच्युतमिति** ।। प्राणस्याधीश्वरमित्यनेनैकम् । रमेशमित्यनेनैकमिति ।

अथवा नायं नारायणशब्दो डित्थादिशब्द इव भगवति साङ्केतिको, नापि घटादिशब्द इव रूढिमात्रप्रवृत्तः । किन्तु विशिष्टगुणानप्याचष्ट इति ज्ञापयंस्तदर्थमनेन कथयति । एतदपि स्तुत्यर्थमित्यवगन्तव्यम् । तथाहि– अराः दोषास्तद्विरुद्धत्वाद्गुणाः नाराः, तदयनत्वान्नारायणः । नराश्चेतनास्तत्समूहो नारम् । तथा 'सर्वमचेतनं चेतनार्थं' इति नरोपभोग्यत्वान्नारमचेतनम्, तदुभयमयते जानातीति वा । 'रीङ् क्षये' इति धातोः स्वार्थे[५] ण्यन्तल्ल्युटि रायणं क्षयः, च्युतिर्विनाशाद्यपरनामा । तद्यस्य नास्ति स नरायणः । स एव नारायणः । स्वार्थेऽणिति वा । अराणामयनं न भवतीति वा । नराणां चेतनानां नराणामचेतनानां चाधिपतिर्नारो मुख्यप्राणः । तस्य साक्षादधीश्वरतयाऽयनत्वाद्वा । निर्दोषत्वान्नारा रमा, तस्येशतयाऽयनत्वाद्वेति यथाक्रममवगन्तव्यम् ।।

अथवा श्रोतृबुद्ध्यनुकूलनाय व्याचिख्यासितसमस्तोपनिषदर्थं सङ्क्षेपतोऽनेनाचष्टे । विदितसङ्क्षेपा हि प्रपञ्चं जिज्ञासवो भवन्ति ।

---

५. स्वार्थे इति 'क' पाठे नास्ति

तथाहि, 'एतत्कर्म एतद् ब्रह्म'[६] । 'स एष पुरुषः समुद्रः'[७] । 'कतरः स आत्मा'[८] । 'चक्षुर्मयः श्रोत्रमयः छन्दोमयो मनोमयो वाङ्मयः'[९] । 'श्रोता मन्ता द्रष्टा देष्टा घोष्टा विज्ञाता प्रज्ञाता'[१०] । 'णकारो बलं षकारः प्राण आत्मा'[११] । 'यो ह्येव प्रभवः, स एवाप्ययः'[१२] इत्यादिना भगवतो जगज्जन्मादिकर्तृत्वादिगुणाः सामान्यतो विशेषतश्चोक्ताः । 'ता वा एताः सर्वा ऋचः'[१३] । 'अकारो वै सर्वा वाक्'[१४] । 'यद्वाच ओमिति'[१५] । 'अथातः संहिताया उपनिषत्'[१६] इत्यादिना च सर्वशब्दवाच्यत्वोक्त्या सर्वगुणपूर्णतैवाभिप्रेता । तदेतदुक्तम्– **निखिलपूर्णगुणैकदेहमिति** ।। 'स जातो भूतान्यभिव्यैख्यत् । इदमदर्शमितीं३'[१७] । 'सञ्ज्ञानमाज्ञानं विज्ञानं प्रज्ञानम्'[१८] । 'स इदं विश्वं भुवनं विचष्टे'[१९] इत्यादिना सर्वज्ञत्वमभिहितम् । तदेतदुदितम्– **सर्वज्ञमिति** ।। 'स एतेन प्रज्ञेनात्मनाऽस्माल्लोकादुत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वाऽमृतः समभवत्'[२०] इत्यादिना मोक्षाधिकारिणां मोक्षदातृत्वं मौक्तभोगदातृत्वं चाभिधीयते । तदप्यनेनैवोक्तम्– **सर्वज्ञ-**

---

६. ऐत.उ २-१-१ ७. ऐत.उ २-३-३

८. ऐत.उ २-६-१ ९. ऐत.उ ३-२-२

१०. ऐत.उ ३-२-४ ११. ऐत.उ ३-२-६

१२. ऐत.उ ३-२-६ १३. ऐत.उ २-२-२

१४. ऐत.उ २-३-६ १५. ऐत.उ २-३-७

१६. ऐत.उ ३-१-१ १७. ऐत.उ २-४-३

१८. ऐत.उ २-६-१ १९. ऐत.उ ३-१-६ २०. ऐत.उ २-६-१

**मिति** ।। 'ज्ञ शुद्धभावे' इति धातोर्ज्ञाः शुद्धाः, मुक्ता इति यावत् । सर्वे मोक्षाधिकारिणो ज्ञाः यत्प्रसादाद्भवन्तीति स सर्वज्ञः । तथा सर्वे मुक्ताः सर्वान् कामान् जानन्त्यनुभवन्त्यनेनेति सर्वज्ञस्तमिति । 'अः इति ब्रह्म तत्रागतमहं'[२१] इत्यकारवाच्यत्वमुक्तम् । 'स्त्रियां सिञ्चति अथैनज्जनयति । तदस्य प्रथमं जन्म'[२२] इत्यादिना रेतःसेचकत्वादिकमपि भगवत एवेत्यभिहितम् । तदिदमाह– **अच्युतमिति** ।। 'च्युतिर् आसेचने' इति धातोः कर्तरि क्तप्रत्यये निष्पन्नच्युतशब्दः सेक्तारमाचष्टे । तथाच अश्वासौ च्युतः स्त्रियां रेतस्सेचकश्चेत्युच्यत इति । 'अथातः संहिताया उपनिषत्'[२३] इत्यादिना पूर्वोत्तरवर्णसन्धिदेवतात्वमुपवर्णितम् । तदप्यनेनैवाह– **अच्युतमिति** ।। पूर्वोत्तरवर्णदेवताभ्यां निजरूपाभ्यामेव मध्ये सन्धितमित्यर्थः । 'एतत्सत्यं'[२४] 'ओष्ठा पिधाना न कुली'[२५] इत्यादिषु सत्यकुल्यादिपदैर्निर्दोषत्वमुच्यते, तदेतदाह– **अपेतसमस्तदोषमिति** ।। 'अथातो रेतसः सृष्टिः । प्रजापते रेतोदेवाः'[२६] इत्यादिना सर्वस्रष्टृत्वोक्त्या 'अद उ आविरधिदैवतं'[२७] [२८]'स भूतानामधिपतिः' [२९]'स ईक्षत कथं न्विदं मदृते स्यादिति' । 'बृहस्पते न परः साम्नो विदुः'[३०] । 'सूर्य आत्मा जगतस्तस्थुषश्च'[३१] । 'सर्वं तत्प्रज्ञानेत्रं

---

२१. ऐत.उ २-३-८ २२. ऐत.उ २-५-१

२३. ऐत.उ २-१-३ २४. ऐत.उ ३-२-५

२५. ऐत.उ २-१-३ २६. ऐत.उ २-१-५

२७. ऐत.उ २-३-७ २८. ऐत.उ २-४-३

२९. ऐत.उ २-१-५ ३०. ऐत.उ ३-१-५,

३१. ऐत.उ २-२-४

प्रज्ञानेत्रोऽलोकः'[३२] इत्यादिना च सर्वोत्तमत्वमभिहितम् । 'त्वमुक्थमसि'[३३] । 'तस्येदं वाचा तन्त्या नामभिर्दामभिः सर्वं सितम्'[३४] । 'सर्वं हीदं प्राणेनावृतम् । सर्वाणि भूतान्यापिपीलिकादिभ्यः प्राणेन बृहत्याऽवष्टब्धानि'[३५] । 'अन्नायुर्वा एष यद्वायुः'[३६] । 'अपाङ् प्राङेति स्वधया गृभीतः'[३७] । 'प्राणो वंशः'[३८] इत्यादिना प्राणस्य सर्वचिदचिदधिकत्वमभिधाय तदधीश्वरत्वं हरेरुक्तम् । तस्यायं सङ्ग्रहः– **प्राणस्य सर्वचिदचित्परमेश्वरस्य साक्षादधीश्वरमिति** । 'तस्य मेऽन्नं मित्रं दक्षिणम् अनकाममार'[३९] इत्यादिषु रमारमणत्वमुक्तम् । तदभिधानमिदम्– **रमेशमिति** ॥

अथवा रमश्चासौ ईशश्चेति विग्रहः । तत्र रमत इति रम इत्यनेन 'सोऽमात्मेममात्मानममुष्मा आत्मने सम्प्रयच्छति'[४०] 'जीवाक्षरेण जीवाहराप्नोति जीवाह्वा जीवाक्षरम्'[४१] इत्यादिनोक्तस्य स्वरमणत्वस्य सङ्ग्रहः । ईर्लक्ष्मीस्तस्या ईश इति वा । याः लक्ष्म्याः शं सुखं यस्मादिति वा । ईश इत्यनेन 'तस्य मेऽन्नं'[४२] इत्याद्युक्तार्थसङ्ग्रह इति बोध्यम् ॥

यद्वा रमया सहितश्चासौ ईशश्चेति विग्रहः । तेन 'बृहद्रथन्तरयो रूपेण संहिता सन्धीयते'[४३] । 'वाक् प्राणेन' इत्यादिनोक्तस्य लक्ष्मीनारायणात्मकार्धनारीनररूपवत्त्वसङ्ग्रहः ॥

---

३२. ऐत.उ २-६-१ ३३. ऐत.उ २-१-४.
३४. ऐत.उ २-१-६ ३५. ऐत.उ २-१-६
३६. ऐत.उ २-४-३ ३७. ऐत.उ २-१-८
३८. ऐत.उ ३-२-१ ३९. ऐत.उ २-३-८, ४०. ऐत.उ २-३-७
४१. ऐत.उ २-३-८, ४२. ऐत.उ २-३-८, ४३. ऐत.उ ३-१-६

अथवा सर्वशाखानिर्णायकब्रह्मसूत्रार्थ एतदुपनिषदि प्रतिपाद्यत इति भावेनैतानि विशेषणानि । तत्र **निखिलपूर्णगुणैकदेहं** इति प्रथमाध्यायार्थोक्तिः । **अपेतसमस्तदोषं** इति द्वितीयाध्यायस्य । **सर्वज्ञं** इति तृतीयाध्यायस्य । सर्वैर्मोक्षाधिकारिभिर्यथायोग्यं सर्वैर्वेदादिभिर्ज्ञायत इति । **सर्वज्ञं** इत्यनेनैव चतुर्थाध्यायार्थस्यापि सङ्ग्रहः । सर्वेऽधिकारिणः ज्ञाः शुद्धाः मुक्ता भवन्तीत्यनेनेति । 'नात्माऽश्रुतेः'[४४] इत्याद्यर्थकथनम्– **अच्युतमिति** ।। 'इयदामननात्'[४५] 'व्यतिहारो विशिंषन्ति हीतरवत्'[४६] इत्याद्यर्थसङ्ग्रहः– **प्राणस्य सर्वचिदचित्परमेश्वरस्य साक्षादधीश्वरमिति** ।। 'आदरादलोपः'[४७] इत्याद्यर्थसूचनम्– **रमेशमिति** ।। रमोपास्यमित्यर्थः । अनेनास्या उपनिषदो व्याख्यानमयुक्तम् । विषयप्रयोजशून्यत्वादिति शङ्कापि निरस्ता वेदितव्या । निर्दोषगुणपूर्णस्य नारायणस्य मुख्यप्रतिपाद्यतायाः प्राणादीनां च तच्छेषतया प्रतिपाद्यतायास्सूचनात् । हरेः पूर्णगुणत्वादिकथनेनैव दुःखादिदोषरहितस्वस्वयोग्यानन्दादिगुणाविर्भावलक्षणस्योपनिषदुदितज्ञानफलस्यापि सूचनात् । 'तं यथा यथोपासते स तदेव भवति' इति श्रुतेः । सर्वज्ञमित्यनेन मोक्षाख्यफलस्योक्तरीत्या साक्षादेवोक्तेश्च । अतो युक्तमेव विषयप्रयोजनवत्त्वादुपनिषदो दुर्गमार्थत्वाच्च व्याख्यानमिति ।।

---

४४. ब्र.सू. २-३-१९

४५. ब्र.सू. ३-३-३५

४६. ब्र.सू. ३-३-३८

४७. ब्र.सू. ३-३-४१

ऐतरेयोपनिषदः इतिहासः

**भाष्यम्**

प्रादुर्बभूव भगवान् तपसेतराया
नारायणोऽब्जजसुतस्य विशालनाम्नः ।
तस्मिन् गतेऽध्वरमभूत् सुरविप्रसङ्घो
निश्चेतनस्तदनु पद्मभवोऽमुमस्तौत् ।।

तेन स्तुतः[४८] स भगवान् गिरिशेन्द्रमुख्यान्
सर्वानबोधयदजेन सहैव तेऽथ ।
दासत्वमापुरत एव महत्सुराणां
दासत्वतः स महिदास इति प्रसिद्धः ।।

शृण्वत्सु तेषु भगवानवदद्रमायै
दिव्यां श्रुतिं स परमोतिमुदैतरेयीम् ।
सा बह्वृचैः प्रपठिता चतुरानना स्यात्
यस्यां रहस्यमुदितं परमं हि विष्णोः ।।

महाभूतिः श्रुतिः[४९] सैषा महाभूतिर्यतो हरिः ।
विशेषेणात्र कथितः सर्वज्ञः शाश्वतः प्रभुः ।।

इति ऋक्संहितायाम् ।

**भावप्रदीपः**

'यो ह वाऽविदितार्षेच्छन्दो दैवतब्राह्मणेन मन्त्रेण यजति

---

४८. तैः संस्तुतः (ह)

४९.. महाभूतश्रुतिः (ह)

याजयति वाऽध्यापयति वा स्थाणुं वर्च्छति गर्तं वा पद्यते प्रवामीयते'[५०] इति श्रुतेर्देवतादिज्ञानवत एव विद्या फलतीति ज्ञायते । तत्र ब्राह्मणपदोपलक्षितार्थज्ञानं व्याख्यानादेव भविष्यति । छन्दस्तु प्रायोऽत्र नास्त्येव । अच्छन्दोबद्धवाक्यरूपत्वात् । ऋषिदैवते तु विवक्षन्नादावृषींस्तावद्वक्तुमाख्यायिकामाह– **प्रादुर्बभूवेति** ।। नारायणो विशालनाम्न ऋषेरितरायां तत्पत्न्यां प्रादुर्बभूवेत्यनेन न तस्य[५१] प्राकृतवच्छुक्लशोणितसम्बन्धाज्जन्म किन्तु तद्द्वारा रूपान्तरेणाभिव्यक्तिमात्रमित्याह । अत एवा**ब्जजसुतस्ये**ति षष्ठीप्रयोगः । अन्यथा पञ्चमी स्यात् । तस्यामेव प्रादुर्भावे निमित्तमाह– **तपसेति** ।। इतराकृततपोबलादित्यर्थः । यथोक्तं सूत्रभाष्ये– 'महिदासाभिधो जज्ञे इतरायास्तपोबलात्'[५२] इति । तत्कर्म निरूपयति– **तस्मिन्निति** ।। **तस्मिन्** भगवति **अध्वरं** देवादिभिरनुष्ठीयमानं कश्चिद्यज्ञं प्रति **गते** आगते सति तत्रत्यः सुरविप्रसङ्घः अदृष्टपूर्वभगवद्रूपदर्शनसमुत्पन्नभक्तिभयाभ्यां **निश्चेतनो** निश्चेष्टोऽभूदित्यर्थः । **तदनु** तन्निश्चेष्टत्वानन्तरम् । ब्रह्मस्तुतिप्रसन्नस्य हरेः प्रसादकारणमाह[५३]– **तेनेति** ।। **अबोधयत्** कर्तव्यमौढ्यं परिहरन् प्रबोधयुक्तांश्चकार । **अथ** प्राप्तप्रबोधास्ते गिरिशेन्द्रमुख्या अजेन सहैव तस्य दासत्वमापुः । अत एव स भगवान् महिदास इति प्रसिद्धः । अत एवेत्यस्य विवरणम्– **महत्सुराणां दासत्वत इति** ।। महान्तश्च ते सुराश्च

५०. छन्दोग्यारण्यकवाक्यम्

५१. एतस्य इति 'ख'पाठः

५२. सू.भा.उ.प्र.१-१-३१

५३. प्रसादप्रकारमाह इति 'ख'पाठः

महत्सुरास्तेषाम् । [54]'आन्महतः समानाधिकरणजातीययोः' इत्यस्य विधेः स्थान्यादेशोक्तिव्यत्ययेन द्वन्द्वेऽल्पाच्चतरस्य परनिपातेन वाऽनित्यत्वज्ञापनात् । 'महत्तत्त्वाद्विकुर्वाणात्'[55] इत्यादिप्रयोग-दर्शनाच्च **महत्सुराणामित्युक्तम्** । यद्यपि महासुराणामिति वक्तुं शक्यम् । तथाप्यसुराणामित्यकारप्रश्लेषप्रतीतिर्माभूदितीत्थमुक्तिः । **दासत्वतः** भगवद्दासत्वात् । तथा च महिनो महान्तो ब्रह्मादयो दासा यस्येति योगेन महिदास इत्यर्थः । महिशब्दस्य महदर्थकत्वं तु 'न ते महित्वमन्वश्नुवन्ति'[56] 'महित्वबुद्धिर्भक्तिस्तु'[57] इत्यादि-प्रयोगसिद्धम् । पूर्वटीकाकारास्तु 'मह पूजायाम्' इति धातोर्महित्वं नाम पूज्यत्वम् । तच्च महतामेव घटत इति महत्सुराणा-मित्युक्तमित्याहुः ॥

ततः किमकरोदित्यत आह– **शृण्वत्स्विति** ॥ भगवदुपदेश-पात्रत्वं साक्षाद्रमाया एव । इतरेषां तद्द्वारेत्यभिप्रायेण **शृण्वत्सु तेषु रमायै अवददित्युक्तम्** । **अतिमुदे**त्यनेन वक्तृप्रीतिविषयत्वं श्रोतृ-णामाह । अत एवास्या उपनिषद ऐतरेयीति नामेति भावेनोक्तम्– **ऐतरेयीमिति** ॥ इतरासुतमहिदासदृष्टत्वादैतरेयीनामिकामित्यर्थः । एतेन महिदासोऽस्याः प्रथमऋषिः, रमा द्वितीयर्षिर्ब्रह्मादयस्तदनन्तरा ऋषय इत्युक्तं भवति । अन्यानप्यृषीन्वक्तुमाह– **सेति** ॥ **बह्वृचैः**

---

५४. पा.सू. ६-३-४६ सि.कौ.सू.सं. ८०७

५५. भाग.ता. ३-७-२४

५६. सू.भाष्योदाहृतप्रमाणं १-१-२

५७. सू.भाष्योदाहृतपद्मपुराणान्तर्गतवचनम् ३-२-१९

ऋक्शाखिभिः । 'अर्वाक्तु द्वादशावृत्तेरधीत्याप्यृषिरेव सः'[५८] इति वचनाद्भगवन्मुखादध्येतॄणामपि रमादीनां ब्रह्ममुखादध्येतॄणां बह्वृचानामप्यृषित्वमविरुद्धम् । पूर्वटीकाकारास्तु महिदास एवात्रर्षिः । अन्यत्तु प्रचयप्रकारनिरूपणमित्याहुः । एवमृषीनुक्त्वाऽद्यपद्ये सूचितामेव देवतां स्पष्टमाह– **यस्यामिति** ।। **परमं रहस्यं** गुह्यं माहात्म्यम् ।।

नन्वस्तु महिदासोऽत्रर्षिः । उपनिषद ऐतरेयत्वप्रसिद्ध्यैव तत्सिद्धेः । देवता तु विष्णुरेवेति कुत इत्यतः प्रमाणेनैव तदुपपादयति– **महाभूतिरिति** ।। **सैषा श्रुतिः** ऐतरेयोपनिषत् । **महाभूतिः** तन्नाम्नी । यतो महाभूतिर्महैश्वर्यवान् हरिरत्र कथितस्तस्मादित्यर्थः । का सा महाभूतिर्यदुपेतप्रतिपादकत्वादियमपि तन्नाम्नीत्यत उक्तम्– **सर्वज्ञ इत्यादि** ।। गुणान्तराणामप्युपलक्षणमेतत् । तथाच सार्वज्ञ्यादिरूपमहैश्वर्यमेव महाभूतिरुच्यत इति भावः । विशेषेणकथित इत्यनेनातिप्रसक्तिं वारयति । अन्यथा सदागममात्रस्य हरिमाहात्म्यप्रतिपादकत्वेन महाभूतिशब्दवाच्यतापत्तेरिति ।।

**एष पन्था इति मन्त्रव्याख्यानम्**

**भाष्यम्**

**एष एव सदा पन्था भगवान् पुरुषोत्तमः ।**
**नित्यं स्वप्राप्तिहेतुत्वात् कर्तृत्वात् कर्म मातृतः ।।**

**ब्रह्मैव[५९] गुणपूर्णत्वात् सत्यं साधुस्वरूपतः ।**
**क्वापि तं विस्मरेन्नैव त्यक्त्वा तं नेतरं व्रजेत् ।।**

---

५८. ऋक्.भा. २-१६ ५९. ब्रह्मैष (ह)

**पूर्वे नैनं तत्यजुर्हि ब्रह्माद्यास्तेन संसृतेः ।**
**मुक्ता श्रीश्च तदत्यागान्नित्यमुक्ता गुणाधिका ।।**

**भावप्रदीपः**

अथ 'एषः पन्था' इत्यादिप्रघट्टकव्याख्यानमपव्याख्यानप्रत्याख्यानं च लाघवेन चिकीर्षुः प्रमाणेनैव व्याचष्टे– **एष एवेत्यादिना** ।। एष इत्यनुवादेन भगवानित्यादिव्याख्यानम् । सदेत्यस्योत्तरत्रान्वयः । **नित्यं** अनाद्यनन्तकालं स्वप्राप्तौ स्वस्यैव हेतुत्वात् पन्था इत्युच्यते । पन्था हि ग्रामादिगम्यप्राप्तौ हेतुः । मातृत इति भावप्रधानः । सदा कर्तृत्वान्मातृत्वाज्ज्ञातृत्वाच्च कर्मेत्युच्यते । 'डु कृञ् करणे' 'माङ् माने' आभ्यां कनिन् । गुणपूर्णत्वाद् ब्रह्म । 'बृह वृद्धौ' इति धातोर्मनिन् । **साधुस्वरूपतः**[६०] निर्दोषरूपत्वात् सत्यम् । सत्यसाधुशब्दौ च पर्यायौ । 'तस्मान्न प्रमाद्येत' इत्येतद् व्याचष्टे– **क्वापीति** ।। 'तन्नातीयात्' इत्येतद् व्याचष्टे– **त्यक्त्वेति** ।। 'न ह्यत्यायन् पूर्वे' इत्यस्य व्याख्या– **पूर्व इति** ।। येऽत्यायंस्ते पराबभूवुरिति । ब्रह्मत्यागिनामुत्तरवाक्ये फलकथनात्तदत्यागिनां किं फलमित्यत आह– **तेनेति** ।।

उक्तार्थे ऋषिसंवादः

**उपनिषत्**

**तदुक्तमृषिणा–**
**प्रजा ह तिस्रो अत्यायमीयु-**
**र्न्य१न्या अर्कमभितो विविश्रे ।**

---

६०. साधुसत्यस्वरूपतः इति 'ख'पाठः

**बृहद्ध तस्थौ भुवनेष्वन्तः**

**पवमानो हरित आ विवेशेति ।**

**'प्रजा ह तिस्रो अत्यायमीयु'रिति या वै ता इमाः प्रजास्तिस्रो अत्यायमायंस्तानीमानि वयांसि वङ्गा-वगधाश्चेरपादाः । 'न्य१न्या अर्कमभितो विविश्रे' इति । ता इमाः प्रजा अर्कमभितो निविष्टा इममेवाग्निम् । 'बृहद्ध तस्थौ भुवनेष्वन्तः' इति । अद उ एव बृहद्भुवनेष्वन्त-रसावादित्यः । 'पवमानो हरित आ विविश' इति । वायुरेव पवमानो दिशो हरित आविष्टः ।।२.१.१।।**

**इति प्रथमः खण्डः**

तमोयोग्याः त्रिविधाः

**भाष्यम्**

विहायस्ययनात् प्रोक्ता वयांसीति पिशाचकाः ।
वर्तितज्ञानतो वङ्गा नरास्तैरवनं सदा ।।

अन्नरूपैर्गृध्नवो हि वङ्गावगधनामकाः ।
राक्षसा असुरा ईरपादा इति समीरिताः ।।

धर्मो ज्ञानं च वैराग्यमैश्वर्यं चतुरात्मकः ।
वायुर्देवोऽत्रासुराणामैश्वर्यं गुण एव हि ।।

ईरपादास्ततः प्रोक्तास्ते त्रयो विष्णुमत्यजन् ।
पराभूतास्ततस्ते तु तमस्यन्धे निपातिताः ।।

### भावप्रदीपः

उक्तार्थे मन्त्रमुदाहृत्य प्रतिपादमनूद्य स व्याख्यायते– **प्रजा हेत्यादिना** ।। तत्र वयांसि, वङ्गावगधाश्च, ईरपादा इति पदत्रयं तावद् व्याख्याति– **विहायसीति** ।। वीत्याकाशनाम । तत्र **अयनात्** गमनान्निमित्तात्पिशाचका वयांसीति प्रोक्ताः । वीत्युपपदे 'अय गतौ' इति धातोः कर्तर्यसुन् । उपपदान्तलोपः । यथोक्तं छान्दोग्य-भाष्ये[६१]- 'वयांसि व्ययनाच्चैव वीत्याकाशस्तथोच्यते । तत्रायनाद्वयः प्रोक्तः' इति । पूर्वटीकाकारास्तु[६२] 'वय गतौ' इति धातोर्वयनात् वयांसि, विहायसीति योग्यतया सम्बन्ध इति व्याचख्युः । **वर्तितज्ञानतः** वर्तितं प्रवर्तितं ज्ञानं येषु ते वर्तितज्ञानाः । भावप्रधानो निर्देशः । वर्तितज्ञानत्वाज्जन्यज्ञानत्वादिति यावत् । नरा वङ्गा इत्युच्यन्ते । 'वृतु वर्तने' इति धातोर्डः । गमेर्डः । तथाच वं वर्तितं गं ज्ञानं येषामिति विग्रहः । वशब्दस्य नुमागमः । तैरवनं रक्षणं येषां ते वङ्गावा इति शेषः । अवशब्दार्थोऽ**वनमिति** । अवतेरच् । राक्षसानां नरैरवनं कथमित्यत उक्तम्– **अन्नरूपैरिति** ।। तथाच नरमांसोपजीविन इत्यर्थः । गधशब्दार्थो **गृध्नव** इति । 'गृधु अभिकाङ्क्षायाम्' इति धातोरच् । पृषोदरादित्वादकारस्याकारः । विषयलोलुपा इत्यर्थः । वङ्गावाश्च ते गधाश्चेति वङ्गावगधाः । **हि** यस्मात् एतादृशास्तस्माद्राक्षसास्तन्नामका इत्यर्थः । पूर्वटीका-कारास्तु[६३]– वं ज्ञानं गमयन्ति वर्तयन्तीति वङ्गा नरा इति व्याचक्रुः । असुराणामीरपादत्वमुपपादयति– **धर्म इत्यादिना** ।। धर्मो ज्ञानं

---

६१. छान्दो.भा.२-१४-१(१६४पु)   ६२. वि.ती. ६पु

६३. वि.ती. ६पु

वैराग्यमैश्वर्यं चेति चतुर्गुणात्मको वायुः । अत्र गुणचतुष्टये असुराणामैश्वर्याख्यगुण एक एव नान्ये त्रयः । **हि** यस्मात्तस्मात्ततोऽसुरा ईरपादाः प्रोक्ता इत्यर्थः । 'या वै ता इमाः प्रजास्तिस्रोऽत्यायमायन्' इत्यस्यार्थः– **ते त्रयो विष्णुमत्यजन्निति** । 'येऽत्यायंस्ते पराबभूवु'रित्यस्यार्थकथनं– **पराभूतास्तत**[६४] इति । तस्यैव विवरणम्– **तमसीति** ।। तुशब्दोऽनुत्थानरूपविशेषवाची ।

मुक्तियोग्यानां त्रैविध्यकथनम्

**भाष्यम्**

**देवाश्च ऋषयो मर्त्यसत्तमा इति च त्रयः ।**
**आश्रिता विष्णुमेवैकं त्रिस्थानस्थितमच्युतम् ।।**

**अग्निस्थमाश्रिता मर्त्या विष्णुमर्काभिधं परम् ।**
**आ जनैरर्चितत्वात् स ह्यर्क इत्युच्यते हरिः ।।**

**अग्नौ कर्माणि कृत्वैव मानुषा मुक्तिभागिनः ।**
**कर्मभिः शुद्धसत्त्वानां कर्मत्यागोऽपि नान्यथा ।।**

**आश्रिताः सूर्यगं विष्णुमृषयो बृहदित्यसौ ।**
**तेजसा बृंहणादुक्तो विष्णुरादित्य इत्यपि ।।**

**आदानात् सर्ववस्तूनां स्वाध्यायेनामुमाश्रिताः ।**
**मुच्यन्ते ऋषयो नित्यं नान्यथा तु कथञ्चन ।।**

**वायुस्थमाश्रिता देवाः पवमानाभिधं हरिम् ।**
**संसारात् पावयित्वा यन्महानन्दे मिनोत्ययम् ।।**

---

६४. पराभूतास्ततस्त इति 'ख'पाठः

**पवमानस्ततो विष्णुर्व्याप्तः सर्वासु दिक्षु च ।**
**आश्रितो भगवान् सर्वैः सर्वत्रापि विशेषतः ।।**
**आश्रयात् पृथगुक्तोऽयं नित्यानन्दो रमापतिः ।।१।।**

**भावप्रदीपः**

'ता इमाः प्रजा अर्कमभितो निविष्टा इममेवाग्निम्' । 'अद उ एव बृहद्भुवनेष्वन्तरसावादित्यः' 'वायुरेव पवमानो दिशो हरित आविष्टः' इति वाक्यत्रयं व्याचष्टे– **देवाश्चेति** ।। आद्यश्चशब्दो मर्त्यसत्तमाश्चेति सम्बद्ध्यते । द्वितीयोऽप्यर्थः । त्रयोऽप्येकमेव विष्णुमाश्रिता इति योजना । एतदेव विवृणोति– **अग्निस्थमित्यादिना** ।। एतेनेममेवाग्निमित्येतदग्निस्थत्वेनाग्निशब्दवाच्यं विष्णुमिति व्याख्यातं भवति । 'इमाः प्रजाः' इत्यस्य व्याख्या– **मर्त्यसत्तमा इति** ।। अर्कशब्दमग्निस्थे हरौ निर्वक्ति– **आ जनैरिति** ।। **आ** सम्यक् **जनै**र्मनुष्योत्तमैरर्चितत्वात्स विणुरर्क इत्युच्यते । 'अर्च पूजायाम्' इति धातोर्कर्मणि कन् । 'चोः कुः'[६०] इति चस्य कः । अथवा **आ** अर्चितत्वादर्क इत्येव सम्बन्धः । तथात्वे आङ्पूर्वादर्तेरिगुपधलक्षणः कः ।।

ननु मानुषैरर्चितत्वादर्कशब्दवाच्यत्वमग्निस्थस्यैव कुत इत्यतस्तदुपपादयति– **अग्नाविति** ।। नन्वेवं तर्हि मानुषयतीनां मोक्षो न स्यात्तेषामग्नौ कर्मकरणाभावादित्यत आह– **कर्मभिरिति** ।। यतीनामग्नौ कर्मत्यागोऽपि न प्रथमत एव । किन्त्वाश्रमत्रये कर्माणि कृत्वा तैः कर्मभिः **शुद्धसत्वानां** शुद्धान्तःकरणानामेव । अन्यथा शुद्धसत्वतासम्पत्तौ न कर्मत्यागः कार्यः । किन्तु कर्माण्यग्नावनुष्ठेया-

---

६०. पा.सू. ३-४-५५

न्येवेत्यर्थः । आश्रिताः सूर्यगमित्यनेन 'अद उ एव' इति वाक्यं व्याख्यातं भवति । बृहच्छब्दं तस्मिन्निर्वक्ति– **बृहदितीति** ।। **असौ** सूर्यगो विष्णुस्तेजसा **बृंहणात्** लोकव्यापनाद् बृहदित्युक्त इत्यर्थः । 'असावादित्यः' इत्युक्तादित्यशब्दं तस्मिन्निर्वक्ति– **आदानादिति** ।। स्वीकरणात् । सर्ववस्तूनां स्ववशे स्थापनादिति यावत् । आङ्पूर्वाद् 'डु दाञ्'[६६] धातोर्यत्प्रत्ययः । अकारस्येत्वं तुगागमश्च । अथवा दाधातोरित्यक्प्रत्यय औणादिकः । सूर्यगतस्य विष्णोः ऋषिभि-राश्रितत्वं घटयति– **स्वाध्यायेनेति** ।। नित्यमाश्रिता इत्यन्वयः । 'वायुस्थमाश्रिता देवाः' इत्यनेन 'वायुरेव पवमानः' इति वाक्यं व्याख्यातं भवति । तत्र पवमानशब्दं निर्वक्ति– **संसारादिति** ।। **मिनोति** क्षिपति । 'डु मिञ् प्रक्षेपणे'[६७] । संसारादुद्धृत्य महानन्दे स्थापयतीत्यर्थः । 'पूञ् पवने' इत्यस्मादन्तर्णीतण्यर्थादप् । मिनोतेर्डनिच् । (न प्रत्ययः । इकारस्यात्वम्)[६८] तथाच पवश्चासौ मानश्चेति पवमान इति भावः । 'दिशो हरित आविष्टः' इत्येतद् व्याचष्टे– **व्याप्त इति** ।। ननु भगवतः सर्वरूपेष्वविशेषात् प्रतिरूपं सर्वाश्रयत्वेनाग्निस्थस्यैव मानुषाश्रयत्वमित्यादिविशिष्योक्तिः कथ-मित्याशङ्क्य तत्र निमित्तमाह– **आश्रिता**[६९] **इति** ।। यद्यपि सर्वैर्देवादिभिस्सर्वत्रापि वाय्वधिष्ठानेषु[६९अ] रमापतिराश्रित एव । तथा-प्यग्नौ कर्माणि कृत्वैवेत्याद्युक्तत्वाद्विशेषतः **आश्रयात्** आश्रयणात्, आश्रितत्वादिति यावत् । **पृथक्** तत्तत्स्थाने । तैराश्रितत्वेनोक्त

---

६६. दाने इति ख पाठः ६७. प्रक्षेपे इति ख पाठः

६८. ()एतत् चिह्नस्था पंक्तिः कमातृकायां नास्ति

६९. आश्रित इति ख पाठः ६९अ. वाय्वाद्यधिष्ठानेषु इति ख पाठः

इत्यर्थः । एषा[७०] लीलैव पूर्णानन्दस्य भगवत इति भावेनोक्तम्– नित्यानन्द इति ॥

अधिदैवे अध्यात्मे च भगवतः उक्थ–अर्क–अन्नरूपाणि

ऐतरेयोपनिषत्

**उक्थमुक्थमिति वै प्रजा वदन्ति, तदिदमेवोक्थमियमेव पृथिवी । इतो हीदं सर्वमुत्तिष्ठति यदिदं किञ्च । तस्याग्निरर्कः । अन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते ।**

**अन्तरिक्षमेवोक्थम् । अन्तरिक्षं वा अनु पतन्त्यन्तरिक्षमनु धावन्ति । तस्य वायुरर्कः । अन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते ।**

**असावेव द्यौरुक्थम् । अमुतः प्रदानाद्धीदं सर्वमुत्तिष्ठति यदिदं किञ्च । तस्यासावादित्योऽर्कः । अन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते । इत्यधिदैवतम् ।**

**अथाध्यात्मम् । पुरुष एवोक्थम् । अयमेव महान् प्रजापतिरहमुक्थमस्मीति विद्यात् ।**

**तस्य मुखमेवोक्थम् । यथा पृथिवी तथा । तस्य वागर्कः । अन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते । नासिके एवोक्थं, यथान्तरिक्षं तथा । तस्य प्राणोऽर्कः । अन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते । तदेतद् ब्रध्नस्य विष्टपं यदेतन्नासिकायै विनतमिव । ललाटमेवोक्थं यथा**

---

७०. एषा च इति ख पाठः

**द्यौस्तथा । तस्य चक्षुरर्कः । अन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते ।**

**समानमशीतयोऽध्यात्मं चैवाधिदैवतं चान्नमेव । अन्नेन हीमानि सर्वाणि भूतानि समन्ती९३ । अन्नेनेमं लोकं जयत्यन्नेनामुम् । तस्मात् समानमशीतयोऽध्यात्मं चाधिदैवतं चान्नमेव ।**

**तदिदमन्नमन्नादमियमेव पृथिवी । इतो हीदं सर्वमुत्तिष्ठति यदिदं किञ्च । यद्ध किञ्चेदं प्रेता३ इ तदसौ सर्वमत्ति । यदु किञ्चातः प्रैती३ तदियं सर्वमत्ति । सेयमित्याद्याऽत्री । अत्ता ह वा आद्यो भवति । न तस्येशेऽयं नाद्यात् यद्वैनं नाद्युः ॥२.१.२.॥**

इति द्वितीयखण्डः

उक्थशब्दनिर्वचनम् तत्स्थानकथनं च

भाष्यम्

उत्थापनादुक्थनामा स एव पृथिवीस्थितः ।
प्रथितः पृथिवीनामा सोऽन्तरिक्षाभिधोऽत्रगः ॥

अन्तरीक्ष्यो यतो द्युस्थो द्युनामातिप्रकाशनात् ।
अध्यात्मे च निविष्टोऽसौ पुरुषाख्यो जनार्दनः ॥

पूर्षु स्थितत्वात् स महान् प्रजानां पतिरेव च ।
अहमुक्थमिति ह्येतां विद्यामनुभवत्यसौ ॥

**पृथक्पृथक्च तस्याङ्गान्युक्थानि जगदीशितुः ।**
**अग्निवातदिनेशानामुत्थानानि पृथक् पृथक् ।।**
**वदनं नासिका नेत्रमित्येतानि परात्मनः ।**

**भावप्रदीपः**

'उक्थमुक्थ'मिति खण्डं व्याचष्टे– **उत्थापनादित्यादिना** ।। **उत्थापनात्** जगत्सर्जनादुक्थनामा । भगवानिति वर्तते । उत्पूर्वात् 'ष्ठा गतिनिवृत्तौ' इति धातोरन्तर्णीतण्यर्थात्कप्रत्ययः । तकारस्य कः । धात्वादेर्लोपश्च निर्वचनत्वात् । 'इयमेव पृथिवी'त्यस्यार्थः– **स एवेति** ।। **स** भगवानेव पृथिवीनामेति सम्बन्धः । योगरूढोऽयं शब्दो भगवतीति भावेन रूढिप्रदर्शनाय **पृथिवीस्थित** इति योगदर्शनाय **प्रथित** इति चोक्तम् । **प्रथितो** विस्तृतः । एवमेवोत्तरत्र सर्वत्र योगरूढिप्रदर्शनं ज्ञेयम् । 'अन्तरिक्षमेवोक्थं' इत्यादावन्तरिक्षपदं भगवति व्याख्याति– **सोऽन्तरिक्षाभिध इति** ।। यतः **अत्रगः** अन्तरिक्षस्थः **अन्तरीक्ष्यः** स्वहृदयान्तर्ज्ञानिभिरीक्षणीयश्च, तस्मादित्यर्थः । अन्तरुपपदादीक्षतेः कर्मण्यच् । धातोर्ह्रस्वता । 'असावेव द्यौः' इत्यत्र द्युशब्दं भगवति घटयति– **द्युस्थ इति** ।। प्रकाशनस्य सूर्यादिसाधारण्यनिरासाय **अतिप्रकाशनादित्युक्तम्** । द्युत्यर्थाद्दीव्यतेः क्विप् । [७१]'अध्यात्मं' इत्यादि व्याचष्टे– **अध्यात्मे चेति** ।। आत्मानं देहमधिकृत्य विद्यमानमध्यात्मं मुखनासिकादिकम् ।

---

७१. अथाध्यात्मं इति ख पाठः

तत्र निविष्ट इत्यर्थः । पुरुष इति जीव उच्यत इति प्रतीति-निरासायाह– **पुरुषाख्य इति** ।। पुरुषशब्दवाच्यासु **पूर्षु** शरीराख्य-पुरीषु स्थितत्वाद्रूढ्या, पुरेषु देहाख्यपूर्षु स्थितत्वाद्योगेन च पुरुषाख्य इत्यर्थः । पुरुशब्दोपपदात्सरतेर्डः । उपपदान्तस्योकारः । सस्य षत्वम् । 'अयमेव महान् प्रजापतिः' इत्येतद् व्याचष्टे– **स महानिति** ।। स एव महान् प्रजानां पतिश्चेति सम्बन्धः । 'अहमुक्थमस्मीति विद्यात्' इत्येतद् यः कोऽपि पुरुषोऽहमुक्थम-स्मीति जानीयादित्युच्यत इति प्रतीतिनिरासाय व्याचष्टे– **अह-मुक्थमिति** ।। नायं विधिः, किन्तु **विद्यां** ज्ञानमत्ति अनुभवतीति विद्यादिति भगवत एव विशेषणम् । तथाचाहमुक्थमस्मीति ज्ञानस्य योग्यो भगवानेक एव, नान्यः । तस्यैव सर्वोत्तमत्वादियोगाद-न्यस्यायोगादिति भावः । विद्योपपदात् 'अद भक्षणे' इति धातोः क्विप् विट् च[७२] । 'तस्य मुखमेवोक्थं, नासिके एवोक्थम्, ललाटमेवोक्थं' इति वाक्यत्रयं व्याचष्टे– **पृथगिति** ।। नन्वङ्गिनः पुरुषस्योक्तमुक्थत्वं कथं तदङ्गानामपि युज्यत इत्यतस्तद्घटयितुमाह– **अग्नीति** ।। **उत्थानानि** उत्थापकानि, जनकानीत्यर्थः । पृथक् पृथगित्यस्य वदनमग्नेरुत्थापकम्, नासिका वातस्य, नेत्रं **दिनेशस्य** सूर्यस्येत्यर्थः । अत्र नेत्रमित्यनेन ललाटशब्दस्तत्सम्बद्धनेत्रोपलक्षक इत्युक्तं भवति ।।

---

७२. विट् च इति क पाठे नास्ति

**पृथक्पृथक्च तस्याङ्गान्युक्थानि जगदीशितुः ।**
**अग्निवातदिनेशानामुत्थानानि पृथक् पृथक् ।।**
**वदनं नासिका नेत्रमित्येतानि परात्मनः ।**

**भावप्रदीपः**

'उक्थमुक्थ'मिति खण्डं व्याचष्टे– **उत्थापनादित्यादिना** ।। **उत्थापनात्** जगत्सर्जनादुक्थनामा । भगवानिति वर्तते । उत्पूर्वात् 'ष्ठा गतिनिवृत्तौ' इति धातोरन्तर्णीतण्यर्थात्कप्रत्ययः । तकारस्य कः । धात्वादेर्लोपश्च निर्वचनत्वात् । 'इयमेव पृथिवी'त्यस्यार्थः– **स एवेति** ।। **स** भगवानेव पृथिवीनामेति सम्बन्धः । योगरूढोऽयं शब्दो भगवतीति भावेन रूढिप्रदर्शनाय **पृथिवीस्थित** इति योगदर्शनाय **प्रथित** इति चोक्तम् । **प्रथितो** विस्तृतः । एवमेवोत्तरत्र सर्वत्र योगरूढिप्रदर्शनं ज्ञेयम् । 'अन्तरिक्षमेवोक्थं' इत्यादावन्तरिक्षपदं भगवति व्याख्याति– **सोऽन्तरिक्षाभिध इति** ।। यतः **अत्रगः** अन्तरिक्षस्थः **अन्तरीक्ष्यः** स्वहृदयान्तर्ज्ञानिभिरीक्षणीयश्च, तस्मादित्यर्थः । अन्तरुपपदादीक्षतेः कर्मण्यच् । धातोर्ह्रस्वता । 'असावेव द्यौः' इत्यत्र द्युशब्दं भगवति घटयति– **द्युस्थ इति** ।। प्रकाशनस्य सूर्यादिसाधारण्यनिरासाय **अतिप्रकाशनादित्युक्तम्** । द्युत्यर्थाद्दीव्यतेः क्विप् । [७१]'अध्यात्मं' इत्यादि व्याचष्टे– **अध्यात्मे चेति** ।। आत्मानं देहमधिकृत्य विद्यमानमध्यात्मं मुखनासिकादिकम् ।

---

७१. अथाध्यात्मं इति ख पाठः

तत्र निविष्ट इत्यर्थः । पुरुष इति जीव उच्यत इति प्रतीतिनिरासायाह– **पुरुषाख्य इति** ।। पुरुषशब्दवाच्यासु **पूर्षु** शरीराख्यपुरीषु स्थितत्वाद्रूढ्या, पुरेषु देहाख्यपूर्षु स्थितत्वाद्योगेन च पुरुषाख्य इत्यर्थः । पुरुशब्दोपपदात्सरतेर्डः । उपपदान्तस्योकारः । सस्य षत्वम् । 'अयमेव महान् प्रजापतिः' इत्येतद् व्याचष्टे– **स महानिति** ।। स एव महान् प्रजानां पतिश्चेति सम्बन्धः । 'अहमुक्थमस्मीति विद्यात्' इत्येतद् यः कोऽपि पुरुषोऽहमुक्थमस्मीति जानीयादित्युच्यत इति प्रतीतिनिरासाय व्याचष्टे– **अहमुक्थमिति** ।। नायं विधिः, किन्तु **विद्यां** ज्ञानमत्ति अनुभवतीति विद्यादिति भगवत एव विशेषणम् । तथाचाहमुक्थमस्मीति ज्ञानस्य योग्यो भगवानेक एव, नान्यः । तस्यैव सर्वोत्तमत्वादियोगादन्यस्यायोगादिति भावः । विद्योपपदात् 'अद भक्षणे' इति धातोः क्विप् विट् च[७२] । 'तस्य मुखमेवोक्थं, नासिके एवोक्थम्, ललाटमेवोक्थं' इति वाक्यत्रयं व्याचष्टे– **पृथगिति** ।। नन्वङ्गिनः पुरुषस्योक्तमुक्थत्वं कथं तदङ्गानामपि युज्यत इत्यतस्तद्घटयितुमाह– **अग्नीति** ।। **उत्थानानि** उत्थापकानि, जनकानीत्यर्थः । पृथक् पृथगित्यस्य वदनमग्नेरुत्थापकम्, नासिका वातस्य, नेत्रं **दिनेशस्य** सूर्यस्येत्यर्थः । अत्र नेत्रमित्यनेन ललाटशब्दस्तत्सम्बद्धनेत्रोपलक्षक इत्युक्तं भवति ।।

---

७२. विट् च इति क पाठे नास्ति

तृचाशीतिमन्त्रवत् प्रसिद्धान्नं भगवतस्तृप्तिकरम्

भाष्यम्

तृचाशीतिविभिन्नस्य शस्त्रस्यान्नत्वहेतुतः ।
विष्णोस्तृचाशीतिवत् स्यात् प्रसिद्धान्नमिति स्फुटम् ॥

अन्नाभिमानिदेवश्च तृचाशीत्याश्च देवता ।
सोम एव ततश्चान्नमशीतय इतीरितम् ॥

अदनाघ्राणदृष्ट्याख्यभोगत्रयविभागतः ।
मुखनासाचक्षुषां तद्भोग्यमन्नं हरेः श्रुतम् ॥

भावप्रदीपः

नन्वधिदैवतमध्यात्मं चान्नमशीतय इत्यन्नस्याशीतित्वमुच्यते । तत्र कास्ता अशीतयः, कथं चान्नस्य तद्रूपत्वमित्यत आह– **तृचाशीतीति** ॥ तिस्र ऋचो यस्मिन् मन्त्रे असौ तृचः, तृचानामशीतयस्तृचाशीतयः । ताश्च गायत्री बार्हती औष्णिही चेति तिस्रः । शस्त्रं नाम यज्ञे शंसनीयं बृहतीसहस्ररूपं मन्त्रजातम् । तच्चोक्ततृचाशीतिभिः प्रभेदैर्विभिन्नम् । तादृशस्य शस्त्रस्य विष्णोरन्नत्वहेतुतः प्रसिद्धान्नमपि विष्णोस्तृचाशीतिवत् स्यात् । स्फुटमित्यवधारणे । स्यादेवेत्यन्वयः ।

इदमुक्तं भवति । शस्त्रस्य तावदन्नत्वं 'स हान्नमित्येवाभिव्याहृत्य बृहतीसहस्रं शशंस'[७३] इति वक्ष्यते । तच्चान्नत्वं तर्पकत्वेनैव वाच्यम् । तथाच प्रसिद्धान्नमपि विष्णोस्तर्पकत्वात्सिंहो देवदत्त इतिवदशीतय इति सामानाधिकरण्येनोच्यत इति ॥

---

७३. ऐत.उ २-२-३

ननु [७४]'यत्प्राक् तृचाशीतिभ्यः सैका विधा, तिस्रस्तृचाशीतयो यदूर्ध्वं सा पञ्चमी' इति बृहतीसहस्रशस्त्रस्य पञ्चभागताया वक्ष्यमाणत्वात् कथमत्र तृचाशीतिविभिन्नस्य शस्त्रस्येत्युच्यत इति । सत्यम् । तथापि पूर्वभागस्य प्रथमतृचाशीत्यामन्तिमभागस्य तृतीयतृचाशीत्यामन्तर्भावविवक्षयेयमुक्तिरिति न दोषः ।

प्रकारान्तरेणाप्यन्नस्याशीतित्वमुपपादयति– **अन्नाभिमानीति** ।। तथाचोभयोरेकदेवताकत्वादैक्यव्यपदेशोपपत्तिरिति भावः । ननु 'तस्यान्नं तस्यान्न'मिति मुखनासिकानेत्रसम्बन्धित्वमन्नस्योच्यते । न चैतद् युज्यते । न हि लोके मुखवन्नासिकानेत्रयोरन्नं नामास्तीत्यत आह– **अदनेति** ।। तदन्नं हरेर्मुखनासिकाचक्षुषामदनादिभोगत्रयविभागतो भोग्यं श्रुतमित्यन्वयः । तत्र मुखस्यान्नमद्यतया, घ्राणस्याघ्रेयतया, चक्षुषो दर्शनीयतया भोग्यमिति विभागः ।।

## अर्कशब्दनिष्पत्तिप्रदर्शनम्

### भाष्यम्

**अरणं गमनं यस्मादर्कः शीघ्रगतित्वतः ।**
**श्येन एव तदाकारा चितिरर्कपदोदिता ।।**

**सुपर्णप्रतिमा सा यत्तदारूढो जनार्दनः ।**
**तस्मात् तस्यार्क इति सा प्रोच्यते वैदिकैः पदैः ।।**

**योऽसौ चितिगतो वीन्द्रः सोऽग्निवातरविष्वपि ।**
**तथा वाक्प्राणचक्षुष्षु तस्मात् तेऽर्काः प्रकीर्तिताः।।**

---

७४. ऐत.उ २-३-४

**तेषु स्थिते सुपर्णे च रूपभेदैः पृथक् पृथक् ।**
**स्थितो विष्णुस्तदर्कास्ते तस्मादेव प्रकीर्तिताः ॥**

**भावप्रदीपः**

'तस्य अग्निरर्कः' इत्यत्रार्कपदार्थमाह– **अरणमिति** ॥ 'ऋ गतौ' इति धातोर्यस्मादरणं ऋधात्वर्थो गमनम्, तस्माद् ऋच्छति गच्छतीति व्युत्पत्त्या श्येन एवार्क इत्युच्यते । अर्तेरौणादिकः कच् । गतिमत्त्वस्य सर्वत्र सत्वात् कथं तस्यैवार्कत्वमित्यत उक्तम्– **शीघ्रगतित्वत इति** ॥ 'असाधारण्येन व्यपदेशा भवन्ति' इति न्यायेनोपपत्तिरिति भावः । अस्तु श्येनोऽर्कः, किं प्रकृत इत्यत आह– **तदाकरेति** ॥ श्येनाकारा चितिरिष्टकासन्निवेशविशेषो यज्ञे क्रियमाणोऽर्कपदेन गौण्या मृद्रवको गोपदेनेव **उदिता** प्रतिपादिता । सा च चितिः **यत्** यस्मात्**सुपर्णप्रतिमा** सुपर्णाभिमन्यमाना तस्मात्सा तस्य विष्णोरर्क इत्युच्यते । कुतः? यस्माज्जनार्दनः **तदारूढो** गरुडारूढस्तस्मादित्यर्थः । गरुडस्य विष्णुवाहनत्वाद्विष्णोर्गरुड इति व्यवहारस्तूपपन्न एव । गरुडाभिमन्यमानचितेस्तु तत्प्रतिमारूपत्वात् सापि विष्णवीयत्वेन वैदिकैः पदैः प्रोच्यत इति भावः । अस्त्वर्कस्यैव तदीयत्वम्, तथाप्यग्निरर्को वायुरर्क आदित्योऽर्क इत्यधिदैवतम्, वागर्कः, प्राणोऽर्कश्चक्षुरर्क इत्यध्यात्मं च कथमग्न्यादीनां वागादीनां चार्कत्वमित्यत आह– **योऽसाविति** ॥ अपितथाशब्दौ परस्परसमुच्चये । चक्षुष्वित्यनन्तरं स्थितो यस्मादिति शेषः । तस्मादर्कपदोदितचितिगतवीन्द्राधिष्ठितत्वात्तेऽग्न्यादयोऽर्काः प्रकीर्तिता इत्यर्थः । एवमग्न्यादीनामर्कत्वमुपपाद्य 'तस्यार्कः' इत्युक्तं विष्णवीयत्वमुपपादयति– **तेष्विति** ॥ **तेषु** अग्न्यादिषु **स्थिते**

सुपर्णे, चशब्दात्तेषु च पृथक्पृथक् रूपभेदैः रूपविशेषैर्विष्णुर्यतः स्थितः **तस्मात्** विष्ण्वधिष्ठितत्वाद्विष्ण्वधिष्ठितगरुडाधिष्ठितत्वाच्च तेऽग्न्यादयः **तदर्काः** विष्णुसम्बन्धिनोऽर्काः प्रकीर्तिता इत्यर्थः । एवशब्देन निमित्तान्तरं व्यावर्तयति ॥

अध्यात्मे भगवान्

**भाष्यम्**

**व्याप्तत्वाज्जीवदेहेषु मुखे विष्णोर्मुखं स्मृतम् ।**
**नासयोर्नासिका विष्णोरक्ष्णोरेव तदक्षिणी ।**
**जीववाक्प्राणचक्षुष्षु तद्वागाद्यास्ततः स्थिताः ।**

भगवदिन्द्रियेषु विषेशः

**विष्णोर्वाग्भार्गवो रामो प्राणोऽस्य नरकेसरी ॥**
**चक्षुस्तु कपिलो विष्णुरग्न्यादीनां च कारणम् ।**
**जीववागादिसंस्थं च सुपर्णमधिसंस्थिताः ॥**
**अविशेषोऽपि भगवान् पूर्णैश्वर्यस्वरूपतः ।**
**अङ्गाङ्गित्वेनैक एव स्वानन्दानुभवे[७५] स्थितः ॥**
**स एव व्यूह्य चात्मानं पृथग्रूप इव स्थितः ॥**
**सुपर्णनामा भगवान् सुपर्णे च व्यवस्थितः ।**
**अग्न्यादिषु च तन्नामा वासुदेवः स संस्थितः ॥**

---

७५. स्वानन्दानुभवः इति ह पाठः

**अन्ननामा स एवान्ने चेष्टयन् सर्वमास्थितः ।**
**अन्ने स्थितः स एवेशो ह्यन्नदातृगतिप्रदः ।।**

**भावप्रदीपः**

'अथाध्यात्मं' इत्येतदध्यात्मे च निविष्टोऽसाविति व्याख्यातम्, तदेवेदानीं विशदयति– **व्याप्तत्वादिति** ।। जीवानां देहेषु विष्णोर्व्याप्तत्वाज्जीवानां **मुखे** वदने विष्णोर्मुखं स्मृतमित्यन्वयः । अत एव जीववागादीन्द्रियेषु भगवद्वागादीन्द्रीयाणि स्थितानि ज्ञेयानीत्याह– **जीववागिति** ।। **घ्राणो** घ्राणेन्द्रियम् । **ततः** जीवदेहेषु व्याप्तत्वादेव । भगवदिन्द्रियेषु विशेषमाह– **विष्णोरिति** ।। न केवलं विष्णुमुखादिगोलकानामेवाग्न्यादिकारणत्वम्, किन्तु तत्स्थेन्द्रियाणामपि तत्कारणत्वमस्तीत्याह– **विष्णुरिति** ।। वागाद्यात्मकभार्गवादिरूपो विष्णुरग्निवायुसूर्याणां क्रमेण कारणमित्यर्थः । अथवा कपिलः कपिलरूपो विष्णुरिति सामानाधिकरण्येनान्वयः । तेन ऋषिगणप्रविष्टकुशास्त्रकृत्कपिलव्यावृत्तिः । एते भार्गवादयस्त्रयोऽप्यग्न्यादीनां **कारणं** कारणानीति योजना । 'वागर्कः प्राणोऽर्कश्चक्षुरर्कः' इत्युक्तमर्कत्वं चैषां घटयति– **जीवेति** ।। न केवलं जीववागादिस्थिताः, किन्तु तत्स्थ[७६]मर्कपदोदितचितिगतं सुपर्णं चाधिसंस्थिताः । अतोऽर्का इत्युच्यन्त इति भावः । ननु भार्गवादीनामपि पृथक् मुखवागादिमत्त्वेनावयवित्वात्कथमेषामवयवत्वम् । तत्रापि कथं स्वावयवत्वम्, आत्माश्रयप्रसङ्गात् । अन्यथा भेदस्याङ्गीकार्यतापत्तेरित्यत आह– **अविशेषोऽपीति** ।। अभिन्नोऽपि भगवानचिन्त्यैश्वर्यबलादेक एवा-

---

७६. तत्संस्थ इति ख पाठः

ङ्गाङ्गित्वेन स्थित इत्यर्थः । किमनेन प्रयोजनमित्यत उक्तम्– **स्वानन्दानुभवे स्थित इति** ।। निजानन्दानुभवस्वरूपस्येयं लीलैवेति भावः । पूर्णैश्वर्यबलादपि कथमेकस्यैवाङ्गाङ्गिभाव इत्यतस्तत्प्रकारं निरूपयति– **स एवेति** ।। **स** स्वगतभेदवर्जितो भगवानेवात्मानं **व्यूह्य** मुखवागादिरूपेण विभज्य पृथग्रूप इव स्थितः । अयमवयवोऽयमवयवीत्यादिरूपेण स्थित इत्यर्थः ।

भार्गवादीनां विष्णुवागादित्वमुक्तम् । तेन चाग्न्यादिशब्दवाच्यत्वमपि प्राप्तम् । अध्यात्ममधिदैवतं च देवतैक्यात् । अग्न्यादीनां चाधिदैवत्वात् । तदन्तर्यामिणश्च तच्छब्दमुख्यार्थत्वात् । एवमग्न्याद्यधिष्ठातृसुपर्णान्तर्यामिणो हरेस्तच्छब्दवाच्यत्वमप्यावश्यकमेवेति भावेनाह– **सुपर्णनामेति** ।। सुपर्णेति तदीयनामान्तरस्याप्युपलक्षणम् । तेन तद्वाचकार्कनाम्नोऽपि प्रकृतस्य सङ्ग्रहः । तत्प्रवृत्तिनिमित्तस्य शीघ्रगतित्वस्य सुपर्णेऽपि सत्वात् । तेनार्कशब्दः श्येन एव मुख्यस्तदाकारायां चितौ गौणः, सुपर्णे तु चितिसम्बन्धात्प्रवृत्त इत्यतीवगौणः प्राप्त इति शङ्कानवकाशः । अधिष्ठानशब्दानामधिष्ठातरि मुख्यत्वाच्च । एतेन 'अग्निरर्कः' इत्यादेरर्थान्तरं च प्रदर्शितं भवति । तच्च दर्शयिष्यामः । 'अन्नेन हीमानि सर्वाणि भूतानि समनन्तीं३' इत्येतद् व्याचष्टे– **अन्ननामेति** ।। अद्यत्वात् उपजीव्यत्वादन्ननामा **स** भगवानेव सर्व[७७]प्राणिजातं चेष्टयन्नन्ने आस्थित[७८] इति योजना । एतेन **अन्नेन** अन्नस्थितेन अद्यत्वादन्ननाम्ना भगवता इमानि सर्वाणि भूतानि **समनन्ति** सम्यक् चेष्टन्त इति मूलं व्याख्यातं भवति । 'अन्नेनेमं लोकं जयत्यन्नेनामुं' इति वाक्यं व्याचष्टे– **अन्ने स्थित इति** ।।

---

७७. सर्वं इति ख पाठः ७८. स्थित इति ख पाठः

एतेन अन्नेनान्नस्थेन तन्नाम्ना भगवता तत्प्रीत्यर्थं दत्तेनान्नेन निमित्तेनेमं लोकं जयति प्राप्नोति । अन्नेनैवामुं लोकं च जयतीति तदर्थ उक्तो भवति ॥

भगवतोऽत्तृत्वाद्यत्वनिरूपणम्

**भाष्यम्**

**तस्यान्तरिक्षगस्यैव नियमादनुपक्षिणः ।**
**पतन्ति धावयन्त्यश्वनरादींश्च नरादयः ॥**

**परस्य विष्णोर्धामत्वात् सूर्यो ब्रध्न इतीरितः ।**
**निहितश्चैव तल्लोको नासिकायां नतस्थले ॥**

**पृथिव्यां संस्थितो विष्णुः स्त्रीरूपेण द्युलोकतः ।**
**पतितं सर्वमेवात्ति तथा दिवि च संस्थितः ॥**

**इतो गतं सर्वमत्ति द्युनामा भगवान् परः ।**
**भोग्यत्वादाद्य इत्युक्तः एवमाद्यात्तृरूपवान् ॥**

**एक एव परो विष्णुरत्ताऽन्यैरुपजीव्यतः ।**
**आद्यो भवति चान्येषां नोपजीव्यो भवेद्यथा ॥**

**हरिः स सर्वजीवानां न भुज्यन्ते यथाऽमुना ।**
**सर्वे लोकास्तथा कर्तुं नैवेष्टे कश्चन क्वचित् ॥२॥**

**भावप्रदीपः**

'अन्तरिक्षं वा अनुपतन्ति अन्तरिक्षमनुधावयन्ति' इत्येतद् व्याचष्टे– **तस्येति** ॥ अन्तरिक्षगस्यैव हरेर्नियमात् अनु प्रेरणा-

नन्तरमेव पक्षिणः पतन्ति । तत्प्रेरणयैव नरादयोऽश्वादिषु यानादिवाहकनरवृषभादिषु चोपविष्टास्ताननुधावयन्ती[७९]त्यर्थः । एतेनाद्यवाक्ये पक्षिण इति, द्वितीयवाक्ये नरादयोऽश्वनरादीनिति कर्तृकर्माध्याहारस्सूचितो भवति । 'तदेतद् ब्रध्नस्य विष्टपं यदेतन्नासिकायै विनतमिव' इति वाक्यं व्याचष्टे– **परस्येति** ।। **धामत्वात्** अधिष्ठानत्वात् । धीयते निधीयतेऽस्मिन्निति ध्नः । धामेति यावत् । दधातेरधिकरणे डनच् । वरशब्दे वकारस्य बकारः । [८०]बवयोरभेदात् । अन्तलोपश्च । ततश्च वरस्य परस्य विष्णोर्ध्नो ब्रध्नः सूर्य इत्यर्थः । नासिकायामियनेन नासिकायै इति चतुर्थी सप्तम्यर्थेति सूचयति । विनतमिवेत्यस्यार्थो **नतत्स्थल** इति । 'यद्ध किञ्चेदं प्रेता३ इ तदसौ सर्वमत्ति यदु किञ्चातः प्रैती३, तदियं सर्वमत्ति' इत्येतद्वाक्यं व्युत्क्रमेण व्याचष्टे– **पृथिव्यामिति** ।। 'इय'मित्यस्यार्थः– **पृथिव्यां संस्थित इति** ।। स्त्रीलिङ्गनिर्वाहाय **स्त्रीरूपेणेत्युक्तम्** । 'अतः प्रैती'त्यस्यार्थः– **द्युलोकतः पतितमिति** ।। वृष्ट्यादिकमित्यर्थः । 'इदं प्रेता३इ' इत्यस्यार्थः– **इतो गतमिति** ।। **इतः** पृथिव्याः, गतं धूमादिकमचेतनं स्वर्गादिगन्तृकर्म्यादिचेतनं चेत्यर्थः । 'असौ' इत्यस्य **दिवि स्थितो द्युनामे**त्यर्थः । अत्र द्युलोकात्पतितपदार्थादनस्य सर्वानुभवसिद्धत्वाद्दिवस्त्वितोगतपदार्थादनस्य तदभावादेतद्वैलक्षण्यज्ञापनाय श्रौतक्रममननुसृत्य व्यत्यासतो व्याख्यानम् । 'सेयमित्याद्यात्री'त्यत्राद्यशब्दार्थमाह– **भोग्यत्वादिति** ।। एवं भोक्तृत्वादत्तेत्यपि ग्राह्यम् । अत्राद्यत्वमत्तृत्वं च भगवतः स्वनिरूपितमेव विवक्षितम् । तत्तु नानुपपन्नम् । परशक्तित्वादिति

७९. तान् धावन्ति इति ख पाठः ८०. वबयोः इति खपाठः

भावेनाह– **एवमाद्यात्तृरूपवानेक एव विष्णुः** यतः परशक्तिरिति ।। एवं पृथिवीगतस्त्रीरूपस्याद्यत्वमत्तृत्वं चोक्त्वा द्युलोकगतपुरुष-रूपस्यापि तदुभयमुच्यते– **अत्ता हवा आद्यो भवतीति** ।। अत्रापि पूर्ववदनुपपत्तिपरिहरणार्थमेवमाद्यातृरूपवानेक एव परो विष्णुरिति वाक्यमेव योज्यम् । अथवोभयत्रापि नाद्यत्वमत्तृत्वं च स्वनिरूपितं विवक्षितं येनानुपपत्तिशङ्कावकाशः । किन्तु स्वान्य-निरूपितमेवेति भावेनाह– **अत्तेति** ।। अन्येषामिति शेषः । **अन्यै-रुपजीव्यतः** उपजीव्यत्वादद्यश्च भवतीति योजना । तथाच न काचिदनुपपत्तिरिति भावः । 'न तस्येशे यं नाद्याद्यद्वैनं नाद्युः' इत्येतद् व्याचष्टे– **अन्येषामिति** ।। स हरिरन्येषां सर्वभूताना-मुपजीव्यो यथा न भवेत् । सर्वे लोका वा अमुना हरिणा न भुज्यन्ते न भुज्येरन् । तथा कर्तुं कश्चन क्वचिदपि नैवेष्ट इत्यन्वयः ।।

**सृष्टिकर्ता भगवानेव**

**उपनिषत्**

**अथातो रेतसः सृष्टिः । प्रजापते रेतो देवाः, देवानां रेतो वर्षं, वर्षस्य रेत ओषधयः, ओषधीनां रेतोऽन्नं, अन्नस्य रेतो रेतो, रेतसो रेतः प्रजाः, प्रजानां रेतो हृदयं, हृदयस्य रेतो मनो, मनसो रेतो वाक्, वाचो रेतः कर्म । तदिदं कर्म कृतम् । अयं पुरुषो ब्रह्मणो लोकः । स इरामयो, यद्धीरामयस्तस्मात् हिरण्मयः । हिरण्मयो ह वा अमुष्मिंल्लोके सम्भवति । हिरण्मयः सर्वेभ्यो भूतेभ्यो ददृशे य एवं वेद ।।२.१.३।।**

### सृष्टिनिरूपणम्

### भाष्यम्

स एष भगवान् विष्णुः प्रजापतिरितीरितः ।
तस्माज्जाताः सर्वदेवा ब्रह्माद्यास्तेभ्य एव च ।।

वृष्टिः सञ्जायते तस्याः सर्वा ओषधयोऽभवन् ।
ओषधीभ्योऽन्नमन्नाच्च रेतो रेतस एव च ।।

सर्वाः प्रजाः प्रजायन्ते सङ्कल्पो हृदयाभिधः ।
प्रजाभ्यो जायते तस्माद् विकल्पाख्यं मनस्तथा ।।

विकल्पाद्वाक्प्रचारश्च वाचा नामादिवेदनात् ।
कर्म सञ्जायते तस्मात् कर्मणश्च जगत्पुनः ।।

### जीवः कर्माभिमानी

कर्माभिमान्ययं जीवः परस्य ब्रह्मणो हरेः ।
आवासस्थानमुद्दिष्टो विशेषात् स इरामयः ।।

इच्छानुरूपं तु सुखमिरेत्येव प्रकीर्तितम् ।
इच्छानन्दप्रभूतत्वात् स एव च हिरण्मयः ।।

### हिरण्मयशब्दार्थकथनम्

हिरुक्सुखं हिरण्यं स्याद् बाह्यानन्दात् पृथग्यतः ।
आधिक्यार्थे मयड् यस्मादधिकानन्दरूपकः ।।

उत्सृज्य कर्मजं रूपं निजानन्दैकरूपकः ।
एवं नारायणं जानन् सर्वलोकैककारणम् ।।
तल्लोके दृश्यते भूतैर्मुक्तैरानन्दरूपकः ।।२.१.३।।

## भावप्रदीपः

'अथातो रेतसः' इति खण्डं व्याचष्टे– **स एष इत्यादिना** ।। अत्र प्रजापतिशब्देन विष्णुरेवोच्यते नान्यः । 'अयमेव महान् प्रजापतिः'[८१] इति पूर्वं तस्यैव प्रस्तुतत्वादिति भावेनाह– **स एष इति** ।। अत्र सर्वत्र रेतःशब्देन पूर्वपूर्वजन्यत्वमुत्तरोत्तरस्योच्यत इति भावेनोक्तम्– **तस्माज्जात इत्यादि** ।। अन्नाच्च रेतो जात इत्यनेन 'अन्नस्य रेतो रेतः' इत्यत्र द्वितीयो रेतःशब्दः शुष्मवाचीति ज्ञापितं भवति । हृदयमनःशब्दयोः पर्यायत्वात्कथं तयोर्जन्यजनक-भाव इत्यतोऽर्थभेदमाह– **सङ्कल्प इति** ।। मनो द्विविधं सङ्कल्पात्मकं विकल्पात्मकं चेति । यद्यपि द्वयमपि प्रजाभ्यो जातमेव । तथापि प्रथमं सङ्कल्पजनिस्तदनन्तरं विकल्पजनिरिति क्रमज्ञापनायेत्थमुक्ति-रिति भावः । 'मनसो रेतो वागि'त्यस्यार्थः– **विकल्पाद्वाक् प्रचारश्चेति** ।। **वाक् प्रचारो** वाक्प्रवृत्तिः । अत्र सङ्कल्पादपीति ग्राह्यम् । सङ्कल्पविकल्पाभ्यामुभाभ्यामपि पृथक् पृथग्वाक्प्रचारदर्शनात् । विधिविषयकमनोवृत्तिरेव हि सङ्कल्पः । निषेधविषयकमनोवृत्तिश्च विकल्पः । एवं वाक्प्रचारस्सर्वोऽपि विधिनिषेधविषयकताभेदेन द्विविध एवेति । 'वाचो रेतः कर्मे'त्येतद् व्याचष्टे– **वाचेति** ।। **तस्मात्** वाक्प्रचारात्कर्म संजायते । तत्कथं? वाचा नामादिवेदनात् । वाक्प्रचारे सत्येव हि इदमस्य नामेदं चास्य वाच्यमिति व्युत्पत्तिः । ततश्च घटमानय इत्यादिवाक्प्रचारे घटानयनादिकर्मोत्पत्तिरिति । 'तदिदं कर्म कृत'मित्यस्य व्याख्या– **कर्मणश्च जगत्पुनरिति** ।। कुलालादिकर्मणा हि घटादिकं जगज्जायते । **पुनरिति** प्रवाहरूपेण ।

---

८१. ऐत.उ. २-१-२

'अयं पुरुषो ब्रह्मणो लोकः' इत्येतद् व्याचष्टे– **कर्माभिमानीति** ।। तत्रायमित्यनुवादः कर्माभिमानीति व्याख्या । तेन जीवस्याप्रकृतत्वात्कथमयमिति परामर्श इति शङ्कानवकाशः । अभिमन्यमानस्य कर्मणः प्राक् प्रकृतत्वात् । 'ब्रह्मणो लोकः' इत्यस्य व्याख्या– **परस्येत्यादि** ।। सर्वस्यापि ब्रह्मावासस्थानत्वात्कुतो विशिष्योक्तिरित्यतो **विशेषादित्युक्तम्** । अचेतनापेक्षयाऽतिशयेनेत्यर्थः । 'स इरामयः' इत्येतदनूद्य तत्र स इत्यनन्तरितपुरुषपदोक्तजीवपरामर्श इति भ्रान्तिनिरासाय व्याचष्टे– **स इरामय इति** ।। इशब्दः कामवाची । कामश्चेच्छा । 'रमु क्रीडायाम्' इति धातोः रा रतिः, सुखम् । तथाचेच्छानन्दप्रभूतत्वादिच्छानुरूपानन्दपूर्णत्वाद् यथेष्टानन्दपूर्णत्वादिरामय इत्यर्थः । मयट् प्राचुर्ये । 'यद्धीरामयस्तस्माद्धिरण्मयः' इत्येतद् व्याचष्टे– **स एव चेति** ।। इरामय एव । चशब्दो यस्मादित्यर्थे । यस्मादिरामयस्तस्मादिरामय एव हिरण्मयः । इरामयत्वादेव हिरण्मय इत्यर्थः । तत्कुत इत्यतो हिरण्मयशब्दं निर्वक्तुं हिरण्यशब्दार्थं तावद्दर्शयति– [८२]**हिरगिति** ।। हिरक्शब्दो हि पृथग्वाची । ण्यशब्दो णशब्दवत्सुखवाची । हिरगित्यत्र ककारलोपो निर्वचनत्वात् । तथाच विलक्षणं सुखं हिरण्यमित्युच्युत इत्यर्थः । एतदेव विशदयति– **बाह्येति** ।। वैषयिकेत्यर्थः । अस्त्वेवं ततः किमित्यत आह– **आधिक्यार्थ इति** ।। यस्मात्तस्मादत्र मयट् आधिक्यमर्थः । ततश्चाधिकानन्दरूपतः अधिकालौकिकसुखरूपत्वाद्धिरण्मय उच्यत इति पूर्वेणान्वयः । ण्यशब्दे यकारलोप इति भावः । 'हिरण्मयो हवा

---

८२. हिरुगिति इति प्रतीकं स्यात् इति भाति । सर्वत्र मूलकोशेषु तथैव पाठात् ।

अमुष्मिन् लोके सम्भवती'त्येतद् व्याचष्टे– **उत्सृज्येति** ।। **कर्मजं रूपं** प्राकृतदेहम् । प्राकृतदेहस्येच्छागृहीतस्य मुक्तावपि सत्वात् कर्मजमिति विशेषणम् । हिरण्मय इत्यस्यार्थो– **निजानन्दैकरूपक इति** ।। भवतीति शेषः । ''य एवं वेद' इत्यस्यानुवाद **एवं नारायणमित्यादि** ।। 'प्रजापते रेतो देवाः' इत्यादिनोक्तार्थस्य सङ्ग्रहणानुवादः– **सर्वलोकैककारणमिति** ।। उपलक्षणमेतत् । हिरण्मयादिरूपं चेत्यपि द्रष्टव्यम् । हिरण्मयभावस्य फले कथनात् । फलस्योपासनानुसारित्वात् । अमुष्मिन् लोक इत्यस्यार्थः– **तल्लोक इति** ।। 'सर्वेभ्यो भूतेभ्यो ददृशे' इत्यनुभवबाधितमित्यतस्तद्घ-टयति– **दृश्यते भूतैर्मुक्तैरिति** ।। पुनर्हिरण्मय इत्यस्यार्थः– **आनन्दरूपक इति** ।।

### प्रपद–ऊरु–उदरेत्यादिशब्दानां इतिहासः

### उपनिषत्

**तं प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषम् । यत्प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं तस्मात् प्रपदे तस्मात् प्रपदे इत्याचक्षते । शफाः खुरा इत्यन्येषां पशूनाम् । तदूर्ध्वमुदसर्पत् । ता ऊरू अभवताम् । उरू गृणीही-त्यब्रवीत् । तदुदरमभवत् । उर्वेव मे कुर्वित्यब्रवीत् । तदुरोऽभवत् । उदरं ब्रह्मेति शार्कराक्ष्या उपासते, हृदयं ब्रह्मेत्यारुणयो ब्रह्मा हैव ता ३ ई । ऊर्ध्वं त्वेवोदसर्पत् । तच्छिरोऽश्रयत । यच्छिरोऽश्रयत तच्छिरोऽभवत् । तच्छिरसः शिरस्त्वम् । ता एताः शीर्षंच्छ्रियः श्रिताः,**

**चक्षुः श्रोत्रं मनो वाक्प्राणः । श्रयन्तेऽस्मिंच्छ्रियो य एवमेतच्छिरसः शिरस्त्वं वेद ।**

भाष्यम्

तमिमं प्रथमं (म)ज्ञानिपुरुषं चतुराननम् ।
वासुदेवाभिधं ब्रह्म प्राप प्रपदयोः पुरा ।।

यस्मात् प्रपेदे भगवान् प्रपदा चतुराननम् ।
तस्मात् प्रपदनादेव प्रपदं नाम कीर्तितम् ।।

चतुर्मुखाकारवतां नृणां पादतलोपरि ।
प्रपदाख्या वर्ततेऽतो न तु पश्चादिनां क्वचित् ।।

अयादूर्ध्वं ततो विष्णुः प्रपदादूरुमत्र च ।
स्थित ऊरू च तावास्तामूरूर्ध्वगमनाद्धरेः ।।

किञ्चिदूर्ध्वं ततो गत्वा वायुना सह केशवः ।
वायुमाहोरुगरणं कुर्वत्र स्थित इत्यपि ।।

उर्वेव गरणं चक्रे वायुर्यत्र स्थितः सदा ।
तत्स्थानमुदरं नाम पुनराह जनार्दनः ।।

उरु स्थानं निवासं मे कुरु विस्तारसंयुतम् ।
तथाऽकरोत् स वायुश्च तदुरोऽभूदुरुत्वतः ।।

उरोमध्ये च हृदयं तत्रावासो[८३] हरेः सदा ।
सूक्ष्मदृष्टियुता ये तु मुनयः शार्कराक्ष(क्ष्य)काः ।।

---

८३. तत्र वासो इति ह पाठः

**उदरे ते परं ब्रह्म वासुदेवमुपासते ।**
**हृत्स्थमेव परं विष्णुं ध्यायन्त्यारुणयः सदा ।।**

**उदरस्थं च हृद्गं च ते उभे ब्रह्म तत्परम् ।**
**एकमेव यतस्तस्मादुभये ह्यपि तद्विदः ।।**

**भावप्रदीपः**

'तं प्रपदाभ्यां प्रापद्येत' इति खण्डं व्याचष्टे– **तमिममिति** ।। अयं पुरुष इति प्राक् जीवमात्रस्य प्रकृतत्वादत्रापीमं पुरुषमिति जीवमात्रपरामर्श इति प्रतीतिनिरासाय तं प्रथमं ज्ञानिपुरुषमिति सविशेषणमनूद्य चतुराननमिति व्याख्यानम् । तमित्यस्यैवार्थः **प्रथम-मिति ज्ञानीति च ।** तच्छब्दस्य प्रसिद्ध्यर्थत्वात् । प्रसिद्धो हि चतुराननो ज्ञानिषु प्रथमत्वेन । चतुर्मुखब्रह्मव्यावृत्त्यै **वासुदेवाभिध-मिति** विशेषणम् । [८४]'तदेव ब्रह्म' इत्यादिश्रुतेर्ब्रह्मशब्दस्य तत्रैव मुख्यत्वात् । प्रपदाभ्यामिति तृतीया सप्तम्यर्थेति भावेनोक्तम्– **प्रपदयोरिति** ।। **पुरा** आदिसृष्टौ । 'यत् प्रपदाभ्या'मित्यादेर्व्याख्या– **यस्मादित्यादि** ।। **प्रपदात्** प्रपदावच्छेदेन । तस्मादित्यस्यैव विवरणम्– **प्रपदनादेवेति** ।। प्रपदनावच्छेदकत्वादेव चतुर्मुखपादो-परितनभागरूपमङ्गं प्रपदमिति कीर्तितमित्यर्थः । नन्वस्तूक्तप्रवृत्ति-निमित्तसद्भावाच्चतुर्मुखपादोपरिभागस्य प्रपदशब्दवाच्यत्वम् । अन्येषा-मपि तत्कथमित्यतस्तत्र निमित्तकथनपूर्वकं 'तस्मात्प्रपदे तस्मात् प्रपदे इत्याचक्षते' इति प्रयोगबाहुल्यज्ञापकद्विरुक्तेस्तात्पर्यमाह– **चतुर्मुखेति** ।। पुरुषाकारवतां नृणामित्युपलक्षणम् । देवादीनां

---

८४. म.ना.उ १-६

चेत्यपि द्रष्टव्यम् । 'शफाः खुरा इत्यन्येषा'मित्यस्य तात्पर्यम्– **न त्विति** ।। **पश्चादिनां** पश्चादीनां । 'तदूर्ध्वमुदसर्पदि'त्यादि व्याचष्टे– **अयादित्यादिना** ।। **ततो**ऽनन्तरम् । ब्रह्मदेहे प्रपदादूर्ध्व-मुरुमयात् । यात्वा च **अत्र** उरौ स्थितः । अतो हरेरूर्ध्वगमना-न्निमित्तात् **तौ** चतुर्मुखसम्बन्धिनावयवविशेषौ **ऊरू** ऊरुशब्दवाच्या-**वास्ता**वभूतामित्यर्थः । ऊर्ध्वशब्दोपपदाद् 'ऋ गतौ' इति धातोः कुः । ऊर्ध्वशब्दस्य ऊभावो निर्वचनत्वात् । 'उरु गृणीहीत्यब्रवीत् दुदर-मभवत्' इत्येतद् व्याचष्टे– **किञ्चिदिति** ।। **ततः** ऊरुतः । अत्र वायुना सहेत्यनेन पूर्वमपि वायुना सहैव स्थानद्वयप्राप्तिर्बोद्धव्या । अन्यथा मध्ये ऊरुस्थानादूर्ध्वगमनसमये वायुसहभागोक्त्ययोगात् । **गरणं** स्तुतिम् । अपिशब्द एवार्थः । **अत्र** स्थाने स्थितस्सन्नेव **उरु** उत्कृष्टं गरणं कुर्विति वायुमाहेति योजना । एतेनोरु यथा भवति तथा मां **गृणीहि** स्तुहीत्याज्ञापनं वायुमुद्दिश्यैवेति ज्ञापितं भवति । आज्ञप्तश्च वायुर्यत्र स्थाने सदा स्थितः सन्नुर्वेव गरणं चक्रे तत्स्थान-मुदरं नामाभवदित्यनेनोदरशब्दनिर्वचनं कृतं भवति । उशब्द उरु-शब्दपर्यायः । उत्कृष्टवाचित्वात् । गरशब्दे गस्य दः । तथा चोरु गृणात्यत्रेत्युदरमिति गृणातेरच् । 'उर्वेव मे कुर्वित्यब्रवीदि'त्येतद् व्याचष्टे– **पुनराहेति** ।। उर्वित्यनुवादेन विस्तारसंयुतमिति व्याख्यानम् । **निवासं** वासयोग्यम् । इतीत्यध्याहार्यम् । तत्स्थान-मुरोऽभवत् । कुतः, उरुत्वतः । 'हृदयं ब्रह्मेत्यारुणयः' इति हृदय-स्थस्य ब्रह्मोक्तिः कथं सङ्गच्छते । प्राक्तनस्थानस्यानुक्तत्वादित्यत आह– **उरोमध्य इति** ।। तथाचोरःकथनेनैव हृदयस्यापि लक्षणया सङ्गृहीतत्वात्तत्स्थस्य ब्रह्मत्वोक्तिर्नासङ्गतेति भावः । 'उदरं ब्रह्मेति

शार्कराक्षा उपासते' इत्येतद् व्याख्यातुं शार्कराक्षपदं तावद् व्याचष्टे– **सूक्ष्मेति** ।। शर्करावत् सूक्ष्मं शार्करं, सादृश्यार्थेऽण् । शार्करमक्षमक्षोद्भवज्ञानं येषां ते मुनयः शार्कराक्षकाः इत्यर्थः । 'उदरं ब्रह्मोपासते' इत्यस्यार्थमाह– **उदरे त इति** ।। एतेनोदरमिति प्रथमा सप्तम्यर्थे । 'सप्तसु प्रथमा' इति सूत्रात् । तस्मिन्नुदरनामकं ब्रह्मास्तीत्युपासत इति तद्वाक्यं व्याख्यातं भवति । 'हृदयं ब्रह्मे'ति वाक्यं व्याचष्टे– **हृत्स्थमेवेति** ।। हृद्ययनाद्धृदयशब्दवाच्यं विष्णुं ध्यायन्तीत्यर्थः । 'ब्रह्मा हैव ता इ' इत्येतद् व्याचष्टे– **उदरस्थं चेति** ।। हृद्गं चेति ये भगवद्रूपे ते उभे अपि तत्परं ब्रह्मैकमेव । न तत्र भेदशङ्का कार्या । यत एवं तस्मादुभयेऽपि शार्कराक्षा आरुणयश्च मुनयः **तद्विद एव** ब्रह्मविद एव । हि प्रसिद्धमित्यर्थः ।।

### पञ्चरात्राद्यभिमानिदेवनिरूपणम्

### भाष्यम्

**तत ऊर्ध्वं गतो विष्णुर्वायुना सह दैवतैः ।**
**स्थितो मूर्धनि देवेशः श्रितोऽसाविति तच्छिरः ।।**

**तत्र प्राणात्मना वायुर्मनोरूपेण शङ्करः ।**
**शेषः सुपर्ण इन्द्रश्च मनांस्येव पृथक् पृथक् ।।**

**अहम्भावमनो रुद्रः शेषोऽसौ पाञ्चरात्रि(त्र)कम्**[८५] **।**
**वैदिकं गरुडश्चेन्द्रो यज्ञादिविषयं मनः ।।**

**श्रोत्रं चन्द्रो रविश्चक्षुर्वागग्निः परिकीर्तितः ।**
**एते देवास्तदन्ये च सर्वप्राणिषु संस्थिताः**[८६] **।**
**उपासते महाविष्णुं**[८७] **परमात्मानमच्युतम् ।।**

---

८५. पञ्चरात्रिकः इति ह.पाठः    ८६. संश्रिताः इति ह.पाठः

८७. सदा विष्णुं इति ह.पाठः

## भावप्रदीपः

'अथ ऊर्ध्वं त्वे वोदसर्पत्' इत्यादिकं व्याचष्टे– **तत ऊर्ध्वमित्यादिना** ।। वायुना सहोर्ध्वं गतः सन् **मूर्धनि** शिरसि दैवतैस्सह स्थितोऽभूदित्यन्वयः । एतेन तच्छिरोऽश्रयतेत्युक्तार्थम् । 'यच्छिरोऽश्रयत' इति वाक्यं व्याचष्टे– **श्रितोऽसावितीति** ।। इतिशब्दो हेत्वर्थे । 'ता एताः शीर्षंच्छ्रियः श्रिताश्च चक्षुः' इत्यादि वाक्यं व्याचष्टे– **तत्रेत्यादिना** ।। **तत्र** शिरसि, **प्राणात्मना** प्राणाख्यरूपेण श्रित इति सर्वत्र [88]योज्यम् । शेषादयोऽपि **मनांस्येव** मनःशब्देन ग्राह्याः । पृथक् पृथगित्युक्तमेव विवृणोति– **अहंभावेति** ।। अहङ्कारात्मकेत्यर्थः । **पाञ्चरात्रिकं** पञ्चरात्रागमविषयकमनोऽभिमानी । पञ्चरात्रप्रवर्तकत्वात् । **वैदिकं** वेदविषयकमनोऽभिमानी वेदप्रवर्तकत्वात् । यथोक्तं ऋग्भाष्ये– 'सुपर्णोऽखिलवेदानां पञ्चरात्रस्य नागराट्'[89] इति । श्रोत्रं चक्षुर्वागिति तदभिमानिन इत्यर्थः । 'ता एताः शीर्षंच्छ्रिताः' इत्युपलक्षणम् । तत्र स्थित्वा विष्णुमुपासत इत्यपि ग्राह्यमिति भावेनाह– **एते देवा इति** ।। तदन्ये चेत्यनेन चक्षुरादिशब्दस्त्वक्पाण्यादीनामुपलक्षका इति ज्ञापितं भवति । अत एव शीर्षशब्दोऽपि त्वगाद्याधारावयवान्तरोपलक्षको मन्तव्यः । 'तं प्रपदाभ्यां प्रापद्यत' इति चतुर्मुखस्यैकस्यैव प्रकृतत्वात्तद्देह एव देवा विष्णुमुपासते नान्यत्रेति प्रतीतिनिरासायोक्तम्– **सर्वप्राणिष्विति** ।।

---

८८. संयोज्यम् इति ख.पाठः

८९. ऋक्.भा. १-१-३०श्लोक

अहमुक्थमस्मि अहमुक्थमस्मीति देवानां विवादः

उपनिषत्

ता अहिंसन्त, अहमुक्थमस्म्यहमुक्थमस्मीति । ता अब्रुवन् । हन्तास्माच्छरीरादुत्क्रामाम, तद्यस्मिन्नु उत्क्रान्त इदं शरीरं पत्स्यति तदुक्थं भविष्यतीति । वागुदक्रामत् । अवदन्नश्नन् पिबन्नास्तैव । चक्षुरुदक्रामत् । अपश्यन्नश्नन् पिबन्नास्तैव । श्रोत्रमुदक्रामत् । अशृण्वन् अश्नन् पिबन्नास्तैव । मन उदक्रामत् । मीलित इवाश्नन् पिबन्नास्तैव । प्राण उदक्रामत् । तत्प्राण उत्क्रान्तेऽपद्यत । तदशीर्यत् । अशारीर्ती३ तच्छरीरमभवत् । तच्छरीरस्य शरीरत्वम् । अशीर्यते ह वा अस्य द्विषन् पाप्मा भ्रातृव्यः, परास्य द्विषन् पाप्मा भ्रातृव्यो भवति य एवं वेद ।

द्वितीयवारं देवानां स्पर्धा, प्राणस्य देवोत्तमत्वम्

ता अहिंसन्तैवाहमुक्थमस्महमुक्थमस्मीति । ता अब्रुवन्, हन्तेदं पुनः शरीरं प्रविशाम, तद्यस्मिन्नः प्रपन्न इदं शरीरमुत्थास्यति तदुक्थं भविष्यतीति । वाक्प्राविशत् । अशयदेव । चक्षुः प्राविशत् । अशयदेव । श्रोत्रं प्राविशत् । अशयदेव । मनः प्राविशत् । अशयदेव । प्राणः प्राविशत् । तत्प्राणे प्रपन्न उदतिष्ठत् । तदुक्थमभवत् । तदेतदुक्थं प्राण एव । प्राण उक्थमित्येव विद्यात् । तं देवा अब्रुवन्

**त्वमुक्थमसि, त्वमिदं सर्वमसि, तव वयं स्मस्त्वमस्माकमसीति । तदप्येतदृषिणोक्तं 'त्वमस्माकं तव स्मसि' इति ॥२.१.४.॥**

भाष्यम्

वाचा हिंसामकुर्वंस्ते विनिन्दन्तः परस्परम् ।
ते विष्णोराज्ञयाऽवोचन्नुत्क्रमाम पृथक् पृथक् ॥

देहादब्जभवस्यास्माद्यस्मिन्नुत्क्रान्त एव हि ।
शरीरं पद्यते श्रेयान् स न इत्यवधार्यताम् ॥

ततः क्रमेण चाग्न्याद्या निष्क्रान्तास्तेषु सर्वशः ।
निष्क्रान्तेषु न वै पातः शरीरस्याभवत् क्वचित् ॥

वायावुत्क्रान्त एवैतच्छरीरमपतत् क्षितौ ।
उदासीनवदास्तां तौ केशवश्चाब्जसम्भवः ॥

तेषां बलपरीक्षार्थं वाय्वादीनां च सर्वशः ।
पुनस्ते प्राविशन् सर्वे वह्निसूर्यौ शशी शिवः ॥

नोत्थानमभवत् तेषु प्रविष्टेष्वपि सर्वशः ।
वायौ प्रविष्टे तूत्थानं कायस्यासीत् तदैव च ॥

उच्चैः स्थितत्वादुक्थोऽभूद् वायुरेव ततः प्रभुः ।
उच्चत्वं च गुणाधिक्यं त्वमुच्चोऽसीति तेऽब्रुवन् ॥

भृत्या वयं तवैव स्म त्वमस्माकं पतिः सदा ।
स्पर्धामहे त्वद्बलेन त्वया नान्येन केनचित् ॥

**इत्यूचुर्वीन्द्रशेषेशशक्रचन्द्रादिकाः पृथक् ।**
**वायुः स संस्तुतस्तैश्च प्रसन्नोऽभूद् दिवौकसाम् ॥२.१.४॥**

**भावप्रदीपः**

'ता अहिंसन्त' इत्यादिकं व्याचष्टे– **वाचेति** ॥ अहमुक्थमस्मीत्यादेः कथं हिंसात्वमित्यतो **वाचेत्युक्तम्** । तत्तात्पर्यमाह– **विनिन्दन्त इति** ॥ 'तदुक्थं भविष्यती'त्यस्यार्थः **नो**ऽस्माकं मध्ये **स श्रेयानिति** । 'वागुदक्रामच्चक्षुरुदक्रामत्' इत्यादेरर्थः– **ततः क्रमेणेत्यादि** ॥ आस्तैवेत्येवकारस्यार्थः– **न वै पात इति** ॥ 'प्राण उदक्रामत्' इत्यादेरर्थः– **वायाविति** ॥ ननु किं तदा तच्छरीरे विष्णुविरिञ्चावास्तां न वा । न तावद् द्वितीयः । विरिञ्चस्य तदभिमानित्वेन विष्णोश्चान्तर्यामित्वेन तयोरभावे मृतकवदश्नन् पिबन्नित्याद्युक्ताशनादिव्यापारस्यायोगात् । अशयदिति वक्ष्यमाणशयेनोक्त्ययोगाच्च । आद्ये कथं तयोः सतोर्वायूत्क्रान्तिमात्रेण शरीरपात इत्यत आह– **उदासीनवदिति** ॥ सर्वथौदासीन्ये वायुव्यापारस्याप्ययोगात् **उदासीनवत्** इत्युक्तम् । विवादेऽप्रविष्टत्वादेव ह्युदासीनसाम्योक्तिः । **बलपरीक्षार्थं** बलज्ञापनार्थम् । 'तत्प्राणे प्रपन्न उदतिष्ठत्' इत्यस्य व्याख्या– **वायौ प्रविष्ट इति** ॥ 'तदुक्थमभवत्' इत्यस्यार्थः– **उच्चैः स्थितत्वादित्यादि** ॥ ततः **ताभ्यां** शरीरपातोत्थानाभ्यां **प्रभुर्वायुरे**वोच्चैः स्थितत्वान्निमित्तादुक्थोऽभूदित्यन्वयः । किमिदमुच्चत्वं नामेत्यत आह– **उच्चत्वं चेति** ॥ अन्यथा 'भृत्या वयं तवैव स्मः'[१०] इत्यादि वक्ष्यमाणार्थेऽनुपयोगादसङ्गतत्वापत्तेरिति भावः । 'तं देवा अब्रुवंस्त्वमुक्थमसी'त्येतद् व्याचष्टे– **त्वमुच्चोऽसीति** ॥ 'तव वयं

---

१०. ऐत.भा. २-१-४

स्म' इत्यादेरर्थः– **भृत्या वयमित्यादि** ।। एष च स्वामिभृत्यभावो न राजादिवद् बहिरङ्गः । किन्त्वस्मदीयसमस्तप्रवृत्तेरपि त्वदधीनत्वात् सर्वात्मनैवेत्याह– **स्पर्धामह इति** ।। **त्वद्बलेन** त्वत्प्रेरणयैवेति यावत् । वयं त्वया स्पर्धामहे, नान्येन केनचिन्निमित्तेन । त्वत्प्रेरणामन्तरेण न किञ्चित्तत्र निमित्तमस्तीति भावः । उपसंहरति– **इत्यूचुरिति** ।। नेदं देवानां वायुस्तवनं कृपणयाश्चावन्निष्फलमभूदित्याह– **स इति** ।।

### इति चतुर्थखण्डः

### प्रातः-सायंशब्दयोः इतिहासः तच्छब्दवाच्यत्वं च

### उपनिषत्

**तं देवाः प्राणयन्त । स प्रणीतः प्रातायत । प्रातायीती३ तत्प्रातरभवत् । समागादिती३ तत्सायमभवत् । अहरेव प्राणो, रात्रिरपानः ।**

### भाष्यम्

तस्मात् श्रुत्वा परं ब्रह्म देवा नारायणाभिधम् ।
शिष्यप्रशिष्यादिषु च तेऽनयन् वायुनोदितम् ।।

वायुमप्यनयन् सर्वे यशसा तद्गुणोक्तितः ।
ये ये गुणान् विजानन्ति वायोस्तानाविशन् मरुत् ।।

तत्र तत्र प्रविष्टत्वात् प्रततोऽसौ बभूव ह ।
प्रततत्वात् प्रातरिति तस्य नामाभवद्विभोः ।।

सङ्गतश्चाभवज्जीवचिता रूपान्तरेण सः ।
सङ्गतत्वात् सायमिति तद्रूपं नामतोऽभवत् ।।
वायोस्तत्पुनरध्यात्मं प्राणापानाभिधं द्वयम् ।

**इत्यूचुर्वीन्द्रशेषेशशक्रचन्द्रादिकाः पृथक् ।**
**वायुः स संस्तुतस्तैश्च प्रसन्नोऽभूद् दिवौकसाम् ।।२.१.४।।**

**भावप्रदीपः**

'ता अहिंसन्त' इत्यादिकं व्याचष्टे– **वाचेति** ।। अहमुक्थमस्मीत्यादेः कथं हिंसात्वमित्यतो **वाचेत्युक्तम्** । तत्तात्पर्यमाह– **विनिन्दन्त इति** ।। 'तदुक्थं भविष्यती'त्यस्यार्थः **नोऽस्माकं मध्ये स श्रेयानिति** । 'वागुदक्रामच्चक्षुरुदक्रामत्' इत्यादेरर्थः– **ततः क्रमेणेत्यादि** ।। आस्तैवेत्येवकारस्यार्थः– **न वै पात इति** ।। 'प्राण उदक्रामत्' इत्यादेरर्थः– **वायाविति** ।। ननु किं तदा तच्छरीरे विष्णुविरिञ्चावास्तां न वा । न तावद् द्वितीयः । विरिञ्चस्य तदभिमानित्वेन विष्णोश्चान्तर्यामित्वेन तयोरभावे मृतकवदश्नन् पिबन्नित्याद्युक्ताशनादिव्यापारस्यायोगात् । अशयदिति वक्ष्यमाणशयेनोत्त्ययोगाच्च । आद्ये कथं तयोः सतोर्वायूत्क्रान्तिमात्रेण शरीरपात इत्यत आह– **उदासीनवदिति** ।। सर्वथौदासीन्ये वायुव्यापारस्याप्ययोगात् **उदासीनवत्** इत्युक्तम् । विवादेऽप्रविष्टत्वादेव ह्युदासीनसाम्योक्तिः । **बलपरीक्षार्थं** बलज्ञापनार्थम् । 'तत्प्राणे प्रपन्न उदतिष्ठत्' इत्यस्य व्याख्या– **वायौ प्रविष्ट इति** ।। 'तदुक्थमभवत्' इत्यस्यार्थः– **उच्चैः स्थितत्वादित्यादि** ।। ततः **ताभ्यां** शरीरपातोत्थानाभ्यां **प्रभुर्वायुरे**वोच्चैः स्थितत्वान्निमित्तादुक्थोऽभूदित्यन्वयः । किमिदमुच्चत्वं नामेत्यत आह– **उच्चत्वं चेति** ।। अन्यथा 'भृत्या वयं तवैव स्मः'[१०] इत्यादि वक्ष्यमाणार्थेऽनुपयोगादसङ्गतत्वापत्तेरिति भावः । 'तं देवा अब्रुवंस्त्वमुक्थमसी'त्येतद् व्याचष्टे– **त्वमुच्चोऽसीति** ।। 'तव वयं

१०. ऐत.भा. २-१-४

स्म’ इत्यादेरर्थः– **भृत्या वयमित्यादि** ।। एष च स्वामिभृत्यभावो न राजादिवद् बहिरङ्गः । किन्त्वस्मदीयसमस्तप्रवृत्तेरपि त्वदधीनत्वात् सर्वात्मनैवेत्याह– **स्पर्धामह इति** ।। **त्वद्बलेन** त्वत्प्रेरणयैवेति यावत् । वयं त्वया स्पर्धामहे, नान्येन केनचिन्निमित्तेन । त्वत्प्रेरणामन्तरेण न किञ्चित्तत्र निमित्तमस्तीति भावः । उपसंहरति– **इत्यूचुरिति** ।। नेदं देवानां वायुस्तवनं कृपणयाञ्चावन्निष्फलमभूदित्याह– **स इति** ।।

### इति चतुर्थखण्डः

### प्रातः-सायंशब्दयोः इतिहासः तच्छब्दवाच्यत्वं च

### उपनिषत्

**तं देवाः प्राणयन्त । स प्रणीतः प्रातायत । प्रातायीती३ तत्प्रातरभवत् । समागादिती३ तत्सायमभवत् । अहरेव प्राणो, रात्रिरपानः ।**

### भाष्यम्

तस्मात् श्रुत्वा परं ब्रह्म देवा नारायणाभिधम् ।
शिष्यप्रशिष्यादिषु च तेऽनयन् वायुनोदितम् ।।

वायुमप्यनयन् सर्वे यशसा तद्गुणोक्तितः ।
ये ये गुणान् विजानन्ति वायोस्तानाविशन् मरुत् ।।

तत्र तत्र प्रविष्टत्वात् प्रततोऽसौ बभूव ह ।
प्रततत्वात् प्रातरिति तस्य नामाभवद्विभोः ।।

सङ्गतश्चाभवज्जीवचिता रूपान्तरेण सः ।
सङ्गतत्वात् सायमिति तद्रूपं नामतोऽभवत् ।।
वायोस्तत्पुनरध्यात्मं प्राणापानाभिधं द्वयम् ।

**भावप्रदीपः**

'तं देवाः प्राणयन्त' इत्यादि खण्डं व्याचष्टे– **तस्माच्छ्रुत्वेत्यादिना** ।। अत्र तमिति ब्रह्मेमं पुरुषमिति ब्रह्मशब्देन प्रकृतस्य नारायणस्य परामर्शः । अतः पुल्लिङ्गोपपत्तिरित्याशयेनोक्तम्– **नारायणाभिधं परं ब्रह्मेति** ।। 'प्राणयन्ते'त्यस्यार्थः **शिष्यप्रशिष्यादिष्वनयन्निति** । उपदिदिशुरित्यर्थः । तमित्यस्यैवार्थान्तरम्– **वायुनोदितमिति** ।। पूर्वं प्राणस्य प्रस्तुतत्वेन तदुपदिष्टस्यापि तमिति निर्देशोपपत्तेः । अत एव तस्माच्छ्रुत्वेत्युपक्रमे शेषः पूरितः । अस्यैव पुनरर्थान्तरमाह– **वायुमपीति** ।। शिष्यप्रशिष्यादिष्विति वर्तते । 'यशसे'त्यस्यैव विवरणम्– **तद्गुणोक्तित इति** ।। 'स प्रणीतः प्रातायत' इत्यस्यार्थमाह– **ये य इति** ।। एतेन **प्रणीतः** शिष्यादिषु देवैरुपदिष्टगुणः स वायुः **प्रातायत** तेषु प्रविश्य प्रततो बभूवेति मूलं व्याख्यातं भवति । 'प्रातायातीं३ तत्प्रातरभवदि'ति वाक्यं व्याचष्टे– **प्रततत्वादिति** ।। एतेन यस्मात्प्राणः स्वगुणज्ञानिषु **प्रातायीति**[९१] प्रततोऽभवत् **तत्** तस्मात् प्रातर्नामकोऽभवदिति मूलार्थ उक्तो भवति । प्रकर्षेणातततत्वात् प्रातरिति निर्वचनम् । प्राङ्पूर्वात् 'तनु विस्तारे' इति धातोः कर्तरि उरिप्रत्ययः[९२] । 'समागादितीं३ तत्सायमभवदि'त्यस्य व्याख्या **सङ्गतश्चेति** । **जीवचिता** जीवस्वरूपेण । तदित्यस्यार्थः– **सङ्गतत्वादिति** ।। तथाच सम्पूर्वादयतेः कर्तर्यमिः । समित्यस्य सः । 'अहरेव प्राणो रात्रिरपानः' इत्यादि व्याचष्टे– **वायोरिति** ।। **द्वयं** रूपद्वयं

---

९१. प्रातायतीं३ इति ख.पाठः

९२. डरिप्रत्ययः इति ख.पाठः

आहार्यत्वादहः । रतिदातृत्वाद् रात्रिरित्युच्यत इति शेषः । नञुपपदाद्धरतेर्विच् । रतिरेव रातम् । तदुपपदाद् रातेः किः । उपपदान्तलोपश्च ॥

इन्द्रियाभिमानिनां निरूपणम्

**उपनिषत्**

**वागग्निश्चक्षुरसावादित्यश्चन्द्रमा मनो दिशः श्रोत्रं स एष प्रहितां संयोगोऽध्यात्मम् । इमा देवताः । अद उ आविरधिदैवतम् । इत्येतत् तदुक्तं भवति ।**

**भाष्यम्**

अध्यात्ममग्निर्वागाख्यश्चक्षुः सूर्यः प्रकीर्तितः ।
यज्ञादिसाधने यत्तु मनश्चन्द्रः प्रकीर्तितः ।

मित्रो यमश्च वरुणः कुबेरश्च दिगीश्वराः ॥
श्रोत्राभिमानिनः सर्वे वैदिकश्रवणोचितम् ।

श्रोत्रं चन्द्रस्तथा स्मार्ततान्त्रिकश्रवणोचितम् ॥
यम एव षडङ्गानां विषयश्रवणोचितम् ।

श्रोत्रं तु वरुणः काम्यशास्त्रार्थं मित्र एव च ॥
श्रोत्रं यन्नीतिशास्त्रार्थं कुबेरश्च[९३] प्रकीर्तितः ।

विष्णुना प्रहितानां हि संयोगोऽध्यात्ममेव[९४] हि ॥
शिवादीनां च सर्वेषां मनस्त्वं कथितं पुरा[९५] ।

९३. कुबेरस्तत् इति ह्.पाठः
९४. अध्यात्ममेष इति ह्.पाठः
९५. पुरः इति ह्.पाठः

एतास्सर्वा देवता हि ब्रह्मवायुसुपर्णकाः ।।
शेषशङ्करशक्राश्च चन्द्रसूर्ययमा अपि ।

अग्निश्च मित्रावरुणौ कुबेराद्याश्च सर्वशः ।।
अधिदैवं स एवैक आधिक्यात् पुरुषोत्तमः ।

[९६]देवमात्रास्तदन्ये तु स आविः पुरुषोत्तमः ।।
पूर्णज्ञानस्वरूपत्वादेतावत् कथितं भवेत् ।

तात्पर्यात् सर्ववेदैश्च............

**भावप्रदीपः**

वागग्निरिति सामानाधिकरण्येन वागिन्द्रियाभेदोऽग्नेरुच्यत इति प्रतीतिनिरासाय **वागाख्य इति** ।। **चक्षुः** चक्षुराख्यः । शङ्करादीनां मनोमानित्वेनोक्तत्वात्कथं चन्द्रमा मन इत्युच्यत इत्यत आह– **यज्ञादीति** ।। इन्द्रो यज्ञादिविषयं मन इत्युक्तत्वाच्चन्द्रमसस्त-दसम्भवादुक्तम्– **यज्ञादिसाधन इति** ।। शालायूपकपालादिकं यद्यज्ञादिसाधनं तद्विषयकमनोऽभिमानी चन्द्रः । इन्द्रस्तु देवतामुद्दिश्य द्रव्यपरित्यागरूपयज्ञविषयकमनोभिमानीति भावः । 'दिशः श्रोत्रं' इत्यस्यार्थः– **मित्र इत्यादि** ।। **दिगीश्वराः** क्रमेण प्राच्यादि-दिशामीश्वराः सर्वेऽपि श्रोत्रमानिन इत्यर्थः । ननु 'श्रोत्रं चन्द्रः'[९७] इति प्रागुक्तत्वात्सोऽप्यत्र कुतो न गणितः । पूर्वं वा कुतो नैते गृहीता इत्यतो विषयभेदज्ञापनार्थमिति भावेन पश्चानामपि श्रोत्रमानित्वे विशेषमाह– **वैदिकेति** ।। वैदिकार्थश्रवणोचितं श्रोत्रम्, तदभिमानी चन्द्र इत्यर्थः । स्मार्तं च तान्त्रिकश्रवणोचितं च श्रोत्रं यम एवेति

---

९६. दैवमात्राः इति ह.पाठः ९७. ऐत.भा. २-१-४

सम्बन्धः । षडङ्गानां ये **विषयाः** प्रतिपाद्यास्तच्छ्रवणोचितं श्रोत्रं तु वरुण इत्यर्थः । **काम्यशास्त्रार्थं** तच्छ्रवणोचितं श्रोत्रं मित्र एव । यन्नीतिशास्त्रार्थश्रवणयोग्यं तच्छ्रोत्रं कुबेरः प्रकीर्तित इति । 'स एष प्रहितां संयोगोऽध्यात्म'मित्येतद्व्याचष्टे– **विष्णुनेति** ।। **प्रहितानां** प्रेरितानां । एतेन प्रहितामिति षष्ठी बहुवचनान्तमिति सूचयति । आद्यो हिशब्द एवार्थः । प्रेरितानामित्यनेन सम्बद्ध्यते । द्वितीयः प्रसिद्ध्यर्थः । तत्र विष्णुनेति शेषोक्तिः । 'इमा देवताः' इत्यनेन सर्वदेवानां देवतामात्रत्वमुक्त्वा 'अद उ आविरधिदैवतं' इति हरेरेकस्यैवाधिकदैवत्वमुच्यते । तत्र 'इमा देवता' इति प्राणापानाग्निसूर्यचन्द्रदिग्देवतानामेव परामर्श इति भाति । तथात्वे चाद उ इत्यदःशब्देन विष्णुरेवोच्यत इति निश्चेतुं न शक्यते । शिवादीनामन्यतमस्यापि तत्सम्भवादित्याशङ्क्य तेषामपीदंशब्दादेव परिग्रहाद्देवतामात्रत्वमेव नादःशब्दविषयतेति भावेनाह– **शिवादीनामिति** ।। शिवशेषसुपर्णेन्द्राणामित्यर्थः । **पुरा** पूर्वखण्डे 'चक्षुः श्रोत्रं मनः'[९८] इति मनस्त्वं कथितम् । मनोरूपेण शङ्करः शेषः सुपर्ण इन्द्रश्च मनांस्येव पृथक् पृथगिति व्याख्यातत्वादित्यर्थः । तथाच इमा इत्यनेन तेषामपि गृहीतत्वान्नाधिदैवत्वं तेषां किन्तु विष्णोरेवेति भावः ।

यद्वाक्यव्याख्यानार्थमुपोद्धातत्वेनेदमुक्तम्, तदिदानीं व्याख्याति– **एताः सर्वा इति** ।। प्राणादिशब्दाः सर्वदेवोपलक्षका इति भावेनोक्तम्– **कुबेराद्या इति सर्वश इति च** । 'अद उ' इति वाक्यं व्याचष्टे– **अधिदैवमिति** ।। ब्रह्मादीनां देवतात्वे विप्रतिपत्त्यभावेन देवतात्वविधानं व्यर्थमेवेत्याशङ्क्य तथोक्तेस्तात्पर्यमाह– **देवमात्रा इति** ।।

---

९८. ऐत.उ. २-१-४

आविःपदार्थमाह– **स आविरिति** ।। तत्राविःशब्दप्रवृत्तौ निमित्तम्– **पूर्णेति** ।। ज्ञानस्य योग्यतया लाभः । गुणान्तरस्याप्युपलक्षणमेतत् । तथाच पूर्णज्ञानादिस्वरूपत्वादाविरित्यर्थः । 'इत्येतदुक्तं भवति' इत्येतद्व्याचष्टे– **एतावदिति** ।। सर्वैरपि वेदैः, चशब्दाद्भारतादिभिश्च । एतावदेव प्रमेयं तात्पर्यात्कथितं भवेत् । नान्यदित्यन्वयः । सर्व-सदागमेष्वपि महातात्पर्येण प्रतिपाद्यं विष्णोः सर्वोत्तमत्वमेवेति यावत् ।।

हिरण्यदन् वैदमुनेः विष्णूपासनेन मोक्षे आनन्दभोगः

**उपनिषत्**

**एतद्ध स्म वै तद्विद्वानाह हिरण्यदन् बैदो, न तस्येशेऽयं मह्यं न दद्युरिति । प्रहितां वा अहमध्यात्मं संयोगं निविष्टं वेदैतद्ध । तदनीशानानि ह वा अस्मै भूतानि बलिं हरन्ति य एवं वेद ।**

**भाष्यम्**

............. तज्ज्ञानन्नवदन् मुनिः ।।

हिरण्यदन्नाम वैदो[९९] भूतेषु हि सुरानृते ।
मदभीष्टं ममादातुं नैवेष्टे कश्चनाञ्जसा ।।

विष्णुना प्रहितानां हि देवानामहमुत्तमम् ।
वेद संयोगमध्यात्मं ततो मुक्तो यथेष्टभुक् ।।

स्यान्नैवात्रास्ति सन्देहः स्वेच्छाविहृतिरेव च ।
मन्निषेधे न शक्तोऽस्ति प्रीता देवा हि मे सदा ।।

९९. बैद इति ह.पाठः

**अधिदैवेन सहिता विष्णुना प्रभविष्णुना ।**
**एतद्धि तेन कथितं मुनिना तत्त्ववेदिना ।।**

**भावप्रदीपः**

'एतद्विद्वान्' इत्येतद्व्याचष्टे– **तज्जानन्निति।।** **तद्** विष्णुसर्वोत्तमत्वस्यैव सर्ववेदादिप्रतिपाद्यत्वम् । वबयोरभेदाद्वैद इत्यस्य वैद इति व्याख्या, वेदद्रष्टेत्यर्थः । **अदातुम्** यथा लोका न दद्युस्तथा कर्तुं **भूतेषु** प्राणिषु, कश्चन नैवेष्ट इत्यस्यायमित्यनेन सूचितमपवादमाह– **सुरानृत इति** ।। एतेन 'न तस्येशेऽयं मह्यं न दद्युः' इति वाक्यं व्याख्यातं भवति । 'प्रहितां वा अहं' इत्यादेर्व्याख्या– **विष्णुनेति** ।। अत्रापि प्रहितानामित्यनेन मूले प्रहितामिति षष्ठी बहुवचनान्तमिति सूचयति । 'अस्मै भूतानि बलिं हरन्ती'त्यस्य तात्पर्यम्– **ततो मुक्तौ यथेष्टभुक् स्यामिति** ।। हवा इति प्रमाणप्रसिद्धिद्योतकनिपातद्वयार्थः– **नैवात्र सन्देह इति** ।। 'अनीशानानी'त्यस्य तात्पर्यम्– **मन्निषेधे न शक्तोऽस्तीति** ।। स निषेधः किंविषयको यत्र शक्तः कश्चन नास्तीत्युच्यते इत्यत उक्तम्– **स्वेच्छाविहृतिरेव चेति** ।। चशब्दो यथेष्टभुक्त्वसमुच्चायकः । तेन च मूले स्वेच्छाविहृतिश्चाहं स्यामिति पूरणीयमिति सूचयति । विष्णुप्रेरितदेवानामध्यात्म[१००]संयोगवेदनमात्रेण कथमेतादृशफलप्राप्तिर्मोक्षे स्यात् । मोक्षादेर्विष्णुवैष्णवप्रसादैकसाध्यत्वादित्यत आह– **प्रीता देवा इत्यादि** ।। अधिदैवेन विष्णुना सहिता देवा मे प्रीता इत्यन्वयः । यद्वा कथं मन्निषेधे कश्चन शक्तोऽस्तीत्युच्यते । विष्ण्वादीनां शक्तानां सत्वादित्यत आह– **प्रीता इति** ।। तथाच तदतिरिक्तविषयकोक्तिरियमिति भावः । 'एतद्धे'ति साकाङ्क्षं वाक्यं पूरयति– **एतद्धीति** ।। **मुनिना** हिरण्यदन्नम्ना ।।

---

१००. अध्यात्मं इति ख.पाठः

शास्त्रनिर्णयः

भाष्यम्

विष्णुप्रहितदेवानां योगमध्यात्ममञ्जसा ।
वेद तं च नियोक्तारमुपास्ते विष्णुमव्ययम् ।।

एतादृशोपासनाया योग्यः सन् सततं सुधीः ।
स्वस्वाम्यन्यानि भूतानि हरेयुर्बलिमस्य हि ।।

मुक्तस्य वैष्णवे लोके मुक्तानि च न संशयः ।
इत्येतद्ध्यानयोग्याश्च मुनयो देवतास्तथा ।।

मानुषा ज्ञानमात्रेण स्वावरैः पूज्यतामियुः ।
मुक्तामुक्तैर्मुक्तियोग्या इति शास्त्रस्य निर्णयः ।।

भावप्रदीपः

'य एवं वेदे'ति वाक्येन सहानीशानानीत्यादिवाक्यं[१०१] पुनः प्रकारान्तरेण व्याचष्टे– **विष्णुप्रहितेत्यादिना** ।। 'य एवं वेदे'ति वेत्तृमात्रस्येदृशं फलं भवतीति भ्रान्तिनिरासायाह– **एतादृशेति** ।। 'अनीशानानी'त्यर्थः– **स्वस्वाम्यन्यानीति** ।। स्वावराणीति यावत् । यथोक्तमनुव्याख्याने 'मुक्तस्वकीयावरयन्तृतातिमुक्तावपि ब्रह्मपुरःसराणाम्'[१०२] इति । इतिशब्दस्येति मुनिना कथितमिति पूर्वेणान्वयः । एतादृशोपासनायां योग्यः सन्नित्युक्तमेव विवृणोति[१०३]– **एतद्ध्यानयोग्याश्चेति** ।। मुनय इत्यनेन हिरण्यदन्मुनेरप्येतदुपासनायोग्यत्वा-

१०१. फलवाक्यं इति ख.पाठः  १०२. अनु. ४-४-५

१०३. विशदयति इति ख.पाठः

दुक्तफलवचनमुपपन्नमेवेति सूचयति । तर्हि मानुषादीनामेतज्ज्ञानं निष्फलमेव किन्नेत्याह– **मानुषा इति** ।। मुक्तियोग्या मानुषा उपासनाभावेऽपि **ज्ञानमात्रेण** केवलज्ञानेन मुक्ताः सन्तो मुक्तैः स्वावरैः पूज्यतामियुरित्यर्थः । 'मुक्तियोग्याः' इत्यनेन मध्यमाधम-मनुष्याणां ज्ञानं निष्फलमेवेति सूचयति ।।

सत्यशब्दनिर्वचनम्

### उपनिषत्

**तत्सत्यम् । सदिति प्राणस्तीत्यन्नं यमित्यसावादित्यः । तदेतत् त्रिवृत् । त्रिवृदिव वै चक्षुः, शुक्लं कृष्णं कनीनिकेति । स यदि ह वा अपि मृषा वदति सत्यं हैवास्योदितं भवति, य एवमेतत् सत्यस्य सत्यत्वं वेद ।।२.१.५.।।**

### भाष्यम्

स एष भगवान् विष्णुः सत्यमित्यभिधीयते ।
सर्वोत्तमत्वात् पूर्णत्वात् सर्वज्ञत्वात् तथैव च ।।

देवतात्रयमन्यच्च पृथक् सत्यमितीर्यते ।
शेषवीन्द्रशिवादिभ्य उत्तमत्वात् सदैव हि ।।

सत्यपदार्थज्ञानफलनिरूपणम्

वायुः सदिति सम्प्रोक्तो जीवेषु तु सुपूर्णतः ।
तीति ब्रह्मा समुद्दिष्टः स एवान्नाभिमानवान् ।।

अन्नं प्रजापतिरिति श्रुतिरन्या ह्यभाषत ।
अतिनादात् सदा वेदैरप्यन्नं स चतुर्मुखः ।।

यमित्यादित्य उद्दिष्टो यमयेद् यत्प्रकाशनात्[१०४] ।
देवतात्त्रयमेतत्तु सहितं सत्यमुच्यते ।।

शुक्लकृष्णकनीनासु चक्षुषोऽप्येत आस्थिताः ।
एवं सत्यपदार्थं हि[१०५] विज्ञायोपास्त आदरात् ।।

योग्यस्तस्या उपासाया नैवासत्येन दुष्यति ।
देवता मुनयश्चैव योग्या अस्या अपि स्फुटम् ।।

मनुष्याणां[१०६] ज्ञानमात्राद्दोषो नातितरां भवेत् ।।२.१.५।।

**भावप्रदीपः**

'तत्सत्य'मित्यादि व्याचष्टे– **स इत्यादिना** ।। तत्र 'सत्' इत्यस्यार्थः– **सर्वोत्तमत्वादिति** ।। 'सच्छब्द उत्तमं ब्रूयात्'[१०७] इति वचनात् । तीत्यस्य– **पूर्णत्वादिति** । तनोतेर्डः । यमित्यस्यार्थः– **सर्वज्ञत्वादिति** ।। यातेः कः । गत्यर्थानां ज्ञानार्थत्वात् । 'सदिति प्राणः' इत्यादिकं व्याचष्टे– **देवतेति** ।। विष्णोरन्यद्देवतात्रयं च पृथक् सत्यमितीर्यत इति योजना । किं तद्देवतात्रयम्? कथं च पृथक् सत्यम्? इत्यत आह– **शेषेति** ।। एतेन 'सदिति प्राणः'

---

१०४. गमयेत् यत्प्रकाशयन् इति ह.पाठः

१०५. यो इति ह.पाठः

१०६. मानुषाणां इति ह.पाठः

१०७. भा.ता १०-३-२७

इत्येतद् व्याख्यातम् । 'तीत्यन्न'मित्यस्यार्थः– **जीवेष्विति** ।। निर्धारणे सप्तमी । तुशब्दो ब्रह्मा त्विति सम्बद्ध्यते । **सुपूर्णतः** सुपूर्णत्वतः । तर्हि तीति ब्रह्मेति वक्तव्येऽन्नमित्युक्तिः कथमित्यत आह– **स एवेति** ।। अतोऽभिमानिनयन्यायेन ब्रह्माऽन्नशब्देनोच्यत इति भावः । अत्र श्रुतिसम्मतिमाह– **अन्नमिति** ।। 'तीत्यन्न'मिति प्रकृतश्रुतेरपि श्रुतित्वादन्या श्रुतिरित्युक्तम् । एतेन विद्वद्रूढिः प्रदर्शिता भवति । योगमपि दर्शयति– **अतिनादादिति** ।। सदा वेदैरुच्चार्यमाणैर्निमित्तैः **अतिनादात्** अतिशयितनादवत्त्वादन्नमित्युच्यते चतुर्मुख इत्यर्थः । अतिशयितो नो नादो यस्य तदन्नमिति । अतिशब्दस्यान्तलोपः । णदशब्द इत्यतो डः । **यत्** यस्मात्प्रकाशनात्सर्वं **यमयेत्** व्यापारेषु प्रेरयेत्तस्मादादित्यो यमित्युद्दिष्टमित्यन्वयः[१०८] । एवं पृथक् सत्यमितीर्यत इत्युक्तमुपपाद्योपसंहरति– **देवतात्रयमिति** ।। अत्र सहितमित्यनेन पूर्वं पृथगित्यस्य प्रत्येकं सत्यमितीर्यत इति प्रतीतिरपि परास्ता वेदितव्या । देवतात्रयं मिलित्वा सत्यमिति शब्दे सत् ति यमिति विभागेन प्रोच्यत इति तदर्थसूचनात् । 'तदेतद् त्रिवृत् त्रिवृदिव' इत्यादि व्याचष्टे– **शुक्लेति** ।। **एते** प्राणचतुर्मुखादित्याः । न केवलमधिदैवं स्वस्वस्थान आस्थिताः, किन्तु प्रतिशरीरं **चक्षुषो** नेत्रस्य शुक्लकृष्णकनीनास्वप्यास्थिता इत्यर्थः । 'स यदि ह वा' इत्यादि विवृणोति– **एवमित्यादिना** ।। सत्यपदार्थं विष्णुं देवतात्रयं च **अस्याः** तत्सत्यमित्याद्युपासनाया[१०९] अपि देवताद्या एव योग्याः । न केवलं पूर्वस्या एवेत्यपेरर्थः । **दोषः** असत्यवादप्रयुक्तः ।।

**इति पञ्चमः खण्डः**

---

१०८. उद्दिष्ट इत्यन्वयः इति ख.पाठः

१०९. उपासायाः इति ख.पाठः

अथ षष्ठः खण्डः

श्रुतिस्मृतयः विष्ण्वाज्ञारूपाः

**तस्य वाक् तन्तिः । नामानि दामानि । तदस्येदं वाचा तन्त्या नामभिर्दामभिः सर्वं सितम् । सर्वं हीदं नामानी३ । सर्वं वाचाऽभिवदति । वहन्ति ह वा एनं तन्तिसम्बद्धा य एवं वेद ।**

भाष्यम्

तस्य नारायणस्यैव सर्ववेदात्मिका हि वाक् ।
तन्तिरूपा जगद्बन्धे नाम ब्रह्मादिकं च यत् ॥

विप्रक्षत्रियवैश्यादिरूपं चाखिलमेव तु ।
दाम तेनैव बध्नाति सकलं जगदच्युतः ॥

सर्वे हि नामवन्तोऽत्र सर्वे वेदोदिता अपि ।
वेदात्मिक्या यतो वाचा विष्णुर्वदति सोऽखिलम् ॥

य एतद्विष्णुवाचैव बद्धं नामाख्यदामभिः ।
ज्ञात्वा जगदुपास्ते तु योग्यः संस्तदुपासने ॥

तं प्रत्येवाखिलान्येव भूतानि सह दैवतैः ।
बलिं हरन्ति पश्चाथ भूतान्येनं वहन्ति च ॥

योग्यश्चास्या(योग्यो सोऽस्या) उपासाया[११०] योग्यो ब्रह्मपदस्य यः ।
भूतयुक्ते रथे तस्मात् स तिष्ठति सुरार्चितः ॥

---

११०. उपासनायाः इति ह.पाठः

**मुक्तः संश्च तदन्येषां ज्ञानमात्राद्विमुक्तिगैः ।**
**स्वावरैः सेव्यतैव स्यात् कैश्चिदेव क्वचित् क्वचित् ॥**

**तथैव वायुना बद्धं जगदेतत् ततोऽवरम् ।**
**सुपर्णशेषगिरिशशक्रसूर्याद्यमञ्जसा ॥**

**भावप्रदीपः**

'तस्य वाक् तन्तिः' इत्यादिखण्डं व्याचष्टे– **तस्येत्यादिना** ॥ 'नामानि दामानी'त्यस्यार्थः– **नाम ब्रह्मादिकमिति** ॥ ब्रह्मेत्यादिकं यन्नाम यच्च विप्रक्षत्रियवैश्यादिरूपं नाम तदखिलं दामरूपमित्यर्थः । अखिलमित्यस्यासङ्कुचितवृत्तित्वद्योतनायैवशब्दः । 'तस्येदं वाचा' इत्यादेरर्थः– **तेनैवेत्यादि** ॥ 'सर्वं हीदं नामानि' इत्यस्यार्थः– **सर्वे हीति** ॥ **अत्र** जगति । उपलक्षणमेतत् । 'सर्वं हीदं वाचि च' इत्यपि ग्राह्यमिति भावेनाह– **सर्वे वेदोदिता इति** ॥ कथमेषां वेदोदितत्वमित्यत आह– **वेदात्मिक्येति** ॥ एतेन सर्वं वाचाऽभि-वदतीत्येतदुक्तार्थम् । 'वहन्ति हवा' इत्येतद् व्याचष्टे– **य एतदिति** ॥ **विष्णुवाचा** विष्णुवागाख्यतन्त्या बद्धं जगज्ज्ञात्वेत्यन्वयः । उपासते विष्णुं जगद्बन्धकत्वेनेति शेषः । 'एनं वहन्ती'त्यस्य व्याख्यानं– **तं प्रत्येवेत्यादिः** । एतेन य एवं वेद **एनं** वेत्तारं पुरुषं प्रति **तन्ति सम्बद्धाः** सर्वे देवाद्या जीवा वहन्ति । बलिमिति शेष इति व्याख्यातं भवति ।

एतदेव प्रकारान्तरेण व्याख्याति– **पञ्चेत्यादि** ॥ एतेन **तन्ति सम्बद्धा** भूताभिमानिनो देवा एनं वहन्तीति तदर्थ उक्तो भवति । नन्वेतदयुक्तम् । वेत्तृमात्रस्य देवादिसेव्यताया विरुद्धत्वादित्यत

आह– **योग्योऽस्या इति** ।। यो ब्रह्मपदस्य योग्यः सोऽस्या उपासनाया योग्य इत्यन्वयः । **भूतयुक्ते** भूताभिमानिदेवैर्वाजिरूपैर्युक्ते । सुरार्चित इति तं प्रत्येवाखिलान्येव भूतानि सह दैवतैः बलिं वहन्तीत्युक्तफलान्तरानुवादः । न केवलं संसारित्वावस्थायामेव संसारिदेवादिसेव्यः, किन्तु मुक्तः संश्च मुक्तैः सेव्यत इति चशब्दार्थः । नन्वेवं तर्हि तदन्येषामेतद्विद्या ज्ञानं व्यर्थमेव किं? नेत्याह– **तदन्येषामिति** ।। तर्हि ज्ञानोपासनयोः को विशेषः? स्वावरसेव्यताया उभयत्रापि साम्यादित्यत आह– **कैश्चिदेवेति** ।। नतु सर्वैः स्वावरैः । क्वचित् क्वचिदेव नतु सर्वत्र सर्वदेत्यर्थः । उपासनाफलं तु नैवमिति भावः । 'तस्य वाक्' इत्यादिकं वायुविषयतया व्याख्येयमित्याशयेनाह– **तथैवेति** ।। वायोरपि पूर्वखण्डे प्रस्तुतत्वात्तस्येति परामर्शो युज्यत इति भावः । 'सर्वं सित'मिति सर्वशब्दं सङ्कुचितपरतया व्याचष्टे– **ततोऽवरमिति** ।। तदेव विवृणोति– **सुपर्णेति** ।।

विष्णुवाय्वोः लोमादिषु छन्दांसि आश्रितानि

**उपनिषत्**

**तस्योष्णिग्लोमानि, त्वग्गायत्री, त्रिष्टुप् मांसं, अनुष्टुप् स्नावानि, अस्थि जगती, पङ्क्तिर्मज्जा, प्राणो बृहती । स च्छन्दोभिश्छन्नो, यच्छन्दोभिश्छन्नस्तस्मात् छन्दांसीत्याचक्षते । छादयन्ति ह वा एनं छन्दांसि पापात् कर्मणो, यस्यां कस्याञ्चिद्दिशि कामयते, य एवमेतच्छन्दसां छन्दस्त्वं वेद ।**

विष्णुवाय्वोः छन्दाश्रयत्वज्ञानेन फलनिरूपणम्

**भाष्यम्**

**विष्णोर्वायोश्च लोमादौ छन्दांस्येवाश्रितानि च ।**
**विष्णोर्विमुक्तवायोश्च लोमाद्यं तु चिदात्मकम् ।।**

**लोमप्राणादिभेदश्च नैव कश्चिच्चिदात्मनि ।**
**छन्नश्छन्दोभिरेवं स केशवस्तेन चाभिधा ।।**

**छन्दांसीत्येव तेषां हि य एवंविदुपासकः ।**
**निवारयन्ति पापेभ्यश्छन्दांसि किमु केशवः ।।**

**योग्या अस्याश्च विद्यायाः भृग्वाद्या देवतास्तथा ।**
**छन्दस्सु संस्थितो विष्णुर्गोपायत्येव तद्विदः[१११] ।।**

**भावप्रदीपः**

'तस्योष्णिगि'त्यादि व्याचष्टे– **विष्णोर्वायोश्चेति** ।। द्वितीयश्च-शब्द एवार्थः । लोमादावेव छन्दांस्याश्रितान्येवेति योजना । ननु विष्णोर्लोमादिमत्त्वेऽस्मदादिवत्प्राकृतशरीरता स्यात् । न चाप्राकृत-मेवेदं लोमादिकमिति वाच्यम् । तथात्वेऽस्मिन् खण्डे वायोरपि वाच्यत्वाङ्गीकारात्तस्यापि लोमादिकमप्राकृतमेव वाच्यं स्यात् । नच तत्संसारिणस्तस्य युक्तमित्याशङ्क्याह– **विष्णोरिति** ।। **विमु-क्तवायोः** ब्रह्मपदप्राप्त्यनन्तरं विमुक्तस्य वायोरित्यर्थः । विष्ण्वादि-लोमादीनां लोकवद्भेदे कथं चिदात्मकत्वं युज्यते । चैतन्ये भेदा-योगादित्यत आह– **लोमेति** ।। आदिपदेन त्वगादिग्रहणम् । भेदा-

---

१११. तद्विदम् इति ह पाठः

भावेऽपि विशेषबलादेवापर्यायशब्दादिव्यवहारभात्त्वमिति भावः । 'स च्छन्दोभिः' इत्येतद्व्याचष्टे– **छन्न इति** ।। 'यच्छन्दोभिश्छन्नः तस्मादि'त्यस्यार्थः– **तेन चाभिधेति** ।। **तेषां** उष्णिगादीनां छन्दसाम् । 'छादयन्ति ह वा एनं'मित्यादिकं व्याचष्टे– **य एवंविदिति** ।। तं पापेभ्यो **निवारयन्ति** पापानि निवार्य गोपायन्तीत्यर्थः । फलस्य सर्वसाधारण्यवारणायैतदुपासनायोग्यानाह– **योग्या इति** ।। निवारयन्ति पापेभ्यः छन्दांसीत्येतदनुपपन्नम् । छन्दसामचेतनत्वेन पापनिवारकतायोगादित्यत आह– **छन्दस्विति** ।। विष्णुरेवेति सम्बन्धः । मुख्यतः पापनिवारको हरिरेव । छन्दांसि तु तत्सम्बन्धादेवेति भावः ।।

### ऋषिणा स्वानुभवकथनम्

### उपनिषत्

**तदुक्तमृषिणा– 'अपश्यं गोपा'[११२]मित्येव वै गोपाः, एष हीदं सर्वं गोपायति । 'अनिपद्यमान'मिति न ह्येष कदाचन संविशति । 'आ च परा च पथिभिश्चरन्तं' इत्या च ह्येष परा च पथिभिश्चरति । 'स सध्रीचीः स विषूचीर्वसानः' इति सध्रीचीश्च ह्येष विषूचीश्च वस्ते, इमा एव दिशः । 'आवरीवर्ति भुवनेश्वन्तः' इत्येष ह्यन्तर्भुवनेष्वावरीवर्ति ।**

---

११२. ऋक्.सं १-१६४-३१. अयं मन्त्रक्रमः
अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम् ।
स सध्रीचीः स विषूचीर्वसान आवरीवर्ति भुवनेष्वन्तः ।।

वायुः वायुस्थविष्णुश्च रक्षकः

### भाष्यम्

मन्त्रोऽप्यर्थमिमं प्राहापश्यं गोपामिति स्म ह ।
एष गोप्ता हि सर्वस्य वायुस्थः पुरुषोत्तमः ।।

छन्दस्सु संस्थितो वायुर्वायौ च स जनार्दनः ।
वायुश्च वायुसंस्थश्च कदाचिन्नैव[११३] तिष्ठतः ।।

वायुर्हि नित्यसञ्चारी सदा सर्वप्रवृत्तिमान् ।
चोदितः केशवेनैव तत्स्थेनामितशक्तिना ।।

आसमन्तात् पराक्चापि पञ्चभूतेभ्य ईश्वरः ।
वायुस्तत्स्थो हरिश्चैव चरत्यमितपौरुषः ।।

सध्रीचीनासु पूर्वादिदिक्ष्वेतौ चतसृष्वपि ।
नित्यदा वसतः कोणदिक्ष्वथासु विषूचिषु ।।

अन्तश्च सर्वलोकेषु[११४] चरतो लोकसाक्षिणौ ।

### भावप्रदीपः

'तदुक्तमृषिणे'त्यस्यार्थमाह– **मन्त्रोऽपीति** ।। हशब्दो मन्त्रस्य प्रसिद्धतामाह । तथा ह्ययं मन्त्रः–

'अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम् ।
स सध्रीचीः स विषूचीर्वसान आवरीवर्ति भुवनेष्वन्तः'इति[११५] ।।

---

११३. कदाचिन्न हि इति ह.पाठः

११४. सर्वभूतेषु इति ह.पाठः ११५. ऋक्.सं १-१६४-३१.

तत्र मन्त्रगतानि पदान्यनूद्य श्रुतिः स्वयमेव व्याख्याति– **अपश्यं गोपामित्यादिना** ।। अस्फुटत्वात् तदर्थमाह– **एष गोप्ता इति** ।। सर्वस्य गोप्तेत्यनेन सर्वं गोपायतीत्येतद् व्याख्यातम् । एष इत्यस्य **वायुस्थः पुरुषोत्तम** इति व्याख्या । ननु 'छादयन्ति ह वा एनं छन्दांसी'ति पूर्वं छन्दःसंस्थितस्य विष्णोर्गोप्तृत्वमुक्त्वा तस्मिन्नेवार्थे मन्त्रस्योदाहृतत्वान्मन्त्रे एष इत्यनेन वायुस्थस्य विष्णोर्ग्रहणेऽसङ्गतिः स्यादित्यतोऽसङ्गतिं वारयितुमाह– **छन्दस्स्विति** ।। तथा च छन्दःस्थितवायुस्थितविष्णोरेव छन्दःशब्देनोक्तत्वात्तदर्थे एतन्मन्त्रोदाहरणं नासङ्गतमिति भावः । नन्वेवं तर्हि छन्दःस्थित एव विष्णुर्मन्त्रप्रतिपाद्यः किन्न स्यात् । मध्ये वायुः कुतोऽध्याह्रियत इत्यतो वायुलिङ्गसद्भावादित्याशयेनानिपद्यमानमित्यस्य व्याख्यारूपं 'न ह्येष कदाचन संविशती'ति वाक्यं व्याचष्टे– **वायुश्चेति** ।। एतेनानिपद्यमानमित्यस्य कदाचिदपि संवेशनरहितं, अवस्थितिहीनमिति यावदित्यर्थ उक्तो भवति । नन्वेतावतापि किमत्र वायुलिङ्गमुक्तम् । येन वायुस्थो विष्णुरत्र विवक्षित इत्युच्यत इत्यत आह– **वायुर्हीति** ।। नित्यसञ्चरितत्वं च वायुलिङ्गमिति प्रसिद्धम् । अत एव तस्य सदागतिरिति नामेति भावः । नित्यसञ्चारस्य सूर्यादावपि सत्वात्को विशेष इत्यतस्तस्य तात्पर्यमाह– **सदा सर्वप्रवृत्तिमानिति** ।। तर्हि विष्णुसाम्यमेव प्राप्तमित्यत आह– **चोदित इति** ।। **तत्स्थेन** स्वात्मस्थेन । एतेनानिपद्यमानत्वं वायुस्थस्य विष्णोरप्युपपादितं भवति । 'आच परा चे'त्यस्य व्याख्यारूपं 'आच ह्येषः' इत्यादिकं व्याचष्टे– **आसमन्तादिति** ।। आ इत्यनुवादः समन्तादिति व्याख्यानम् । परेत्यस्य **परागिति** ।। बहिश्चेत्यर्थः । तस्यावधिसापेक्षत्वादाह– **पञ्चभूतेभ्य इति** ।। मूले शेषोक्तिरियम् । ईश्वरो

वायुरिति सम्बन्धः । इदमपि वायुलिङ्गमेव । अतोऽपि तत्स्थविष्णुरेवात्र ग्राह्य इति भावः । लिङ्गान्तरमपि तदीयमेतस्यैवार्थस्य गमकमस्तीति भावेन 'स सध्रीचीः स विषूचीर्वसानः' इत्यस्य व्याख्यानरूपं सध्रीचीश्चेत्यादिवाक्यं व्याचष्टे– **सध्रीचीनास्विति** ।। ऋजुभूतास्वित्यर्थः । **विषूचिषु** वक्रासु । 'आवरीवर्ती'ति तुरीयपादस्य व्याख्यारूपं 'एष ह्यन्तर्भुवनेष्वावरीवर्ति' इति वाक्यं व्याचष्टे– **अन्तश्चेति** ।। चरत इत्यनेन वायुस्तत्स्थो हरिश्च **आवरीवर्ति** लोकसाक्षित्वेन समन्ताच्चरतीत्यर्थ उक्तो भवति । लोकसाक्षित्वेन चरणमपि वायुलिङ्गमतोऽपि वायुस्थविष्णुरेवात्र प्रतिपाद्य इति भावः । 'सर्वं हीदं प्राणेनावृतम्' इत्यादिवक्ष्यमाणार्थे ।

[११६]'अप्रक्षितं वसु बिभर्षि हस्तयोरषाळ्हं सहस्तविश्रुतो दधे ।

आवृतासोऽवतासो न कर्तृभिस्तनुषु ते क्रतव इन्द्रभूरयः' इति द्वितीयमन्त्रे उपलक्षणत्वेन तृतीयपादमात्रमुदाहृत्य स्पष्टार्थोऽयमिति मूले न व्याख्यातः ।।

**जीवाः चित्प्रकृतिः आकाशश्च भगवता वायुना च धृताः**

**उपनिषत्**

**अथो 'आवृतासोऽवतासो न कर्तृभिः[११७]' इति सर्वं हीदं प्राणेनावृतम् । सोऽयमाकाशः प्राणेन बृहत्या विष्टब्धः । तद्यथाऽयमाकाशः प्राणेन बृहत्या विष्टब्ध एवं सर्वाणि भूतानि आ पिपीलिकाभ्यः प्राणेन बृहत्या विष्टब्धानी-त्येवं विद्यात् ।।२.१.६।।**

---

११६. ऋक्.सं १-५५-८ ११७.ऋक्.सं १-५५-८

नित्याक्षीणवस्वाधारौ हरिवायू

### भाष्यम्

**हस्तयोरेतयोरेव नित्याक्षीणं वसु स्थितम् ।**
**तद्ध्यसह्यं बलं वायोरनन्तं किमु तद्धरेः ।**

**वायोराधारभूतस्य ताभ्यां हि क्रतुनामकाः[११८] ।।**
**आवृताः सर्वजीवा हि यथैव कनकावटाः ।**

**आच्छाद्यन्ते [११९]वित्तवद्भिस्ताभ्यामेवं च चेतनाः ।**
**आवृता महदाद्यास्तु देहे तिष्ठन्ति चैतयोः ।।**

### भावप्रदीपः

कथमयं स्पष्टार्थ इत्यतस्तमादितो व्याचष्टे– **हस्तयोरिति** ।। एतेनाप्रक्षितं प्रकर्षेणाक्षितं नित्याक्षीणं वसु हस्तयोस्त्वं बिभर्षीति प्रथमपादव्याख्यानं सूचयति । द्वितीयपादस्य व्याख्या– **तद्धीति** ।। **तत्** अक्षीणवसुधारणोपयोगीत्यर्थः । असह्यमित्यस्यैव तात्पर्यम्– **अनन्तमिति** ।। यदा वायोरेवानन्तं बलं तदा वायोराधारभूतस्य हरेस्तद्बलमनन्तमिति किमु वक्तव्यमित्यन्वयः । तेन **अषाळ्हं** असह्यं सोढुमशक्यं **सहो** बलं **तन्वि** तनौ (वि)**श्रुतः** प्रसिद्धस्त्वं **दधे** धृतवानसीति व्याख्यातं भवति ।। उत्तरार्धस्य व्याख्या– **ताभ्यामिति** ।। 'क्रतुर्मनीषा माया'[१२०] इति ह्यभिधानात्प्रज्ञारूपत्वात्क्रतुनामकाः सर्वजीवाः । 'अवतासः' इत्यस्य **कनकावटा** इति व्याख्या ।

---

११८. क्रतुनामकः इति ह.पाठः ११९. वित्तविद्भिः इति ह.पाठः

१२०. गी.भा. उदाहृतप्रमाणवचनम् ४-५

कनकनिक्षेपसाधनगर्ता इत्यर्थः । यथेति नञर्थः । कर्तृभिरित्यस्य तात्पर्यम्– **वित्तवद्भिरिति** ।। तथाच **हे इन्द्र** परमेश्वर तथा वायो **कर्तृभिः** धनसङ्ग्राहकारिभिः **अवतासो न** अवताः कनकावटास्ते यथा आच्छाद्यन्ते तथा **भूरयो**ऽनन्ताः **क्रतवो** जीवाः **ते** तव तनुषु **आवृतास** आवृताः गोपिता इति व्याख्यातं भवति । उभयत्र 'आज्जसेरसुक्'[१२१] इत्यसुक् । एवं समाख्यामन्त्रं व्याख्याय तत्समाख्येयं 'सर्वं हीदं प्राणेनावृत'मित्युपनिषद्वाक्यं व्याचष्टे– **ताभ्यामेवमिति** ।। आद्यश्चशब्दोऽवधारणे । द्वितीयोऽप्यर्थे । तुशब्दश्चार्थे । तथाच **एवञ्च** एवमेव कनकावटवदेव सर्वेऽपि चेतना महदाद्याश्च पदार्था आवृताः सन्त एतयोर्देह एव तिष्ठन्तीत्यर्थः ।।

विष्णुवाय्वोः बृहतीति नाम श्रुतिषु प्रसिद्धम्

**भाष्यम्**

**विष्टब्धाश्चैव सर्वेऽपि जीवा आकाश एव च ।।**
**स वायुः प्रकृतिश्चैव विष्टब्धौ केशवेन हि ।**
**बृहत्वात् बृहतीत्येव तयोर्नाम प्रकीर्तितम् ।।**
**वायुकेशवयोः प्राणनाम सर्वप्रणायनात् ।**
**विशेषतो बृहत्प्राणो भगवांस्तत्र केशवः ।।**
**इति विद्यात् ...................... ।।२.१.६।।**

**भावप्रदीपः**

न केवलमावृताः किन्तु बहिष्ठरूपेणापि ताभ्यामेव सर्वेऽपि जीवा

---

१२१. पा.सू. ७-१-५० सि.कौ.सू.सं ३५७२

धृता इत्याह– **विष्टब्धाश्चेति** ।। ताभ्यामित्यनुषज्यते । तेनैवकार-सम्बन्धः । एतेन 'सर्वाणि भूतानि' इत्याद्युत्तरवाक्यं व्याख्यातं भवति । न केवलं प्राणेनैवेदं सर्वमावृतं किन्तु प्रकृत्यापीत्याह– **आकाश एव चेति** ।। आकाशं इति सप्तमी तृतीयार्थे । प्रकृत्येत्यर्थः । एवशब्दः सर्व एव जीवा इत्यनुवृत्तेन सम्बद्ध्यते । चशब्दस्य प्रकृत्या चेत्यन्वयः । एतेन प्राणेनेति पदं प्रकृतेरप्युपलक्षकम् । अन्यथा 'सोऽयमाकाशः' इति परामर्शानुपपत्तिरिति सूचयति । इदानीं 'सोऽयमाकाशः प्राणेन बृहत्या विष्टब्धः' इत्येतद् व्याचष्टे– **स वायुरिति** ।। वायुग्रहणेनाकाशपदं वायोरप्युपलक्षकमिति सूचयति । केशवेनैवेत्येवशब्दान्वयः । तेनात्र प्राणशब्दो भगवन्मात्रपर इति द्योतयति । प्रकृतिविष्टम्भकत्वस्यान्यत्रायोगात् । उत्तरत्र तु प्राणेन बृहत्या विष्टब्धानीति प्राणबृहतीशब्दावुभयपरावेव न भगवन्मात्र-परावित्याशयेनाह– **बृहत्त्वादिति** ।। **तयोः** वायुकेशवयोर्बृहत्त्वादेव बृहतीति नाम । सर्वस्य **प्रणायनात्** प्रणयनान्नियमनात्प्राण इति नाम च प्रकीर्तितमिति योजना । ननूभयोर्नामप्रवृत्तिनिमित्तसाम्ये कथं स वायुः केशवेन विष्टब्ध इत्युक्तमित्यत आह– **विशेषत इति** ।। बृहती चासौ प्राणश्च बृहत्प्राणः । **तत्र** तयोर्मध्ये । प्राक् 'अहमुक्थ-मस्मीति विद्यात्'[१२२] इत्यस्य 'अहमुक्थमिति ह्येतां विद्यामनुभव-त्यसौ' इति व्याख्यातत्वात्तद्वदेवात्राप्यर्थ इति प्रतीतिनिरासाय जानीयादित्येवात्रार्थः । पूर्वत्रैवात्र प्रतीतार्थे बाधकाभावादिति भावेन इति विद्यादित्येतदनुवदति– **इति विद्यादिति** ।।

**।। इति षष्ठः खण्डः समाप्तः ।।**

---

१२२. ऐत.उ २-१-४

परमपुरुषावयवैः सृष्टिः

### उपनिषत्

**अथातो विभूतयोऽस्य पुरुषस्य तस्य वाचा सृष्टौ पृथिवी चाग्निश्च । अस्यामोषधयो जायन्ते । अग्निरेनाः स्वदयतीदमाहरतेदमाहरतेति । एवमेतौ वाचं पितरं परिचरतः पृथिवी चाग्निश्च ।**

**यावदनु पृथिवी यावदन्वग्निस्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेतयोर्न जीर्यते पृथिव्याश्चाग्नेश्च य एवमेतां वाचो विभूतिं वेद ।**

भगवतोऽङ्गानां वैभववर्णनम्

### भाष्यम्

...... तस्य विष्णोरङ्गानामथ वैभवम्[१२३] ।
उच्यते तस्य वाचा हि सृष्टावग्निः क्षितिस्तथा ॥
शुश्रूषार्थं[१२४] तस्य पृथ्वी जनयत्योषधीः प्रभोः ।
ताः पचत्यग्निरुद्युक्तः आहृता आहृता पुनः ॥
आहरेति वचोऽस्यापि शृण्वन्त्येव महर्षयः ।
मुखजत्वात् तयोर्विष्णोर्मुखं जनकमिष्यते[१२५] ॥
आस्यभोग्यं ततो विष्णोरन्नं तौ कुरुतः सदा ।

---

१२३. वैभवः इति हृ.पाठः १२४. शुश्रूषार्थे इति हृ.पाठः

१२५. जनक इष्यते इति हृ.पाठः

**सर्वैर्यद्भुज्यते चान्नं तत्र तत्र स्थितो हरिः ॥**
**तद्भुङ्क्तेऽतस्तदर्थं हि तावन्नं कुरुतस्सदा ।**
**विष्णोर्वाग्विभवं वेद य उपास्ते च सर्वदा ॥**
**योग्यः संस्तदुपासायाः स भूम्यग्निसमन्वितः ।**
**समं तयोर्व्याप्तिमांश्च तद्वन्मुक्तश्च नित्यदा ॥**
**अनष्टलोको वसति समीपे केशवस्य च ।**

**भावप्रदीपः**

'अथातः' इत्यादिखण्डं व्याचष्टे– **तस्येत्यादिना** ॥ 'अस्य पुरुषस्ये'त्यस्यार्थः– **तस्य विष्णोरिति** ॥ विभूतिशब्दार्थो– **वैभव(वं) इति** ॥ 'तस्य वाचा सृष्टौ पृथिवी चाग्निश्चे'त्यस्य व्याख्या– **तस्य वाचेत्यादि** । पृथिव्यपेक्षयाऽग्नेरुत्तमत्वाच्छ्रौतक्रमोल्लङ्घनम् । 'अस्या-मोषधयः' इत्यादेर्व्याख्या– **शुश्रूषार्थमित्यादि** ॥ 'पितरं परिच-रतः'[१२६] इति पृथिव्यग्निकर्मणोर्विष्णुपरिचरणरूपताया वक्ष्यमाणत्वा-दिति भावः । 'स्वदयती'त्यस्यार्थः– **पचतीति** ॥ 'इदमाहरते-दमाहरत' इति द्विरुक्तेस्तात्पर्यम्– **उद्युक्त इति, आहृता आहृता इति च** ॥ सर्वा इत्यर्थः । नन्वग्नेरोषधिपचनमात्रं प्रत्यक्षसिद्धम् । इदमाहरतेति वचनं तु न श्रूयतेऽतः कथमेतदित्यत आह– **आहरेति** ॥ न केवलं पचनमात्रं जनाः पश्यन्ति किन्तु महर्षयो वचोऽपि शृण्वन्तीत्यन्वयः । नन्वत्र वाचं पितरमिति विष्णुवाचः पृथिव्यग्नि-पितृत्वमुच्यते । न चैतद्युज्यते । अवयवविशेषेण जातत्वेऽपि

---

१२६. ऐत.उ २-१-७ १२६. ऋक्.सं १०-८-९० (पु.सू.-१३)

लोकेऽवयविन एव पितृत्वव्यवहारात्। 'मुखादिन्द्रश्चाग्निश्च'[१२७] इत्यादि श्रुत्यन्तरविरोधाच्च। अस्तु वा वाचः कथञ्चित्पितृत्वम्। तथापि तच्छुश्रूषार्थमोषधिनिर्माणादिकमनुपपन्नमेव। अन्नस्यास्य भोग्यत्वेन तन्निर्माणस्यास्य सेवारूपतया वाग्भोग्यताभावेन तत्सेवा-रूपत्वायोगादित्यत आह– **मुखजत्वादिति**।। अत्र वाक्शब्देन मुखमुपलक्ष्यते। भगवत्यवयवावयविनोरत्यन्ताभेदाद्भगवत इव तन्मुखस्यापि पितृत्वव्यवहार उपपद्यते। अतो मुखभोग्यान्न-निर्माणस्य तच्छुश्रूषारूपताप्युपपद्यत एवेति न काप्यनुपपत्तिरिति भावः। ननु पृथिव्यग्निनिर्मितान्नस्य मानुषादिभिर्भुज्यमानत्वदर्शनात् कथं तस्य विष्णुभोज्यत्वम्। येन तत्सेवारूपमिदं स्यादित्यत आह– **सर्वैरिति**।। 'यावदनु पृथिवी'त्यादि फलवाक्यं व्याचष्टे– **विष्णोरिति**।। 'वाचो विभूति'मित्यस्यार्थः– **विष्णोर्वाग्विभव-मिति**।। पृथिव्यग्निपितृत्वादिमाहात्म्यमित्यर्थः। वेदेत्येतदुपासाया अप्युपलक्षणमिति भावेन **उपास्ते च** इत्युक्तम्। मानुषादीनामपि तत्फलप्राप्तिशङ्कानिरासायाह– **योग्यः सन्निति**।। अयोग्योपासन-स्यानर्थफलकत्त्वादिति भावः। 'यावदनु पृथिवी यावदन्वग्निः' इत्यादेस्तात्पर्यमाह– **स इति**।। 'नास्य तावल्लोको जीर्यते यावदेत-योर्न जीर्यते' इत्यत्र यावत्तावत्पदाभ्यां [१२७]'अमृतो वाव सोमपो भवति यावदिन्द्रो यावन्मनुः' इत्यादाविव गौणमेव जीर्णत्वं तल्लोक-स्योच्यत इति भाति। तत्तु न मुख्यं फलमित्यतो यथावद् व्याचष्टे– **तद्वन्मुक्तश्चेत्यादिना**।। प्रलये सर्वलोकानां नाशात्कथमनष्टलोकत्व-मित्यतस्तद्घटयति– **समीपे केशवस्येति**।। तथा च वैकुण्ठादि-

---

१२७. सू.भा उदाहृता श्रुतिः ३-१-७

नित्यलोके वासादनष्टलोकत्वमुपपन्नमिति भावः । तथा हि श्रुतिः– 'तस्य लोकः स उ लोक एव'[१२८] इत्यादिका ॥

अस्या उपासनायाः न सर्वे योग्याः

**भाष्यम्**

**योग्या अस्या उपासायाः पृथिव्यग्निपदस्य ये ।**
**योग्यास्ते वै मुख्यतया तदन्ये तत्र तौ स्थितौ ॥**

**तत्र चर्तुं समर्था स्युर्मुक्तिं प्राप्य यदृच्छया[१२९] ।**
**कादाचित्कोपासने तु तावत्येषां च योग्यता ॥**

**भावप्रदीपः**

ननु 'स मन्तयो व्याप्तिमांश्च' इत्यादिफलं कथमन्यस्योपपद्यते । अन्यस्यान्यफलाप्राप्तेः । तथाचोक्तं सूत्रे 'न चाधिकारिकमपि पतनानुमानात्तदयोगात्'[१३०] इति । नच 'योग्यः संस्तदुपासायाः' इति तदुपासनयोग्यस्यैवेदं फलमुक्तमिति वाच्यम् । देवप्राप्यफलकोपासनायामन्येषां योग्यताया अप्यभावादित्यत आह– **योग्या इति** ॥ तथाच पृथिव्यग्निपदयोग्यानामेवैतदुपासनयोक्तफलप्राप्तिरिति भावः । एवं तर्ह्यन्येषामेतदुपासना सर्वथा नास्त्येव किं? नेत्याह– **मुख्यतयेति** ॥ उपासाया योग्या इति पूर्वेण सम्बन्धः । तर्ह्युपासनायाममुख्यतया योग्यानां किं फलमित्यत आह– **तदन्य इति** ॥ **तौ** पृथिव्यग्नी । नन्वत्रेच्छामनतिक्रम्य यथेच्छमित्यव्ययीभावे सति

१२८. बृ.उ. ६-४-१३

१२९. यथेच्छया इति ह.पाठः

१३०. ब्र.सू. ३-४-४१

तस्य 'अव्ययीभावश्च'[१३१] इत्यव्ययत्वात् 'अव्ययादाप्सुपः'[१३२] इति तृतीयया लुका भवितव्यम् । यथेच्छयेति कथम् । उच्यते, यथेति भिन्नं पदं सम्यग्वाचि । 'निवृत्तिमार्गः कथित आदौ भगवता यथा'[१३३] इति यथा । तस्य च समर्था इत्यनेन सम्बन्धः । इच्छयेत्यस्येच्छानुसारेणेत्यर्थ इति । अन्येषामप्युक्तोपासनायां योग्यतासद्भावे मुक्तौ फलवैलक्षण्यं कुत इत्यत आह– **कादाचित्केति** ।। तुचाववधारणे । येषां पृथिव्यग्निपदायोग्यानां कादाचित्कोपासन एव योग्यता नतु सर्वदा । अतः सा **तावत्येव** तावन्मात्रफलदा । पृथिव्यग्निस्थाने यथेष्टचरणमात्रफलदेत्यर्थः ।।

अपरोक्षेण वेदनं मुख्यवेदनम्

**भाष्यम्**

**वेदनं ह्यापरोक्ष्येण मुख्यं भवति नान्यथा ।**
**एकदेशविदो यस्मात् परोक्षज्ञानिनोऽखिलाः ।।**

**आपरोक्ष्यं भवेद् यस्मान्नैवोपासामृते क्वचित् ।**
**तस्मादुपासापूर्वं तु योऽपरोक्षं प्रपश्यति ।।**

**स एव वेद नान्यस्तु [१३४]योग्यस्यैवापरोक्षदृक् ।**
**तस्माद्योग्यस्योक्तफलमन्येषां किञ्चिदेव हि ।।**

---

१३१. पा.सू. १-१-४१ सि.कौ.सू.सं ४५१

१३२. पा.सू. ५-४-८२ सि.कौ.सू.सं ४५२

१३३. भाग. ६-१-१

१३४. योग्यश्चैव इति ह.पाठः

## भावप्रदीपः

एवं वेदेति परोक्षवेदनमभिप्रेत्योपलक्षणयोपासनमपि गृहीत्वा व्याख्यातम् । इदानीं मुख्यामुख्ययोर्मुख्यस्यैव ग्राह्यत्वादपरोक्षज्ञान-मेव विवक्षितमतो नोपासनोपलक्षणमावश्यकमिति भावेन व्याचष्टे– **वेदनमिति ।। अन्यथा** आपरोक्ष्येण विना **वेदनं** परोक्षज्ञानं तु न मुख्यमित्यर्थः । कुतो न तन्मुख्यमित्यत आह– **एकदेशविद इति ।।** नहि घटादावापरोक्ष्येण यावद्भासते तावत्परोक्षत इत्यनुभवसिद्धम् । नन्वपरोक्षवेदनविवक्षायामपि कुतो नोपासनोपलक्षणाऽवश्यकीत्यत आह– **आपरोक्ष्यमिति ।।** योऽपरोक्षं पश्यति, स एव वेदेत्युच्यते मुख्यतो नान्यः परोक्षज्ञानी । एकदेशवेदित्वादित्यर्थः । तथाचा-परोक्षज्ञानस्योपासनां विनोत्पत्तेरेवायोगात्तत्पूर्वं सा सिद्धैवेति न तदु-पलक्षणमावश्यकमिति भावः । नन्वस्त्वपरोक्षज्ञानमेव मुख्यं वेदनम्, तदपि सर्वेषामुदेति चेत्तत्फलमपि सर्वेषां सममेव स्यान्न तु तार-तम्येनेत्यत आह– **योग्यस्यैवेति ।।** अपरोक्षज्ञानस्योपासनैक-साध्यत्वादुपासनायाश्च योग्यतासापेक्षताया उक्तत्वाद्योग्यानामेवोपा-सनयाऽपरोक्षज्ञानोदयादुक्तं सर्वं फलं तेषामेव । अन्येषां त्वल्प-मेवेत्यर्थः ।।

## प्राणेन सृष्टिः

### उपनिषत्

**प्राणेन सृष्टावन्तरिक्षं च वायुश्च । अन्तरिक्षं वा अनु चरन्त्यन्तरिक्षमनु शृण्वन्ति । वायुरस्मै पुण्यं गन्ध-मावहति । एवमेतौ प्राणं पितरं परिचरतोऽन्तरिक्षं च**

वायुश्च । यावदन्वन्तरिक्षं यावदनु वायुस्तावानस्य लोको भवति, नास्य तावल्लोको जीर्यते, यावदेतयोर्न जीर्यतेऽन्तरिक्षस्य च वायोश्च, य एवमेतां प्राणस्य विभूतिं वेद ।

चक्षुषा सृष्टिः

चक्षुषा सृष्टौ द्यौश्चादित्यश्च । द्यौर्हास्मै वृष्टिमन्नाद्यं सम्प्रयच्छति । आदित्योऽस्य ज्योतिःप्रकाशं करोति । एवमेतौ चक्षुः पितरं परिचरतो द्यौश्चादित्यश्च । यावदनु द्यौः यावदनु आदित्यस्तावानस्य लोको भवति, नास्य तावल्लोको जीर्यते, यावदेतयोर्न जीर्यते दिवश्चादित्यस्य च, य एवमेतां चक्षुषो विभूतिं वेद ।

श्रोत्रेण सृष्टिः

श्रोत्रेण सृष्टा दिशश्च चन्द्रमाश्च । दिग्भ्यो हैनमायन्तीः३ दिग्भ्यो विशृणोति । चन्द्रमा अस्मै पूर्वपक्षापरपक्षान् विचिनोति पुण्याय कर्मणे । एवमेते श्रोत्रं पितरं परिचरन्ति दिशश्च चन्द्रमाश्च । यावदनु दिशो यावदनु चन्द्रमास्तावानस्य लोको भवति, नास्य तावल्लोको जीर्यते यावदेतेषां न जीर्यते दिशां च चन्द्रमसश्च, य एवमेतां श्रोत्रस्य विभूतिं वेद ।

मनसा सृष्टिः

मनसा सृष्टा आपश्च वरुणश्च । आपो हास्मै श्रद्धां सन्नमन्ते पुण्याय कर्मणे । वरुणोऽस्य प्रजां धर्मेण दाधार ।

**एवमेते मनः पितरं परिचरन्त्यापश्च वरुणश्च । यावदन्वापो यावदनु वरुणस्तावानस्य लोको भवति, नास्य तावल्लोको जीर्यते, यावदेतेषां न जीर्यतेऽपां च वरुणस्य च, य एवमेतां मनसो विभूतिं वेद ॥२.१.७.॥**

तत्वाभिमानिदेवानां कार्यव्याप्तिनिरूपणम्

**भाष्यम्**

प्राणादिभ्यश्च वाय्वाद्या एवं विष्णोः प्रजज्ञिरे ।
ब्रह्मशेषसुपर्णेन्द्रशिवाद्या आप ईरिताः ॥

ते विष्णोर्मनसा जाताः सर्वे चावभिमानिनः ।
वैश्वदेव्यस्ततो ह्यापो वरुणश्च मनोभवः ॥

प्राणिनां पूर्तपुण्येषु श्रद्धारूपमनोधिपः ।
एवं [१३५]हि सर्वदेवा हि विष्ण्वङ्गेभ्यः प्रजज्ञिरे ॥

स्वोत्पत्त्यङ्गं च ते विष्णोः शुश्रूषन्ते पृथक् पृथक् ।
विष्णोः विषयधर्मेषु ज्ञानादिषु चतुर्मुखः ॥

श्रद्धां ददाति भूतानां वैदिकश्रवणे विपः ।
तान्त्रिके शेषरुद्रौ च शक्रो यज्ञादिकर्मणि ॥

वायुर्गन्धवहश्चास्य भक्तिज्ञानप्रदस्तथा ।
भूतानां तस्य विषये त्वन्तरिक्षं च कर्मणः ॥

तदीयस्यैव भोगार्थं जीवानां श्रुतिचारदम् ।

---

१३५. सर्वा देवता इति ह्.पाठः

**अन्तरिक्षं च विघ्नेशः सूर्यस्तत्कर्मसिद्धये ।**
**भूतानां ज्योतिषो दाता द्यौरप्यन्नाद्यदायिनी ।।२.१.७।।**

**भावप्रदीपः**

'अथ प्राणेन सृष्टावन्तरिक्षं च वायुश्च । चक्षुषा सृष्टौ द्यौश्चादित्यश्च । श्रोत्रेण सृष्टा दिशश्चन्द्रमाश्च । मनसा सृष्टा आपश्च वरुणश्च' इति स्थानचतुष्टयगतवाक्यतात्पर्यमाह– **प्राणादिभ्य इति** ।। विष्णोः **प्राणादिभ्यः** प्राणचक्षुःश्रोत्रमनोभ्य इत्यर्थः । **वाय्वाद्याः** वाय्वादित्यचन्द्रवरुणाः अन्तरिक्षद्युदिगापश्चेत्यर्थः । **एवं** पृथिव्यग्निवदेव । 'आपश्च वरुणश्च' इत्यत्रापूशब्दार्थमाह– **ब्रह्मेति** ।। उत्तरखण्डे 'आपः'[१३६] इति सर्वदेवानां नाम कथमभूदिति पृच्छमानत्वात् अनुक्तार्थः । एवं प्रश्नायोगात् अपूशब्दोऽत्र सर्वदेवपर इति भावः । तेषामप्शब्दवाच्यत्वे निमित्तमाह– **सर्वे चेति** ।। सर्वदेवानामबभिमानित्वे ज्ञापकमाह– **वैश्वदेव्य इति** ।। विश्वे समस्ता देवा देवता यासां ता वैश्वदेव्य इत्यापो । **हि** प्रसिद्धाः श्रुत्यादिष्वित्यर्थः । अत्र वरुणव्यतिरिक्ता एव देवा अप्शब्देन ग्राह्या न वरुणः । अन्यथा पुनरुक्ततापत्तेरिति भावेन वरुणश्चेत्येतद् व्याख्याति– **वरुणश्चेति** ।। 'वरुणोऽस्य प्रजां धर्मेण दाधार'[१३७] इति विष्णुमनोभवस्य तस्य स्वजनकविष्णुमनःपरिचरणप्रकार उच्यते । न चेदं सङ्गतम् । धर्मेण प्रजाधारणस्य मनोवृत्तित्वाभावात्, भगवन्मनसः प्राणिनां मनसि स्थितत्वेन तत्रैव तत्प्रीतिजनकवृत्तिविशेषोत्पादनेनैव तस्य तोषणीयत्वात् । तोषहेतोरेव शुश्रूषारूपत्वात् । अत एव प्राक्

१३६. ऐत.उ २-१-८ १३७. ऐत.उ २-१-७

प्राणिनामास्यस्थितभगवदास्यस्य तद्भोग्यान्ननिर्माणं पृथिव्यग्निकर्तृकं सेवारूपतयोक्तम् । अतः कथमेतत्सेवारूपं स्यादित्यत आह– **प्राणिनामिति** ।। पूर्तपुण्येषु या श्रद्धा तद्रूपं यन्मनः मनोवृत्तिस्तदधिप इत्यर्थः । तथा चेदं प्राणिमनोनिष्ठस्य विष्णुमनसः सेवारूपं भवत्येव । तत्प्रीतिहेतुत्वादिति भावः । एतेन **अस्य** प्रजामनोनिष्ठभगवन्मनसोऽर्थे तत्प्रीत्यर्थमिति यावत् । **धर्मेण** पूर्तनिर्माणरूपपुण्यकर्मणा तत्र प्राणिनां श्रद्धोत्पादनेनेति यावत् । प्रजां **दाधार** दधार श्रद्धापूर्वकपूर्तनिर्माणजन्यपुण्यवतश्चकारेति तद्वाक्यं व्याख्यातं भवति । अथवा 'आपो हास्मै श्रद्धां सन्नमन्ते' इत्यपामुच्यमानं श्रद्धासम्पादनं वरुणस्यापि ग्राह्यमिति भावेनेदमुदितम् । धर्मेण प्रजाधारणं तु वरुणस्य राजत्वात्प्रजाधारणोपयोगिवापीकूपतटाकादिपूर्तनिर्माणे श्रद्धाजनकत्वाच्चोपपद्यते । अस्य भगवन्मनस्तोषहेतुत्वात् तत्सेवारूपत्वं च युज्यत इति भावः ।।

एवं प्रदर्शितं वाचा सृष्टावित्यादिवाक्यपञ्चकतात्पर्यं बुद्ध्यारोहार्थं सङ्ग्रहेण निगमयति– **एवमिति** ।। आद्यो हिशब्दः प्रसिद्धौ । द्वितीयो यस्मादित्यर्थे । स्वोत्पत्त्यङ्गसेवाप्रकारं पृथिव्यग्निप्रकरणोक्तमन्यत्राप्यतिदेशेन निरूपयति– **स्वोत्पत्त्यङ्गमिति** ।। ते च देवा इति चशब्दसम्बन्धः । **हि** यस्माद्विष्ण्वङ्गेभ्यः प्रजज्ञिरे तस्मात्स्वोत्पत्त्यङ्गं शुश्रूषन्त इत्यन्वयः । 'आपो हास्मै श्रद्धां सन्नमन्ते'[१३८] इत्येतद् 'ब्रह्मशेषसुपर्णेन्द्रशिवाद्या आप ईरिताः' इत्युक्तानुसारेण क्रमाद् व्याचष्टे– **विष्णोरित्यादिना** ।। विष्णोर्विषये ये धर्मास्तेषु विष्णुविषयकधर्मेष्वित्यर्थः । **वैदिकश्रवणे** वेदोक्तार्थश्रवणे । **विपो**

---

१३८. ऐत.उ २-१-७

गरुडः श्रद्धां ददाति । **तान्त्रिके** पञ्चरात्रादिश्रवणे शेषरुद्रौ श्रद्धां ददत इत्यनुषङ्गः । प्राणेन सृष्टाविति वाक्ये 'वायुरस्मै पुण्यं गन्धमावहती'त्येतद् व्याचष्टे– **वायुर्गन्धवह इति** ।। **अस्य** विष्णोः । अत्र प्राणशब्देन प्राणवत्तदधिष्ठितो घ्राणोऽप्युच्यते । 'नासयोर्नासिके विष्णोः'[१३९] इत्युक्त्वा 'प्राणोऽस्य नरकेसरी'[१४०] इति प्रागुक्तत्वात् । अतो गन्धस्य तद्भोग्यत्वोक्तिर्युज्यत इति ज्ञातव्यम् । नायं वायुर्गन्धवहत्वलिङ्गेन भूतवायुर्मन्तव्यः । वायुशब्दस्य प्रधान-वायावेव मुख्यत्वात् । 'प्राणः पृथग्वर्त्म'[१४१] इति छान्दोग्य-पृथग्वर्त्मपदोक्तप्रधानवायोरेव विष्णुप्राणजातत्वोक्तेश्च । गन्धवहत्व-लिङ्गस्य तु 'महामानी भूतमानी[१४२] त्वल्पमानी च स्वस्याः'[१४३] इत्यनुव्याख्यानोक्तन्यायेन तत्रैव सावकशत्वादिति भावेन [१४४]तत्कर्तृभूतवाय्वसम्भविपरिचरणान्तरमप्याह– **भक्तीति** ।। **तस्य** विष्णोर्विषये भूतानां भक्तिज्ञानप्रद इत्यन्वयः । इदं तु न विष्णोः प्राणपरिचरणम्, किन्तु मनःपरिचरणमेव । भक्तिज्ञानादेर्जीवमनो-वृत्तित्वात् । तत्र च विष्णुमनसः सत्वात् । अत 'आपश्च वरुणश्चे'ति वाक्ये अप्शब्देन चतुर्मुखवद्वायुरपि विवक्षणीयः । तथाच चतुर्मुखवदस्यापि विष्णुविषयकभक्तिज्ञानादिधर्मेषु श्रद्धादातृत्वरूपं मनःपरिचरणं तत्रैव व्याख्येयमिति भावः । 'अन्तरिक्षं वा अनुचरन्ति' इत्यादिवाक्यं व्याचष्टे– **त्वन्तरिक्षमिति** ।। तुर्वि-

---

१३९. ऐत.भा. २-१-२ १४०. ऐत.भा. २-१-२

१४१. छान्दो.उ. ५-१८-२

१४२. भूतमानी इति पदं क.मातृकायां नास्ति

१४३. अनु. ४-२-३२ १४४. तत्कर्तृकं इति ख.पाठः

शेषार्थः । कर्मणस्त्विति सम्बद्ध्यते । तमेव विशेषं व्यनक्ति– **तदीयस्यैवेति** ।। विष्णुसम्बन्धिनो जगत्सर्जनादिकं संहननादि-रूपस्येत्यर्थः । विष्णूद्देशेनैव क्रियमाणस्येत्यर्थान्तरमप्यत्र विवक्ष-णीयम् । **भोगार्थं** श्रवणरूपभोगार्थं निष्पत्त्यर्थं च । **श्रुतिचारदं** श्रुतिः श्रोत्रेन्द्रियम्, चारश्चरणम्, तदुभयदमित्यर्थः ।

अयमर्थः । समस्तान्यपि जैवकर्माणि प्राणवायुकार्याणि 'प्राणं तत्कर्मणि स्फुटम्'[१४५] इति बृहद्भाष्योक्तेः । अस्य नरः कुर्यात्सहैव हीत्युत्तरेण अन्वयः[१४६] । एवं हरेरपि कर्माणि तदीयप्राणवायुकार्याणि ।

'वाय्वादिप्राणशक्यं न यत्तत्कर्ता हरेर्यतः ।
प्राणस्तेन पृथग्वर्त्म'[१४७] इति छान्दोग्यभाष्योक्तेः ।

श्रोत्रेन्द्रियं च भूताकाशात्मकम् । पञ्चेन्द्रियाणां पञ्चभूतजन्यत्वात् । यथोक्तं सूत्रभाष्ये[१४८]–

'नित्यान्येतानि सौक्ष्मेण हीन्द्रियाणि तु सर्वशः ।
तेषां भूतैरुपचयः सृष्टिकाले विधीयते' इति ।

प्रकृते च विष्णुप्राणजातमन्तरिक्षं भूताकाशमेव । प्राणिनां सञ्चारोऽपि तदायत्त एव । 'नभो ददाति श्वसतां मार्गं यन्नियमाददः'[१४९] इत्यादेः । तथा च विष्णुप्राणजातमन्तरिक्षं तदी-यस्य कर्मणो जगत्सर्जनादेर्जीवानां श्रवणलक्षणभोगार्थं श्रोत्रप्रदं भवति ।

---

१४५. बृह.भा. ३-६(सप्तान्नब्राह्मणम्)१४६. सम्बन्धः इति ख.पाठः

१४७. छान्दो.भा ५-१४-१ १४८. २-४-२

१४९. अनु. १-१-२४५ (आकाशाधिकरणम् १-१-२२)

ततश्च तत्कर्मप्रख्यापितं भवति । तथाच तदुद्देशेन क्रियमाणस्य तीर्थक्षेत्रयात्रादिजैवप्राणकर्मणो भोगार्थं निष्पत्त्यर्थं चारदं सञ्चारोपयोग्यावकाशप्रदं च भवति । अत इदमन्तरिक्षस्य सर्वप्राणिप्राणगतविष्णुप्राणसेवारूपं भवतीति ॥

अयमन्तरिक्षशब्दोऽपि पृथिव्यादिशब्दवत्तद्देवतापर एव । अन्यथा तस्याचेतनत्वेन तत्कर्मणो भगवत्परिचरणरूपताऽयोगादिति भावेनाह– **अन्तरिक्षं चेति** ॥ एतेना**न्तरिक्षं** भूताकाशाभिमानिनं विघ्नेशं **अनु** तत्प्रेरणयेति यावत् । सर्वाणि भूतानि **चरन्ति** विष्णुप्रीत्यर्थं तीर्थक्षेत्राद्यटनं कुर्वन्ति । **अन्तरिक्षमनु** तत्प्रेरणयैव श्रोत्रेण भगवत्कर्माणि शृण्वन्ति । अन्तरिक्षं स्वजनकप्राणसेवार्थं प्राणिनां हरियात्रादिसिद्ध्यर्थमवकाशं ददाति । तत्कर्मश्रवणार्थं श्रोत्रस्योपचायकं भूत्वा श्रवणशक्तिप्रदं सत्तत्कर्मप्रख्यापकं च भवतीति यावदिति तद्वाक्यं व्याख्यातं भवति । 'द्यौर्हास्मै वृष्टिमन्नाद्यं' इत्यादि वाक्यं व्याचष्टे– **सूर्य इति** ॥ तथाच **द्यौर्द्यु**लोकाभिमानिनी देवता **अस्मै** अस्य भगवतः प्रीतिजनककर्मसिद्धये वृष्टिं तथा**ऽन्नाद्यं** अन्नपानीयवस्त्रश्रीतुलसीपुष्पगन्धादिकं च सम्प्रयच्छति । आदित्यश्चास्य एतत्कर्मसिद्ध्यर्थमेव ज्योतिषा प्रकाशं करोतीति तद्वाक्यं व्याख्यातं भवति । चक्षुष आलोकाभावे वा अवलोकनीयपूजासाधनद्रव्याभावे वा पूजादिकर्माणि चक्षुषा न सिद्ध्यन्ति । अतस्तदुभयकारित्वाद् द्व्यादित्ययोर्विष्णुश्चक्षुःसम्भूतयोर्जीवचक्षुःस्थितं भगवच्चक्षुःसेवारूपमिदं भवत्येवेति भावः ॥

**॥ इति सप्तमः खण्डः ॥**

भगवतः आपशब्दवाच्यत्वं

उपनिषत्

**आपाः३ इति, आपः इति । तदिदमाप एव । इदं वै मूलमदस्तूलम् । अयं पितैते पुत्राः । यत्र ह क्वचन पुत्रस्य तत्पितुः । यत्र वा पितुस्तत् पुत्रस्य । इत्येतत् तदुक्तं भवतीति ।**

**एतद्ध स्म वै तद्विद्वानाह महिदास ऐतरेयः । अहं मां देवेभ्यो वेदा ओमद्देवान् वेद । इतः प्रदाना ह्येते । इतः सम्भृता इति ।**

लक्ष्मी-महिदाससंवादेन भगवतः आपशब्दवाच्यत्वसमर्थनम्

भाष्यम्

आप इत्येव देवानां ब्रह्मादीनां कथं भवेत् ।
नामेत्यपृच्छल्लक्ष्मीस्तं महिदासं जनार्दनम् ।।

आप इत्येव नामैषां भवतीत्याह स प्रभुः ।
इदं मदाख्यं यद् ब्रह्म ह्याप इत्यभिधीयते ।।

आ पूर्णत्वाद् गुणैः सर्वैस्तन्मूलमखिलस्य च ।
तूलभूतं तदन्यत् तु पिता ह्येष जनार्दनः ।।

पुत्रा ब्रह्मादयः सर्वे नैवायं वृक्षमूलवत् ।
स्वतन्त्रत्वाज्जगन्नाथः पितृत्वात् परमेशितुः ।।

तन्नामाप इति ह्येतद्ब्रह्मरुद्रादिनां भवेत् ।
यथा यदव इत्येव रघवः कुरवस्तथा ।।

**पुत्रनाम पितुश्च स्यात् तत्तन्त्रत्वात् सुतस्य हि ।**
**यथा पितामहाद्याश्च पितरो नाम कीर्तिताः ।।**

**तथापि मुख्यया वृत्त्या व्यवहारव्यवस्थितिः ।**
**आप इत्येव देवानां सर्वेषां[१५०] प्रददौ हरिः ।।**

**स्वकीयमेवमन्यानि पृथक् पृथगदात् प्रभुः ।**
**नारायणादिनामानि ददौ नान्यस्य केशवः ।।**

**भवप्रदीपः**

'आपाः' इत्यादि खण्डं व्याचष्टे– **आप इत्यादिना** ।। तत्रापा इत्याप इतीति द्विरुक्तिः किमर्थेत्यतस्तत्राद्यं प्रश्नवाक्यं द्वितीयमुत्तरवाक्यमतो न पौनरुक्त्यमित्याशयेनाह– **आप इति** ।। पूर्वखण्डे 'आपश्च वरुणश्चे'त्यत्राप्शब्देन ब्रह्मादिसर्वदेवा गृहीताः । नच तत्र किमपि निमित्तमुक्तम् । तदभावे तु तत्र तच्छब्दप्रवृत्तिरनुपपन्नैवोपपद्येत । अतस्तत्र किं निमित्तमिति प्रश्नाशयः । वक्ष्यमाणानुसारेण निमित्तसद्भावादुपपन्नमेवैषामप्शब्दवाच्यत्वमिति परिहाराभिप्रायः । तत्र निमित्तं वक्तुमुपोद्धातमाह[१५१]– **तदिदमाप इति** ।। तद् व्याचष्टे– **इदमिति** ।। तत्र निमित्तकथनम्– **पूर्णत्वादिति**[१५२] ।। आङ्पूर्वात् 'पृ पालनपूरणयोः' इत्यतः क्विप् डिच्च । डित्वाट्टेर्लोपः । उपसर्गस्य च ह्रस्वता । तथाचाप् इति प्रातिपदिकम् । स्त्रीरूपत्वात् स्त्रीलिङ्गम् । बहुरूपत्वाद्बहुवचनमिति भावः । 'इदं वै मूलमदस्तूलं'

---

१५०. सर्वेषां देवानां इति ह.पाठः

१५१. उपोद्धातमुच्यते इति ख.पाठः

१५२. आपूर्णत्वादिति इति ख.पाठः

इत्यस्यार्थः– **तन्मूलमित्यादि** ।। **तद्** ब्रह्म **मूलं** कारणम् । **तदन्यत्** चतुर्मुखादिकं सर्वं **तूलभूतं** कार्यरूपम् । 'अयं पितैते पुत्राः' इत्यस्यार्थः– **पिता ह्येष इत्यादि** ।। ननु मूलतूलशब्दाभ्यामेव पिता पुत्रभावलाभात्पुनरयं पितैते पुत्रा इत्युक्तिः कुत इत्यत आह– **नैवेति** ।। **वृक्षमूलं** वृक्षं प्रति यथोपादानकारणं न तथायं किन्तु पितृवन्निमित्तकारणमेव । कुतः **स्वतन्त्रत्वात्** परानपेक्षसत्वादिमत्त्वात् । न चाचेतनस्य वृक्षमूलस्य परानपेक्षत्वम् । उपलक्षणमेतत् । नापीमे वृक्षवदुपादेयरूपा इत्यपि द्रष्टव्यम् । तथाच मूलतूलपदाभ्यामुपादानोपादेयभाव उच्यत इति प्रतीतिनिरासाय तद्व्याख्यानमिदं कृतमिति भावः । एवमुपोद्धातमुक्त्वा प्रकृतप्रश्नस्योत्तरमुच्यते– **यत्र ह क्वचेत्यादि** ।। तद्व्याचष्टे– **पितृत्वादिति** ।। **रुद्रादिनां** रुद्रादीनाम् । तत्र दृष्टान्तमाह– **यथेति** ।। यद्वादिवंशजातानां यादवादीनां यदुरघ्वादिनाम तथेत्यर्थः । एतेन 'यत्र वा पितुस्तत्पुत्रस्य' इत्येतद् विवृतं भवति । 'यत्र ह क्च' इत्यस्य व्याख्या– **पुत्रनामेति** ।। तत्र दृष्टान्तः– **यथेति** ।। तर्हि पितृपुत्रनाम्नोः साङ्कर्येण व्यवहारव्यवस्था क्वापि न स्यादित्यत आह– **तथापीति** ।। मुख्ययेत्युपलक्षणम् । अमुख्ययेत्यपि ग्राह्यम् । यदि पुत्रनाम पितृषु प्रयुज्यते तदा मुख्यैव वृत्तिर्ज्ञेया । यदा पितृनाम पुत्रेषु प्रयुज्यते तदाऽमुख्यवृत्तिरेव । अतो न व्यवहाराव्यवस्थितिरिति भावः । अस्त्वेवं किं प्रकृत इत्यत आह– **आप इति** ।। तथा चाप इत्येव देवानां नाम कथं भवेदित्यस्य तेषां मत्पुत्रत्वान्मन्नाम तेष्वमुख्यया वृत्त्या प्रयुज्यत इत्युत्तरमिति भावः । एवं तर्हि ब्रह्मादिनामानि न स्वकीयानीति प्राप्तमित्यत आह–

**एवमिति** ।। तथाचाप इति सामान्यनाम । ब्रह्मादिनामानि तु विशेषनामानि । उभयान्यपि विष्णोः स्वकीयान्येवेति भावः । नारायणादिनामसु तु विशेषोऽस्तीति प्रसङ्गादाह– **नारायणादीति** ।। यथोक्तम्–

'ऋते नारायणादीनि नामानि पुरुषोत्तमः ।
प्रादादन्यत्र भगवान् राजेवर्ते स्वकं पुरम् ।।'[१५३] इति ।

भगवतः ब्रह्मादिपददातृत्वनिरूपणम्

**भाष्यम्**

**एवं स भगवान् विष्णुर्महिदासाभिधः प्रभुः ।**
**जानन्नित्योदितज्ञानादाह देवीमिदं वचः ।।**

**देवपर्यन्तमा व्याप्तिं वेदाहं मम सर्वदा ।**
**मत्पर्यन्तं यथा व्याप्तिं देवानामपि सर्वशः ।।**

**मयि देवास्तेषु चाहमिति विद्धि वरानने ।**
**मयैते हि[१५४] प्रदत्तानि पदानि ब्रह्मपूर्वकाः ।।**

**अधितिष्ठन्ति सत्ताद्या अप्येतेषां मदाज्ञया ।**
**ज्ञानकर्मबलेहाद्या मद्दत्ता इति किं वदे ।**

**सम्भृता मत्त एवैते.................।।**

---

१५३. सू.भा. १-३-३

१५४. मयैतानि इति प्र.पाठः

**भावप्रदीपः**

'एतद्धस्मे'त्यादिकं व्याचष्टे– **एवमिति** ।। विद्वानित्यस्य जानन्नित्यर्थः । वेदनं च न देवदत्तादिवज्जन्यं किन्तु नित्योदितमेवेति वक्ति– **नित्योदितेति** ।। भावप्रधानो निर्देशः । नित्योदितज्ञानत्वान्नित्यमेव जानन्नित्यर्थः । 'अहं मां देवेभ्यो वेद, ओमद्देवान्वेद' इति वाक्यद्वयं व्याचष्टे– **देवपर्यन्तमिति** ।। आ इत्यनन्तरं देवेभ्य इत्यध्याहार्यम् । तथाच आ देवेभ्य इत्यनुवादः । देवपर्यन्तमिति व्याख्यानम् । मामित्यस्य– **मम व्याप्तिमिति** ।। ओ मद्देवान्वेदेत्यस्य– **मत्पर्यन्तमित्यादि** ।। एतेन उ उत **आ** मत् मत्पर्यन्तं **देवान्** देवानां व्याप्तिमिति यावत्, अहं वेदेति तद्वाक्यं व्याख्यातं भवति । वाक्यद्वयतात्पर्यमाह– **मयीति** ।। 'इतः प्रदानाद्ध्येते' इति वाक्यं व्याचष्टे– **मयैत इति** ।। एतेन **एते** देवा **इतो** मत्त एव **प्रदानाः** पदप्रदानवन्तः । 'अर्श आदिभ्योऽच्'[१५५] । मत्प्रदत्तपदान्येवाधितिष्ठन्तीति यावदिति व्याख्यातं भवति । 'इतः सम्भृताः' इति वाक्यस्य **इतो** मत्त एवैते देवाः **सम्भृताः** ज्ञानकर्मबलेहादिगुणदानेन पोषिता इत्यर्थमभिप्रेत्य तत्र कैमुत्येन हेतुं वक्तुं 'इतः प्रदानाद्ध्येते' इति वाक्यं प्रकारान्तरेण व्याचष्टे– **सत्ताद्या अपीति** ।। अनेन **इतो** मत्तः मदाज्ञामात्रेण **एते** देवाः **प्रदानाः** सत्ताप्रतीतिप्रवृत्तिप्रदानवन्तो **हि** यस्मादिति तदर्थ उक्तो भवति । इदानीं 'इतः सम्भृताः' इति वाक्यं व्याचष्टे- **सम्भृता इति** ।। यतो मत्त एवैते लब्धसत्ताद्यास्तस्मान्मत्त एव ज्ञानकर्मबलचेष्टादिदानेन पोषिता इत्यर्थः ।।

---

१५५. पा.सू. ५-२-१२७,सि.कौ.सू.सं. १९३३

भगवतः ब्रह्मगिरिशब्दवाच्यत्वकथनम्

## उपनिषत्

**स एष गिरिश्चक्षुः श्रोत्रं मनो वाक्प्राणः । तं ब्रह्मगिरिरित्याचक्षते । गिरति ह वै द्विषन्तं पाप्मानं भ्रातृव्यं, पराऽस्य द्विषन् पाप्मा भ्रातृव्यो भवति, य एवं वेद ।**

गिरि-श्रोत्र-मनः-प्राण-ब्रह्मगिरिशब्दानां निष्पत्तिप्रदर्शनपूर्वकं तज्ज्ञानफलनिरूपणम्

## भाष्यम्

..................स एष भगवान् गिरिः ।
गिरणात् सर्वभूतानां चक्षुर्नामास्य दर्शनात् ।।
सर्वश्रोतृत्वतः श्रोत्रं मनो मन्तृत्वहेतुतः ।
प्राणनामा प्रणेतृत्वात् तमेनं गुणपूर्तितः ।।
[१५६]गिरणाच्चाखिलस्यास्य प्राहुर्ब्रह्मगिरिं प्रभुम् ।
य एवं वेद तं विष्णुमापरोक्ष्येण शाश्वतम् ।।
गिरत्येवाखिलं पापं भ्रातृवत् सह संस्थितम् ।
पराभवति पाप्मास्य द्वेष्टा निरयगः[१५७] सदा ।।

## भावप्रदीपः

'स एष गिरिः' इत्यादिविद्यान्तरं व्याचष्टे– **स एष भगवानि-त्यादिना** ।। **गिरणात्** गिलनात्संहरणात् । 'गॄ निगरणे' इत्यत इप्रत्ययः । ऋकारस्येर् । **अस्य** सर्वस्य । मन्त्रत्वहेतुत इत्यनन्तरं

१५६. गरणात् इति ह.पाठः
१५७. निरयदः इति ह.पाठः

वक्तृत्वाद् वागित्यध्याहार्यम् । तथाच चष्ट इति चक्षुः, शृणोतीति श्रोत्रम्, मन्यत इति मनः, वक्तीति वाक्, प्रणयतीति प्राण इत्यर्थ उक्तो भवति । 'तं ब्रह्मगिरिः' इति वाक्यं व्याख्याति– **तमेनमिति** ।। तत्र ब्रह्मशब्दार्थः– **गुणपूर्तित इति** ।। गिरिशब्दार्थो **गिरणात्** संहरणादिति । 'गिरति हवा' इत्यादि फलवाक्यं व्याचष्टे– **य एवमिति** ।। वेदनं चापरोक्षज्ञानमेव विवक्षितम् । तस्यैवोक्तसम्पूर्ण-फलहेतुतायाः प्रागुपपादितत्वादिति भावेनोक्तम्– **आपरोक्ष्येणेति** ।। यथा अन्येषामयं गिरिरेवमस्याप्यन्यो गिरिरस्ति चेत्को विशेषोऽस्येति मा शङ्कीति भावेनोक्तं– **शाश्वतमिति** ।। **गिरति** संहरति । पापस्य भ्रातृव्यत्वं घटयति– **भ्रातृवदिति** ।। एकोदरत्वात् । 'परास्ये'ति वाक्यस्यार्थः– **पराभवतीति** ।। **द्वेष्टा** बहिःशत्रुः । स्वस्वकर्मानुसारेण पराभवप्राप्तिः सर्वेषामस्त्येव । अतः कथमिदं ज्ञानिद्वेषस्य फलमित्यत उक्तम्– **सदा निरयग इति** ।। नित्यनिरये पात्यत इत्यर्थः । अथवा ज्ञानिद्वेषिणोऽपि लोके सम्पदाद्युत्कर्षस्यैव दर्शनात्तत्पराभूतिरनुलम्भ-बाधितेत्यत इदमुक्तम् । तथाच ज्ञानिद्वेषस्यैहिकानर्थानुपलम्भेऽपि पारलौकिकानर्थप्राप्तिरबाधितैवेति भावः ।।

### भगवतः असु–प्राण–भूति–अभूतिशब्दवाच्त्वम् तथा उपसनाया फलनिरूपणं च

### उपनिषत्

**स एषोऽसुः । स एष प्राणः । स एष भूतिश्चाभूतिश्च । तं भूतिरिति देवा उपासाञ्चक्रिरे । ते बभूवुः । तस्माद्धाप्येतर्हि सुप्तो भूर्भूरित्येव प्रश्वसिति ।**

**अभूतिरित्यसुराः । ते ह पराबभूवुः । भवत्यात्मना पराऽस्य द्विषन् पाप्मा भ्रातृव्यो भवति, य एवं वेद ।**

असु–प्राण–भूति–अभूतिशब्दनिर्वचनपूर्वकं तच्छब्दानां भगवद्वाचकत्वसमर्थनम्

**भाष्यम्**

असनाद्भगवान् सोऽसुः सर्वस्यापि जनार्दनः ।
प्रकृष्टानन्दरूपत्वात् प्राण इत्यभिधीयते ॥

स एष[१५८] भूतिनामापि ज्ञानैश्वर्यादिभूतिदः ।
अज्ञानादिप्रदातृत्वात् स एवाभूतिनामकः ॥

सुखज्ञानादिगुणदं पूर्णं सर्वगुणैः प्रभुम् ।
उपासते तं वाय्वाद्या देवास्तस्माच्च तेऽखिलाः ॥

बभूवुः सुखसज्ज्ञानपूर्वैः सर्वगुणैर्युताः[१५९] ।
देवानामपि सर्वेषां प्रधानोऽद्यापि मारुतः ॥

जीवेषु सुप्तेषु तत्र स्थित्वा वायुः भूर्भूरिति शंसति

स्थित्वा सुप्तेषु विष्णुं तं भूर्भूरित्येव शंसति ।
भूःशब्दार्थो भूतिरिति वैपरीत्येन चासुराः ॥

[१६०]अभूतिकारकोऽस्माकमैश्वर्यादिगुणोज्झितः ।
इत्येवोपासते तस्मात् पराभूताश्च सर्वशः ॥

---

१५८. एव इति ह.पाठः    १५९. सर्वैर्गुणुर्युताः इति ह.पाठः

१६०. अभूतिकारणः इति ह.पाठः

ज्ञानैश्वर्यादिभिर्हीनाः पेतुरन्धे तमस्यथ ।
य एवं वेद तं विष्णुं भूतिदं भूतिरूपिणम् ॥

भावाभावं च देवानां दैत्यानां चैवमेव तु ।
ज्ञानैश्वर्यादिभिः सोऽपि भवेत् तस्य परात्मनः ॥

प्रसादात् तस्य[१६१] पाप्मा च पराभवति सर्वशः ।

**भावप्रदीपः**

'स एषोऽसुः' इत्यादिना विद्यान्तरमाम्नायते । तद् व्याचष्टे– **असनादिति** ॥ निरसनादित्यर्थः । 'असु क्षेपणे' अस्मादुच्प्रत्ययः । प्राणशब्दं निर्वक्ति– **प्रकृष्टेति** ॥ 'णश्च निर्वृतिवाचकः'[१६२] इति वचनात् णशब्द आनन्दवाची । तथा च प्रकृष्टानन्दः प्रणः, स एव प्राण इति भावः । भूत्यभूतिशब्दयोरर्थमाह– **स एष इति** ॥ 'तं भूतिः' इत्यादिवाक्यं व्याचष्टे– **सुखेति** ॥ सर्वगुणैः पूर्णमिति भूति- रित्यस्यैवार्थान्तरम्। एतेन ज्ञानैश्वर्यादिभूतिद इति यत् प्रागुक्तं तदुपलक्षणमिति सूचितं भवति । ज्ञानैश्वर्यादिगुणसर्वस्वलक्षणभूति- स्वरूपश्चेत्यपि द्रष्टव्यम् । 'ते बभूवु'रिति भवनमात्रं कथं फल- मित्यतः– **सुखसज्ज्ञानपूर्वैः सर्वगुणैर्युता** इत्यध्याहार्यप्रदर्शनेन भवनप्रकारो दर्शितः । 'तस्माद्धाप्ये तर्ही'त्यादि निदर्शनवाक्यं व्याख्याति– **देवानामिति** ॥ सर्वेषामपीत्यन्वयः । एतेन **तस्माद्** देवानां भूतिरित्युपासनाकारित्वादेव **एतर्ह्यपि** अद्यापि देवोत्तमो वायुः

---

१६१. अस्य इति ह्.पाठः, १६२. महा.उद्यो.प. ६८-५ अयं सम्पूर्णश्लोकः-
कृषिर्भूवाचकः शब्दः णश्चनिर्वृतिवाचकः ।
कृष्णस्तद्भावयोगाच्च कृष्णो भवति शाश्वतः ॥

**सुप्तः** सुप्तेषु स्थितः सन् भूर्भूरित्येव **प्रश्वसिति** श्वासरूपेण विष्णुं स्तौतीति तद्वाक्यं व्याख्यातं भवति । भूतिरित्युपासनाकृतौ भूरिति प्रश्वसनं कथं निदर्शनं स्यादित्यतो भूर्भूतिरिति शब्दयोरेकार्थत्वाद्युक्तमेवैतदित्याह– **भूःशब्दार्थ इति** ।। भूःशब्दस्यापि भूतिरित्येवार्थ इत्यर्थः । 'अभूतिरित्यसुराः' इति वाक्यं व्याचष्टे– **वैपरीत्येनेति** ।। तस्यैव विवरणम्– **अभूतिकारक इत्यादि** ।। मिथ्याज्ञानदुःखाद्यभूतिकारकत्वात् स्वयमैश्वर्यादिगुणरूपभूतिरहितत्वाच्चाभूतिरित्यसुरा उपासत इत्यर्थः । 'ते ह पराबभूवुः' इत्येतदर्थतोऽनूद्य व्याचष्टे– **तस्मादिति** ।। अभूतिकारकत्वादिनोपासनादित्यर्थः ।।

'भवत्यात्मने'त्यादिना विद्यावेत्तुः फलमुच्यते । तद् व्याचष्टे– **य एवं वेदेति** ।। एवमित्यस्यैव विवरणम्– **तं विष्णुमित्यादि** ।। भावाभावमिति द्वन्द्वैकवद्भावः । भावमभावं चेति बुद्ध्या विवेकेन चशब्दान्वयः । अथवा चशब्दाद्वेदेत्यस्यानुकर्षः । देवानां **भावं** ते बभूवुरित्युक्तं सुखज्ञानादिगुणयुक्तत्वेन भवनम् । दैत्यानां **चाभावं** 'ते ह पराबभूवु'रित्युक्तमन्धे तमसि पातलक्षणं पराभवं च यो वेद **सोऽप्येवमेव** देववदेव ज्ञानैश्वर्यादिभिर्गुणैर्भवेत् । युक्त इति शेषः । **तस्य** परात्मनः प्रसादादिति परास्तात्पुरस्ताच्च सम्बद्ध्यते । एतेन य एवं विष्णुं भूतिदं भूतिरूपिणं च वेद, तथा देवानां दैत्यानां च सदसदुपासनाभ्यामर्थानर्थफलं च वेद, स **आत्मना** परमात्मप्रसादेन भवति । ज्ञानैश्वर्यादिमानिति शेषः । अस्य द्विषन् भ्रातृव्यवत् स्थितः **पाप्मा** बाह्य आभ्यन्तरश्च शत्रुरा**त्मना** परमात्मप्रसादेन **पराभवति** उक्तरूपं पराभवं प्राप्नोतीति तद्वाक्यं व्याख्यातं भवति ।।

जननमरणमोक्षाणां भगवदधीनत्वकथनम्

उपनिषत्

**स एष मृत्युश्चैवामृतं च । तदुक्तमृषिणा– 'अपाङ् प्राङेति स्वधया गृभीतः' इत्यपानेन ह्ययं यतः प्राणो न पराङ्भवति । 'अमर्त्यो मर्त्येना सयोनिः' इति, एतेन हीदं सर्वं सयोनि, मर्त्यानि हीमानि शरीराणी३, अमृतैषा देवता । 'ता शश्वन्ता विषूचीना वियन्ता न्य१न्यं चिक्युर्न निचिन्वन्ति हैवेमानि शरीराणी३, अमृतैवैषा देवता । अमृतो ह वा अमुष्मिꣳल्लोके सम्भवति, अमृतः सर्वेभ्यो भूतेभ्यो ददृशे, य एवं वेद य एवं वेद ।।२.१.८.।।**

**।। इत्यष्टमः खण्डः, प्रथमाध्यायः समाप्तः ।।**

भाष्यम्

सृष्टिस्थितिलयकर्ता भगवान्

स एष भगवान् विष्णुर्मृत्युदो मोक्षदस्तथा ।
स एव जीवनकरो यदापानेन संयुतम् ।।

प्राणं नियमयत्यस्मिंच्छरीरे पुरुषोत्तमः ।
शरीराद् बहिरेतौ तु यदा निःसारयत्यजः ।।

तदा मृत्युप्रदश्चायं मुक्तानामपि जीवनम् ।
प्राणादेव हि तत्रापि प्राणाधारो जनार्दनः ।।

## भावप्रदीपः

विद्यान्तरमारभ्यते– **स एष इत्यादिना** ।। तद्व्याचष्टे– **स एष इत्यादिना** ।। मृत्युदो मोक्षद इति मृत्स्वमृतशब्दार्थौ । **मृत्युः** संसारः । अनयोरर्थान्तरमपि सप्रकारमाह– **स एवेति** ।। **जीवनकर** इत्यमृतशब्दार्थः । **एतौ** प्राणापानौ । **मृत्युदो** मरणप्रद इति मृत्युशब्दार्थः । नन्वस्तु संसारे शरीरे प्राणनियमनेन जीवनकरत्वं भगवतः, मुक्तौ तु कथम्? तत्र प्राणाभावादित्यत आह– **मुक्तानामपीति** ।। **प्राणादेव** मुक्तमुख्यप्राणादेव । **तत्रापि** मुक्त्यवस्थायामपि । अमुक्तप्राणाभावेऽपि मुक्तब्रह्मत्वमापन्नेन तेनैव प्राणेन तदितरमुक्तजीवनकरो भवति । प्राणस्य तु स्वयमेव जीवनकरो भवति भगवानिति भावः ।।

### मुख्यप्राणस्य मरणराहित्यकथनम्

## भाष्यम्

**[१६३]अवाक्प्राक्च सदा गच्छेद्वायुरानन्दरूपिणा ।**
**अनेनैव गृहीतो हि प्राणोऽपानेन संयुतः ।।**

**अनेन हरिणा यस्मान्नियतो न पराग्भवेत् ।**
**अमर्त्यस्तत्प्रसादेन वायुर्देहैः सह स्थितः ।।**

**अनित्या अपि देहास्ते शश्वत् सन्त्या विमोक्षतः ।**
**स्थूलसूक्ष्मविभागेन किमु वायुर्जगत्प्रभुः ।।**

**नानागती तु तावेतौ वायुः प्राप्नोति केशवम् ।**

---

१६३. अपाक् इति ह.पाठः, अर्वाक् इति प्र.पाठः

**शरीरं तु विनष्टं स्यात्**[१६४] **पञ्चत्वमुपगच्छति ।।**

**जडं तज्जडतामेति चेतना वायुदेवता ।**
**चेतनेशं हरिं याति विरुद्धगमनौ च तौ ।।**

**ऊर्ध्वं गच्छति देवः स देहोऽधः पतति क्षितौ ।**
**दृश्यमेतच्छरीरं चाप्यदृश्या**[१६५] **वायुदेवता ।।**

**भावप्रदीपः**

उक्तार्थे प्रमाणत्वेन मन्त्रं पादशोऽर्धर्चशश्चोदाहृत्य स्वयमेव स व्याख्यायते– **तदुक्तमित्यादिना** ।। तत्रादौ मन्त्रस्याद्यपादं तावद् व्याचष्टे– **अवागित्यादिना** ।। वायुरिति शेषोक्तिः । स्वधये-त्यस्यार्थः– **आनन्दरूपिणेति** ।। **अनेन** जनार्दनेन **गृहीतः** प्रेरितः । एतेन वायुः **स्वधया** सुखेनानन्दरूपिणा हरिणा **गृभीतो** गृहीतः 'हृ गृहोर्भश्छन्दसि'[१६६] इति हस्य भः, प्रेरितस्सन् । **अपाङ्** अवाग् **एति** गच्छति, अपानरूपेणाधो गच्छति । **प्राङ्** प्राग् ऊर्ध्वं च **एति** प्राणरूपेणोर्ध्वं च गच्छतीति तद्वाक्यं व्याख्यातं भवति । अथ तद्व्याख्यानरूपं 'अपानेन ही'त्यादिकमुपनिषद्वाक्यं व्याचष्टे– **प्राणोऽपानेनेति** ।। **अपानेन संयुतः** प्राणोऽनेन हरिणा यस्मात् **नियतः** प्रेरितस्तस्मान्न **पराक् भवेत्** देहाद्बहिर्न भवति, किन्तु तत्र स्थित्वा स्वव्यापारं करोत्येवेत्यर्थः । एतेनापानेन सहितोऽयं प्राणो **हि** यस्माद् यतो **नियतः** प्रेरितस्तस्मान्न पराङ् भवतीति तद्वाक्यं विवृतं भवति । 'अमर्त्यो मर्त्येनास योनिः' इति मन्त्रवाक्यं

१६४. सत् इति ह.पाठः
१६५. अदृश्यो इति ह.पाठः
१६६. वार्तिकमिदं (५९२ सि.कौ.सू.सं)

व्याचष्टे– **अमर्त्य इति** ।। **तत्प्रसादेन** हरिप्रसादेनेत्यनेन स्वधयेत्यस्यात्राप्यनुवृत्तिमभिप्रैति । 'मर्त्येना सयोनिः' इत्यस्यार्थः– **देहैः सह स्थित इति** ।। एतेन मर्त्येनेत्येकवचनं समुदायापेक्षम् । **मर्त्यै**र्नाशशीलैर्देहैः **स्वधया** आनन्दरूपिहरिप्रसादेनाऽ**मर्त्यो**ऽविलुप्तज्ञानो वायुः **सयोनिः** साधिष्ठानः । तैः सह स्थित इति यावत् । धान्येन धनवानितिवदयं प्रयोग इति तद्वाक्यं व्याख्यातं भवति । 'एतेन हीदं सर्वं' इत्यादि तद्व्याख्यानरूपमुपनिषद्वाक्यमपि व्याख्यातं भवति । तत्र 'मर्त्यानि हीमानि शरीराणीति' 'अमृतैषा देवते'ति च मन्त्रस्थमर्त्यामर्त्यपदव्याख्यानम् । तथा च **एतेन** प्राणेनेदं सर्वशरीरजातं **सयोनि** योनिशब्दो भावप्रधानः, अधिष्ठानत्वेन सहितम् । प्राणस्याधिष्ठानरूपमिति यावदिति तद्वाक्यं व्याख्यातं भवति । इदानीं 'ता शश्वन्ता' इति मन्त्रोत्तरार्धं व्याख्याति– **अनित्या अपीति** ।। मर्त्यशब्दार्थानुवादोऽयम् । **शश्वत्** अनादिकालतः सन्ति । साक्षात् प्रवाहतश्च । तत्र सूक्ष्मशरीरं साक्षादेवानादि, स्थूलं तु प्रवाहत इति भावेनोक्तम्– **स्थूलसूक्ष्मविभागेनेति** ।। यन्नियमेन जडशरीरसम्बन्धोऽपि जीवानामनादिः किमुत तदा जगत्प्रभोः परचेतनस्य वायोः सम्बन्ध इति कैमुत्यार्थः । इदं च तत्तत्कल्पे तत्तद्वायुमुपादायैव । न त्वेकमेव वायुम् । तथात्वे वाय्वन्तरवैय्यर्थ्यापत्तेः । कस्यापि ब्रह्मत्वापत्तेरवकाशाभावेनामोक्षापत्तेश्च । एवं शश्वन्तेत्यस्य शाश्वतावित्यर्थमभिधाय 'विषूचीना' इत्यस्यार्थमाह– **नानागती चेति** ।। विष्वगञ्चनाद् विषूचीनावुच्येते इति भावः । एतदेव विशदयति– **वायुरिति** ।। ननु भवेद्वायोः केशवप्राप्तिर्गतिरूपा । शरीरस्य तु विनाशः कथं गतिः । अविनष्टस्यैव गतिसम्भवादित्यतो 'विनष्टं'

इत्येतद् विवृणोति– **पञ्चत्वमिति** ।। स्वोपादानभूतपञ्चभूतात्मकत्वमित्यर्थः । तथाच पञ्चत्वप्राप्तेरेव विनाशशब्दार्थत्वाद् विनाशस्यापि गतिरूपतोपपद्यत इति भावः । इममेवार्थं प्रकारान्तरेणापि निरूपयति– **जडमिति** ।। **तत्** शरीरम् । **जडतां** स्वोपादानरूपताम् । तथाच जडस्य शरीरस्य जडताप्राप्तिश्चेतनस्य वायोश्चेतनेशप्राप्तिरित्येतयोर्गती नानारूपे इति भावः । नियन्तेत्यस्यार्थमाह– **विरुद्धगमनौ च ताविति** ।। एतदेव विशदयति– **ऊर्ध्वमिति** ।। जीवमादाय परलोकं गच्छतीत्यर्थः । 'पञ्चत्वमुपगच्छति' 'जडतामेति' 'अधः पतती'त्येतत् सर्वं स्थूलदेहविषयम् । सूक्ष्मदेहस्यानादिनित्यत्वेन पञ्चत्वादिप्राप्तेरयोगात् । स तु मुक्तिकाले जीवाद्वियुज्यत इति सम्बन्धमात्रमनित्यम् । 'न्यन्यंचिक्युर्न चुक्युरन्यं' इत्यस्यार्थमाह– **दृश्यमेतदिति** ।। चापिशब्दौ शरीरवाय्वोः प्रागुक्तविरुद्धधर्मसमुच्चायकौ । एतच्छरीरं दृश्यं च । वायुदेवता चादृश्यापि न केवलं विषूचीनादिरूपेति योजना । एतेन निचिन्वन्तीत्यादि तद्व्याख्यानरूपमुपनिषद्वाक्यमपि व्याख्यातं भवति । **इमानि** शरीराणि **निचिन्वन्ति** जनाः पश्यन्ति । तथा चैतानि दृश्यानीति यावत् । एवशब्दस्य शरीराण्येवेति सम्बन्धः । तेन न तु वायुं विचिन्वन्तीति लभ्यते । ततश्च न निचिक्युरन्यमित्यस्यापि व्याख्यानसङ्ग्रह इति । 'अमृतैषा देवते'ति तु विषूचीनावियन्तेत्यस्य व्याख्यानरूपम् । **अमृता** देहवत्पञ्चत्वादिहीना । एषा वायुरूपा देवतैवामृतेत्येवशब्दान्वयः । तेन शरीराणि तु नैवमिति लभ्यते । तथा चेतौ विषूचीनौ वियन्तौ च सिद्ध्यत इति ।।

### अमृतत्वादिना मुख्यप्राणज्ञानफलनिरूपणम्

#### भाष्यम्

**य एवं वेद तं वायुममृतं सर्वनायकम् ।**
**पूर्णानन्देन हरिणा गृहीतं तद्वशं सदा ।**
**स मुक्तो लोकमाप्नोति विष्णोर्मुक्तैश्च दृश्यते ।। इति च ।**

#### भावप्रदीपः

'अमृतो हवे'ति फलवाक्यं व्याचष्टे– **य एवं वेदेति** ।। एवमिति पूर्वोक्तस्य सर्वस्यापि परामर्श इति भावेन विशदयति– **अमृतमिति** ।। अमृतैषा देवतेत्युक्तार्थपरामर्शोऽयम् । अत एवोपनिषद्यपि परामर्श-सौकर्यार्थममृतैवैषा देवतेति पुनरप्युक्तम् । अमृतत्वेनोपासनस्या-मृतत्वफलप्राप्तिर्युक्तैवेति ज्ञापनार्थं च । 'तं यथा यथोपासते' इति न्यायात् । 'अपाङ् प्राङेती'त्याद्यर्थसूचनम्– **सर्वनायकमिति** ।। 'स्वधया गृभीतः' इत्यस्य **पूर्णानन्देन हरिणा गृहीतमिति** ।। तस्यैव व्याख्यानवाक्ये **यद्** यत इत्युक्तम् । तदर्थकथनम्– **तद्वशं सदेति** ।। 'अमृतो हवा अमुष्मिन् लोके सम्भवती'त्यस्यार्थः– **स मुक्त इत्यादि** ।। 'अमृतः सर्वेभ्यो ददृशे' इत्यस्य 'न प्रेत्य सञ्ज्ञास्ती'ति मुक्तस्यामुक्ताज्ञेयत्वोक्तेस्तद्विरोध इत्याशङ्कानिरासाय सर्वशब्दं सङ्कुचितवृत्तिकमभिप्रेत्य व्याचष्टे– **मुक्तैश्चेति** ।।

### 'एष ब्रह्म' इत्यत्र वासुदेवादिचतुर्मूर्तयः प्रतिपाद्याः

#### भाष्यम्

**'ब्रह्म, पन्थाः, सत्यं, कर्मे'[१६७]ति तस्य नारायणस्य वासुदेवाद्याः क्रमेण चतस्रो मूर्तयः । नासिकायां यन्नेत्रयोर्मध्ये विनतमिव किञ्चिन्नतस्थानं तत्सूर्यलोकस्थानीयं विद्यात् ।**

१६७. २-१-१ (१ पुटम्)

## भावप्रदीपः

एवं प्रथमाध्यायं समग्रं प्रमाणेन व्याख्याय तत्र प्राप्तानुपपत्तिशङ्कां परिजिहीर्षुः क्वचिदव्याख्यातं च व्याचिख्यासुरनुक्तं प्रमेयविशेषं च विवक्षुः 'एष पन्था' इति प्रथमवाक्ये तावद् विशेषमाह– **ब्रह्म पन्था इति** ।। **वासुदेवाद्याः** वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाः क्रमेणोच्यन्त इति शेषः । [१६८]'नित्यं स्वप्राप्तिहेतुत्वात्' इत्याद्युक्तप्रवृत्तिनिमित्तानां सर्वत्र साम्येऽपि प्रमाणविशेषानुसारेणात्र श्रौतक्रमोल्लङ्घनेन निर्देशः । स तु प्रमाणविशेषः, स्वस्य परमाप्तत्वात् स्वोक्तार्थे क्वचित्प्रमाणानुदाहरणेऽपि न विप्रतिपत्तिः सद्भिः कार्येति ज्ञापयितुं नोदाहृतः । 'तदेतद् ब्रध्नस्य विष्टपम्', 'यदेतन्नासिकायै विनतमिव' इत्येतत् 'निहितश्चैतल्लोको नासिकायां नतस्थले'[१६९] इत्यादिना प्राग् व्याख्यातम् । तत्र नासिकायां नतस्थानमेव नास्ति, अनुपलम्भात् । सत्त्वे वा तस्येवशब्दोऽनुपपन्नः । नहि तस्यैव तत्सादृश्योक्तिः सम्भवति । ब्रध्नविष्टपत्वमपि तस्यानुपपन्नम् । अन्तरिक्षस्यैव सूर्यलोकत्वात्तस्य नासिकानतस्थले निहितत्वासम्भवाच्चेति शङ्कानिरासाय स्पष्टं व्याचष्टे– **नासिकायामिति** ।। नेत्रयोर्मध्य इत्यनेन नासिकायामित्यस्य नासिकामूलभाग इत्यर्थ उक्तो भवति । तेनानुपलम्भशङ्कानिरासः । इवशब्दश्च किञ्चिदर्थको विवक्षितो न सादृश्यार्थकः ।

[१७०]'किञ्चित्त्वे चोभयत्वे च संशये चावधारणे ।
इवशब्दः प्रयुज्येत न्यक्कारेऽपि च पण्डितैः'

---

१६८. ऐत.भा. २-१-१ (१३-पटम्)

१६९. ऐत.भा. २-१-२ (३०-पुटम्)  १७०. कर्म ९

इति वचनादतो नोक्तानुपपत्तिः । ब्रध्नलोकत्वं तु तस्याध्यात्मं ब्रध्नादिष्ठानत्वेन तल्लोकस्थानीयत्वाद् युज्यते । अत एव 'निहितश्चैव तल्लोकः'[१७१] इत्येतदपि गौणमेवेति न काप्यनुपपत्तिरिति ॥

स्वरस्पर्शादिवर्णानां विभागोक्तेः प्रयोजनकथनम्

**भाष्यम्**

**तथेति निर्णयः । इरामया इति दैर्घ्यमवधारणार्थम्[१७२] ।**

**'दैर्घ्यं प्लुतं च हिङ्कारो[१७३] बिन्दुरप्यवधारणे' इति शब्दनिर्णये ।**

**ब्रह्मा हैनं ता३ ई ते ।**

**देशतः कालतोऽर्थाच्च बलतो गुणतस्तथा ।**
**स्वरूपतोऽपि नैव स्याद् भेदोऽत्यल्पोऽपि यत्र हि ॥**

**केवलैश्वर्ययोगेन यत्र सङ्ख्यादिवद्भवेत्[१७४] ।**
**स्वरस्पर्शविभागेन तत्रोक्तिः स्याद् विभक्तिषु ॥**

**अचिन्त्यात् तु तथैश्वर्यादिकोऽपि बहुरूपवान्[१७५] ।**
**प्रकाशयेद्यतो विष्णुः सर्वत्राप्यविशेषवान् ॥**

**न विशेषो हि रूपाणां मत्स्यादीनां कथञ्चन ।**
**नैश्वर्ये न बले चैव नानन्दादिगुणेष्वपि ॥**

**इत्यादिशब्दनिर्णयवचनात् ।**

---

१७१. ऐत.भा. २-१-२ (३०-पुटम्)

१७२. अवधारणार्थे इति ह.पाठः १७३. हुङ्कारः इति ह.पाठः

१७४. सङ्ख्याद्विवद्भवेत् इति ह.पाठः १७५. बहुरूपवत् इति ह.पाठः

**द्विवचनमत्र व्यवहारमात्रमिति दर्शयितुं 'ता' इत्युक्तम् ।**

**संहितायां यत्र दैर्घ्यं पदे यत्र न विद्यते ।**
**उक्तार्थस्य महाधिक्यं श्रुतेस्तत्र विवक्षितम् ।।**

**इत्यतो 'ब्रह्माहे'ति दैर्घ्यमपि परब्रह्मत्वविवक्षया ।**

**भावप्रदीपः**

'यथा पृथिवी तथा यथाऽन्तरिक्षं तथा' इत्यादिनाऽऽध्यात्मं मुखादेरधिदैवतपृथिव्यादिदृष्टान्तकथनं व्यर्थम् । पृथिव्यादेरुक्थत्ववत् मुखादेरपि तत्सम्भवादित्यत आह– **तथेति निर्णय इति** ।। यथा तथेति दृष्टान्तपूर्वककथनमुच्यमानार्थस्यासम्भावनाशङ्कानिरासेन निर्णयार्थमित्यर्थः । 'स इरामयः' इत्येकवचनान्तमुक्त्वा 'यद्धीरामयास्तस्माद्धिरण्मयः' इति बहुवचनान्तत्वेनानुवादः कुत इत्याशङ्क्य, नेदं बहुवचनम्, किन्त्वेकवचनस्यैव दैर्घ्यमित्याह– **इरामया इति** ।। दैर्घ्यमपि कुत इत्यत आह– **अवधारणार्थ इति** ।। इरामय एवेत्यर्थकमित्यर्थः । तत्राभिधानं पठति– **दैर्घ्यमिति** ।। 'ब्रह्मा हैव ता३इ' इत्येतत् 'ते उभे ब्रह्म तत्पर'मिति व्याख्यातम् । तत्र ते इति कस्य पदस्य व्याख्यानमित्यतस्तद्वाक्यमनूद्य दर्शयति– **ब्रह्मेति** ।। ते इति वक्तव्ये कुत एवं विभागेनोक्तिरित्यतस्तदभिप्रायं प्रमाणवाक्यमुदाहृत्य दर्शयति– **देशत इति** ।। क्वचिद्देशतो भेदः यथा मेरुविन्ध्ययोः । क्वचित्कालतः यथाऽतीतवर्तमनयोः । क्वचित् **अर्थात्** प्रयोजनतः, यथा जलाहरणप्रावरणादिरूपाद् घटपटयोः । क्वचिद्बलतः यथाऽजगजयोः । क्वचिद्गुणतः जलानलयोः । क्वचित्समदेशकालबलगुणयोरपि स्वरूपत एव । यथा यमलयोः । एवंविधो भेदोऽल्पोऽपि[१७६] यत्र नैव

१७६. अत्यल्पोऽपि इति ख.पाठः

स्यात्, **केवलेनैश्वर्ययोगेन** अचिन्त्याद्भुतशक्त्यैव, यत्र **सङ्ख्या** द्वित्वादिरूपा । द्विवत् द्विशब्दो भिन्नपरः भिन्नेष्विव भवेत् । **तत्र** तस्मिन् विषये प्रयुज्यमानासु विभक्तिषु सुबन्तपदेष्विति यावत् । **स्वरस्पर्शविभागेन** अकाराद्याः स्वराः, कादयो मावसानाः स्पर्शाः । तेषां मिथो **विभागेनोक्तिः** प्रयोगः स्यादित्यर्थः । तत्रोदाहरणमाह– **अचिन्त्यादिति** ।। तुरवधारणे । ऐश्वर्यादिवेति सम्बद्ध्यते । **एकोऽपि** भेदहीनोऽपि । विष्णुर्बहुरूपवान् भूत्वा प्रकाशयेत् । आत्मानमिति शेषः । नन्वभिन्नेऽपीन्द्रार्जुनादौ ज्ञानैश्वर्यादिगुणेषु आवृतत्वादिरूपविशेषदर्शनात्तद्वद्विष्णुरूपेष्वपि विशेषसम्भवे तद्बला-देव द्वित्वादिव्यवहारोपपत्तौ किमचिन्त्यैश्वर्याङ्गीकारेणेत्यत आह– **यत इति** ।। सर्वत्रापि यतो विष्णुर्विशेषवान्न भवति । अतोऽ-चिन्त्यैश्वर्यादेव बहुरूपवानिति पूर्वेण सम्बन्धः । सर्वत्रेत्युक्तमेव विशदयति– **न विशेष इति** ।। कथञ्चनेत्यस्यैव विवरणम् **नैश्वर्ये चेत्यादि** ।। चापिशब्दाः परस्परसमुच्चये । एवशब्दस्य नैवेति सम्बन्धः । व्यवहारमात्रं ननु भेदनिमित्तकमुक्तरूपविशेषानिमित्तकं वेत्यर्थः । 'ब्रह्मा हे'त्यत्र दैर्घ्यप्रयोजनं सप्रमाणकमाह– **संहितायामिति** ।। **परब्रह्मविवक्षया** ब्रह्मशब्देन परमेव ब्रह्म ग्राह्यमिति विवक्षयेत्यर्थः । अत एव प्राक् प्रमाणे [१७७]'ब्रह्म तत्पर'मित्युक्तमिति भावः । अपिशब्दः पूर्वोक्त 'ता इ' इति स्वरस्पर्शविभागोक्तिप्रयोजनेन सहात्र दैर्घ्य-प्रयोजनस्य समुच्चयार्थः । न केवलं 'ता इ' इत्युक्तिः सप्रयोजना, किन्तु दैर्घ्यमपीति ।।

---

१७७. ऐत.भा. २-१-४ (३८-पुटम्)

## नारायणस्य देवत्तमत्वकथनम्

### भाष्यम्

**[178]अद उ एव नारायणाख्यमधिकं दैवतं अन्यानि दैवतमात्राणि । स्थानान्तरेऽन्येषामप्यधिदैवत्व[179]कथनं कर्मदेवाद्यपेक्षया । मुख्याधिदैवतं नारायण एव ।**

### भावप्रदीपः

'अद उ आविरधिदैवतं' इति वाक्यं, 'अधिदैवं स एवैक आधिक्यात्पुरुषोतमः । देवमात्रास्तदन्ये तु'[180] इत्यादि प्रकृ प्रमाणेन व्याख्यातम् । तत्र विष्ण्वन्येषां देवमात्रतयाऽधिदैवत्वाभावे कथं तेषां भागवतादिषु 'साध्यात्मं साधिदैवं च'[181] इत्यादि बहुलमधिदैवत्वोक्तिरित्यतस्तद्विरोधं विवक्षाविशेषेण परिहर्तुं तच्छङ्कोद्दङ्कनाय प्रस्तावनार्थं पूर्वोक्तमर्थमनुवदति– **अद उ एवेति** ।। तत्र उ इत्यनुवादेन एवेति तस्यार्थकथनम् । एवं प्रस्ताव्योक्तशङ्कां परिहरति– **स्थानान्तर इति** ।। भागवतादौ । **कर्मदेवाः** बल्याद्याः । आदिपदेनाजानजादयः । तदपेक्षया ब्रह्मादिगणपत्यन्तानामाधिक्यादधिदैवत्वं कथ्यते । न सर्वापेक्षया । अतो न विरोध इति भावः । तर्ह्युभयोरप्यधिदैवत्वसाम्यादवान्तरवैलक्षण्यस्य सर्वत्र सत्वेनातिप्रसङ्गित्वात्कथमद उ इत्यवधारणमित्यत आह– **मुख्येति** ।। मुख्यामरव्ययोर्मुख्यस्यैव ग्राह्यत्वादिति भावः ।।

---

१७८. अद एव इति ह.पाठः

१७९. अधिदैवतत्व इति ह.पाठः १८०. ऐत.भा. २-१-५ (४८पुटम्)

१८१. भाग. ३-७-९

देवानां भगवत्परिचरणप्रकारकथनम्

भाष्यम्

'तस्योष्णिग्लोमानी'त्यादि लोमसूष्णिगित्याद्यर्थे । 'सप्तसु प्रथमा' इति सूत्रात् । 'सच्छब्दोभिश्छन्नः' इति वाक्यशेषात् । 'ब्राह्मणोऽस्य मुखमासीत्'[१८२] इत्यादिवच्च ।

अङ्गेषु यस्य छन्दांसि देवा लोका मखा अपि ।
तद्वशा नियता नित्यं नमस्तस्मै परात्मने ।।[१८३]इति स्कान्दे ।

'अस्मै पुण्याय कर्मणे' इत्येतमुद्दिश्य जीवानां पुण्यकर्म कर्तुम् । तैर्हि स्तुत्यादिकर्माणि कृतानि श्रोत्रेण शृणोति भगवान् । दिग्भ्योऽप्यन्य एव विशृणोति जीवः । अन्येषां जीवानां श्रवणजं भोगं स्वश्रोत्रेण दिग्भिरननुगृहीतेनैव भगवान् भुङ्क्ते ।

भावप्रदीपः

'तस्योष्णिक् लोमानि' इत्यादिकं 'विष्णोर्वायोश्च लोमादौ छन्दांस्येवाश्रितानि च'[१८४] इति व्याख्यातम् । नैतद्युक्तम् । तथात्वे सामानाधिकरण्यायोगादित्याशङ्क्य तत्रोपपत्तिमाह– **तस्येति** । प्रथमायाः सप्तम्यर्थत्वात् । समानाधिकरणमेवेदं न भवतीति भावः । तत्र ज्ञापकं महाव्याकरणसूत्रमुदाहरति– **सप्तस्विति** ।। बहिरङ्गं ज्ञापकमुक्त्वाऽन्तरङ्गमप्याह– **सच्छन्दोभिरिति** ।। वाक्यशेषे छन्दसां विष्णुच्छादकत्वोक्त्या छन्नछादकयोर्भेदस्यैव प्राप्तेर्लोमादेश्च विष्णु-

---

१८२. पुरु.सू. १२ १८३. इति च इति ह्.पाठः

१८४. ऐत.भा. २-१-६ (५९-पुटम्)

भिन्नत्वाच्छन्दोभ्योऽभेदानुपपत्त्या प्रथमायाः सप्तम्यर्थत्वं विवक्षितमेवेति भावः । दृष्टान्तमुखेनाप्युपपादयति– **ब्राह्मणोऽस्येति** ।। आदिपदेन यूपादित्य इत्यादनां ग्रहणम् । अथवा समानाधिकरणमेवेदमस्तु । न च तर्हि अभेदापत्तिः । तदाश्रयस्य तच्छब्दवाच्यतासद्भावादिति भावेनाह– **ब्रह्मणोऽस्येति** ।। यथोक्तं सूत्रभाष्ये[१८५]–

'यस्माद् यज्जायते चाङ्गाल्लोकवेदादिकं हरेः ।
तन्नाम वाच्यमङ्गं तद् यथा ब्रह्मादिकं मुखम्' इति ।

यद्वा गौणोऽयं व्यपदेश इति भावेनाह– **ब्राह्मणोऽस्येति** ।। उक्तार्थे स्पष्टं च प्रमाणणाह– **अङ्गेष्विति** ।। 'इन्द्रादयो बाहव आहुरस्य'[१८६] 'पातालमेतस्य हि पादमूलम्'[१८७] इत्याद्यान्यत्रोक्तेस्तात्पर्यकथनम्– **देवलोका इत्यादि** ।। नियतास्तद्वशा इति नियमेन तद्वशा इत्यर्थः ।।

'श्रोत्रेण सृष्टाः' इति वाक्ये चन्द्रमा अस्मै पुण्याय कर्मणे पूर्वपक्षापरपक्षान् विचिनोतीत्युच्यते । तत्र भगवत एव पुण्यकर्मसिद्ध्यर्थं पूर्वपक्षापरपक्षान् विचिनोतीति प्रतीतिनिरासाय प्रक् प्रमाणेन व्याख्यातत्वादिदानीं तदनूद्य व्याचष्टे– **अस्मा इति** ।। एतं भगवन्तमुद्दिश्येत्यनेनेयमुद्देशचतुर्थीति दर्शितं भवति । जीवानामिति शेषोक्तिः । अन्यथाऽस्य परिचरणरूपत्वासम्भव इति भावः । नन्वेवमपीदं कथं भगवच्छ्रोत्रपरिचरणरूपं स्यादित्यतस्तद्घटयति–

१८५. १-२-२६ 　 १८६. भाग.पु.२-१-२७

१८७. भाग.पु २-१-२९

**तैर्हीति** ।। जीवैरित्यर्थः । तथाच चन्द्रमसा स्वकलावृद्धिक्षयाभ्यां पूर्वपक्षापरपक्षविभागे क्रियमाणे तत्र तत्र जीवैर्देवपित्रधिष्ठानभेदेन भगवतः स्तुत्यादिकर्माणि क्रियन्ते । ततश्च तैः कृतानि स्तुत्यादि-कर्माणि भगवान् स्वश्रोत्रेण शृणोति । अत इदं तत्परिचरणं भवत्येवेति भावः । 'दिग्भ्यो विशृणोती'त्येतत्प्रागव्याख्यातत्वाद् व्याचष्टे– **दिग्भ्योऽपीति** ।। अपिशब्दस्तुशब्दार्थः । दिग्देवताप्रेरणया तु भगवदन्यो जीव एव शृणोति । नतु भगवानित्यर्थः । तर्ह्यस्य भगवत्परिचरणरूपत्वं कथमित्यत एतदेव वाक्यं तदुत्तरतयाऽपि व्याचष्टे– **अन्येषामिति** ।। **श्रवणजं भोगं** वीणादिशब्दश्रवणजं सुखम् । **स्वश्रोत्रेण** जीवश्रोत्रच्छुरितेन दिग्देवताभिरप्रेरितेनैव भुङ्क्त इत्यर्थः । एतेन दिग्भ्यः इति ल्यब्लोपनिमित्ता पञ्चमी । दिशो विहाय तत्प्रेरणां विनेति यावत् । **विशृणोति** विशेषेण श्रवणजं सुखं भुङ्क्त इति तद्वाक्यं व्याख्यातं भवति । तथाच जीवश्रोत्रस्थभगवच्छ्रोत्रस्य श्रवणजभोगसिद्ध्यर्थं शब्दश्रवणाय जीवश्रोत्रप्रेरणं भगवच्छ्रोत्र-परिचरणरूपं भवत्येवेत्याशयः ।।

### जीवानां सृष्ट्यादिकर्तृत्वाभावसमर्थनम्

### भाष्यम्

**न च जीववागादिना पृथिव्यग्न्यादकं सृष्टमित्यत्र किञ्चिन्मान-मस्ति । 'मुखादिन्द्रश्चाग्निश्चे'[१८८]त्यादिना भगवतः सकाशाद्धि सर्वेषां सृष्टिः प्रसिद्धा । सृष्टिभेदादन्यथावचनम्[१८९] ।**

---

१८८. पुरु.सू १२

१८९. सृष्टिभेदादन्यथा अन्यथावचनम् इति ह्.पाठः

न च मुख्यकारणाङ्गीकारे विरोधे [१००]औपचारिकं कारणमङ्गीकर्तुं युक्तम् । अतिप्रसङ्गात् । न हि यत्किञ्चित् कारणत्वमस्तीत्येतावता ब्राह्मणस्य चण्डालः पितेत्युच्यते । पितृत्वं चात्रोक्तं 'वाचं पितर'मित्यादिना ।

**मनुष्याणां[१०१] तु यत्कर्म न देवोत्पत्तिकारणम् ।**
**दैवतैरुपकारस्तु क्रियते नरकर्मणाम्[१०२] ।।**

**देवानां कर्मणैवैते जायन्ते सर्वमानुषाः ।**
**प्रधानत्वान्न देवानां नृकर्मोत्पत्तिकारणम् ।। इति च ब्रह्माण्डे ।**

**भावप्रदीपः**

अत्राहुः । 'अथातो विभूतयोऽस्य पुरुषस्ये'ति पुरुषपदेन जीव एव उच्यते । 'तस्य वाचा सृष्टा'वित्यादिना वागादिभिः पृथिव्यादि-स्रष्टृत्वमपि तस्यैव कथ्यत इति । तद्दूषयति– **न चेति** ।। प्रमाणविरुद्धं च तदित्याह– **मुखादिन्द्र इति** ।। पुरुषसूक्तं हि विष्णुमात्राभिधायीति सकलश्रुतिस्मृतिसिद्धम् । तथाहि– 'सूक्तेन पौरुषेणैनं यजन्त्यध्यात्मकोविदाः'[१०३] इति पैङ्गिश्रुतिः । 'यथा हि पौरुषे सूक्ते विष्णुरेवाभिधीयते'[१०४] । 'यथा हि पौरुषं सूक्तं नित्यं विष्णुपरायणम्'[१०५] । 'यथा हि पौरुषं सूक्तं विष्णोरेवाभिधायकम्'[१०६] इत्यादिस्मृतयश्च । तत्रच विष्णुमुखाद्यवयवैरेवाग्न्यादीनां सर्वेषां देवा-

---

१००. औपचारिककारणम् इति ह.पाठः,१०१. मानुषाणां इति ह.पाठः
१०२. नरकर्मणा इति ह.पाठः १०३. अनु. १-१-२०१
१०४. ब्र.सू.भा १-१-२६ १०५. ब्र.सू.भा १-२-२५
१०६. ब्र.सू.भा. उदा.प्र.वचनम् १-२-२६

नामुद्भवो 'मुखादिन्द्रश्चाग्निश्च'[१९७] इत्यादिनाऽभिधीयते । अतस्तद्विरुद्धमिदं व्याख्यानमनुपपन्नमेवेति भावः । नन्वस्तु पुरुषसूक्तस्य विष्णुपरत्वम्, तथापि नात्र तद्विरोधः शङ्क्यः । ऐकार्थ्याभावेन समाख्यारूपत्वाभावात् । तथाहि– 'मुखादिन्द्रश्चाग्निश्च' इतीन्द्राग्न्योर्मुखजत्वं तत्रोच्यते । अत्र पृथिव्यग्न्योर्वाग्जत्वम् । वाक्शब्दो मुखोपलक्षण इति चेत्, तथापि [१९८]'पद्भ्यां भूमिरजायत' इति पज्जातायाः पृथिव्या मुखजत्वमनुपपन्नमेव । [१९९]'नाभ्या आसीदन्तरिक्षं' इत्यन्तरिक्षस्य नाभिजत्वं तत्रोच्यते । अत्र तु प्राणजातत्वम् । [२००]'शीर्ष्णो द्यौः समवर्तत' इति तत्र दिवः शीर्षजातत्वम् । अत्र चक्षुर्जातत्वम् । चन्द्रमसश्च मनोजातत्वं तत्र । अत्र श्रोत्रजत्वम् । अत एवमन्यथावचनादसमाख्यात्वेन तद्विरोधशान्त्यै जीववागादिजातत्वमेवात्रावश्यं कल्पनीयमित्यत आह– **सृष्टिभेदादिति** ।। तथाच पृथिव्यादीनां बहुरूपत्वात्सृष्टिविशेषेष्वेकैकस्यापि भगवदनेकाङ्गजातत्वोपपत्याऽविरोधेन समाख्यात्वसिद्धेरत्र देवानां जीवाङ्गजातत्वाङ्गीकारे तद्विरोधो दुष्परिहर इति भावः ।।

ननु भगवदवयवसृष्टानामपि देवानां जीवावयवजातत्वोक्तिर्युज्यते । जीवावयवानामपि मुखादिशब्दवाच्यत्वात् । तावन्मात्रेणैव तथाव्यवहारोपपत्तेरित्यत आह– **न चेति** ।। मुख्यार्थस्य विरोधैकापोद्यत्वादत्र च भगवदवयवजातत्वाङ्गीकारे बाधकाभावान्न वृथौपचारिकं जीवावयवरूपं कारणमङ्गीकार्यमित्यर्थः । कुत इत्यत आह– **अति-**

---

१९७. पुरु.सू. १३
१९८. पुरु.सू. १४
१९९. पुरु.सू. १४
२००. पुरु.सू. १४

**प्रसङ्गादिति** ।। अतिप्रसङ्गमेव विवृणोति– **न हीति** ।। **यत्किञ्चित् कारणत्वम्** यत्किञ्चित्पितृकत्वम् । ननु चण्डालस्य ब्राह्मणं प्रति पितृत्वोत्त्ययोगेऽपि कथञ्चित्[२०१] तदुत्पत्त्युपकारकत्वादिना कारणत्वमात्रोक्तिः सम्भवत्येव । तद्वदत्रापि जीवमुखादीनां देवपितृत्वायोगेऽपि कथञ्चित्कारणतामात्रविवक्षया 'तस्य वाचा सृष्टौ' इत्याद्युक्तिः किन्न स्यादित्यत आह– **पितृत्वं चेति** ।। पितृत्वमेवात्र स्पष्टमुच्यते । नोत्पत्तावुपकारकत्वमात्रम् । येन कथञ्चित् कारणताविवक्षा कर्तुं शक्येतेति भावः ।

किञ्च कथञ्चित्कारणत्वमपि नात्र विवक्षितुं युक्तम् । मानुषकर्मणां देवोत्पत्तिं प्रति कथञ्चिदप्युपकारत्वाभावात् । प्रत्युत देवकर्मणैव मानुषाणां तत्कर्मणां च जायमानत्वादिति प्रमाणेनैवाह– **मानुषाणामिति** ।। तत्कुत इत्यत आह– **प्रधानत्वादिति** ।। देवानां मानुषापेक्षया प्रधानत्वात् न नृणां कर्म देवानामुत्पत्तौ कारणमिति योजना ।।

### अस्या उपनिषदो महिदासोपदेशत्वकथनम्

### भाष्यम्

**'आह महिदास ऐतरेयः' इति तु सर्वस्य वचनस्य तदीयत्वज्ञापनार्थं,[२०२] न तु सन्निहितस्यैव । यथा 'इन्द्रं कुत्सः'[२०३] इत्यादि । यथा च 'पूर्वं तु बादरायणो हेतुव्यपदेशात्'[२०४] इति ।।८।।**

**।। इति प्रथमोध्यायः ।।**

२०१. कथञ्चित् इति पदं क मातृकायां नास्ति

२०२. प्रकाशनार्थं इति ह.पाठः २०३. ऋक्.सं १.१०६.६

२०४. ब्र.सू ३-२-४२

**भावप्रदीपः**

आह महिदास ऐतरेय इत्युक्त्यैतदेव महिदासवचनं नान्यदिति प्रतीयते । ततश्चास्या उपनिषद ऐतरेयत्वप्रसिद्धिर्व्याहन्येत इत्यतस्तथोक्तेरभिप्रायमाह– **आह महिदास इति** ।। अत्र दृष्टान्तमाह– **यथेति** ।।

'इन्द्रं कुत्सो वृत्रहणं शचीपतिं काटे निबाळ्ह ऋषिरेह्वदूतये ।
रथं न दुर्गाद्वसवः सुदानवो विश्वस्मा नो अहंसा निष्पिपर्त न'[२०५]

इत्यत्र यथा समस्तस्यापि सूक्तस्य कुत्सवाक्यत्वज्ञापनाय कुत्स इन्द्रमह्वदिति ऋषिः परोक्षतया स्वनाम जग्राह । एवमत्रापीति भावः । तत्रापि विप्रतिपन्नं प्रति सर्वसम्मतं दृष्टान्तमाह– **यथा चेति** ।। अथवा भगवद्वाक्यस्य भगवद्वाक्यमेव दृष्टान्ततयोदाहरणमर्हतीति भावेन दृष्टान्तान्तरमाह– **यथा चेति** ।। 'पूर्वं तु बादरायणः'[२०६] । 'तदुपर्यपि बादरायणः'[२०७] 'भावं तु बादरायणः'[२०८] । 'पुरुषार्थोऽतः शब्दादिति बादरायणः'[२०९] । 'अधिकारोपदेशात्तु बादरायणस्य'[२१०] 'अनुष्ठेयं बादरायणः'[२११] । 'अप्रतीकालम्बनान्नयतीति बादरायणः'[२१२] । 'एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः'[२१३] । 'द्वादशाहवदुभयविधं बादरायणः'[२१४] इति तत्र तत्र बादरायणग्रहणं

---

२०५. ऋक्.सं १.१०६.६
२०६. ब्र.सू ३-२-४२
२०७. ब्र.सू १-३-४६
२०८. ब्र.सू १-३-३३
२०९. ब्र.सू ३-४-१
२१०. ब्र.सू ३-४-८
२११. ब्र.सू ३-४-१९
२१२. ब्र.सू ४-३-१५
२१३. ब्र.सू ४-४-७
२१४. ब्र.सू ४-४-१२

यथा न तन्मात्रस्य तदीयवचनज्ञापनार्थम् । 'एवंविधानि सूत्राणि कृत्वा व्यासो महायशाः'[२१५] इत्यादिप्रमाणैः सर्वेषां ब्रह्मसूत्राणां बादरायणरचितत्वस्य सिद्धत्वात् । किन्तूपलक्षणतया सर्वेषामपि तदीयत्वज्ञापनार्थं तथा प्रकृतेऽपीत्यर्थः । अत्र 'तदुपर्यपि बादरायणः' इत्यस्याद्यत्वेऽपि 'पूर्वं तु बादरायणः' इत्यस्यादित्वेन ग्रहणं तस्य भगवतः स्वातन्त्र्योपपादकतयाऽभ्यर्हितत्वविवक्षयेति ज्ञातव्यम् । अन्तिमवाक्यस्यान्तिममेव वाक्यं दृष्टान्ततयोपादातुमुचितमिति वा । दार्ष्टान्तिकं हि वाक्यं प्रथमाध्यायान्तिमखण्डस्थम् । एतत्सूत्रमपि पादान्तिममिति ॥

**प्रथमखण्डार्थः**

ततश्चेयं खण्डाष्टकस्याक्षरयोजना । स[२१६] **एष** भगवान् सङ्कर्षणनामा **पन्थाः** मार्गरूपः । स्वप्राप्तौ स्वस्यैव हेतुत्वात् । **एतत्** एष भगवानेवानिरुद्धरूपी **कर्म** कर्तृत्वान्मातृत्वाज्ज्ञातृत्वाच्च । विधेयानुसारेणैतदिति नपुंसकता । एवमुत्तरत्रापि । **एतत्** वासुदेवात्मा भगवान् **ब्रह्म** गुणपूर्णत्वात् । **एतत्** प्रद्युम्नाख्यो भगवान् **सत्यं** निर्दोषरूपत्वात्[२१७] । **तस्मात्** भगवतो **न प्रमाद्येत्** तद्विषये प्रमादयुक्तो न भवेत् । क्वापि तं नैव विस्मरेदिति यावत् । **तत्** ब्रह्म **नातीयात्** अतिक्रम्य त्यक्त्वा नेतरं व्रजेत् । त्यागप्रकारश्चान्तिमाध्याये स्पष्टयिष्यते । कुतो नातीयादित्यतोऽनतिक्रमे पूर्वेषामाचारं तावत्प्रमाणयति– **न हीति** ॥ **पूर्वे** ब्रह्माद्या एनं **हि** **यस्मान्नात्यायन्** न तत्यजुस्तस्मात्तन्नातीयादिति पूर्वेणान्वयः ।

---

२१५. ब्र.सू.भा. ४-४-१२ २१६. स इति पदं ख पाठे नास्ति

२१७. निर्दोषस्वरूपत्वात् इति 'ख'पाठः

अतिक्रमे किं बाधकमित्यत आह– **ये त्वत्यायन्निति**[२१८] ।। **ये** अतिक्रान्तवन्तस्ते **पराबभूवुः** अन्धे तमसि पतिता इत्यर्थः । एवमत्र त्यागफलकथनादत्यागफलमपि पूर्ववाक्येऽध्याहर्तव्यम् । ये पूर्वे नात्यायंस्ते ब्रह्माद्याः संसृतेर्मुक्ताः श्रीश्च नित्यमुक्ता गुणाधिका च वर्तत इति ।

के ते भगवत्त्यागिनोऽत्यागिनश्च कति विधा इत्यतस्तदुत्तरत्वेन मन्त्रमुदाहरिष्यन्नवतारयति– **तदुक्तमिति** ।। **ऋषिणा** मन्त्रद्रष्ट्रा **तत्** उक्तप्रश्नस्योत्तरमुक्तमित्यर्थः ।

मन्त्रमुदाहरति– **प्रजा इति** ।। तत्र तावत्प्रथमपादमनूद्य **तिस्रः** पिशाचराक्षसासुरभेदेन त्रिविधाः **प्रजा अत्यायं** भगवदतिक्रमं **ईयुः** प्रापुश्चक्रुः । **ह** इति तदर्थमभिप्रेत्योपनिषत्स्वयमेव व्याचष्टे– **प्रजा इति** ।। **तिस्र**स्त्रिविधाः प्रजा **अत्यायमायन्** भगवदतिक्रमं प्राप्ता इति या ऋचि प्रोक्तास्ता इमा **वै** वक्ष्यमाणा एव । कास्ताः? वयांसि वङ्गावगधा ईरपादाश्चेति यानीमानि भूतानि तान्येव । वीत्याकाशनाम । वौ आकाशे अयनाद्वयांसि पिशाचकाः । वीत्यत्रेकारलोपो निर्वचनत्वात् । पिशाचा हि विहायसि सञ्चरन्ति । **वङ्गावगधाः** वं वर्तितं प्रवर्तितं निष्पादितं गं ज्ञानं येषु ते वङ्गाः नरास्तैरवोऽवनं येषां ते वङ्गावाः । नरमांसाशनेन स्वदेहपोषणं कुर्वन्त इत्यर्थः । **गधाः** गृध्नवो विषय-लोलुपाः । वङ्गावाश्चते गधाश्चेति तथोक्ताः राक्षसाः । **ईरस्य** वायो-र्धर्मज्ञानवैराग्यैश्वर्यरूपगुणचतुष्टयात्मकस्यैश्वर्यरूपैकगुणमात्रवत्त्वादीरपादा असुराः । इतिशब्दोऽध्याहार्यः । ईरपादाश्चेतीमानीत्यन्वयः । एवं

---

२१८. येऽत्यायन्निति इति 'ख'पाठः

यथा न तन्मात्रस्य तदीयवचनज्ञापनार्थम् । 'एवंविधानि सूत्राणि कृत्वा व्यासो महायशाः'[२१५] इत्यादिप्रमाणैः सर्वेषां ब्रह्मसूत्राणां बादरायणरचितत्वस्य सिद्धत्वात् । किन्तूपलक्षणतया सर्वेषामपि तदीयत्वज्ञापनार्थं तथा प्रकृतेऽपीत्यर्थः । अत्र 'तदुपर्यपि बादरायणः' इत्यस्याद्यत्वेऽपि 'पूर्वं तु बादरायणः' इत्यस्यादित्वेन ग्रहणं तस्य भगवतः स्वातन्त्र्योपपादकतयाऽभ्यर्हितत्वविवक्षयेति ज्ञातव्यम् । अन्तिमवाक्यस्यान्तिममेव वाक्यं दृष्टान्ततयोपादातुमुचितमिति वा । दार्ष्टान्तिकं हि वाक्यं प्रथमाध्यायान्तिमखण्डस्थम् । एतत्सूत्रमपि पादान्तिममिति ॥

**प्रथमखण्डार्थः**

ततश्चेयं खण्डाष्टकस्याक्षरयोजना । स[२१६] **एष** भगवान् सङ्कर्षणनामा **पन्थाः** मार्गरूपः । स्वप्राप्तौ स्वस्यैव हेतुत्वात् । **एतत्** एष भगवानेवानिरुद्धरूपी **कर्म** कर्तृत्वान्मातृत्वाज्ज्ञातृत्वाच्च । विधेयानुसारेणैतदिति नपुंसकता । एवमुत्तरत्रापि । **एतत्** वासुदेवात्मा भगवान् **ब्रह्म** गुणपूर्णत्वात् । **एतत्** प्रद्युम्नाख्यो भगवान् **सत्यं** निर्दोषरूपत्वात्[२१७] । **तस्मात्** भगवतो **न प्रमाद्येत्** तद्विषये प्रमादयुक्तो न भवेत् । क्वापि तं नैव विस्मरेदिति यावत् । **तत्** ब्रह्म **नातीयात्** अतिक्रम्य त्यक्त्वा नेतरं व्रजेत् । त्यागप्रकारश्चान्तिमाध्याये स्पष्टयिष्यते । कुतो नातीयादित्यतोऽनतिक्रमे पूर्वेषामाचारं तावत्प्रमाणयति– **न हीति** ॥ **पूर्वे** ब्रह्माद्या एनं **हि** यस्मा**न्नात्यायन्** न तत्यजुस्तस्मात्तन्नातीयादिति पूर्वेणान्वयः ।

२१५. ब्र.सू.भा. ४-४-१२ २१६. स इति पदं ख पाठे नास्ति

२१७. निर्दोषस्वरूपत्वात् इति 'ख'पाठः

अतिक्रमे किं बाधकमित्यत आह– **ये त्वत्यायन्निति**[२१८] ।। **ये** अतिक्रान्तवन्तस्ते **पराबभूवुः** अन्धे तमसि पतिता इत्यर्थः । एवमत्र त्यागफलकथनादत्यागफलमपि पूर्ववाक्येऽध्याहर्तव्यम् । ये पूर्वे नात्यायंस्ते ब्रह्माद्याः संसृतेर्मुक्ताः श्रीश्च नित्यमुक्ता गुणाधिका च वर्तत इति ।

के ते भगवत्त्यागिनोऽत्यागिनश्च कति विधा इत्यतस्तदुत्तरत्वेन मन्त्रमुदाहरिष्यन्नवतारयति– **तदुक्तमिति** ।। **ऋषिणा** मन्त्रद्रष्ट्रा **तत्** उक्तप्रश्नस्योत्तरमुक्तमित्यर्थः ।

मन्त्रमुदाहरति– **प्रजा इति** ।। तत्र तावत्प्रथमपादमनूद्य **तिस्रः** पिशाचराक्षसासुरभेदेन त्रिविधाः **प्रजा अत्यायं** भगवदतिक्रमं **ईयुः** प्रापुश्चक्रुः । **ह** इति तदर्थमभिप्रेत्योपनिषत्स्वयमेव व्याचष्टे– **प्रजा इति** ।। **तिस्र**स्त्रिविधाः प्रजा **अत्यायमायन्** भगवदतिक्रमं प्राप्ता इति या ऋचि प्रोक्तास्ता इमा **वै** वक्ष्यमाणा एव । कास्ताः? वयांसि वङ्गावगधा ईरपादाश्चेति यानीमानि भूतानि तान्येव । वीत्याकाशनाम । वौ आकाशे अयनाद्वयांसि पिशाचकाः । वीत्यत्रेकारलोपो निर्वचनत्वात् । पिशाचा हि विहायसि सञ्चरन्ति । **वङ्गावगधाः** वं वर्तितं प्रवर्तितं निष्पादितं गं ज्ञानं येषु ते वङ्गाः नरास्तैरवोऽवनं येषां ते वङ्गावाः । नरमांसाशनेन स्वदेहपोषणं कुर्वन्त इत्यर्थः । **गधाः** गृध्नवो विषय-लोलुपाः । वङ्गावाश्चते गधाश्चेति तथोक्ताः राक्षसाः । **ईरस्य** वायो-र्धर्मज्ञानवैराग्यैश्वर्यरूपगुणचतुष्टयात्मकस्यैश्वर्यरूपैकगुणमात्रवत्त्वादीरपादा असुराः । इतिशब्दोऽध्याहार्यः । ईरपादाश्चेतीमानीत्यन्वयः । एवं

---

२१८. येऽत्यायन्निति इति 'ख'पाठः

भगवत्त्यागिनामसतां त्रैविध्यमुक्त्वा तदत्यागिनां सतामपि त्रैविध्यं पादत्रयेण क्रमेण मन्त्रशेषे प्रदर्श्यते । तत्र द्वितीयपादं तावदनुवदति– **न्यऽन्या इति ।। अन्या** उक्तराक्षसादित्रिविधा असत्प्रजाविलक्षणाः मनुष्योत्तमप्रजाः **अर्के** आ सम्यक् जनैरर्चितत्वादर्कशब्दवाच्यमग्निस्थं विष्णुं **अभितः** आभिमुख्येन **निविविश्रे** निविष्टा आश्रिताः । अग्नौ कर्माणि कृत्वा तत्स्थं विष्णुं मुक्तौ प्राप्नुवन्तीत्यर्थः ।

इममेवार्थमभिप्रेत्य स्वयमेव व्याचष्टे– **ता इमा इति ।।** मनुष्योत्तमरूपाः प्रजा इत्यर्थः । अर्कशब्दवाच्यस्य विष्णोरुपास्तौ स्थानं वक्तुं तं विशिनष्टि– **इममेवाग्निमिति ।।** एतस्मिन्नग्नावेव स्थितं तन्नामकमित्यर्थः । तृतीयपादमनुवदति– **बृहदिति ।।** ता इमा इत्यनुवर्तते । ऋषिरूपाः प्रजाः यदेतत् **भुवनेषु** लोकेषु अन्तः **बृहत्** तेजसा बृंहितं व्याप्तं ब्रह्म, सूर्ये तस्थौ । तद् अभितो विविश्र इत्यनुवृत्त्या योजना । इममेवार्थमभिप्रेत्य व्याचष्टे– **अद उ एवेति ।। अद उ** असावेव विष्णुर्भुवनेष्वन्तः **बृहत्** तेजसा पूर्णम् । असावेव **आदित्यः** सर्ववस्तूनामादानात् स्ववशे स्थापनादादित्यनामा । तमिमं विष्णुमृषयः स्वाध्यायेनाभितो निविष्टा इति योजना । चतुर्थपादमनुवदति– **पवमान इति ।।** पावयति संसारात् मिनोति क्षिपति च महानन्द इति पवमानो वायुस्थो विष्णु**र्हरितो** दिशः सर्वा **आविवेश** सर्वदिक्षु व्याप्तः । य एवंविधस्तं विष्णुं देवा अभितो निविष्टा इति तदर्थमभिप्रेत्य व्याचष्टे– **वायुरेवेति ।।** बलज्ञानस्वरूपत्वाद् वायुशब्दवाच्यो वायुस्थो हरिरेव पवमानः । स एव हरितो दिश आविष्ट इत्यर्थः । हरित इत्यनुवादः, दिश इति तद्व्याख्यानम् । तथाच भगवत्त्यागिनोऽसन्तः पिशाचराक्षसासुरभेदेन

त्रिविधाः । तदत्यागिनः सन्तोऽपि मानुषोत्तमर्षिदेवभेदेन त्रिविधा इत्युक्तं भवति ॥२.१.१॥

**अथ द्वितीयखण्डर्थः**

विद्यान्तरमारभते– **उक्थमुक्थमिति** ॥ अत एव न पूर्वखण्डेनास्य सङ्गतिः । एवमुत्तरत्रापि । **प्रजाः** ज्ञानिजनाः **उक्थमुक्थं** उत्थापनात् जगतः सर्जनान्निमित्तात्किञ्चिद्वस्तूक्थनामकमिति वदन्ति । वैदिकव्यवहारप्राचुर्यज्ञापनार्थं द्विरुक्तिः । **वै** प्रसिद्धमेतत् । **तत्** उक्थं च **इदमेव** विष्णवाख्यं ब्रह्मैवेत्यर्थः । तस्याधिदैवतमध्यात्मं च रूपविशेषाणां पृथगुपास्त्यर्थमधिष्ठानं वाहनं भोग्यमन्नं च पृथक् पृथग्दर्शयति– **इयमेव पृथिवीत्यादिना** ॥ **इयमेव पृथिवी** पृथिवीस्थितं प्रथितत्वात् पृथिवीनामकमुक्थम् । पृथिवीस्थितस्योक्थशब्दवाच्यत्वे युक्तिप्रदर्शनाय पृथिव्यामुक्थशब्दप्रवृत्तिनिमित्तमाह– **इतो हीति** ॥ **इतः** पृथिवीतो **यदिदं किञ्च** प्रमाणप्रमितं **इदं** सर्वमङ्कुरादिकं **उत्तिष्ठति** उत्पद्यते, **हि** यस्मात्तस्मात्तत्स्थस्योक्थशब्दवाच्यत्वं युक्तमित्यर्थः । **तस्य** पृथिवीस्थितस्य विष्णोः **अग्निरर्कः** । अत्रार्कपदेन 'ऋ गतौ' इति धातोः शीघ्रगतित्वतः श्येन उच्यते । तदाकारत्वाद् यज्ञे क्रियमाणा चितिरिष्टकासन्निवेशविशेषलक्षणाऽर्कपदेन गौण्या वृत्त्या प्रतिपाद्यते । सा च सुपर्णप्रतिमारूपा । स एव सुपर्णोऽग्नावपि स्थितः । स च हरेर्वाहनमिति प्रसिद्धमेव । अतोऽग्निस्थस्यैव गरुडस्यार्कपदोदितचितिगतत्वादग्निस्तस्य वाहनरूपोऽर्क इत्युच्यते । अथवा **अग्निः** अग्निस्थितोऽग्निशब्दवाच्यो भगवद्रूपविशेष**स्तस्य** पृथिवीस्थस्य **हरेरर्कः** शीघ्रगतित्वादर्कपदोदितगरुडस्थितस्तदाकारः स्वयमेव वाहनरूप इत्यर्थः ।

एवमुत्तरत्र 'वायुरर्क आदित्योऽर्कः' इत्यादौ सर्वत्रार्थान्तरं व्याख्येयम् । **अन्नं** प्रसिद्धान्नमेव **तस्य** विष्णोः **अशीतयः** तिस्रस्तृचाशीतयस्तद्रूपं बृहतीसहस्राख्यं शस्त्रमिति यावत् । उभयोरपि तर्पकत्वात् । सोमदेवताकत्वाच्च । अन्नस्याशीतित्वं योगेनापि दर्शयति– **अन्नेनेति** ।। **इदं** [२१९]सर्वप्राणिजातं **अन्नेना**न्नभोजनेनैव **सर्वं** काममश्**नुते** प्राप्नोति, नान्यथा ।

'दारापत्यगृहादीनि वासोऽलङ्कारभूषणम् ।
असह्यं नाश्नतः पुंसः सह्यं भुक्तवतो ध्रुवम्'[२२०] इति वचनात् ।

अतोऽश्नुतेऽनयेति व्युत्पत्त्या सर्वकामप्राप्तिसाधनत्वादन्नमशीतिरित्युच्यते । तृचाशीतयोऽप्यन्नवद्भगवतस्तृप्तिहेतुतया सर्वकामप्राप्तिसाधनतुल्यत्वादुक्तनिर्वचनेनाशीतिशब्दवाच्याः । अतोऽन्नमशीतय इति सामानाधिकरण्येनोच्यत इति भावः । **अन्तरिक्ष**मन्तरिक्षस्थम् । अन्तः स्वहृदये ईक्ष्यतेऽधिकारिभिरित्यन्तरिक्षनामकं च यद् भगवद्रूपं तदेवोक्थम् । तस्योक्थत्वे युक्तिमाह– **अन्तरिक्षं वा इति** ।। अन्तरिक्षस्थं हरिं **वै** एव । **अनु** तत्प्रेरणयेति यावत् । **पतन्ति** पक्षिण इति शेषः । **अन्तरिक्षमनु** तत्प्रेरणयैव **धावयन्ति** नरादयोऽश्वादिषु यानादिवाहकनरवृषादिषु चोपविष्टास्तान् धावयन्ति । भगवत्प्रेरणयाऽन्तरिक्षेणावकाशे दत्ते सत्येव हि पक्षिपतनादिकर्माणि जायन्ते । नान्यथेति भावः । यथोक्तम्– 'नभो ददाति श्वसतां मार्गं यन्नियमाददः'[२२१] इत्यादि । एतेन पक्ष्याद्युत्पतनधावनादिरूपोत्थानहेतुत्वादुक्थत्वमन्तरिक्षस्य युक्तमेवेत्युक्तं भवति । 'तस्य वायुरर्कः' इत्यादि पूर्ववत् ।।

---

२१९. सर्वं इति 'ख'पाठः        २२०.  २२१. अनु. १-१-२४६

**असौ द्यौरेव** द्युलोकस्थं द्योतनात् द्युनामकं च यद् ब्रह्म तदेवोक्थम् । द्युस्थितस्योक्थशब्दवाच्यत्वे युक्तिप्रदर्शनाय द्युलोके उक्थशब्दप्रवृत्तिनिमित्तमाह– **अमुत इति** ।। **अमुतो** दिवः प्रदानात् तत्कर्तृकवृष्टिप्रदानात् **यदिदं किञ्च** प्रमाणसिद्धं **इदं सर्वं** सस्यादिकम**ुत्तिष्ठति** उत्पद्यते । **हि** यस्मात्तस्मात्तत्स्थस्योक्थशब्दवाच्यत्वं युक्तमेवेत्यर्थः । 'तस्यासावादित्यः' इत्यादि पूर्ववत् । **इत्यधिदैवतं** अधिदैवे स्थितानां भगवद्रूपाणामुक्थत्वादिकमुपवर्णितम् ।।

**अथाध्यात्मम्** अध्यात्मगतभगवद्रूपाणामुक्थत्वादिकमुच्यत इत्यर्थः । पुरुषशब्दवाच्यदेहस्थितत्वाद्देहाख्यपुरुषेषु[२२२] सरणाद्वा यः पुरुषाख्यो विष्णुः स एवोक्थम् । तस्योक्थत्वे युक्तिमाह– **अयमेव महान् सर्वोत्तम इति** ।। महत्त्वस्यैवोपपादनम् **प्रजापतिरिति** ।। ब्रह्मादिसर्वप्रजास्वामीत्यर्थः । तथाचोच्चैः सर्वोत्कृष्टत्वेन स्थितत्वादुक्थमित्युच्यत इति भावः । एष च पुरुषाख्यो भगवानहमुक्थमस्मीति विद्यात् । विद्यां ज्ञानमत्त्यनुभवतीति तथोक्तः । तस्यैव सर्वोत्तमत्वादिसद्भावात्स एक एव तादृशज्ञानयोग्यो नान्य इति भावः ।।

एवं पुरुषाख्यस्य हरेरुक्थत्वमुक्त्वा तदङ्गानामप्युक्थत्वमाह– **तस्य मुखमेवेत्यादिना** ।। अत्र सर्वत्रैवशब्दः कावेरीविरजातोयमित्यादाविव नेदमौपचारिकमिति ज्ञापनार्थो न त्वन्ययोगव्यवच्छेदार्थः । सर्वत्रोक्थत्वविधानात् । तस्य वदनं मुखमेवोक्थम् । अग्न्युत्थापकत्वात् । वक्ष्यते हि 'तस्य वाचा सृष्टौ पृथिवी चाग्निश्च'[२२३] इति । निर्णयार्थं दृष्टान्तेनोपपादयति– **यथेति** ।। यथाऽधिदैवतं पृथिवी उक्थत्वेनोक्ता,

---

२२२. पुरेषु इति 'ख'पाठः  २२३. ऐत.उ २-१-७ (६७पुटम्)

तथाध्यात्मं पुरुषमुखमेवोक्थमित्यर्थः । **तस्य** मुखरूपोक्थस्य **वाग्** वागभिमानी वह्निरर्कः । शिष्टं पूर्ववत् । नासिक एवोक्थं वातोत्थापकत्वात् । वक्ष्यते हि– 'प्राणेन सृष्टावन्तरिक्षं च वायुश्च'[२२४] इति । तस्येत्यनुवर्तते । पुरुषाख्यहरेरित्यर्थः । यथान्तरिक्षमित्यादि पूर्ववत् । तस्य नासिकारूपोक्थस्य **प्राणो** वायुः । तत्र विशेषमाह– **तदेतदिति ।। यदेतन्नासिकायै** नासिकायां नासिकामूले नेत्रयोर्मध्ये **विनतमिव** किञ्चिन्नतस्थानं दृश्यते, तदेतद् **ब्रध्नस्य** सूर्यस्य **विष्टपं** सूर्यलोकस्थानीयं विद्यादित्यर्थः । **ललाटमेवोक्थम्,** अत्र ललाटशब्देन तत्सम्बद्धं नेत्रमुपलक्ष्यते । यथा द्यौस्तथेत्यादि पूर्ववत् । **तस्य** ललाटरूपोक्थस्य **चक्षुश्च**क्षुरभिमानी सूर्यः । अत्रादनाघ्राणदृष्ट्याख्यभोगत्रयविभागेन तन्मुखनासिकानेत्राणां भोग्यमन्नरसगन्धरूपात्मकं तत्र तत्र[२२५] त्रिस्थानेष्वपि 'तस्यान्नं तस्यान्न'मिति पृथङ्निर्दिष्टमिति ज्ञातव्यम् ।

अत्रेदमपि बोध्यम् । भगवतो जीवदेहेषु व्याप्तत्वात्तन्मुखनासिकाक्षीणि जीवमुखनासिकाक्षिषु स्थितानि । अत एव जीववाक्प्राणचक्षुष्षु विष्णुवागाद्याः स्थिताः । विष्णोर्वाक्प्राणचक्षूंषि च भार्गवनरसिंहकपिलाख्यास्तद्रूपविशेषा एव । एतान्यपि मुखनासिकाक्षिवदग्निवायुसूर्याणां जनकानीत्यादि । एवमध्यात्ममधिदैवतं च षट्सु स्थानेष्वर्काणां भिन्नत्वेऽप्यशीतय इत्येतत् समानमेव । यतः सर्वत्रान्नमेवाशीतय इत्युक्तमिति योजना ।।

---

२२४. ऐत.उ २-१-७ (७२-पुटम्)

२२५. तत्र इति 'ख'मातृकायां नास्ति

ननु किं तदन्नस्य माहात्म्यम्, येन सर्वेषामपि पृथिव्यादिस्थ-रूपाणां तदेवाशीतिततयोच्यत इत्यत आह– **अन्नेनेति** ।। इमानि सर्वाणि भूतानि **अन्नेनैव** अन्नस्थेनान्ननाम्ना भगवतैव **समनन्ति** सम्यक् चेष्टन्ते । **अन्नेनैवा**न्नस्थितेनैव तेनान्नदाता पुरुष **इमं लोकं** पृथिवीलोकं **जयति** प्राप्नोति । पृथिव्यामधिपतिर्भवतीति यावत् । तथान्नेनैवानेन **अमुं** स्वर्गादिलोकं च जयति । **तस्मात्** सर्वभूत-चेष्टनेऽन्नदातॄणां गतिप्राप्तौ च भगवतान्ने स्थित्वा तस्य निमित्ती-करणात् समानमशीतयोऽध्यात्मं चाधिदैवतं चान्नमेवेति युक्ता तस्य सर्वत्राशीतिततयोक्तिरिति भावः ।।

**तदिदं** भगवद्रूपं **अन्नं** अद्यत्वात् । अद्यत्वं चोपजीव्यत्वेनैव । उपजीव्यो हि सर्वेषां भगवान् । न केवलमन्नं किन्त्वन्नादं च । अन्नमत्तीति । सर्वात्ता हि भगवान् । किं तद्भगवद्रूपं यदन्नमन्नादं चेत्यत आह– **इयमेव पृथिवीति** ।। एतत्पृथिवीगतमेव पृथिवीनामकं स्त्रीरूपमित्यर्थः । कथं पृथिवीगतरूपस्यान्नत्वमन्नादत्वं चेत्यतस्तत्रान्नत्वं तावदुपपादयति– **इतो हीति** ।। **इतः** पृथिवीगतभगवच्छक्त्यैव **इदं सर्वं** धान्यादिकं पृथिवीतः **उत्तिष्ठति** उत्पद्यते । सर्वमित्यस्यैव विवरणम– **यदिदं किञ्चेति** ।। एवं पृथिवीस्थस्यान्नोत्पादकत्वादन्नत्वमुपपाद्य द्युलोकस्थस्याप्यन्नत्वमन्नाद्यत्वं चाभिप्रेत्य तत्रान्नादत्वं तावदुपपादयति– **यद्ध किञ्चेति** ।। **यत्किञ्चेदं** धूमादिकमचेतनं स्वर्गादिगन्तृ चेतनं च पृथिवीतः **प्रैता३इ** प्रैति प्रयाति गच्छति । **तत्** सर्वं **असौ** द्युलोकस्थो हरिः **अत्ति** स्वीकरोतीत्यर्थः । एतेन पृथिवीस्थस्य द्युभोग्यधूमादि-जनकत्वेन प्रकारान्तरेणाप्यन्नत्वमुपपादितम् ।।२.१.२।।

अथ पृथिवीस्थितस्यान्नादत्वमुपपादयति– **यदु किञ्चेति** ।। उ उत यत्किञ्च **अतः** अमुतः द्युलोकात्**प्रैतीः३** आगच्छति वृष्ट्यादिकं **तत् सर्वमियं** पृथिवी पृथिवीस्थितोऽत्तीत्यर्थः । एतेन द्युलोकस्थ-स्यान्नत्वमप्युक्तं भवति । उपलक्षणमेतत् । पृथिवीस्थितस्य भगवतः पृथिवीस्थसर्वप्राणिगतरूपेण पृथिव्युत्पन्नान्नभोक्तृत्वात् प्रकारान्त-रेणाप्यन्नादत्वं द्रष्टव्यम् । तत्र[२२६] पृथिवीद्युस्थयोर्भगवद्रूपयोरन्नत्वम-न्नादत्वं च स्वनिरूपितमन्यनिरूपितं च बोध्यम् । अत्र[२२७] स्वभो-ग्यत्वं स्वभोक्तृत्वं च हरेरचिन्त्यैश्वर्यबलादेकस्यापि रूपभेदेनोपपन्नम् । अन्यभोग्यत्वं चोपजीव्यतारूपम् । अन्यभोक्तृत्वं त्वविप्रतिपन्न-मेवेति । एवं पृथिवीद्युस्थयोरन्नत्वमत्तृत्वं चोपपाद्योपसंहरति– **सेय-मिति** ।। **सेयं** पृथिवी तत्स्था भगवन्मूर्तिः **इति** पूर्वोक्तप्रकरेण, **अद्या** अदनीया भोग्या उपजीव्येति यावत् । **अत्त्री** भोक्त्री च भवति । एवं सोऽसावित्यध्याहार्यम् । द्युस्थो भगवानप्यत्ता अद्यश्च भवति । **ह वा** इति प्रसिद्धिद्योतकं निपातद्वयम् ।।

अत्रायं विवेकः । यदा पृथिव्यद्या[२२८] भवति तदा द्यौरत्ता, यदा तु साऽत्त्री भवति तदाऽसावाद्य इति । अत एवाद्यात्त्रीत्यस्यात्ता अद्य[२२९] इति व्युत्क्रमेणोक्तिरिति ज्ञातव्यम् । न चेदमद्यत्वमत्तृत्वं च भगवतः केनापि शक्यनिवारणमित्याह– **न तस्येति** ।। **अयं** भगवान् यथा सर्वं नाद्यात् । यद्वा **एनं** भगवन्तमन्ये यथा **नाद्युर्**नोपजीवेयुस्तस्य तथा करणस्य कश्चन **नेशे** नेष्ट इत्यर्थः ।।

---

२२६. अत्र इति 'ख' पाठः २२७. तत्र इति 'ख'पाठः

२२८. आद्या इति 'ख'पाठः २२९. आद्य इति 'ख'पाठः

## अथ तृतीयखण्डार्थः

**अथ** अनन्तरम्, **अतः** भगवन्माहात्म्यश्रवणस्य महाफलसद्भावात् **रेतसः सृष्टिः** रेतःसम्बन्धिनी सृष्टिरुच्यत इति शेषः । अत्र रेतःशब्दो [२३०]जन्मोपलक्षणः । **देवाः** सर्वे ब्रह्माद्याः **प्रजापतेः** सर्वजीवाधिपतेर्विष्णो **रेतः** तस्माज्जाताः । **देवानां वर्षं रेतः** देवेभ्यो वृष्टिः सञ्जायते । **वर्षस्य रेत ओषधयः** वर्षात्सर्वा ओषधयो जायन्ते । ओषधीनां **रेतोऽन्नं** तेभ्योऽन्नं जायते । अन्नस्य रेतो **रेतः** शुष्ममेव । अन्नाद्रेतो जायते । **रेतसो रेतः प्रजाः** रेतसः सकाशात्सर्वाः मानुषादिप्रजाः प्रजायन्ते । **प्रजानां रेतो हृदयं** । अत्र हृदयशब्देन सङ्कल्पात्मकं मन उच्यते । तत्प्रजाभ्यो जायते । **हृदयस्य रेतो मनः** । मनःशब्देन विकल्पात्मकं मन उच्यते । सङ्कल्पाद्विकल्पो जायत इत्यर्थः । सङ्कल्पविकल्पयोर्मनोवृत्तित्वेनोभयोः प्रजाजातत्वेऽपि सङ्कल्पानन्तरमेव विकल्पस्य जायमानत्वात्तज्जातत्वोक्तिः । एकादश्याद्युपवासादिसङ्कल्पे कृत एव हि तत्परित्यागं न करिष्य इति विकल्पो जायते । **मनसो** विकल्पात्मकस्य **रेतो वाक्** वाक्प्रचारः । अत्र हृदयस्येत्यपि ग्राह्यम् । सङ्कल्पविकल्पाभ्यां विधिनिषेधविषयकमनोवृत्तिभ्यां सर्वोऽपि वाक्प्रचारो जायते । **वाचो रेतः कर्म** वाक्प्रचाराच्च वृद्धकृतात् अव्युत्पन्नस्य 'इदमस्य वाचकं' 'इदं च वाच्य'मिति नामादिवेदनात्पुनर्वाक्प्रचारे घटमानयेत्यादि रूपे जायमाने व्युत्पन्नस्य प्रयोज्यपुरुषस्य घटानयनादिकर्म जायते । **तदिदं कर्म कृतम्** कुलालादिकर्मणा हि घटादिकं सर्वं जगज्जायते । **अयं** एतत्कर्माभिमानी **पुरुषो** जीवः **ब्रह्मणो** विष्णो**र्लोक** आवासस्थानम् ।

---

२३०. जन्योपलक्षणः इति 'ख'पाठः

जडापेक्षया चेतने हि विष्णोर्विशेषतः सन्निधानम् । **स** ब्रह्मशब्दोक्तो विष्णुः **इरामयः** इच्छानुरूपसुखपूर्णः । **यत्** यस्मादिरामयाः, दैर्घ्यमवधारणार्थे । **इरामय एव हि तस्माद्धिरण्मयः** हिरक् पृथक् लौकिकानन्दाद्विलक्षणं ण्यं सुखं हिरण्यं तेनाधिकत्वात्तथोक्तः । आधिक्यार्थे मयट् । हिरक्शब्दे ककारस्य ण्यशब्दे च यकारस्य लोपो निर्वचनत्वात् । तथाचेरामयत्वादेव हि हिरण्मय इत्युच्यत इत्यर्थः । एतद्विद्यावेत्तुः फलमाह– **हिरण्मय इति** ।। **योऽ**धिकारी **एवं** प्रजापते रेतो देवा इत्युक्तप्रकारेण नारायणं सर्वलोकैककारणं हिरण्मयादिरूपं च **वेद** उपास्तेऽपरोक्षतो जानाति च **सोऽमुष्मिन् लोके** वैकुण्ठादौ **हिरण्मयः** कर्मजं प्राकृतरूपं हित्वा निजानन्दैकरूपकः सम्भवति । हिरण्मयः सन्नेव **सर्वेभ्यो भूतेभ्यो** मुक्तसर्वभूतैर्ददृशे दृश्यत इत्यर्थः ।।२.१.३।।

### अथ चतुर्थखण्डार्थः

**ब्रह्म** वासुदेवाख्यम् **तं** प्रसिद्धं ज्ञानिनां प्रथमं **इमं पुरुषं** चतुराननं **प्रपदाभ्यां** प्रपदयोः प्रपदद्वयावच्छेदेन **प्रापद्यत** प्राप । आदिसृष्टौ **यद्** यस्माद् ब्रह्म **इमं पुरुषं** चतुर्मुखं प्रपदाभ्यां प्रापद्यत **तस्मात्** प्रपदनात् प्रपदनावच्छेदकत्वादेव चतुर्मुखपादोपरितनभागरूपमङ्गं प्रपदे इत्याचक्षते विद्वांसः । अत एव चतुर्मुखवत्पुरुषाकारवतां नरादीनां पादोपरितनभागरूपमङ्गं प्रवृत्तिनिमित्ताभावेऽपि सादृश्यमात्रेण जनाः प्रपदे प्रपदे इत्याचक्षत इत्यावृत्त्या योज्यम् । प्रयोगबाहुल्यज्ञापनाय द्विरुक्तिः । **अन्येषां** तु चतुर्मुखपुरुषाकारशून्यानां **पशूनां** अश्वगवादीनां शफाः खुरा इत्येवाचक्षते नतु प्रपदे इति । प्रवृत्तिनिमित्ताभावात् सादृश्याभावाच्चेति भावः । **तदूर्ध्वं**

तदनन्तरम् **तद्** ब्रह्म चतुर्मुखदेहे प्रपदादूर्ध्वं वायुना सह **उदसर्पत्** ऊरुं प्रत्ययात् । अतो हरेरूर्ध्वं अरणाद्गरणान्निमित्तत् **तौ** चतुर्मुखसम्बन्धिनावयवविशेषावूरू अभवताम् । तत्सादृश्याच्चान्यत्रापि तच्छब्दव्यवहार इति संयोज्यम् । एवमुत्तरत्रापि । ततः किञ्चिदूर्ध्वं वायुना सहैव गत्वा **ऊरू** उत्कृष्टं यथा भवति तथा 'मां गृणीही'ति भगवान् वायुमब्रवीत् । स वायुर्यत्र स्थित्वा उर्वेव गरणं चक्रे तत्स्थानं **उदरं** उदरनामकमभवत् । उ उत्कृष्टो गरो गरणं स्तवनम् यस्मिन्निति । गस्य दः । अथ ततोऽपि रूपान्तरेण किञ्चिदूर्ध्वं गत्वा **उरु** विस्तृतमेव **मे** मम निवासस्थानं कुर्विति पुनर्वायुमब्रवीत् । वायुश्च भगवदाज्ञानुसारेण तथैवाकरोत् । ततस्तत्स्थानमुरुत्वादुरोनामकमभवत् । उरःस्थाने च मध्ये हृदयमप्यकरोदित्यपि ग्राह्यम् । 'हृदयं ब्रह्म' इति वक्ष्यमाणत्वात् । तत्र **उदरं** उदरे स्थितमुद्गतारत्वादुरुगरणविषयत्वाद्वोदरनामकं ब्रह्मेति **शार्कराक्षाः** शर्करा सूक्ष्मपाषाणः, तद्वत्सूक्ष्ममक्षं दृष्टिर्येषां ते तथोक्ताः । सूक्ष्मेक्षिकावत्त्वात्तन्नामानो मुनय उपासते । **हृदयं** हृदये स्थितं हृद्ययनात् हृदयशब्दवाच्यं ब्रह्मेति आरुणयो नाम मुनय उपासते । **ता इ** ते उभे उदरस्थं हृद्गं च ब्रह्मैव ह । नाणुरपि तत्र भेदः । ब्रह्मेति संहितायां दैर्घ्यस्य ता इ इति स्वरस्पर्शविभागस्य च कृत्यं प्रागुक्तमेव । तत उरःस्थानादूर्ध्वं **त्वेव** तद्ब्रह्म **उदसर्पत्** वायुना सहागमत् । तुशब्दः पूर्वोक्तस्थानेभ्योऽस्य विशेषद्योतकः । ऊर्ध्वगतं च **तत्** ब्रह्म **शिरो** मूर्धानं **अश्रयत** वायुना देवैश्च सह तत्र स्थितमभूत् । **यद्य**स्माच्छिरोऽश्रयत ब्रह्म **तत्** तस्मात्तदङ्गं शिरोनामाऽभवत् । तदेव शिरसः **शिरस्त्वं** शिरःशब्दप्रवृत्तिनिमित्तम् । यद् ब्रह्मकर्तृकश्रयणकर्मत्वमित्यर्थः । **ता एताः श्रियः** श्रयणाच्छ्रीशब्दवाच्याः चक्षुः

श्रोत्रं मनो वाक् प्राण इत्याद्या देवताः **शीर्षन्** चतुर्मुखशीर्ष्णि **श्रिताः** स्थिताः । एवं सर्वप्राणिनां शिरस्स्वप्येताः देवताः श्रिता इत्यपि ग्राह्यम् । श्रिता इत्युपलक्षणम् । तत्र स्थिता विष्णुमुपासत इत्यपि द्रष्टव्यम् । चक्षुरादिदेवताश्च भाष्योक्तरीत्या रविचन्द्रशङ्कराग्निवाय्वाद्या बोध्याः । एतद्विद्यावेत्तुः फलमाह– **श्रयन्त इति ।। यो**ऽधिकारी **एवं** परब्रह्मणाश्रितत्वमेव शिरस **एतद्** उक्तं **शिरस्त्वं** शिरःशब्दप्रवृत्ति-निमित्तं वेद अस्मिन् **श्रियः** सम्पदः श्रयन्त इत्यर्थः ।।

चक्षुरादिदेवेषु प्राणस्यैवोत्तमत्वमिति प्रदर्शयितुमाख्यायिकामारभते– **ता अहिंसन्तेत्यादिना ।। ताः** श्रियः शिरःश्रयणाच्छ्रीशब्दवाच्याश्चक्षुरादिदेवता **अहिंसन्त** वाचा हिंसामकुर्वन् । परस्परं व्यनिन्दन्निति यावत् । किमिति? **अहमुक्थं** श्रेष्ठोऽस्मीति । द्विरुक्तिर्विवादस्य प्रातिस्विकताज्ञापनाय । तत्र निर्णयार्थं विष्ण्वाज्ञया **ता** देवता अब्रुवन् । किमिति । **अस्मात्** चतुर्मुखसम्बन्धिनः शरीरात् **उत्क्रामाम** उत्क्रान्ता भवाम । **हन्ते**ति हर्षे । **तत्** तेषां **नो**ऽस्माकं मध्ये यस्मिन्देवे उत्क्रान्ते **इदं शरीरं पत्स्यति** पतिष्यति, **तदुक्थं** स श्रेष्ठो भविष्यतीति । एवं समयं बद्ध्वा तेषां मध्ये प्रथमं **वाग्** वागभिमानी वह्नि**रुदक्रामत्** ब्रह्मशरीरादुत्क्रान्तः । तदाऽयं देहो वागभावात् **अवदन्** वचनक्रियामात्रमकुर्वन्नपि अश्नन् पिबन्**नास्तैव** आसीदेव नापतत् । एवं चक्षुरुदक्रामत्, श्रोत्रमुदक्रामदिति वाक्यद्वयमपि व्याख्येयम् । **चक्षुः** सूर्यः, **श्रोत्रं** चन्द्रः । अथ **मनः** मनोऽभिमानी शङ्करः, शेषः सुपर्ण इन्द्रश्चोदक्रामत् । तदा **मीलित इव** निमीलितनेत्र इव प्रतिभाशून्य इवेति यावत् । ब्रह्मणस्तादृग्भावायोगादिवेत्युक्तिः । अश्नन् पिबन्निति सर्वत्र तदितरेन्द्रिय-

व्यापारस्याप्युपलक्षणम् । अशनपानयोः प्राणव्यापारत्वात् प्राधान्यात् सर्वत्र तदुक्तिः । अथ **प्राणो** वायुरुदक्रामत् । **तत्** शरीरं प्राण उत्क्रान्ते सत्येव **अपद्यत** पतितमभूत् । न केवलं पतितं किन्त्व**शीर्यत च** शैथिल्योन्मुखं चाभवत् । अत एव तद्देहस्य शरीरनामप्राप्तिरभूदित्याह– **अशारीति** ।। यत इदं **अशारि** अशीर्यत, 'शॄ हिंसायाम्' इति धातोः । **इति** तस्मा**त्तच्छरीरं** शरीरनामकमभवत् । तदेतत्[२३१] **शरीरस्य शरीरत्वं** शरीरशब्दप्रवत्तिनिमित्तं यच्छीर्यमाणत्वं, शृणोतेः[२३२] कर्मणीरच् । एतद्वेत्तुः फलमाह– **शीर्यत इति** ।। **अस्य** स्वोत्क्रमणेन ब्रह्मदेहस्य शीर्णतापादकत्वरूपप्राणमाहात्म्यवेत्तुः **द्विषन्** द्वेषीव स्थितः । नरकाद्यनर्थहेतुत्वात् । **भ्रातृव्यः** भ्रातृवत्सह संस्थितः **पाप्मा** पापं **शीर्यते ह वै** नश्यति खलु । तथा चास्य द्विषन् **पाप्मा** पापी **भ्रातृव्यः** शत्रुश्च **पराभवति** नित्यनिरयप्राप्तिरूपपराभवं प्राप्नोतीत्यर्थः ।।

एवं स्वनिर्गमेन ब्रह्मदेहपातनाद्वायोरुत्तमत्वे सिद्धेऽपि यादृच्छकताशङ्कानिरासार्थं पुनस्तेषां परीक्षान्तरं वक्तुं प्रस्तावनाय विवादक्रममाह– **ता इति** ।। उक्तपरीक्षया वायूत्तमत्वसिद्धौ पुनर्विवादो यद्यपि न युज्यते, तथाप्युक्तशङ्कानिरासार्थत्वाद्युज्यत एवेति ज्ञापनायाहिंसन्तैवेत्येवशब्दो विवादस्यात्यन्तायोगव्यवच्छेदार्थः । **हन्तेति** खेदे । पूर्वपरीक्षायां स्वाभिलषितस्याजातत्वात् । इदं पुनरित्यादि स्पष्टम् । पतितस्य शरीरस्य शवताशङ्कानिरासायाशयदित्युक्तिः । विष्णुब्रह्मणोस्तद्देहे औदासीन्येन सत्वात् । यथोक्तं भाष्ये– 'उदा-

२३१. तदेव इति 'ख'पाठः

२३२. गृणाते इति 'ख'पाठः

सीनौ च तावास्तां केशवश्चाब्जसम्भवः'[२३३] इत्यादि । प्राणे **प्रपन्ने** प्रविष्टे तच्छरीरमुदतिष्ठत् । अतस्तत् सः प्राण **उक्थं** उच्चैः स्थितत्वात्तथोक्तः । सर्वश्रेष्ठोऽभवत् । उक्थशब्दानुसारेण तदिति नपुंसकम् । तदुक्थमित्येतद्विशदयति– **तदेतदिति** ।। **तत्** स्वोत्क्रमणेन शरीरपतनकारणं । **एतत्** स्वप्रवेशेन तदुत्थानकारणं च यदुक्थमुक्तम्, तत्प्राण एवेत्यर्थः । अतोऽधिकारी प्राण उक्थ-मित्येव विद्यात् । एवं परीक्षाद्वयानन्तरं निःशङ्काः सन्तो देवास्सर्वे रुद्राद्यास्तं प्राणमब्रुवन् । किमिति? **त्वमुक्थं** गुणाधिकोऽसि । **त्वमेवेदं सर्वमसि** अस्य सर्वस्य वचनदर्शनाद्यस्मदीयव्यापारस्य त्वमेव नियामकोऽसीति यावत् । वयं सर्वेऽपि तव भृत्याः स्मः । त्वं चास्माकं पतिरसीति । उक्तार्थे मन्त्रसम्मतिमाचष्टे– **तदपीति** ।। तदेतदपीति सम्बन्धः । न केवलं प्रजाः तिस्रो अत्यायुरित्यादिक-मेवोक्तम्, किन्त्वत्र प्रकृतप्रमेयमप्युक्तमित्यर्थः । मन्त्रमुदाहरति– **त्वमस्माकमिति** ।। उक्त एवार्थः ।।२.१.४।।

### अथ पञ्चमखण्डार्थः

अथ देवा वायुमुखाद्भगवद्गुणान् श्रुत्वा **तं** वायुनोपदिष्टं नारायणं **प्राणयन्त** शिष्यप्रशिष्यादिषु प्रकर्षेण **अनयन्** उपदिदिशुः । तथा **तं** वायुमपि तद्गुणोक्त्या शिष्यादिषु प्राणयन्त । **स** वायुर्देवैः **प्रणीतः** शिष्यादिषूपदिष्टस्तैर्विज्ञातगुण इति यावत् । **प्रातायत** तेषु प्रविश्य प्रततो बभूव । यतः **प्रातायीती३** प्रततोऽभवत् **तत्** तस्मात् प्रातर्नामकोऽभवत् । तथा रूपान्तरेण जीवस्वरूपचैतन्येन **समागात्**

---

२३३. ऐत.भा. २-१-४ (४३-पुटम्)

सङ्गतोऽभूत् । **इति** यस्मात् **तत्** तस्मात्सायंशब्दवाच्योऽभवत् । एवमहार्यत्वादहर्नियामकत्वाच्चाहरेव प्राणः । रतिरूपत्वाद्रात्रिनियामकत्वाच्च **रात्रिस्तन्नामा** अपान इत्येवं वायोरेवाध्यात्मं चत्वारि रूपाणि । एवमग्निरप्यध्यात्मं **वाग्** वागभिमानी वागाख्यो बभूव । **असावादित्यश्च चक्षुश्चक्षुरभिमानी** चक्षुराख्यो बभूव । चन्द्रमाश्च **मनः** यज्ञादिसाधनीभूतशालायूपकपालादिविषयकमनोवृत्त्यभिमानी मनोनामा । अत्र शिवशेषसुपर्णेन्द्रा अपि ग्राह्याः । **दिशः** प्राच्यादिदिगभिमानिनो मित्रयमवरुणकुबेराः **श्रोत्रं** श्रोत्राभिमानित्वेन तदाख्याः । अत्र चन्द्रोऽपि ग्राह्यः । विशेषस्त्वत्र भाष्योक्तरीत्या बोध्यः । स एष चाध्यात्मं देवानां संयोगो नान्यनिमित्तकः, किन्तु **प्रहितां** प्रहितानामेव । नुडागमाभावश्छान्दसः । विष्णुना प्रेरितानामेव बोद्धव्यः । अत एव **इमाः** सर्वाः ब्रह्मवाय्वाद्या **देवताः** देवतामात्राः **अद उ** तद्विष्ण्वाख्यं परं ब्रह्म एकमेव **अधिदैवतं** सर्वाधिकं दैवतम् । तत्र हेतुगर्भं विशेषणं– **आविरिति** ।। पूर्णज्ञानादिस्वरूपमित्यर्थः । इत्येतदेव प्रमेयं सर्ववेदादिसदागमैस्तात्पर्यात् **उक्तं** कथितं भवति । अस्ति नान्यत् । **ह स्म वे**ति निपातत्रयं सुप्रसिद्धिद्योतकम् । **एतद्** विष्णोरेवाधिदैवतत्वस्य सर्ववेदादिमहातात्पर्यविषयत्वमपि सर्वप्रमाणेषु सुप्रसिद्धमित्यर्थः । **एतत्** विष्णोरेव सर्वोत्तमत्वादिकं विद्वान् जानन् हिरण्यदन्नाम **बैदो** वैदो वेदद्रष्टा मुनिराह, किमिति? यथा लोकाः मह्यं न दद्युः मदभीष्टमिति शेषः । **तस्य** तथाकरणस्य कश्चन **नेशे** न समर्थ इति । अथवा वै तद् इति पदच्छेदः । तदेतद् विद्वान् हिरण्यदन्नाह हस्मवै इत्येकया वाक्यतया योज्यम् । तर्हि सुरा अपि न समर्थाः किन्नेति भावेनापवादसूचनायोक्तम्– **अयमिति** ।। मानुषादिजीव इत्यर्थः । किञ्च **प्रहितां** विष्णुना प्रहितानां प्रेरितानां । हि

गतावित्यतः क्विप् तुगागमश्च । ब्रह्मादिदेवानामध्यात्मं निविष्टम् । अध्यात्मसम्बन्धिनमिति यावत् । संयोगमहं वेद वै । **तत्** तस्मात्कारणात् **अस्मै** उक्तसंयोगवेत्त्रे मह्यं भूतानि मदवराणि मुक्तौ **बलिं हरन्ति** यथेष्टभोगभुगहं मुक्तौ स्यामिति यावत् । उपलक्षणमेतत् । स्वेच्छाविहृतिश्चाहं स्यामित्यपि ग्राह्यम् । **हवै** प्रमितमेतत् । नैवात्र सन्देह इति भावः । ननु तव कथं मुक्तौ स्वेच्छाविहारः सम्भवति । कैश्चित्तद्विघातस्यापि करणसम्भवादित्यत आह– **तदनीशानानीति** ।। भूतानीत्यनुकृष्यते । **तत्** तत्र मद्विहारनिषेधे भूतानि **अनीशानानि** अशक्तानि । देवादीनृते न कश्चिच्छक्तोऽस्तीत्यर्थः । **एतद्ध** एतद्धि प्रहितां वा इत्यादिकं तेन मुनिना कथितमिति शेषः । अथवाऽनीशानी-त्येतदुत्तरवाक्ये सम्बद्ध्यते । तथाच **य एवं वेद,** विष्णुप्रहित-देवानामध्यात्मं संयोगमेतन्नियोक्तारं च विष्णुं जानाति **अस्मै** ज्ञानिने, **अनीशानि** स्वस्वाम्यन्यानि स्वावराणि मुक्तानि भूतानि बलिं हरन्ति, मुक्ताविति योजना ।।

विद्यान्तरमारभते– **तत्सत्यमिति** ।। **तत्** ब्रह्म विष्ण्वाख्यं **सत्यम्** । कथं सर्वोत्तमत्वात् सत् । पूर्णत्वात् ति । सर्वज्ञत्वाद् यम् । ततः कर्मधारयः । अथ सत्यशब्देन पृथक् पृथग् वाच्यं देवतात्रयमप्याह– **सदितीति** ।। **प्राणो** वायुः शेषादिसर्वदेवेभ्य उत्तमत्वात्सदिति सम्प्रोक्तः । **अन्नं** अन्नाभिमानी सदा वेदोद्गिरणाद-तिनादवत्त्वादन्नशब्दवाच्यो ब्रह्मा जीवेषु पूर्णत्वात् **ती**ति प्रोक्तः । **असा**वादित्यः प्रकाशेन सर्वलोकयमनाद् **य**मित्युदिष्टः । तदेतद्देवता-त्रयं त्रित्वेन वर्तत इति **त्रिवृत्** । मिलितमेवेति यावत् । सत्यशब्दे-नोच्यते । नतु परब्रह्मवदेकैकमित्यर्थः । **एतच्च त्रिवृत्** देवतात्रयं

चक्षुषि संस्थितमित्यत्रोपस्कर्तव्यम् । तत्कुत इत्यतस्तत्र लिङ्गमाह– **त्रिवृदिवेति** ।। त्रिवृद्देवताधिष्ठानत्वादेवैतच्चक्षुरपि शुक्लं कृष्णं कनीनिकेति **त्रिवृदिव** त्रित्वसङ्ख्योपेतमिव दृश्यते वै इति । एतद्विद्याफलमाह– **स यदीति** ।। य एवमेतस्य सत्यस्य विष्णोर्मिलितदेवतात्रयस्य च **एतत्** सत्यत्वं पृथक् मिलितत्वेन च वेद, **सोऽ**धिकारी यदि कथञ्चिन्मृषा वदति, **अपि** तथापि अस्य **उदितं** वचनं **सत्यं वै** सत्यमेव भवति ह । सत्यप्रायं भवति । असत्यभाषणप्रयुक्तदोषवान् न भवतीति यावदित्यर्थः ।।२.१.५।।

**अथ षष्ठः खण्डार्थः**

विद्यान्तरमारभ्यते– **तस्येति** ।। **तस्य** नारायणस्य **वाक्** सर्ववेदात्मिका **तन्तिर्**महारज्जुरूपा । जगदाख्यपशुबन्ध इति शेषः । तद्गतानि वेदवक्गतानि **नामानि** ब्रह्मरुद्रादीनि विप्रक्षत्रादीनि च **दामानि** अवान्तररज्जुरूपाणि । **तस्य** नारायणस्य **वाचा** वेदवाग्रूपया **तन्त्या** महारज्ज्वा तद्गतै**र्नामभि**र्ब्रह्मरुद्रेन्द्रादिरूपैर्विप्रक्षत्रियवैश्यादिरूपैश्च **दामभि**रवान्तररज्जुभिरिदं **सर्वं** जगद् ब्रह्मादिकं **सितं** बद्धम् । कीदृशोऽयं बन्धो नामभिर्वाचा वेत्यत आह– **सर्वं हीदमिति** ।। **इदं सर्वं** जगत् **नामनीं३** नाम्नेव वर्तते हि । सर्वेऽपि नामवन्त इति यावत् । सर्वमपि **वाचा** वेदवाचा विष्णुः **अभिवदति** सर्वेषामपि वेदोक्तान्येव नामानि विष्णुः सङ्केतितवानिति यावत् । एतद्विद्यावेत्तुः फलमाह– **वहन्तीति** ।। य एवं वेद **एनं** वेत्तारं प्रति **तन्तिसम्बद्धा** वेदोदिताः सर्वे देवाद्याः वहन्ति । संसारे मुक्तौ च बलिमिति शेषः । अथवा **तन्तिसम्बद्धाः** पञ्चभूताभिमानिनो विघ्नेशाद्या देवा अश्वरूपा भूत्वा रथस्थमेनं वहन्तीत्यर्थः । अस्यां च

विद्यायां योग्यो ब्रह्मपदयोग्यो यः स एव । अत उक्तफलं तस्य युक्तमिति बोध्यम् । एवं तस्येत्यादिकं **तस्य** वायोर्वाचा तन्त्या नामभिर्दामभिस्सर्वं सुपर्णशेषगिरिशशक्रसूर्यादिकं जगद्बद्धमित्यादि वायुपरतयापि व्याख्येयम् ॥

पुनर्विद्यान्तरमारभ्यते– **तस्योष्णिगिति** ॥ **तस्य** हरेर्विमुक्त-वायोश्च **लोमानि** लोमसु 'सप्तसु प्रथमा' इति सूत्रात् । **उष्णिक्,** तन्नामकछन्दस्को मन्त्रगण आश्रित इत्यर्थः । अथवा तस्य लोमानि **उष्णिक्** आश्रयत्वादुष्णस्वरूपत्वाच्च तच्छब्दवाच्यानि । 'यस्माद् यज्जायते चाङ्गात्'[२३४] इति वचनात् । यद्वा 'ब्राह्मणोऽस्य मुख-मासीत्'[२३५] इत्यादिवदौपचारिकोऽयमभेदव्यपदेश इति ज्ञातव्यम् । एवमुत्तरत्रापि त्रेधा व्याख्येयम् । गानत्राणकर्तृत्वाद्गायतां त्रायक-त्वाद्वा **गायत्री** । त्रिभिर्वेदैस्तुतत्वात् **त्रिष्टुप्** । **अनु** आनुकूल्येन स्तूयमानत्वाद**नुष्टुप्** । जातस्य गतित्वा**ज्जगती** । पञ्चरूपत्वात्**पङ्क्तिः** । बृहत्त्वाद् **बृहती** । **स** भगवान् वायुश्च **छन्दोभि**रुष्णिगादिभिः **छन्नः** तनुः कवचैरिव । **यद्य**स्मादेवं भगवांश्छन्दोभिः छन्नस्तस्माद्भगवदा-श्रितत्वेन तदाच्छादकत्वादेव तानि छन्दांसीत्याचक्षते विद्वांसः । छदेरसुन् नुमागमश्च । एतद्विद्यावेत्तुः फलमाह– **छन्दांसीति** ॥ **यो**ऽधिकारी छन्दसा**मेतद्** विष्णुच्छादकतारूपं **छन्दस्त्वं** छन्दःशब्द-प्रवृत्तिनिमित्तं वेद, स यदि **यस्यां** कस्याञ्चिद्दिशि वस्तु कामयते, तर्हि तस्यां दिशि वसन्तमेनं छन्दांसि तत्तद्दिग्वासप्राप्तात् **पापात्** कर्मणः, ल्यब्लोपनिमित्ता पञ्चमी । पापं कर्म निवार्य **छादयन्ति,** गोपायन्तीत्यर्थः । अत्र छन्दस्स्थितछन्दोनामकहरेरेव मुख्यतः पापा-

२३४. ब्र.सू.भा १-२-२६ २३५. पुरु.सू १२

द्रक्षकत्वम्, छन्दसां तु तत्सम्बन्धादेवेति ज्ञातव्यम् । इदं च फलमुपासनायोग्यानां भृग्वादीनां देवतानां चैव मुख्यमिति ज्ञेयम् । अत्र मन्त्रसम्मतिमाह– **तदुक्तमिति ।।**

[२३६]'अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम् ।
स सध्रीचीस्सविषूचीर्वसान आवरीवर्ति भुवनेष्वन्तः ।।'

इति मन्त्रेण **तदस्मदुक्तं** प्रमेयं **ऋषिणा** मन्त्रद्रष्ट्रोक्तं कथितमित्यर्थः । मन्त्रस्य दुर्गमार्थत्वात् स्वयमेव क्रमेण मन्त्रभागाननूद्य व्याचष्टे– **अपश्यं गोपामितीत्यादिना ।। एषः** छन्दस्संस्थितवायुस्थो भगवाव् **गोपाः वै** । कुतः? **हि** यस्मादेषः **सर्वं** छन्दोविद्यावेत्तृजनं **गोपायति** पापाद्रक्षति । 'अनिपद्यमानं' इत्यस्यार्थः– **न ह्येष इति ।। एष** वायुर्वायुस्थश्च हरिः कदाचन **न संविशति** न तूष्णीं तिष्ठति, सदा सर्वप्रवृत्तिमान् भवतीति यावत् । 'आ च' इति द्वितीयपादस्य व्याख्यां– **आच ह्येष इति** ।। **एष** वायुस्तत्स्थो हरिश्च **आ** समन्तात् सर्वत्र च पञ्चभूतानामन्तरिति यावत् । **परा** पराक् बहिश्च पञ्चभूतेभ्य इति शेषः । **पथिभिः** स्वाभिमतमार्गैश्चरति । 'स सध्रीची'रिति तृतीयपादस्यार्थः– **सध्रीचीरिति ।। एष** हि वायुः वायुस्थश्च हरिः **सध्रीचीस्**सध्रीचीनाः, द्वितीया सप्तम्यर्थे । सध्रीचीनास्ववक्रासु प्राच्यादिचतुर्दिक्ष्विति यावत् । **विषूचीर्**विषूचिषु वक्रासु आग्नेयादिचतुष्कोणदिक्ष्विति यावत् । चशब्दौ मिथस्समुच्चये । **वस्ते** वसति । मन्त्रे विशेष्यपदाभावात् कास्तास्सध्रीचीना विषूचीनाश्चेत्यतो विशेष्यं दर्शयति– **इमा एवेति** ।। दिश एव

---

२३६. ऋक्.सं १-१६४-३१

**इमा** सध्रीच्यादिपदवाच्या इत्यर्थः । 'आवरीवर्ती'ति तुरीयपादस्यार्थः– **एष हीति ।।** वायुर्वायुस्थो हरिश्च **भुवनेषु** सर्वलोकेषु **आवरीवर्ति** आ सम्यक् सर्वदा च वर्तते । लोकसाक्षी सन् वर्तत इत्यर्थः ।

तथाचायं मन्त्रार्थ उक्तो भवति । **गोपां** छन्दोविद्यावेत्तॄणां पापाद्रक्षकं **अनिपद्यमानं** कदाचिदप्येकत्र तूष्णीं संवेशनरहितं सदा सर्वप्रवृत्तिमन्तमिति यावत् । **आ च परा च पथिभिश्चरन्तं** सर्वत्र सञ्चारिणम्, छन्दःस्थितवायुं वायुस्थं च भगवन्तमहमपश्यमिति । मन्त्रद्रष्टुर्मुनेर्वचनमिदम् । **स एष** वायुर्भगवांश्च **सध्रीचीः** सध्रीचीषु ऋज्वीषु पूर्वादिदिक्षु वसानो भवति । स एव **विषूचीर्विषूचीषु** कोणादिदिक्षु च वसानो भवति । एष एव हि भुवनेष्वन्तर**ावरीवर्ति** सर्वलोकसाक्षितया वर्तत इति ।।

'सर्वं हीदं प्राणेनावृत'मित्यादि वक्ष्यमाणार्थेऽपि

[२३७]'अप्रक्षितं वसु बिभर्षि हस्तयोरषाळ्हं स हस्तन् विश्रुतो दधे ।
आवृतासोऽवतासो न कर्तृभिस्तनुषु ते क्रतव इन्द्र भूरय'

इति मन्त्रस्समाख्यारूपोऽस्तीति भावेन तमुदाहर्तुमाह– **अथो इति ।। अथो** 'छादयन्ति हवा एनं छन्दांसी'त्युक्तार्थे सम्मतितया 'अपश्यं गोपा'मिति मन्त्रोदाहरणानन्तरं सर्वं हीदमिति वक्ष्यमाणार्थेऽपि मन्त्र उदाहरिष्यत इति शेषः । तत्र तृतीयपादमात्रमुदाहरति– **आवृतास इति ।।** प्रकृतानुपयोगादितिरेषां पदानामनुदाहरणम् । समग्रमन्त्रार्थस्तु– हे **इन्द्र** परमेश्वर वायो वा **अप्रक्षितं**

---

२३७. ऋक्.सं १-५५-८

प्रक्षयशून्यम् नित्याक्षीणं **वसु** हस्तयोस्त्वं बिभर्षि । **अषाळ्हं** असह्यं सोढुमशक्यमनन्तमिति यावत् । **सहो** बलं **तन्वि** स्वतनौ **श्रुतः** प्रसिद्धः **त्वं दधे** धृतवानसि । कर्तृभिर्धनसङ्ग्रहकारिभिः **अवतासो न** अवताः कनकावटाः ते यथा आच्छाद्यन्ते तथा भूरयोऽनन्ताः **क्रतवो** ज्ञानरूपा जीवा**स्ते** तव तनुषु **आवृतासः** आवृताः गोपिता इति । एवं समाख्यामन्त्रमादावेवोदाहृत्येदानीं समाख्येयमभिधित्सि-तमर्थं निरूपयति– **सर्वं हीति ।। प्राणेन** भगवता वायुना च । उपलक्षणमेतत् । आकाशेन चेत्यपि ग्राह्यम् । 'सोऽयमाकाशः'[२३८] इति वक्ष्यमाणत्वात् । आकाशपदवाच्यप्रकृत्या च **इदं सर्वं** चेतनजातं महदाद्यचेतनजातं च **आवृतं** स्वदेहे गोपितम् । **हि** प्रसिद्धमित्यर्थः । **सोऽयमाकाशः** प्रकृतिः, उपलक्षणमेतत् वायुश्च **बृहत्या** बहत्त्वात् बृहतीशब्दवाच्येन प्राणेन भगवता **विष्टब्धो** विधृतः । उक्तार्थमेव दार्ढ्यार्थं पुनर्दृष्टान्तमुखेनोपपादयन्नेतज्ज्ञानस्यैव मोक्षसाधनता-ज्ञापनायास्यार्थस्यावश्यवेद्यतां विधत्ते– **तद् यथेति ।। तत्** तत्र वक्ष्यमाणार्थे पूर्वोक्तमेतदेव निदर्शनं **तद् यथाऽयमाकाशः** प्रकृतिः, उपलक्षणया वायुश्च, **बृहत्या** प्राणेन विष्णुना विष्टब्धः, एवं **आपिपीलिकाभ्यः** पिपीलिका आरभ्य सर्वाणि भूतानि **बृहत्या** प्राणेन मुख्यतो बृहतीप्राणशब्दवाच्येन विष्णुनाऽमुख्यतस्तद्वाच्येन वायुना च प्रकृत्या चेत्यपि ग्राह्यम्, **विष्टब्धानि** विधृतानीत्येव विद्यादित्यर्थः ।।२.१.६।।

---

२३८. ऐत.उ २-१-६ (६३-पुटम्)

## अथ सप्तमखण्डार्थः

**अथ** तद्विद्यानिरूपाणानन्तरम्, **अतो** महाफलसद्भावात् **अस्य पुरुषस्य** भगवतो **विभूतयो**ऽङ्गमहिमानो निरूप्यन्ते । तत्रादौ मुखमहिमानं निरूपयति– **तस्येति** ।। **तस्य** विष्णोर्**वाचा**, मुखोपलक्षणमेतत् । मुखेन पृथिवी चाग्निश्चेत्युभौ सृष्टौ । **अस्यां** पृथिव्यां **ओषधयो** व्रीह्यादयो जायन्ते । भगवत्सेवार्थं पृथिवी ओषधीर्जनयतीति यावत् । अग्निश्च **एनाः** पृथिवीजाता ओषधीः **स्वदयति** पाकेन स्वादु[२३९]युक्ताः करोति । एतच्चाग्निर्नौदासीन्येन करोति । किन्तु भक्त्युद्रेकेणोद्युक्त एव करोतीति भावेनाह– **इदमाहरेति** ।। **इदं** पचनीयं तण्डुलादिकमाहरत **इदं** शाकफलादिकं आहरतेति जनान् प्रत्युक्त्वा तैराहृताः आहृताः सर्वा ओषधीः स्वदयतीत्यन्वयः । एवं पृथिवी चाग्निश्चेति **एतौ, पितरं** स्वजनकत्वात्पितृरूपां वाचं **परिचरतः** सेवाते । मुखभोग्यमन्नं निष्पाद्य सर्वेषां मुखे स्थितस्य विष्णुमुखस्य समतर्पयत इति भावः ।।

एतद्विद्यावेत्तुः फलमाह– **यावदिति** ।। **यो**ऽधिकारी **एवं** वाचो विष्णुमुखस्य **विभूतिं** पृथिव्यग्निस्रष्टृत्वतत्सेव्यत्वरूपां वेद, अस्य **यावत्** यावति देशे पृथिवी यावच्चाग्निस्तावान् लोको भवति । कथम्? **अनु अनु** तां तं चानुसृत्यैव । ताभ्यां समन्वितस्तत्समव्याप्तिश्च भवतीति भावः । **यावदेतयोः** पृथिव्याश्चाग्नेश्च लोको न जीर्यते तावत्कालमस्यापि लोको न जीर्यते । पृथिव्यग्निवन्मुक्तः सन् विष्णुसमीपे वैकुण्ठादौ कदाप्यनष्टलोकस्सन्नसौ वसतीति भावः । इदं च फलं पृथिव्यग्निपदयोग्यजीवानामेव । अन्येषां तु पृथिव्यग्निलोके मुक्तौ तत्स्थाने सञ्चरणमात्रमिति ज्ञातव्यम् ।।

२३९. स्वादुता इति 'ख'पाठः

**प्राणेनेति** ।। अत्र प्राणशब्देन भगवदीयो घ्राणस्तदधिष्ठाता भगवत्प्राणवायुश्चोच्यते । तस्य पुरुषस्येति वर्तते । अन्तरिक्षमिति तदभिमानी विघ्नेशः । वायुर्मुख्यः । तयोः सेवाप्रकारमाह– **अन्तरिक्षमिति** ।। भूताकाशाभिमानिनं विघ्नेशं **अनु वै** [२४०]तत्प्रेरणयेति यावत् । **चरन्ति** सर्वाणि भूतानि विष्णुप्रीत्यर्थं तीर्थक्षेत्राद्यटनं कुर्वन्ति । **अन्तरिक्षमनु** तत्प्रेरणयैव भगवत्कर्माणि श्रोत्रेण शृण्वन्ति । अन्तरिक्षाभिमानी विघ्नेशः स्वजनकविष्णुप्राणसेवार्थं प्राणिनां विष्णुप्रीतिजनकयात्रादिप्राणव्यापारसिद्ध्यर्थमवकाशं ददाति । तत्प्राणकृतानां जगत्सर्जनादिरूपव्यापाराणां श्रवणार्थं श्रोत्रस्योपचायको भूत्वा श्रवणशक्तिप्रदश्च भवतीति यावत् । एतदुभयं च जीवप्राणाधिष्ठातृविष्णुप्राणप्रीतिहेतुत्वात् तत्सेवारूपं भवत्येवेति हृदयम् । वायुश्च **अस्मै** विष्णुघ्राणाय **पुण्यं** शुभं गन्धमावहति । 'एवमेता'वित्यादि पूर्ववद् व्याख्येयम् ।।

**चक्षुषेति** ।। **द्यौर्द्युलोकाभिमानिनी देवताऽस्मै** अस्य भगवतः प्रीतिजनककर्मसिद्धये प्राणिनां वृष्टिं तया च **अन्नाद्यम्** अन्नपानीयश्रीतुलसीगन्धपुष्पादिसर्वं पूजासाधनद्रव्यं सम्प्रयच्छति । आदित्यश्चास्यै तत्कर्मसिद्धये **ज्योतिः** प्रकाशं स्वज्योतिषा द्रव्यप्रकाशनं करोति । 'एवमेता'विति पूर्ववत् । [२४१]तत्कर्मणो चक्षुःसेवारूपत्वं प्रागुक्तमेव बोध्यम् ।।

**श्रोत्रेणेति** ।। **दिशो** दिगभिमानिनो मित्रयमवरुणकुबेराः । दिशां श्रोत्रसेवाप्रकारमाह– **दिग्भ्य इति** ।। **एनं** जीवश्रोत्रस्थितं भगवन्तं

---

२४०. तत्प्रेरणयैवेति इति 'ख'पाठः २४१. एतत् इति 'ख'पाठः

सर्वे वीणावेणुमुरजमृदङ्गादिशब्दाः दिग्भ्य एव **आयन्ति** उपसर्पन्ति ह । दिग्देवता हि सुशब्दान् स्वस्वाधिष्ठितप्राच्यादिदिग्भ्य उपानीय जीवश्रोत्रनिष्ठाय भगवते समर्पयन्तीति यावत् । ततः किमित्यत आह– **दिग्भ्य इति** ॥ **दिग्भ्यो** दिग्देवताभ्यस्तत्प्रेरणया भगवदन्यो जीवस्तान् शब्दान् शृणोति । भगवांस्तु दिग्भ्यो दिशो विहाय तत्प्रेरणां विनैवेति यावत् । **विशृणोति** विशेषेण तानेव शब्दान् जीवश्रोत्रगस्वश्रोत्रेण शृणोति । जीवानां वीणादिशब्दश्रवणजं सुखं च भुङ्क्ते । अत इदं भगवत्परिचरण-रूपं भवतीति भावः । चन्द्रमाश्चास्मै पुण्याय कर्मणे एतं भगवन्त-मुद्दिश्य जीवानां पुण्यं कर्म कर्तुं स्वकलावृद्धिक्षयाभ्यां पूर्वपक्षापर-पक्षान् **विचिनोति** विवेचयति । चन्द्रमसा शुक्लपक्षकृष्णपक्षविवेचने कृत एव हि तत्र तत्र देवपित्रधिष्ठानभेदेन विष्णुस्तुत्यादिकर्माणि प्रवर्तन्ते । ततस्तानि स्तुत्यादीनि कर्माणि भगवान् स्वश्रोत्रेण शृणोति । अत इदं तत्परिचरणरूपं भवत्येवेति भावः । शिष्टं पूर्ववत् ॥

**मनसेति** ॥ अत्राप इत्यबभिमानिनो ब्रह्मवायुशेषाद्याः सर्वदेवा उच्यन्ते । वरुणः प्रसिद्ध एव । तत्रापां सेवाप्रकारमाह– **आपो हेति** ॥ अस्मै पुण्याय कर्मणे एतमुद्दिश्य जीवानां पुण्यं कर्म कर्तु**मापो** ब्रह्माद्या देवाः श्रद्धां **सन्नमन्ते** प्रयच्छन्ति । तत्र विवेकस्तु 'विष्णो-र्विषयधर्मेषु'[२४२] इत्यादिना भाष्योक्तरीत्याऽनुसन्धेयः । वरुणश्चास्य प्रजामनोनिष्ठभगवन्मनसोऽर्थे । तत्प्रीत्यर्थमिति यावत् । **धर्मेण** पूर्तनिर्माणरूपकर्मणा । तत्र प्राणिनां श्रद्धोत्पादनेन प्रजां **दाधार** दधार । श्रद्धापूर्वकपूर्तनिर्माणपुण्यवतश्चकारेति यावत् । अथवाऽस्मै पुण्याय कर्मणे श्रद्धां सन्नमत इत्येतदत्रापि योज्यम् । तथाच

२४२. ऐत.भा २-१-७ (७४-पुटम्)

**वरुणोऽस्मै** एतमुद्दिश्य पूर्तनिर्माणरूपपुण्यकर्म कर्तुं जीवानां श्रद्धां सन्नमते । अस्य भगवतः प्रजां च राजत्वादिधर्मेण दधार । 'तत्रासौ राजा सत्यानृते विविञ्चति'[२४३] इति श्रुतेः । प्रजाधारणोपयोगिवापी-कूपतटाकादिनिर्माणे श्रद्धोत्पादनद्वारेण तन्निर्माणरूपधर्मेण च दधारे-त्यर्थः । एवमेते इत्यादि पूर्ववत् ।।२.१.७।।

**अथ अष्टमखण्डार्थः**

एवं भगवता महिदासेनोपदिष्टा रमा स्वयं सर्वज्ञाऽपि लोकानुग्रहाय परकीयं संशयं स्वयमाहृत्य भगवन्तं पृच्छति– **आपा३ इति ।।** 'मनसा सृष्टा आपश्च वरुणश्चे'त्यप्शब्दवाच्यता सर्वेषां ब्रह्मादिदेवानाम-भिहिता । न च तत्र किमपि निमित्तमुक्तम् । अतस्तेषामाप इति नाम कथमुपपद्यत इत्यर्थः । भगवानुत्तरं वक्ष्यन् प्रथमतः प्रतिजानीते– **आप इतीति ।।** एषां देवानामाप इति नामोपपन्नेवेत्यर्थः । वक्ष्य-माणानुसारेण निमित्तसद्भावादिति भावः । तत्र निमित्तं वक्तुमुपो-द्धातमाह– **तदिदमाप इति ।।** इदं मदाख्यं यद् ब्रह्म **तत्** तावत् **आप एव** अप्शब्दाभिधेयं भवत्येव । सर्वगुणैरापूर्णत्वात् । **इदं** चाप्शब्दवाच्यं ब्रह्म सर्वस्यापि जगतो **मूलं** कारणम् । **वै** प्रसिद्धम् । **अदः** तदन्यत् सर्वं चतुर्मुखादिकं **तूलं** कार्यरूपम् । न चायं कार्यकारणभावो वृक्षबीजयोरिवोपादेयोपादानत्वरूपो मन्तव्यः । किन्त्वयं भगवान् पिता, एते च ब्रह्मादयो देवा पुत्रा इत्यर्थः । अस्त्वेवं किं प्रकृत इत्यत आह– **यत्र हेति ।। यत्र क च**

---

२४३. ब्र.सू.भा ४-३-३ इत्यत्रोदाहृता श्रुतिः । परन्तु तत्र 'तत्रासौ वरुणो राजा...' इति श्रुत्याकारः गृहीतः ।

यत्किञ्चित् पुत्रस्य नामादि **तत्** पितुरपि भवत्येव । पितुर्यावन्नामादिकं तत् पुत्रस्यापि भवत्येव । वाशब्दोऽप्यर्थः । **इति** हेतोर्हे रमे **एतत्** त्वत्प्रश्नस्योत्तरमुक्तं भवति ।।

अयमाशयः । पुत्रस्य यन्नामधनादिकं वा तत्तावत् पितुरपि भवेदेव । पितामहादीनामपि पितर इति लोकवेदयोः प्रसिद्धेः । पुत्रसम्पादिते धनादौ च ममेदं धनमिति पितुरबाधितव्यवहाराच्च । पुत्रस्य पित्रधीनत्वात् । एवं पितृनामादिकमपि पुत्रस्यामुख्यतया भवत्येव । 'यदवो, रघवः, कुरवः' इत्यादिव्यवहारस्य तद्वंशजातेषु दर्शनात् । पितृधनादेः पुत्रेणानुभूयमानत्वाच्च । प्रकृते च ब्रह्मादीनां सर्वेषां विष्णुपुत्रत्वात्तदीयमाप इति नाम[२४४] तेष्वमुख्यया वृत्त्या प्रयुज्यत इति ।

प्रकारान्तरेणापि देवानां आप इति नाम युक्तमेवेति वक्ति– **एतद्धस्मेति** ।। **एतद्** भगवन्नाम्नो देवेषु वृत्तौ वक्ष्यमाणं च निमित्तं **विद्वान्** नित्योदितज्ञानत्वादेव जानन् **ऐतरेयो महिदासो** भगवान् **एतद्व**क्ष्यमाणं वचनं रमां प्रत्याह । **ह स्म वा** इति निपातत्रयमस्यार्थस्य सुप्रसिद्धिद्योतकम् । किमाहेत्यत आह– **अहमिति** ।। अहं **आदेवेभ्यो** देवपर्यन्तं मां **वेद** वेद्मि । **उ** उत **आ** मत् मत्पर्यन्तं देवांश्चाहं वेद । अहं देवेषु व्याप्तो देवाश्च मयि स्थिता इति यावत् । न चैतदप्रामाणिकम् । मत्प्रत्यक्षसिद्धत्वादित्यभिप्रेत्याहं वेदेत्युक्तम् । तथाच यथा क्षीरनीरयोर्मिश्रत्वे नीरेऽपि क्षीरशब्दव्यवहारः, एवं मम देवानां च मिथो व्याप्तत्वान्मन्नामव्यवहारस्तेषु

---

२४४. नाम इति पदं 'क' पाठे नास्ति

युक्त इति भावः । किञ्च **एते** देवा **इतो** मत्त एव **प्रदानाः** पदप्रदानवन्तः मत्प्रदत्तपदान्येवाधितिष्ठन्तीति यावत् । अपि च **एते** देवा **इतो** मत्त एव मदाज्ञामात्रेण **प्रदानाः** सत्ताप्रतीतिप्रवृत्ति-प्रदानवन्तः **हि** यस्मात्तस्मादेते **इतो** मत्त एव **सम्भृताः** ज्ञानकर्म-बलचेष्टादिदानेन पोषिताः । अतः सर्वप्रकारेण मदधीनत्वाद्देवानां मन्नामव्यपदेशो युज्यते । 'यदधीना यस्य सत्ता तत्तदित्येव भण्यते'[२४५] इत्यादेरिति भावः । इतिशब्दस्याहेत्यनेनान्वयः ॥

एवं प्रश्नोत्तरमुक्त्वा विद्यान्तरमारभते– **स एष इति** ॥ **स एष** भगवान् सर्वभूतानां गिरणान्निगिरणाद्**गिरिः** । **अस्य** विश्वस्य दर्शनात् **चक्षुः** । सर्वश्रोतृत्वतः **श्रोत्रम्** । सर्वमन्तृत्वान्**मनः** । सर्ववक्तृत्वाद् **वाक्** । सर्वप्रणयनात् **प्राणश्च** । तं **एनं** भगवन्तं ब्रह्मगिरि-रित्याचक्षते विद्वांसः । गुणपूर्णत्वाद् **ब्रह्म** । अखिलस्य निगिरणाद् **गिरिः** । ब्रह्म चासौ गिरिश्चेति । एवं वेत्तुः फलमाह– **गिरतीति** ॥ य एवं **तं** विष्णुं गिर्यादित्वेन **वेद** उपास्यापरोक्षतः पश्यति । सोऽ**खिलं पाप्मान**मप्रारब्धं **गिरति** विनाशयति । कीदृशं **द्विषन्तं** द्वेषिणमिवानिष्टकारकं **भ्रातृव्यं** भ्रातृवत्सह संस्थितम् । न केवलं पापमेवास्य विनश्यति किन्त्वस्य **द्विषन्** द्वेषी **पाप्मा** पापी **भ्रातृव्यो** बाह्यशत्रुरपि **पराभवति** तमसि पतितो भवतीत्यर्थः ॥

पुनर्विद्यान्तरमारभते– **स एषोऽसुरिति** ॥ **स एष** भगवान**सुः** सर्वस्यापि निरसनात् । स एष **प्राणः** प्रकृष्टानन्दरूपत्वात् । स एष **भूति**र्ज्ञानैश्वर्यादिरूपस्तद्दाता च । **स एषोऽभूति**श्चाज्ञानाद्यभूति-

---

२४५. भाग.ता २-५-२

दत्वात् । तमेतं विष्णुं **भूतिरिति** भूतिस्वरूपो भूतिदाता चेति **देवा** वाय्वाद्या उपासाञ्चक्रिरे । उपासया च **एते**[२४६] देवा बभूवुः । सुख-सज्ज्ञानादिपूर्णगुणरूपभूतिमन्त इति शेषः । भूतिरिति देवा उपासत इत्येतत् प्रत्यक्षनिदर्शनेनोपपादयति– **तस्मादिति** ।। देवानां भूतिरिति विष्णूपासकत्वादेव । **एतर्ह्यपि** इदानीमपि **सुप्तः** सुप्तस्थः सर्वदेवोत्तमो वायु**र्भूर्भूरित्येव प्रश्वसिति** श्वासरूपेण विष्णुं शंसति । तथाऽन्येऽपि देवा एवमेव विष्णुं भूतित्वेनोपासत इति ज्ञातव्यम् । 'यद्यदाचरति श्रेष्ठः'[२४७] इति न्यायादिति भावः । अत्र भूःशब्दार्थोऽपि भूतिरित्येव, अतो नासङ्गतिः शङ्कनीया । **असुराश्चाभूतिरिति** । तमुपासाञ्चक्रिर इत्यनुषज्यते । अस्माकमभूतिकारकः स्वयमैश्वर्यादि-गुणोज्झितश्चेत्यर्थः । **ते** चासुराः **पराबभूवुः** पराभूतिं प्राप्ताः ज्ञानै-श्वर्यादिगुणहीना अन्धे तमस्यधःपेतुरित्यर्थः । एतद्विद्याफलमाह– **भवतीति** ।। **यः** पुमान् **एवं** विष्णुं भूतिरूपिणं भूतिदं च वेद । तथा भूतित्वाभूतित्वोपासनाभ्यां देवानां दैत्यानां च भावाभावलक्षणं फलं च वेद, स **आत्मना** परमात्मप्रसादेन **भवति** ज्ञानैश्वर्यादिमान् जायते । **अस्य द्विषन्** भ्रातृव्यवत्स्थितः पाप्मा बाह्याभ्यन्तरश्च शत्रुः **आत्मना** परमात्मप्रसादेन **पराभवति** तमसि पतितो भवतीत्यर्थः ।।

पुनर्विद्यान्तरमारभते– **स एष इति** ।। भगवान् **मृत्युर्मृत्युदः** संसारदाता **अमृतं** मोक्षदः । मिथःसमुच्चये चशब्दौ । एवशब्दः स एष एवेति सम्बद्ध्यते । अथवा **मृत्युः** मृतिप्रदः । **अमृतं** जीवन-प्रदश्चेत्यर्थः । अत्रेदं बोध्यम् । यदाऽयमपानेन संयुतं प्राणमस्मिन् शरीरे नियमति, तदा जीवनप्रदो भवति । यदा तु प्राणापानौ

---

२४६. ते इति 'ख'पाठः        २४७. गीता. ३-२१

शरीराद्बहिर्निस्सारयति, तदा मृत्युप्रद इति । अत्रार्थे मन्त्रसम्मति-माह– **तदुक्तमिति** ।। **तत्** प्राणापानौ निमित्तीकृत्य भगवतो जीव-जीवनकरत्वादिक**मृषिणा** मन्त्रद्रष्ट्रोक्तमित्यर्थः ।

[२४८]'अपाङ् प्राङेति स्वधया गृभीतो अमर्त्यो मर्त्येनास योनिः ।
ता शश्वन्ता विषूचीना वियन्तान्यन्यचिक्युर्न निचिक्युरन्यम् ।।'

इति मन्त्रे आद्यपादं तावदनूद्य वायुः **स्वधया** सुखेन सुखरूपिणा हरिणा **गृभीतो** गृहीतः प्रेरितः[२४९] सन् **अपाङ्** अवाक् **एति** गच्छति । अपानरूपेणाधो गच्छति । **प्राङ्** प्राक् ऊर्ध्वं **चैति** प्राणरूपेणोर्ध्वं गच्छतीति तदर्थमभिप्रेत्य स्वयमेव व्याचष्टे– **अपाङिति** ।। अपानेन संयुतोऽयं प्राणो हरिणा **हि** यस्मात् यतो **नियतः** प्रेरित**स्तस्माद्** हरिप्रेरणादेवेति यावत् । **पराङ्** देहाद्बहिर्न **भवति** तत्रैव स्थित्वा देहिनां क्लृप्तकालपर्यन्तं जीवनहेतुर्भवतीत्यर्थः । द्वितीयपादमनूद्य **स्वधया** आनन्दरूपहरिप्रसादेन **अमर्त्यो**ऽविलुप्त-ज्ञानो वायु**र्मर्त्यै**र्नाशशीलैः प्राणिनां देहैः **सयोनिः** साधिष्ठानः, तैः सह स्थित इति यावदिति तदर्थमभिप्रेत्य व्याचष्टे– **अमर्त्य इति** ।। एतेन प्राणेन हीदं सर्वं शरीरजातं **सयोनि** योनित्वोपेतं, प्राणस्या-धिष्ठानरूपमिति यावदित्यर्थः । अत्र मर्त्यामर्त्यशब्दौ शरीरप्राणपरा-वित्यभिप्रेतम् । तद् व्यनक्ति– **मर्त्यानि हीति** ।। **एषा देवता** प्राणाख्या । अथोत्तरार्धमनूद्य **ता** तौ देहवायू **शश्वन्ता** शश्वन्तौ शाश्वतौ । तत्र स्थूलदेहाः जीवानां मोक्षपर्यन्तं प्रवाहतः सन्त्येवेति शाश्वताः । सूक्ष्मदेहस्तु साक्षादेवानादितः सम्बद्ध इति शाश्वतः ।

---

२४८. ऋक्.सं १-१६४-३८

२४९. प्रेरितः इति पदं 'क'पाठे नास्ति

वायुरपि तत्तत्कल्पीयोऽनादिकालात्प्रवाहतो नियामकतयाऽस्त्येवेति शाश्वत इत्युच्यत इति विवेकः । **विषूचीना** विषूचीनौ विष्वगञ्चमानौ नानागती इति यावत् । तत्र वायोः परमचेतनकेशवप्राप्तिः शरीरस्य पञ्चत्वरूपजडताप्राप्तिरिति गत्योर्नानात्वं ज्ञेयम् । **वियन्ता** वियन्तौ विरुद्धगमनौ । वायोरूर्ध्वगमनाद्देहस्याधः क्षितौ पतनात् । अत्र सर्वत्र 'सुपां सुलुग्'[२५०] इति स्मरणादाकारादेशः सखायेत्यादिवत् । तत्र **अन्यं देहं निचिक्युः** जनाः पश्यन्ति । **अन्यं** वायुं च **न निचिक्युः** न पश्यन्ति । न ह्युत्क्रान्तिकाले केऽपि वायुं पश्यन्ति । अत इमौ दृश्यत्वादृश्यत्वाभ्यामपि विरुद्धधर्मवन्ताविति तदर्थमभिप्रेत्य व्याचष्टे– **निचिन्वन्तीति ।। इमानि** शरीराण्येव जनाः **निचिन्वन्ति** पश्यन्ति, न तु वायुम् । **एषा** वायुदेवतैवामृता न तु शरीराणि, तानि तु पञ्चत्वादिमन्त्येवेत्यर्थः । एवंविदः फलमाह– **अमृत इति ।।** य **एवं** वायुममृतत्वादिगुणयुक्तं वेद, **सोऽमृतो** मुक्तः सन् **अमुष्मिन्** वैकुण्ठलोकादौ विष्णुलोके **सम्भवति** सम्यगास्ते । अमृतः सन्नेव **सर्वेभ्यो भूतेभ्यः** सर्वैर्भूतैर्मुक्तैर्ददृशे दृश्यत इत्यर्थः । य एवं वेदेति द्विरुक्तिरवधारणार्था । यथोक्तं सूत्रभाष्ये[२५१]–

'अवधारणार्थं सर्वस्याप्युक्तस्याध्यायमूलतः ।
द्विरुक्तिं कुर्वते प्राज्ञा अध्यायान्ते विनिर्णये' इति ।

---

२५०. पा.सू. ७-१-३९ सि.कौ.सू.सं. ३५६१

२५१. १-४-२९

वक्ष्यते च–

'सर्वप्रमाणसिद्धत्वं वक्तुमध्यायमूलतः ।
अध्यायान्ते द्विरुक्तिः स्यात् पूर्वोक्तस्यावधारणे'[२५२] इति ॥

**॥ इति श्रीमन्महैतरेयोपनिषद्भाष्यभावदीपे द्वितीयारण्यके प्रथमोऽध्यायः ॥**

२५२. ऐत.भा २-२-४

# अथ द्वितीयारण्यके द्वितीयोध्यायः

॥ हरिः ॐ ॥

सूर्यान्तर्यामिणो नारायणस्यैव जीवशरीरान्तर्यामित्वकथनम्

उपनिषत्

**एष इमं लोकमभ्यार्चत् पुरुषरूपेण, य एष तपति । प्राणो वाव तदभ्यार्चत् । प्राणो ह्येष य एष तपति ।**

भाष्यम्

एष नारायणो देवो[1] वायुना सहेमं लोकमभ्यार्चत् ब्रह्मादिशरीरेषु प्रविवेश । पुरुष इत्यन्तर्यामिरूपस्याख्या 'पुरि शेते' इति । प्रसिद्धत्वाच्च पञ्चरात्रेषु । य एष सूर्यमण्डले स्थित्वा तपति स भगवान् नारायणः ।

'य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद' इत्यादिश्रुतिभ्यः ।

शिवस्य सूर्यान्तर्यामित्वाभावसमर्थनम्

'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते'[2] इत्युक्त्वा 'तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी'[3] इत्युक्तत्वान्न शिवादयः । शिवो हि विरूपाक्षः । प्रसिद्धश्च पुण्डरीकाक्ष इति भगवान्नारायणः ।

---

१. देव इति पदं ह्.पाठे नास्ति

२. छा.उ १-६-६

३. छा.उ १-६-७

**भावप्रदीपः**

**अन्तर्यामिणमीशं सर्वेषां सर्वशब्दसंवाच्यम् ।**
**बृहतीदशशतगीतं वन्दे विष्णुं रमामरुन्नाथम् ।।**

'एष इमं लोकं' इत्यादि खण्डं व्याख्यातुमुपक्रमते– **एष नारायण इत्यादिना** ।। अत्र नारायण इति प्राणशब्दार्थः । वायुना सहेति मूले शेषोक्तिः । 'तं प्रपदाभ्यां प्रापद्यत'[४] इति पूर्वाध्याये देहप्रवेशकाले भगवतो वायुसहभावस्य कथितत्वात् । एतत्प्रकरणस्य वायुपरताया अपि वक्ष्यमाणत्वाच्च । इमं लोकमभ्यार्चदित्यनुवादः । ब्रह्मादिशरीरेषु प्रविवेशेति व्याख्यानम् । पुरुषरूपेणेत्यस्य जीवरूपेणेत्यन्यथा-प्रतीतिनिरासायोक्तम्– **पुरुष इतीति** ।। तत्र पुरुषशब्दं निरुच्य दर्शयति– **पुरि शेत इतीति** ।। एवं योगं प्रदर्श्य रूढिमप्याह– **प्रसिद्धत्वाच्चेति** ।। नेदं पञ्चरात्रे क्वाचित्कम्, किन्तु तत्र तत्र बहुलमुपलभ्यत एवेति ज्ञापनाय **पञ्चरात्रेष्विति** बहुवचनम् । अत एव तेषामनुदाहरणम् । तदभिज्ञानां प्रसिद्धत्वाच्च । तदिदमुक्तम्– **प्रसिद्धत्वादिति** ।।

'प्राणो ह्येष य एष तपति' इति वाक्यं व्याचष्टे– **य एष इति** ।। तपनस्यानुपलम्भबाधनिरासायोक्तम्– **सूर्यमण्डले स्थित्वेति** ।। सूर्यमण्डलस्थितसूर्ये स्थित्वेत्यर्थः । 'मन्दिरे मणिमाले'त्यादिवदयं निर्देशः । अत्रापि प्राणशब्दार्थः **नारायण इति** ।। भगवतः सूर्य-मण्डलस्थसूर्यस्थितत्वे प्रमाणमाह– **य आदित्य इति** ।। **अन्तरो** विलक्षणः । आदिपदेन 'यश्चासावादित्ये'[५] इत्यादेः सङ्ग्रहः । नन्वष्ट-

४. ३६ पुटम्          ५. तै.उ २-८

मूर्तित्वाच्छिवस्य सूर्यमण्डलस्थत्वं तस्यैव किन्न स्यात् । इन्द्रादीनामपि सूर्याधिष्ठातृतया तत्स्थत्वं संभवत्येव । अतः कथमेतन्नारायणलिङ्गमित्यत आह– **य एष इति** ।। **तस्य** आदित्यान्तर्दृश्यमानपुरुषस्य । **यथा कप्यासं** [६]कमुदकं पिबदास्त इति तथोक्तम् । [७]कपिबन्नालसम्बन्धि । अम्लानमिति यावत् । **पुण्डरीकं** कमलम् । एवमतिसुन्दरे अक्षिणी इति [७]कपिबन्नालसम्बन्धिकमलायतद्विलोचनवत्त्वस्योक्तत्वान्नायं सूर्यमण्डलस्थः शिव इन्द्रादयो वेत्यर्थः । शिवस्याप्येवंविधपुण्डरीकाक्षत्वे युक्तमेव तस्यादित्यमण्डलस्थत्वमित्यत आह– **शिवो हीति** ।। **हि**शब्दः प्रसिद्धौ । त्रिनेत्रत्वस्याप्युपलक्षणमेतत् । नन्वेवं तर्हि मास्त्वसौ शिवः । नारायण एवेति तु कथम्? पुण्डरीकाक्षत्वस्य सुन्दरमात्रे सम्भवादित्यत आह– **प्रसिद्धश्चेति** ।। चशब्दस्तुशब्दार्थः । प्रकृतानुसन्धानार्थो वा । भगवान्नारायणश्च पुण्डरीकाक्ष इति 'अमोघः पुण्डरीकाक्षः'[८] इत्यादौ प्रसिद्धः । अतो बाधकं विना प्रसिद्धार्थपरित्यागो न युक्त इति भावः ।।

### सूर्यस्य शरीरन्तर्यामित्वाभावसमर्थनम्

### भाष्यम्

**'यमादित्यो न वेदे'[९]त्युक्तत्वान्नादित्यः । 'भेदव्यपदेशाच्चान्यः'[१०] इति भगवद्वचनम् ।**

---

६. कं पिबन्नालसबन्धि इति 'ख'पाठः

७. कं पिबन् इति 'ख'पाठः

८. विष्णु.स.ना. १२ ९. बृ.उ. ५-९

१०. ब्र.सू १-१-२१

वृत्रं यदिन्द्र शवसाऽवधीरहिमादित् सूर्यं दिव्यारोहयो दृशे ।
यत्सूर्यस्य हरितः पतन्तीः पुरस्सतीरुपरा एतसे[११] कः ।।

सीदन्निन्द्रस्य जठरे कनिक्रदन्नृभिर्यतस्सूर्यमारोहयो दिवि । (ऋ.१०.९०.१३)

'चन्द्रमा मनसो जातश्चक्षोस्सूर्यो अजायत'[१२] ।
'यस्सूर्यं य उषसं जजान यो अपां नेता स जनास इन्द्रः'[१३]।
'उद्वेति प्रसविता जनानां महान् केतुरर्णवः सूर्यस्य ।' (ऋ.२.१२.७)
'येनावृतं खं च दिवं महीं च येनादित्यस्तपति तेजसा भ्राजसा च ।
यमन्तः समुद्रे कवयो वयन्ति यदक्षरे परमे प्रजाः'[१४] ।
'तमेताः पञ्च देवताः परिम्रियन्ते विद्युद्वृष्टिश्चन्द्रमा आदित्योऽग्निः' इत्यादौ सूर्यस्य सर्वत्र पराधीनत्वावगतेश्च ।

**भावप्रदीपः**

नन्वादित्यस्यैवादित्यमण्डलस्थत्वम्, अन्यथाऽऽदित्यमण्डलमित्यस्यैवानुपपत्तेरित्यत आह– **यमादित्य इति** ।। बृहदारण्यके ह्यन्तर्यामिब्राह्मणेऽन्तर्यामिणो 'य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः'[१५] इत्यादित्यस्थत्वादिकमुक्त्वा 'यमादित्यो न वेद' इत्यादित्याज्ञेयत्वमुच्यते । आदित्यस्यैवादित्यमण्डलस्थत्वेन विवक्षितत्वे हि नेदं सम्भवति । न हि स्वस्य स्वाज्ञेयत्वमहिमा[१६] ।

---

११. एतशे इति ह.पाठः १२. ऋक्.सं १०-९०-१३ (पुरुषसूक्तम्)
१३. ऋक्.सं २-१२-७ १४. मह.ना.उ १-६
१५. बृ.उ. ५-९ १६. स्वाज्ञेयत्वं महिमा इति 'ख'पाठः

अतोऽयं नादित्य इत्यर्थः । यद्यप्यत्रादित्यस्यादित्यस्थत्वादिकमपि नोपपद्यत इति वक्तुं शक्यम् । तथाप्यादित्ये तिष्ठन्नित्यादावादित्यशब्देन तन्मण्डलस्यैव ग्रहणे तत्स्थत्वादिकमादित्यदेवताया युक्तमेवेति परिहर्तुं शक्यत्वात्तदनुक्त्वा 'यमादित्यो न वेद'[१७] इत्यादित्याज्ञेयत्वमेव बाधकमुक्तम् । नचेदं तद्वच्छक्यसमाधानम् । मण्डलस्याचेतनत्वेन तस्य ज्ञानप्रसक्तेरेवासम्भवात्तदज्ञेयत्वोक्तेरयोगात् । अचेतनाज्ञेयत्वस्य सर्वत्र सौलभ्येन महिमरूपत्वाभावाच्च । अतोऽत्रादित्यशब्देन तद्देवतैव ग्राह्या । तथाच तस्यैव तदज्ञेयत्वं नोपपन्नम्, नापि माहात्म्यरूपम् । अतो नायं प्रसिद्धादित्यः, किन्तु तत्स्थो नारायण एवेति । किञ्चास्य प्रसिद्धादित्यत्वं वक्तुं न शक्यम् । सर्वशास्त्रनिर्णयात्मकब्रह्मसूत्रे परमाप्ततमेन श्रीबादरायणेनास्यादित्याद्भेदस्यैव समर्थितत्वादित्याशयेनाह– **भेदेति** ।। 'अन्तरादित्ये मनसा चरन्तम्'[१८] इति मण्डलाद्यन्तःप्रविष्टस्यादित्याधिष्ठातृतया ततो भेदस्यैव व्यपदेशाच्चासावादित्यादन्य एवेति सूत्रार्थः ।।

अपि चात्र सूर्यमण्डले स्थित्वा तपतः सर्वदेहान्तर्यामित्वमुच्यते । नच तस्य प्रसिद्धसूर्यत्वे सर्वदेहान्तर्यामित्वं सङ्घटते । सूर्यस्य पराधीनत्वात् । नहि पराधीनस्य देवदत्तस्येव सर्वान्तर्यामित्वं युक्तम् । अतो नायं सूर्य इति भावेन बहुश्रुतिभिस्तस्य पराधीनत्वं साधयति– **वृत्रमित्यादिना** ।। **हे इन्द्र** इन्द्रान्तर्गतपरमेश्वर प्रसिद्धेन्द्र वा, **यद्** यस्मात् त्वं **वृत्रं** वारकं सूर्यादिगतिनिरोधकं **अहिं** तन्नामकमसुरं **शवसा** सुखेनानायासेनैव **अवधीः** संहृतवानसि । **आदित्** अस्मादेव

१७. बृ.उ ५-९

१८. तै.आ ३-११

हेतोर्**दृशे** जनानां सर्वपदार्थदर्शनाय **सूर्यं दिव्यारोहयः** न्यदधाः । सूर्यस्य **एतसे** एतुमागन्तुं **उप** समीपे रमन्त इत्युपराः । सर्वेषां समीपत एव वर्तमाना व्याप्ता इति यावत् । **हरितोदिशः** पुरः अग्रे **पतन्ती** गच्छन्तीरिव **सतीः** पुरोगामिभृत्यादिवन्मार्गगमनानुकूलतया वर्तमाना इति यावत् । **अकः** अकरोदित्यर्थः । यद्यप्युपरा इत्येतदपि दिङ्नामैव । तथापि हरित इति पृथक् श्रवणादयं यौगिकोऽङ्गीकृतः । यदित्यस्य पूर्वेणोत्तरेण वा तच्छब्देनान्वयः । पूर्वटीकाकारास्तु[१९] **पुरः** पूर्वं **हरितः** दिशः पतन्तीः सतीर्निर्दोषास्सूर्यस्य रुचः **उपरा** उपरि वर्तमाना **एतसे** ज्ञानाय प्रत्येतुं लोकानां पदार्थज्ञापनायाकारीति रुच इत्यध्याहारेण व्याचख्युः ॥

**इन्द्रस्य जठरे सीदन्** वर्तमानः सन् । इन्द्रान्तर्यामि भूत्वेति यावत् । सूर्यं दिव्यारोहयो यतोऽतो नृभिः **कनिक्रदत्** भवानकारयत् कर्माणीति शेषः । अन्तर्णीतण्यर्थात् क्रदतेर्यङि रूपमेतत् ॥

**चक्षोश्चक्षुषः हे जनासो** जनाः यः सूर्यं **जजान** जनयामास यश्च **उषसं** उषःकालदेवतामुषोनाम्नीं जजान, यश्च अपां **नेता** नियामकः, स इन्द्रो जनानां **प्रसवीता** प्रसविता ॥

**अर्वणः** अरमानन्दज्ञानरूपः गुणैरर्णवसदृशो वा । सूर्यस्य **केतु**राश्रयो भगवानुदेति ॥

**उ** येन भगवताऽऽवृतं खमाकाशं दिवमन्तरिक्षं महीं चादित्यो **येन** यत्प्रेरणया तेजसा **तपति**, 'तप सन्तापे' तापयुक्तं करोति । **भ्राजसा** दीप्त्या तपति प्रकाशयति च ॥

---

१९. वि.ती. पु.४५-४६

यमन्तः समुद्रे विद्यमानं नारायणं कवयो **वयन्ति** जानन्ति । **तदक्षरे** तस्मिन्नविनाशिनि परमे हरौ प्रजाः श्रिता इति शेषः ।।

**तं** वायुं **एताः** पञ्च देवताः **परिम्रियन्ते** तत्र लयं प्राप्नुवन्ति । कास्ताः? **विद्युत्** भारती **वृष्टिरिन्द्रः** चन्द्रमा आदित्योऽग्निश्चेति । इत्यादौ श्रुतिसमुदाये सर्वत्र सूर्यस्य पराधीनत्वस्यावगतेश्चेत्यर्थः । तत्राद्याद्वितीयतृतीयासु सूर्यस्य दिव्यारोहणादेर्भगवदधीनत्वमिन्द्राधीनत्वं च । चतुर्थ्यां पञ्चम्यां च भगवदधीनजनित्वम् । षष्ठ्यां विष्ण्वाश्रयत्वम्, सप्तम्यां तदायत्ततेजआदिमत्त्वमिति ।।

नारायणस्य सूर्यान्तर्यामित्वे प्रमाणोदाहरणम्

**भाष्यम्**

**ध्येयः सदा सवितृमण्डलमध्यवर्ती**
**नारायणः सरसिजासनसन्निविष्टः ।**
**केयूरवान् मकरकुण्डलवान् किरीटी**
**हारी हिरण्मयवपुः धृतशङ्खचक्रः ।। इति नारसिंहपुराणे[20] ।**

**तापनी पाचिका चैव शोषणी च प्रकाशनी ।**
**नैव राजन् रवेः शक्तिः शक्तिर्नारायणस्य सा ।। इति पाद्मे ।**

**यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।**
**यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्[21] ।। इति च ।**

---

२०. ६२अध्याय-१७श्लोक

२१. गीता. १५-१२

## भावप्रदीपः

किञ्च सूर्यमण्डलस्थत्वं नारायणस्यैव मुख्यम्, नादित्यस्य । तस्य तदभिमानितया तत्रावस्थानमात्रसत्त्वेऽपि तत्र स्वातन्त्र्याभावात् । यथा छत्रधरादीनां रथस्थत्वेऽपि न रथिकत्वम्, किन्तु राजादेरेवेत्याशयेन तत्र स्मृतिमप्युदाहरति– **ध्येय इति** ।। नन्वस्तु मण्डलस्थत्वं नारायणस्यैव मुख्यम् । तथापि प्रकृते 'य एष तपती'ति तपनशब्दोदितसन्तापनप्रकाशनकर्तृत्वं तावत्प्रत्यक्षसिद्धं सूर्यस्यापि सम्भवत्येव । अतः कुतोऽत्र नारायण एवेत्यवधार्यत इत्यत आह– **तापनीति** ।। नैवेति सावधारणनिषेधो मुख्यत्वाभिप्रायेण । तथाच मुख्ये सम्भवति न वृथाऽमुख्यार्थो ग्राह्य इति भावः । इममेवार्थं भगवद्गीतासम्मत्यापि द्रढयति– **यदादित्येति** ।। **मामकं** मदीयं मदधीनं च ।

### विष्णोरनन्याधीनत्वसमर्थनम्

## भाष्यम्

**न च विष्णोरन्याधीनत्वं श्रुतिषूक्तं कुत्रचित् । उत्पत्तिस्तु प्रादुर्भावापेक्षया । 'एको नारायण आसीन्न ब्रह्मा न च शङ्करः'[२२] इति महाप्रलये तस्यैवावस्थानश्रुतेः । 'यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्'[२३] इति ब्रह्मशिवादीनां देव्यधीनपदप्राप्तिमुक्त्वा तस्या अपि भगवदधीनत्वं 'मम योनिरप्स्व१न्तः समुद्रे ततो वितिष्ठे भुवनानि विश्वा परो दिवा पर एना पृथिव्या'[२४] इत्याह ।**

२२. अनु. उदाहृता श्रुतिः २-२-२७९

२३. ऋक्.सं १०-१२५-५ २४. ऋक्.सं १०-१२५-७

**'अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्तवा उ । अहं सुवे पितरमस्य मूर्धन्'**[२५]

**इति ब्रह्मरुद्रयोर्देव्यास्सकाशात् सृष्टिसंहारौ चोक्तौ ।**

**[२६]अस्य देवस्य मीळ्हुषो वया विष्णोरेषस्य प्रभृथे हविर्भिः ।**
**विदेहि रुद्रो रुद्रियं महित्वं यासिष्टं वर्तिरश्विनाविरावत् ।।**

**इत्यादिना विष्णोः प्रसादादेव शिवादीनां पदप्राप्तिकथनाच्च ।**

**भावप्रदीपः**

ननु 'य एष तपती'त्यत्र सूर्यस्य ग्रहणे 'यथेमं लोकमभ्यार्चत् पुरुषरूपेण' इत्युच्यमानं सर्वान्तर्यामित्वम्, तस्यान्याधीनत्वान्नोपपद्यत इत्युच्यते । एवं विष्णोरप्यन्याधीनत्वेऽनुपपत्तिसाम्यमेवेत्यत आह– **न चेति** ।। ननु शैवपुराणादिषु विष्णोरप्यन्याधीनत्वस्योक्तेः कथं न कुत्रचिदित्युच्यत इत्यत उक्तम्– **श्रुतिष्विति** ।। शैवपुराणादीनां पाशुपतादिमूलकत्वेनाप्रामाण्यान्न तत्रोक्तिः प्रकृतार्थविरोधिनीति भावः । ननु विष्णोरपि रामकृष्णादिरूपेण दशरथवसुदेवादिषूत्पत्तिदर्शनात्कथमन्याधीनत्वाभावः । न ह्यपराधीनस्य जीववद्देहयोगलक्षणोत्पत्तिः सम्भवतीत्यत आह– **उत्पत्तिस्त्विति** ।। उत्पत्त्युक्तिस्त्वित्यर्थः । प्रादुर्भावापेक्षया प्रवृत्तेति शेषः । कुत इदं ज्ञायत इत्यत आह– **एक इति** ।। अयं भावः । अस्यां श्रुतौ नारायणस्य महाप्रलयेऽप्यवस्थानं तावच्छ्रूयते । नच महाप्रलये स्थितस्येदानीमुत्पत्तिः सम्भवति । नच तदा स्वरूपमात्रेणावस्थानेऽपि शरीरादिलाभलक्षणोत्पत्तिरिदानीं किन्न स्यादिति वाच्यम् । स्वरूप-

---

२५. ऋक्.सं १०-१२५-६ २६. ऋक्.सं ७-१०-५

सत्त्वस्य ब्रह्मशङ्करादावपि सत्वेन न ब्रह्मेत्याद्यनुपपत्तिप्रसङ्गात् । अतस्तस्यैकस्यैव ज्ञानानन्दादिगुणात्मकव्यक्तदेहेनैवावस्थानावगमादुत्पत्तिवचनं प्रादुर्भावविवक्षयैवेति ज्ञायत इति । न केवलं विष्णोरन्याधीनत्वं श्रुतिषु कुत्रापि नोक्तमित्येव, किन्तु सर्वस्यापि तदधीनत्वमप्युक्तम् । अतः सर्वोत्तमत्वात्स एव 'एष इमं लोकं' इत्यादावुच्यते नान्य इति भावेनाह– **यं कामय इति** ।। महालक्ष्मीवाक्यमेतत् । अहं यं य**मुग्रं** रुद्रं कर्तुं कामये, तं तमुग्रं **कृणोमि** करोमि । यं च ब्रह्माणं कर्तुं कामये तं ब्रह्माणं करोमि । एवमेव यं यं कामये, तं तमृषिं **सुमेधां** सुमेधसं वा करोमीति ब्रह्मशिवादीनां देव्यधीनपदप्राप्तिमुक्त्वा तस्या अपि भगवदधीनत्वं 'मम योनि'रित्यादिना श्रुतिराह । मम कामतो विधिरुद्रादिपददात्र्याः **योनिः** कारणं **समुद्रे अप्स्वन्तः** क्षीरसमुद्रे प्रलयोदके वा वर्तते । नारायण इति यावत् । 'गुरोर्नाम न गृह्णीयाच्छिष्यो भार्या पतेरपि'[२७] इति वचान्नारायण इति पतिनामानुपादाय तदर्थकथनमिदम् ।

'आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः'[२८] इति स्मृतेः ।

'ततो वितिष्टे' इति प्रतीकग्रहणमेतत् । तेन 'उतामूं द्यां वर्ष्मणोपस्पृशामि । अहमेव वात इव प्रवाम्यारभमाणा भुवनानि विश्वा' इत्येतावतः सङ्ग्रहः । एवं 'परो दिवा पर एना पृथिव्या' इत्यपि प्रतीकरूपम् । तेन 'एतावती महिना सम्बभूव' इत्युत्तरवाक्यसङ्ग्रहः ।

---

२७. तत्व.प्रका १-१-१

२८. ब्र.सू.भा उदाहृतप्रमाणं १-१-२०, महा.विराटपर्व. १८८-३

ततश्चायमर्थः । **ततो** भगवतः प्रसादादहं **विश्वा** विश्वानि भुवनानि **वितिष्ठे** अधितिष्ठामि । उतशब्दः समुच्चये । अमूं द्यां च **वर्ष्मणा** देहेनैवोपस्पृशामि । न तु प्रकाशमात्रेण । अहमेव वात इव **प्रवामि** सर्वत्र सञ्चरामि, अहमेव विश्वानि भुवनानि **आरभमाणा** कुर्वाणा चास्मि । मम योनिभूतः परमात्मा **परो दिवा** दिवेत्यादि तृतीया पञ्चम्यर्थे । दिवः परः । **एना** एनया एतस्याः **पृथिव्या** पृथिव्याश्च **परः** सर्वोत्तम इति यावत् । अहं तु **महिना** महिम्ना एतावती परिमिता सम्बभूवेति । अतो ब्रह्माद्युत्तमरमोत्तमत्वाद्भगवतः सर्वोत्तमत्वं सिद्ध्यतीति भावः । न केवलं रमायाः ब्रह्मादिपद-दातृत्वादेव तदुत्तमत्वम्, किन्तु [२९]तत्सृष्टिकर्तृत्वाच्चेति भावेनाह– **अहमिति** ।। रुद्रायेत्यादि चतुर्थी द्वितीयार्थे । **ब्रह्मद्विषे** संहारकाले ब्राह्मणादिसर्वप्राणिद्विषम् । यद्वा ब्रह्मणः पञ्चममुखच्छेत्तृत्वात्तथोक्तम् । अथवा **ब्रह्मद्विषे** विभक्तिवचनव्यत्ययेन ब्रह्मद्विषां **शरवे** शरुं हिंसकम्, 'शृ हिंसायाम्' रुद्रं **हन्त्त वा उ** हन्तुमेव नतु भीषयितुं अहं धनुः **आतनोमि** विस्तारयामि । **अस्य** जगतः **पितरं** हिरण्य-गर्भं **मूर्धन्** मूर्ध्नि सर्वाधिक्ये सर्वाधिकतयाऽहं सुव इति देव्याः सकाशाद्ब्रह्मणः सृष्टी रुद्रस्य संहारश्चोक्ताविर्त्यथः । तथाच भगवतो ब्रह्माद्युत्तमत्वमतोऽपि सिद्ध्यतीति भावः ।

न केवलं रुद्रादिपददातृरमायोनित्वाद्रुद्राद्युत्तमत्वं भगवतो मन्त-व्यम्, किन्तु साक्षात्तत्पददातृत्वाच्चेति भावेनाह– **अस्येति** ।। **मीळ्हुषो** भक्ताभीष्टवर्षकस्य समर्थस्य वा । **एषस्य** आसमन्ता-

---

२९. तत्सृष्टिसंहारकर्तृत्वाच्च इति 'ख'पाठः

दीशस्य शस्य षत्वम्, इच्छारूपस्य वाऽस्य विष्णोर्देवस्य **हविर्भिः प्रभृथे** [३०]भरणे पूजने कृते सति **वयाः** अहङ्काररूपेण बन्धको रुद्रो **रुद्रियं महित्वं** रुद्रसम्बन्धिमहिमानं पदमिति यावत् । यथा **विदे** विविदे लेभे हि, तथा **हे अश्विनौ** युवामपि विष्णुपूजयैव **इरावद्वर्ति** अन्नवद्वर्तनं भोगवत्पदं **यासिष्टमयासिष्टमाप्तवन्तौ**[३१] स्त इति श्रुत्या । आदिपदेन-

[३२]'तव श्रिये मरुतो मर्जयन्त रुद्र यत्ते जनिमचारु चित्रम् ।
पदं यद्विष्णोरुपमं निधायि तेन पासि गुह्यं नाम गोनाम्' ॥

इत्यादिना च विष्णोः प्रसादादेव शिवादीनां पदप्राप्तिकथनाच्च शिवाद्युत्तमत्वं विष्णोर्मन्तव्यमित्यर्थः ॥

### नारायणस्य सर्वाधारत्वसमर्थनम्

### भाष्यम्

**'तमेताः [३३]सप्तक्षितय उपतिष्ठन्ते तद्या इमा अक्षँल्लोहिन्यो राजयस्ताभिरेनं रुद्रोऽन्वायत्तः'[३४] इत्यादिना शिवादीसर्वदेवोपास्यस्य वायोः 'अयं वाव शिशुर्योऽयं मध्यमः प्राणः'[३५] इति मध्यमशब्दोक्तस्य 'प्राणः स्थूणा'[३६] इति प्राणशब्दोदितो नारायण आश्रय उक्तः ।**

**तस्मात् सर्वोत्तमो भगवान् नारायणः प्राणशब्दोदित आदित्य-मण्डलस्थस्तपतीत्यादि सिद्धम् ।**

---

३०. प्रभरणे इति 'ख'पाठः
३१. प्राप्तवन्तौ इति 'ख'पाठः
३२. ऋक्.सं. ५-३-३
३३. सप्ताक्षितय इति ह.पाठः
३४. बृ.उ. ४-२-२
३५. बृ.उ. ४-२-१
३६. बृ.उ. ४-२-१

## भावप्रदीपः

ननु मास्तु सूर्यो 'य एष तपती'ति वाक्यप्रतिपाद्यस्तथापि वायुः किन्न स्यात् । 'प्राणो ह्येष य एष तपती'त्युत्तरवाक्ये तस्मिन् प्राणशब्दप्रयोगात् । तस्य च वायौ रूढत्वादित्याशङ्क्य प्राणशब्दोऽपि विष्णावेव मुख्यो, वायौ त्वमुख्यः । वायोरपि विष्ण्वाश्रयत्वात् । मुख्यामुख्ययोर्मुख्यस्यैव ग्राह्यत्वादिति भावेन शाखान्तरवाक्यसमाख्ययैतमर्थं साधयति– **तमेता इति** ।। अथवा शिवादिसर्वदेवोपास्यस्य वायोरप्याश्रयत्वाद्विष्णोरेव सर्वोत्तमत्वं मन्तव्यमित्याह– **तमेता इति** ।। आदिपदेन 'अथ या अक्षन्नापस्ताभिः पर्जन्यो या कनीनिका तयाऽदित्यो यत्कृष्णम् तेनाग्निर्यच्छुक्लं तेनेन्द्रो, धरयैनं वर्तव्या पृथिव्यन्वायत्ता द्यौरुत्तरया'[३७] इत्युत्तरवाक्यग्रहः । बृहदारण्ये हि शिशुब्राह्मणे 'अयं वाव शिशुर्योऽयं मध्यमः प्राणः'[३८] इति सर्वप्राणिषु गोवत्सरूपेण संस्थिते वायौ मध्यमप्राणशब्दप्रयोगादस्य मुख्यतः प्राणशब्दवाच्यत्वं नास्तीति तावदवगम्यते । ततस्तस्य गोवत्सरूपस्य वायोः प्राणः स्थूणेति कश्चन प्राणशब्दवाच्यः स्थूणवदाश्रय उच्यते । स च न रुद्रादिः । 'तमेताः सप्ताक्षितय उपासत'[३९] इति रुद्रपर्जन्यादित्याग्नीन्द्रपृथिवीद्युसञ्ज्ञकसप्तदेवोपलक्षितसर्वदेवानां वायूपासकत्वेन कथनात् । न हि तदुपासकानां तदाश्रयत्वं सम्भवति । अतः परिशेषात् स नारायण एवेति सिद्ध्यति । स च मुख्यत एव प्राणशब्दवाच्य इति निरुपपदप्रयोगबलादेव सिद्ध्यति । सर्वदेवोपास्यस्यापि वायोर्मध्यमप्राणतयैव कथितत्वाच्च । अतो नायं प्राणो

---

३७. बृ.उ ४-२-२ ३८. बृ.उ. ४-२-१

३९. बृ.उ ४-२-२

वायुः किन्तु सर्वोत्तमो नारायण एवेति भावः । **तं** दक्षिणाक्षिस्थितं वायुं **एताः** सप्तदेवता **अक्षितयो**ऽक्षीणज्ञाना **उपतिष्ठन्ते** उपासते । तत्र तत्र **अक्षन्** अक्षिणि **या** इमा **लोहिन्यो** राजयो रक्तरेखा दृश्यन्ते, ताभिस्तत्राधिष्ठितो रुद्र एनं **अन्वायत्तः** उपतिष्ठत इति यावत् । **कनीनिका** मध्यवर्तितारा, **वर्तिनी** मार्गः । **स्थूणा** बन्धनाश्रयः स्तम्भ इत्यर्थः । प्रकृतमर्थमुपसंहरति– **तस्मादिति** ।। आदिपदेन स एव सर्वप्राणिशरीरेषु पुरुषरूपेण प्रविष्ट इत्यपि सिद्धमिति ग्राह्यम् ।।

### चेतनतारतम्यनिरूपणम्

**भाष्यम्**

**क्षितिपा मनुष्यगन्धर्वा देवाश्च पितरश्चिराः ।**
**आजानजाः कर्मदेवास्तात्त्विका दक्ष एव च ।।**

**शक्रश्चोमा च रुद्रश्च भारती वायुरेव च ।**
**मुक्ता उक्ताः शतगुणा बलज्ञानसुखादिभिः ।।**

**विष्णुभक्त्यादिभिश्चैव गुणैः सर्वैः क्रमाधिकाः ।**
**तस्माद्रमा ततो विष्णुरनन्तगुणतोऽधिकः ।।**

**नित्यमुक्तः स्वतन्त्रश्च न चान्यस्तादृशः क्वचित् ।**
**कुत एवाधिकोऽन्यः स्याद्यन्मुक्ता अपि तद्वशाः ।।**

**रमापि तद्वशा नित्यं स नान्यस्य वशे प्रभुः ।**
**न भेदः शेषशिवयोः सुपर्णः शेषसंमितः ।।**

**कामः शक्रसमो नित्यं प्रतिबिम्बाश्च ते क्रमात् ।।**

**इति[४०] च महासंहितायाम् ।।**

**भावप्रदीपः**

मीमांसया साधितं विष्णोः सर्वोत्तमत्वं स्पष्टप्रमाणेनापि सर्वजीव-तारतम्यकथनपुरःसरं साधयति– **क्षितिपा इति ।।** चक्रवर्तिन इत्यर्थः । ते च मनुष्योत्तमापेक्षया शतगुणाधिका इति ज्ञेयम् । यथोक्तं सूत्रभाष्ये[४१]-

'मानुषा वर्णभेदेन तथैवाश्रमभेदतः ।

क्षितिपा मनुष्यगन्धर्वाः' इत्याद्युक्त्वा, 'सर्वे शतगुणोद्रिक्ताः'[४२] इति । गीतातात्पर्ये च-

'भूपा मनुष्यगन्धर्वा देवाः पितर एव च ।
आजानजाः कर्मदेवास्तत्त्वरूपाः पुरन्दरः ।

शिवो विरिञ्च इत्येते क्रमाच्छतगुणोत्तराः ।
मुक्ता अपि तदन्ये ये भूपाच्छतगुणाधमाः ।।[४३]' इति ।

**देवाः** देवगन्धर्वाः । **कर्मदेवाः** कर्मणा मध्ये प्राप्तदेवत्वाः बल्याद्याः । 'बल्याद्या अन्तरा प्राप्तदेवताः कर्मदेवताः'[४४] इति वचनात् । **तात्त्विकास्**तत्त्वाभिमानिनो मित्राद्याः प्रवहान्ताः । यद्यपि कर्मदेवापेक्षयाऽन्तिमस्य प्रवहस्यापि तारतम्यपर्यालोचने किञ्चिद-धिकषोडशगुणाधिकत्वमेव न शतगुणाधिकत्वम् । तदवराणां तु

४०. इत्यादि इति ह.पाठः ४१. ४-४-१९
४२. ब्र.सू.भा. ४-४-१९ ४३. गी.ता २-१८
४४. तैत्त.भा २(ब्रह्मवल्ली)-१८,२०

किमुत । अतोऽत्र च्छत्रिन्यायेनैव शताधिकत्वोक्तिरियम् । उत्तरेषां गुणानां स्फुटताभिप्रायेण वा । एवमुत्तरत्रापि बोध्यम् । मुक्तानां गुणास्तत्त्वस्वरूपभूता अपि केचन प्रयोज्याः केचन प्रयोजकाः । तत्र प्रयोज्यगुणापेक्षया– **बलज्ञानसुखादिभिरिति** । प्रयोजकगुणापेक्षया **विष्णुभक्त्यादिभिश्चेति** विभागेनोक्तिः । सर्वैर्गुणैः **शतगुणाः** शतगुणिताः क्रमेणाधिका इति योजना । **तस्माद्** वायोः रमा कोटिगुणाधिका । संसारिषु विष्णोः समाधिकाभावेऽपि मुक्ता वा नित्यमुक्तत्वाद्रमा वा तत्साम्यं किन्न भजेयुरित्यत आह– **यदिति** ।। यस्मादित्यर्थः । कालभेदेन विष्णोरपि तद्वशत्वे साम्यमेवापतितमित्यत आह– **स इति** ।। अत्र शेषसुपर्णकामानामग्रहणे निमित्तमाह– **न भेद इति** ।। शिवस्यैव शेषताप्राप्तेस्तयोः स्वरूपभेदो नास्तीत्यर्थः । **भेदो** विशेष इति पूर्वटीकाकाराः[४५] । अतो रुद्रशक्रग्रहणेनैव तेषां गृहीतत्वात्पृथगनुक्तिरिति भावः । पूर्वपूर्वेषामुत्तरोत्तरवशत्वे निमित्तमाह– **प्रतिबिम्बाश्चेति** ।। **ते** रमाद्याः क्षितिपान्ताः सर्वेऽपि क्रमात्प्रतिबिम्बाश्च । विष्ण्वादीनामुत्तरोत्तराणामिति शेषः । अत्र प्रतिबिम्बत्वं नाम तद्वशत्वे सति तत्सदृशत्वम् । अतः प्रतिबिम्बत्वतत्सदृशत्वयोर्विशिष्टैकदेशरूपतया निमित्तनैमित्तिकभावेनोपन्यासो नानुपपन्न इति ध्येयम् ।।

भगवतः शतर्चिशब्दवाच्यत्वसमर्थनम्

उपनिषत्

**तं शतं वर्षाण्यभ्यार्चत् । तस्माच्छतं वर्षाणि पुरुषा-**

---

४५. विश्वेश्वरतीर्थाः पु.४७

युषो भवन्ति । तं यच्छतं वर्षाण्यभ्यर्चित्, तस्मात् शतर्चिनस्तस्मात् शतर्चिन इत्याचक्षते एतमेव सन्तं ।

भगवतः मध्यमशब्दवाच्यत्वसमर्थनम्

स इदं सर्वं मध्यतो दधे यदिदं किञ्च स यदिदं सर्वं मध्यतो दधे यदिदं किञ्च तस्मात् मध्यमास्तस्मात् मध्यमा इत्याचक्षते एतमेव सन्तम् ॥

प्राणापानस्थितस्य हरेः गृत्समदशब्दवाच्यत्वकथनम्

प्राणो वै गृत्सोऽपानो मदः । स यत्प्राणो गृत्सोऽपानो मदस्तस्मात् गृत्समदस्तस्मात् गृत्समद इत्याचक्षते एतमेव सन्तम् ।

भगवतो विश्वामित्रशब्दवाच्यत्वकथनम्

तस्येदं विश्वं मित्रमासीत् यदिदं किञ्च । तद्यदस्येदं विश्वं मित्रमासीद्यदिदं किञ्च, तस्मात् विश्वामित्रस्तस्माद्विश्वामित्र इत्याचक्षते एतमेव सन्तम् ।

भगवतो वामदेवशब्दवाच्यत्वकथनम्

तं देवा अब्रुवन् 'अयं वै नः सर्वेषां वामः' इति । तं यद्देवा अब्रुवन् 'अयं वै नः सर्वेषां वामः' इति, तस्माद्वामदेवस्तस्माद् वामदेव इत्याचक्षते एतमेव सन्तम् ।

भगवतोऽत्रयशब्दवाच्यत्वकथनम्

स इदं सर्वं पाप्मनोऽत्रायत यदिदं किञ्च । स यदिदं सर्वं पाप्मनोऽत्रायत यदिदं किञ्च तस्मादत्रयस्तस्मादत्रय इत्याचक्षत एतमेव सन्तम् ॥२.२.१॥

शतर्च्यादिशब्दनिष्पत्तिकथनपूर्वकं मुख्यतः हरेः तच्छब्दवाच्यत्वकथनम्

**भाष्यम्**

**स पुरुषेषु शतवर्षं गत इति शतर्चिनामा । बहुरूपत्वात् बहुवचनम् । एतमेव तथासन्तं मुख्यत आचक्षते । ऋषींस्तूपचारतः । आत्मन उदरे धृतवान् मध्ये स्थित्वा धृतवांश्च ।**

**प्राणस्थः प्राणनामासावपानेऽपाननामकः ।**
**नेतृत्वाच्चापनेतृत्वाद्भगवान् पुरुषोत्तमः ।। इति च ।**

**वामो भद्रः ।।२.२.१।।**

**भावप्रदीपः**

'तं शतं वर्षाण्यभ्यार्चत्' इत्यादि खण्डं व्याचष्टे– **स पुरुषेष्विति** ।। **स** प्राणनामा हरिः । तं लोकं ब्रह्मादिदेहमित्यस्य तात्पर्यार्थकथनम्– **पुरुषेष्विति** । पुरुषाकारवत्सु ब्रह्मादिदेहिष्वित्यर्थः । अभ्यार्चदित्यस्यार्थः– **गत इति** ।। 'तस्माच्छतर्चिनः' इत्यस्य व्याख्यानम्– **इति शतर्चिनामेति** ।। एवं शतर्चिशब्दस्य योगेन भगवद्वाचिताङ्गीकारे बहुवचनं विरुद्ध्यत इत्यत आह– **बहुरूपत्वादिति** ।। 'एतमेव सन्तमाचक्षते' इत्येतद् विवृणोति– **एतमेवेति** ।। **एतं** विष्णुमेव **तथा** शतर्च्यादिनामार्थं **सन्त**मुक्तेन योगेन मुख्यतः शतर्चिप्रभृतिशब्दवाच्यमाचक्षते विद्वांसः । मधुच्छन्दःप्रभृतीन् ऋषींस्तु रूढार्थानप्यु**पचारतः** अमुख्यत एव तच्छब्दवाच्यानाचक्षत इत्यर्थः । 'स इदं सर्वं मध्यतो दधे' इत्यस्यार्थद्वयमाह– **आत्मन इति** ।।

'प्राणो वै गृत्सोऽपानो मदः' इत्यत्रासङ्गतिशङ्कानिरासाय प्राणा-

पानशब्दार्थं प्रमाणेन दर्शयति– **प्राणस्थ इति ।।** अपाने स्थितः । **नेतृत्वात्** प्रणेतृत्वात् । तथाच गृत्समदाख्यप्राणापानस्थितरूपाभ्यां प्राणापानाख्याभ्यां देहे स्थितस्य हरेर्गृत्समदशब्दवाच्यत्वं युक्तमेवेति भावः । 'अयं वै नः सर्वेषां वामः' इत्यत्र वामशब्दार्थमाह– **वामो भद्र इति ।।**

भगवतो भरद्वाजशब्दवाच्यत्वकथनम्

**उपनिषत्**

**एष उ एव बिभ्रद्वाजः । प्रजा वै वाजः । ता एष बिभर्ति । यद्बिभर्ति तस्मात् भारद्वाजस्तस्मात् भारद्वाज इत्याचक्षते एतमेव सन्तम् ।**

भगवतः वशिष्ठशब्दवाच्यत्वकथनम्

**तं देवा अब्रुवन् 'अयं वै नः सर्वेषां वसिष्ठः' इति । तं यद्देवा अब्रुवन् 'अयं वै नः सर्वेषां वसिष्ठः' इति तस्माद्वसिष्ठस्तस्मात् वसिष्ठ इत्याचक्षते एतमेव सन्तम् ।**

भगवतः प्रगाथाशब्दवाच्यत्वकथनम्

**स इदं सर्वमभिप्रागाद्यदिदं किञ्च । स यदिदं सर्वमभिप्रागाद् यदिदं किञ्च, तस्मात् प्रगाथास्तस्मात् प्रगाथा इत्यचक्षते एतमेव सन्तम् ।**

भगवतः पावमान्यशब्दवाच्यत्वकथनम्

**स इदं सर्वमभ्यपवयत यदिदं किञ्च । स यदिदं सर्वमभ्यपवयत यदिदं किञ्च, तस्मात् पावमान्यस्तस्मात् पावमान्य इत्याचक्षते एतमेव सन्तम् ।**

भगवतः क्षुद्रसूक्तशब्दवाच्यत्वकथनम्

**सोऽब्रवीत् 'अहमिदं सर्वमसानि, यच्च क्षुद्रं यच्च महत्' इति । ते क्षुद्रसूक्ताश्चाभवन् महासूक्ताश्च । तस्मात् क्षुद्रसूक्तास्तस्मात् क्षुद्रसूक्ता इत्याचक्षते एतमेव सन्तम् ।**

भगवतः सूक्तशब्दवाच्यत्वकथनम्

**सूक्तं बतावोचतेति, तत्सूक्तमभवत् । तस्मात् सूक्तं तस्मात् सूक्तमित्यचक्षते एतमेव सन्तम् ।**

वसिष्ठादिशब्दनिर्वचनपूर्वकं तच्छब्दवाच्यत्वसमर्थनम्

**भाष्यम्**

वसिष्ठो वसतामुत्तमः । अभ्यपवयत पावयामास संसारात् ।

तद्विष्णवाख्यं ब्रह्म सूक्तान्यवोचतेति सूक्तनामकमभवत् । बतेत्यास्वादने । स्वात्मनैव स्वयं सुष्टूक्तमिति वा । इदं सर्वं परिपूर्णं सन्नहमल्पप्राणिषु प्रविश्य सूक्ष्मरूपो [४६]महाप्राणिषु महारूपश्च भवानीति स भगवानब्रवीत् । तस्मात् 'क्षुद्रोऽसानी'त्युक्तत्वात् क्षुद्रसूक्तास्ते क्षुद्रप्राणिषु स्थिताः भगवद्रूपसङ्घाः । 'महानसानि' इत्युक्तत्वात् महासूक्ता महाप्राणिषु स्थिताः । सूक्ष्मरूपत्वादेव क्षुद्रनाम भगवतः । न तु सामर्थ्याल्पत्वात् । न हि सामर्थ्यादिगुणेषु कश्चिद्विशेषो भगवद्रूपेषु ॥

**भावप्रदीपः**

'अयं वै नः सर्वेषां वसिष्ठः' इत्यत्र वसिष्ठशब्दार्थमाह– वसिष्ठ इति ॥

---

४६. महाप्राणिस्थिता इति ह.पाठः

'स इदं सर्वमभ्यपवयत' इत्यत्राभ्यपवयतेत्यस्यार्थमाह– **अभ्यपवयतेति** ।। **संसारादिति** शेषोक्तिः ।

'सूक्तं बतावोचतेति तत्सूक्तमभवदि'त्येतद् व्याचष्टे– **तद्विष्ण्वाख्यमिति** ।। **सूक्तं** सूक्तोपलक्षितं समस्तं वेदं **अवोचत** ब्रह्मादिभ्य उपदिष्टवानिति हेतोः सूक्तवक्तृत्वात् सूक्तनामकमभवदित्यर्थः । यथोक्तं-

'वेदानां प्रथमो वक्ता हरिरेव यतो विभुः ।
अतो विष्ण्वात्मका वेदा इत्याहुर्वेदवादिनः'[४७] इति ।

बतेत्यस्यानेकार्थत्वाद्विवक्षितमर्थं दर्शयति– **बतेतीति** ।। अयमर्थ आस्वादनीय एव न तूपेक्षणीय इत्यर्थे वर्तत इत्यर्थः । 'सूक्तं बत' इति वाक्यमवोचतेत्यंशं परित्यज्यावशिष्टमिदमेव वाक्यमर्थान्तरे योजयति– **स्वात्मनैवेति** ।। इति वा तत्सूक्तनामकमभवदिति सम्बन्धः । 'सोऽब्रवीदहमिदं सर्वमसानि' इत्येतद्भगवता स्वस्य सर्वात्मकत्वमुच्यत इति प्रतीतिनिरासाय यथावद् व्याचष्टे– **इदमिति** ।। 'यच्च क्षुद्र'मित्यस्यार्थः– **अल्पप्राणिष्वित्यादि** ।। 'यच्च महत्' इत्यस्यार्थः– **महाप्राणिष्वित्यादि** ।। प्रविश्येत्येतदनुवर्तते । असानीत्यस्य– **भवानीति** । तस्मादिति वक्ष्यमाणमत्राप्यनुषञ्जनीयमिति भावेन तदनूद्य तदर्थाभिधानपूर्वकं 'ते क्षुद्रसूक्ताश्चाभवन्महासूक्ताश्च' इत्येतद् व्याचष्टे– **तस्मादिति** ।। क्षुद्रसूक्ता इत्यादि पुल्लिङ्गबहुवचनोपपत्त्यर्थं भगवद्रूपसङ्घा इति विशेष्यपदप्रदर्शनम् । ननु सर्वमिति पूर्णत्वस्याभिहितत्वात् कथं क्षुद्रत्वं तस्य युज्यते । यावता

---

४७. भाग.ता ६-१-४०

सामर्थ्याल्पत्वमेव क्षुद्रत्वं नामेत्यत आह– [४८]सूक्ष्मरूपत्वादिति ॥ सामर्थ्याल्पत्वात् अल्पसामर्थ्यादित्यर्थः । कुत इत्यत आह– न हीति ॥

भगवतः ऋक्शब्दवाच्यत्वकथनम्

उपनिषत्

**एष वा ऋक् । एष ह्येभ्यः सर्वेभ्यो भूतेभ्योऽर्चत । स यदेभ्यः सर्वेभ्यो भूतेभ्योऽर्चत तस्मात् ऋक् तस्मात् ऋगित्याचक्षते एतमेव सन्तम् ।**

भगवतोऽर्धर्चशब्दवाच्यत्वकथनम्

**एष वा अर्धर्चः । एष ह्येभ्यः सर्वेभ्योऽर्द्धेभ्योऽर्चत । स यदेभ्यः सर्वेभ्योऽर्धेभ्योऽर्चत, तस्मात् अर्धर्चस्तस्मात् अर्धर्च इत्याचक्षते एतमेव सन्तम् ।**

भगवतः पदशब्दवाच्यत्वकथनम्

**एष वै पदम् । एष हीमानि सर्वाणि भूतानि पादि । स यदिमानि सर्वाणि भूतानि पादि, तस्मात् पदं तस्मात् पदमित्यचक्षते एतमेव सन्तम् ।**

भगवतोऽक्षरशब्दवाच्यत्वकथनम्

**एष वा अक्षरम् । एष ह्येभ्यः सर्वेभ्यो भूतेभ्यो क्षरति । न चैनमतिक्षरन्ति, स यदेभ्यः सर्वेभ्यो भूतेभ्यः क्षरति, न चैनमतिक्षरन्ति तस्मात् अक्षरं तस्मादक्षरमित्याचक्षते एतमेव तथा सन्तम् ।**

---

४८. क्षुद्ररूपत्वादिति 'क'पाठः

**ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एव । प्राण ऋच इत्येव विद्यात् ॥२.२.२॥**

ऋगादिशब्दनिर्वचनपूर्वकं भगवतः तच्छब्दवाच्यत्वसमर्थनम्

**भाष्यम्**

एभ्यः प्राणिभ्यो गतवानित्यृक्नामानि सर्वाणि । गच्छति हि मरणकाले ।

'ब्रह्मणा सम्परीत्यक्तो मृत इत्युच्यते बुधैः' इति हि भारते[४९] ।

म्रियमाणमिमं जीवं वासुदेवादिदेवताः ।
त्यक्त्वा भागेन गच्छन्ति भागतोऽनुव्रजन्ति तम् ॥

गतैर्भागैरपि पुनर्विशेयुर्भोगसिद्धये ।
भोग्यलोकमनुप्राप्तं तस्मात् स्वप्नवदन्तरा ॥ इति च ॥

'अर्च गतिपूजनयोः' 'ऋ गतौ' इति धातोः । सर्वेभ्योऽर्थेभ्यः स्थानेभ्यः शरीरेभ्यो गतवानित्यर्धर्चः । (सर्वाणि भूतान्यपादि । पद गतौ । तस्मात् पदं नाम)[५०] अधिकं क्षरतीत्यक्षरम् । क्षरणं नाम सन्ततदानम् । 'क्षर विनाशसन्ततदानयोः' इति धातोः ।

**भावप्रदीपः**

'एष वा ऋक्' इत्यादिकं व्याचष्टे– एभ्य इति ॥ अर्चते-

४९. मह.भा.अश्व.पर्व १८-२३

५०. ()इति चिह्नस्था पंक्तिः ह.पाठे नास्ति,

त्यस्यार्थः– **गतवानिति** ।। 'एष इमं लोकमभ्यार्चत्' इति सर्वप्राणि-शरीरेषु भगवतः[५१]प्रविष्टत्वस्यैवोक्तत्वात्कथं तस्य प्राणिभ्यो गमन-मुच्यत इत्यत आह– **गच्छति हीति** ।। तत्र हिशब्दसूचितं प्रमाणमाह– **ब्रह्मणेति** ।। ननु 'प्राज्ञेनात्मनान्वारूढ उत्सर्जद्याति' इति मृतस्य ब्रह्मसहभावस्यैवोक्तेः कथं मरणकालेऽपि तत्परित्यागः सम्भवतीत्यत आह– **म्रियमाणमिति** ।। तथाच परित्यागानु-गमनयो रूपभेदेनोपपत्तेरविरोध इति भावः । ननु गतानां वासु-देवादिदेवताभागानां पुनरंशिप्राप्तिर्नास्त्येव किन्नेत्याह– **गतैरिति** ।। **तस्माद्** एवं निर्गमनप्रवेशयोर्भावात् । **अन्तरा** मध्ये । मरणानन्तरं भोग्यलोकप्राप्तिपर्यन्तं किञ्चित्कालं जीवस्यावस्थानं जाग्रत्सुषुप्त्योर्मध्ये स्वप्नावस्थावन्मन्तव्यमित्यर्थः ।

'अर्चते'ति 'ऋगि'ति योगप्रदर्शनेनर्गित्यस्यार्चधातुजत्वप्रतीतिं तदुपपत्तिचिन्तनक्लेशं च वारयितुं पृथग् धातुद्वयमेवेदं किन्नामैकार्थ-मात्र[५२]मिति भावेन धातुव्याख्यानमुदाहरति– **अर्चेति** ।। तथाच ऋधातोरेव कप्रत्यये ऋगिति रूपम् । अर्चतेति तु तदर्थव्याख्यान-रूपं धात्वन्तरमेवेति भावः । 'एष वा अर्धर्चः' इत्यादि व्याचष्टे– **सर्वेभ्य इति** ।। अर्धेभ्य इत्यनूद्य तस्य वाच्यार्थकथनम्– **स्थानेभ्य इति** ।। तात्पर्यार्थकथनम् **शरीरेभ्य इति** ।। अर्चतेत्यस्य– **गतवानिति** ।। 'एष वै पदं' इत्यादि विवृणोति– **सर्वाणीति** ।। पादीत्यत्राडभावश्छान्दस इत्यभिप्रेत्योक्तम्– **अपादीति** ।। अपद्यत

---

५१. प्रविष्टस्यैव इति 'क'पाठः

५२. एकार्थमात्रकं इति 'ख'पाठः

प्रापेत्यर्थः । अत्र धातुं पठन् वाक्यं योजयति– **पद गताविति ।।** इति धातोरिति शेषः । 'एष वा अक्षरं' इत्यत्र क्षरतीति क्षरशब्द-निर्वनं प्रदर्श्य तस्मादक्षरमित्युक्तिः कथमित्याशङ्क्य नायं नञ्, किन्त्वकारोऽधिकवाची । अत एव न चैनमिति क्षरतीत्युक्तमिति भावेनाक्षरशब्दाभिप्रेतमर्थं दर्शयति– **अधिकमिति ।।** क्षरतीत्यस्य विनश्यतीति प्रतीतिं पराकुर्वन् विवक्षितं धात्वर्थं दर्शयति– **क्षरणं नामेति ।।** तत्र धातुं पठति– **क्षरेति ।।**

### समुद्रघोषदीनामपि भगवन्नामत्वसमर्थनम्

### भाष्यम्

**एवमृषिषु शब्देषु च व्यवह्रियमाणानि सर्वाणि नामानि विष्णोरेव मुख्यतः । किमु देवतानामानि ।**

**'यो देवानां नामधा एक एव तं सम्प्रश्नं भुवना यन्त्यन्या'[५३] ।**
**'इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्' ।**
**'यमिन्द्रमाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमु सत्यमाहुः' ।**
**'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति'[५४] इत्यादि श्रुतिभ्यः ।**

**न केवलमृष्यादीनां नाम भगवतः सर्वे वेदा अपि तस्यैव नामानि[५५] । किमु च वेदाः । [५६]समुद्रमेघवृक्षपतनभेरीताडनादिसर्वघोषा अपि तस्यैव**

---

५३. ऋक्.सं १०-८२-३

५४. ब्र.सू.भा.१-१-१ इत्यत्रोदाहृता भल्लवेयश्रुतिः

५५. नाम इति ह.पाठः ५६. समुद्रघोष इति ह.पाठः

**नामानि यथायोग्यं योजनीयानि । एकमेव व्याहरणम् । एकप्रकारमेव नाम निर्दोषगुणपूर्तिवाचकत्वादेकप्रकारता । प्राणे नारायण एव । नारायणविषय एव व्यवहारः । ऋचस्तु विशेषत इन्द्रादिनामवतो विष्णोर्गुणानल्पज्ञानामपि प्रकाशयन्तीति । प्राणे नारायण एवेति विद्यात् ।**

**भावप्रदीपः**

नन्वत्र खण्डद्वये शतर्च्यादीन्यृषिनामानि प्रगाथादीनि शब्दनामानि च भगवति समन्वितानि । नतु देवतानामानि । उपलक्षणाभिप्राये च देवानां प्रधानत्वात्तन्नामसमन्वयेनर्ष्यादिनाम्नामेवोपलक्षणया ग्रहणं न्याय्यम् । अतो नानेन सर्वशब्दसमन्वयः सिद्ध्यतीत्यत आह– **एवमृषिष्विति** ।।

अयमाशयः । इन्द्रादिदेवतानामानि खलु देवेषु योगरूढिभ्यां प्रवृत्तानि, नतु केवलरूढानि । अतस्तेषां भगवति समन्वयोपपादनमतीव सुकरम् । तदीययोगस्यैवात्राहरणसम्भवेन नवीनयोगगवेषणप्रयासानावश्यकत्वात् । ऋष्यादिनामानि तु प्रयेण रूढिमात्रप्रवृत्तानि । क्वचिद् यौगिकान्यपि हरौ समन्वयानुपयोगियोगवृत्तीनि । अतस्तेषामपूर्वयोगप्रदर्शनेनैव समन्वयस्य कार्यत्वाद्देवनामवन्नात्र सौकर्यम् । एवं चासुकरसमन्वयानामृष्यादिनाम्नामेव यदोक्तरीत्या भगवति मुख्यतः समन्वयः सिद्धस्तदा किमु देवतानामानि सुकरसमन्वयानि विष्णोरेव मुख्यतो वाचकानीति वक्तव्यमिति भावेन देवतानामसमन्वयोपपादनमत्र न कृतमिति ।।

स्यादेतत्, यदि देवानाम्नां भगवद्वाचित्वमेव भवेत् । तदेव कुत इत्यतः तत्र श्रुतीः प्रमाणयति– **यो देवानामिति** ।। **यो** विष्णुरेक

एव देवानां **नामधाः** नामधारकः **तं सम्प्रश्नं** यद्विषयकः प्रश्नो महाफलाधायकत्वात्समीचीनः स सम्प्रश्नस्तं विष्णुं अन्यानि भुवनानि **यन्ति** यान्ति, आश्रयन्त इति यावत् । विष्णुमेवेन्द्रादिनामानमाहुर्विद्वांसः । **अथो** किञ्च **स** विष्णुरेव **दिव्यो** दिवि भवः सूर्यः सुपर्णो गरुत्मांश्च तन्नामक इत्यर्थः । **यं** विष्णुमिन्द्रादिनामानमाहुः । **सत्यो** वायुस्तन्नामानं चाहुः । **आविशन्ति** परममुख्यवृत्त्या प्रतिपादयन्तीत्यर्थः ।।

'ता वा एताः सर्वा ऋचः' इत्यादिकं व्याचष्टे– **न केवलमित्यादिना** ।। भगवत इत्यनन्तरं सर्वा ऋचोऽपि तस्यैव नामेति न केवलं सर्वा ऋचः किन्त्विति च वाक्यमध्याहार्यम् । समुद्रादिजन्याः सर्वघोषा अपि तस्यैव नामानि किमु च वेदा इति योजना । सर्वघोषाणामपि तन्नामत्वे समन्वयः किमेकप्रकार उतानेकप्रकार इत्यत आह– **यथायोग्यमिति** ।। घोषरूपाणि नामानीत्यनुवर्तते । **यथायोग्यं** यच्छब्दो यदर्थपरतया भगवति योजयितुमुचितस्तथा । एतच्च स्पष्टयिष्यते । एकैव व्याहृतिरित्यस्यार्थः– **एकमेव व्याहरणमिति** ।। एतेन भूरादिव्याहृतेरेकत्वकथनमनुपपन्नम्, प्रकृतासङ्गतं चेति शङ्कापि परास्ता । एतदप्यविशदमतो व्याचष्टे– **एकप्रकारमिति** ।। तथाच व्याह्रियते व्यवह्रियते प्रतिपाद्यतेऽर्थोऽनयेति व्याहृतिशब्दो नामवाची । तस्य च ऋगादिरूपस्यैकत्वं चैकप्रकारत्वमेव विवक्षितमिति भावः । भिन्नार्थवतां नाम्नामेकप्रकारतापि कथं सम्भवतीत्यत आह– **निर्दोषेति** ।। भावप्रधानो निर्देशः । गुणविशेषणं वैतत् । प्राण एवेति प्रथमात्वादिभ्रान्तिं वारयति– **प्राणे नारायण एवेति** ।। इयं च विषयसप्तमी । अस्यैकैव व्याहृतिरित्यनेनान्वयो ज्ञेय इत्याशयेनाह– **नारायणेति** ।। अयं व्यवहारः

वेदादिशब्दसमुच्चये[५७] । नारायणविषय एवैकप्रकारो नान्यत्र । निर्दोष-गुणपूर्तिवाचकतया एकप्रकारताया जगद्विषयेऽयोगादित्यर्थः । 'प्राण ऋच इत्येव विद्यात्' इत्येतद् व्याचष्टे– **ऋचस्त्विति** ।। ऋचस्तु प्राणे नारायण एवेति विद्यादिति सम्बन्धः । सर्वस्यापि शब्दसमुदायस्य नारायणविषयतायाः प्राण एवेत्यनेन[५८] उक्तत्वात्पुनः ऋक्ग्रहणं किमर्थमित्यत उक्तम्– **विशेषत इत्यादि** ।। यजुरादयस्तु मुख्यतः कर्मादिप्रतिपादकत्वेन पदसमन्वयाधिकारविरहाणां भगवद्गुणान्न स्पष्टं ज्ञापयन्ति । नैवं ऋचः । किन्तु वाक्यसमन्वयन्यायेनाल्पज्ञानां पद-समन्वयानधिकारिणामपि भगवद्गुणान् विशेषतः प्रकाशयन्तीत्यतः ऋचां पुनर्ग्रहणमिति भावः ।।

### समुद्रघोषादीनां भगवद्गुणाभिधायकत्वे प्रमाणोदाहरणम्

### भाष्यम्

**उक्तं च बृहत्संहितायाम् (व्यवहारः)–**

**हुंकारेण [५९]सहैवाब्धिः सर्वाभिभवशक्तताम्[६०] ।**
**विष्णोर्वक्ति यतो हुं च पराभिभववाचकः ।।**

**ओमिति स्वरते नित्यं वायुर्मेघेषु संस्थितः ।**
**बलवन्नादसंयुक्तो ह्याधिकोच्चत्वमस्य तु ।।**

**ॐकारस्यार्थ उद्दिष्ट उक्तार्थाधिक्यमेव च[६१] ।**
**नादो बली प्रवदति तथा भेरीध्वनिः प्रभोः ।।**

---

५७. समुदाये इति 'ख'पाठः
५८. इत्यनेनैव इति 'ख'पाठः
५९. सदैवाब्धिः इति ह.पाठः
६०. शक्तिताम् इति ह.पाठः
६१. तु इति ह.पाठः

**अनुदात्तस्वरूपत्वादौदार्यं वदतीशितुः ।**
**तदपेक्षयान्यनीचत्वं घण्टाद्याः स्वरितात्मकाः ।।**

**उच्चस्थितिमुदात्तस्तु स्वर्णचञ्च्वादिषु स्वरः ।**
**विष्णोर्वक्ति तथा मन्द्रः श्वासादिः प्रचयात्मकः ।।**

**एकप्रकारतां विष्णोः सदाचाल्यां वदत्यपि ।**
**इत्यादयः सर्वघोषा विष्णोरेव गुणोन्नतिम् ।।**

**वदन्ति किमु वेदाद्या मार्जाराद्यभिधास्तथा ।**
**मारयित्वा प्रभक्ष्यैव जरयत्यखिलं जगत् ।।**

**तेन मार्जार उद्दिष्टो मोषणान्मूषको हरिः ।**
**वर्षणाद् वृष उद्दिष्टो वलनात् वल्लिनामकः[६२] ।**
**तारणात् तृणनामासावित्याद्येकोऽभिधीयते ।।**

**भावप्रदीपः**

समुद्रादिसर्वघोषा अपि तस्यैव नामानि यथायोग्यं योजनीयानीत्युक्तं योजनाप्रकारं प्रमाणेनैव दर्शयति– **उक्तं चेति** ।। अब्धिः स्वध्वनिव्यङ्ग्येन हुङ्कारेण सहैव, हुङ्कारं व्यञ्जयन्नेवेति यावत् । हुं च हुमिति शब्दश्च । एवं समुद्रघोषस्य भगवद्गुणवाचकताप्रकारमभिधाय मेघघोषस्यापि तमभिधत्ते– **ओमिति** ।। **बलवन्नादसंयुक्तः** मेघध्वनिव्यङ्ग्यबलवन्नादाख्यवर्णसंयुक्तः । नादाख्यं वर्णं बलवत्त्वेन व्यञ्जयन्निति यावत् । ओमिति स्वनते । ॐकारो हि अकारादिवर्णत्रयात्मा नादादिपञ्चवर्णात्मा च प्रसिद्ध एव । भवत्वेवम्, ततश्च मेघ-

६२. वलिनामकः इति प्र.पाठः

घोषेण को गुणो वर्णित इत्यत आह– **ह्यधिकोच्चत्वमिति** ।। तुशब्द एवार्थे । अस्य विष्णोरधिकोच्चत्वमेवोङ्कारस्यार्थ उद्दिष्टः । **हि** प्रमाणप्रमितमेतत् । यथोक्तं छान्दोग्यभाष्ये[६३]-

'अकारेणाधिकं प्रोक्तमुकारेणोच्चमुच्यते ।
तथामितं सर्ववेदैर्मकारेणाभिधीयते' इति ।

तदुपष्टम्भको **बली** बलत्वेनाभिव्यञ्जितो नादश्चोकारेणोक्तस्यैवार्थस्याधिकोच्चत्वरूपस्य **आधिक्यं** निरतिशयत्वरूपं प्रवदति । तथाच मेघघोषाभिव्यञ्जितो नादश्चोकारेणोक्तस्यैवार्थस्याधिकोच्चत्वरूपस्याधिक्यं निरतिशयत्वरूपं प्रवदति । तथाच मेघघोषाभिव्यक्तो बलवन्नादयुक्तो वर्णत्रयात्मोंकारो भगवतो निरतिशयसर्वोत्तमत्वमभिधत्त इति भावः । एतेन वृक्षपतनघोषोऽपि व्याख्यातो मन्तव्यः । तस्यापि नादव्यञ्जकत्वात् । नादस्य च भगवदाधिक्यवाचकत्वात् । यथोक्तं कर्मनिर्णये[६४]-

'नदीसमुद्रघोषाश्च नादत्वाच्छ्रैष्ठ्यवाचकाः ।
नादो हि श्रैष्ठ्यवाची स्यादेवं घोषाः परेऽपि च' इति ।।

अथ भेरीताडनघोषस्य भगवद्गुणाभिधायकतामाह– **तथा भेरीति** ।। अत्रापि भेरीध्वनिरिति तदभिव्यङ्ग्यो नादाख्यो वर्ण एव ग्राह्यः । वाचकताया वर्णधर्मत्वात् । ध्वनेस्तु वर्णव्यञ्जकमात्रत्वात्, एवमुत्तरत्रापि । यथोक्तं कर्मनिर्णये[६५]- 'गर्गरगोधापिङ्गादीनां घोषा अपि नादमात्रव्यञ्जकत्वेन भगवद्वाचका एव' इति ।।

---

६३. छान्दो.भा. १-१-१ 
६४. ३-६
६५. २-५

**अनुदात्तस्वरूपत्वादौदार्यं वदतीशितुः ।**
**तदपेक्षयान्यनीचत्वं घण्टाद्याः स्वरितात्मकाः ।।**

**उच्चस्थितिमुदात्तस्तु स्वर्णचञ्च्वादिषु स्वरः ।**
**विष्णोर्वक्ति तथा मन्द्रः श्वासादिः प्रचयात्मकः ।।**

**एकप्रकारतां विष्णोः सदाचाल्यां वदत्यपि ।**
**इत्यादयः सर्वघोषा विष्णोरेव गुणोन्नतिम् ।।**

**वदन्ति किमु वेदाद्या मार्जाराद्यभिधास्तथा ।**
**मारयित्वा प्रभक्ष्यैव जरयत्यखिलं जगत् ।।**

**तेन मार्जार उद्दिष्टो मोषणान्मूषको हरिः ।**
**वर्षणाद् वृष उद्दिष्टो वलनात् वल्लिनामकः[६२] ।**

**तारणात् तृणनामासावित्याद्येकोऽभिधीयते ।।**

**भावप्रदीपः**

समुद्रादिसर्वघोषा अपि तस्यैव नामानि यथायोग्यं योजनीयानीत्युक्तं योजनाप्रकारं प्रमाणेनैव दर्शयति– **उक्तं चेति** ।। अब्धिः स्वध्वनिव्यङ्ग्येन हुङ्कारेण सहैव, हुङ्कारं व्यञ्जयन्नेवेति यावत् । **हुं च** हुमिति शब्दश्च । एवं समुद्रघोषस्य भगवद्गुणवाचकताप्रकारमभिधाय मेघघोषस्यापि तमभिधत्ते– **ओमिति** ।। **बलवन्नादसंयुक्तः** मेघध्वनिव्यङ्ग्यबलवन्नादाख्यवर्णसंयुक्तः । नादाख्यं वर्णं बलवत्त्वेन व्यञ्जयन्निति यावत् । ओमिति स्वनते । ॐकारो हि अकारादिवर्णत्रयात्मा नादादिपञ्चवर्णात्मा च प्रसिद्ध एव । भवत्वेवम्, ततश्च मेघ-

६२. वलिनामकः इति प्र.पाठः

घोषेण को गुणो वर्णित इत्यत आह– **ह्यधिकोच्चत्वमिति** ।। तुशब्द एवार्थे । अस्य विष्णोरधिकोच्चत्वमेवोङ्कारस्यार्थ उद्दिष्टः । **हि** प्रमाणप्रमितमेतत् । यथोक्तं छान्दोग्यभाष्ये[६३]-

'अकारेणाधिकं प्रोक्तमुकारेणोच्चमुच्यते ।
तथामितं सर्ववेदैर्मकारेणाभिधीयते' इति ।

तदुपष्टम्भको **बली** बलत्वेनाभिव्यञ्जितो नादश्चोकारेणोक्तस्यैवार्थस्याधिकोच्चत्वरूपस्य **आधिक्यं** निरतिशयत्वरूपं प्रवदति । तथाच मेघघोषाभिव्यञ्जितो नादश्चोकारेणोक्तस्यैवार्थस्याधिकोच्चत्वरूपस्याधिक्यं निरतिशयत्वरूपं प्रवदति । तथाच मेघघोषाभिव्यक्तो बलवन्नादयुक्तो वर्णत्रयात्मोंकारो भगवतो निरतिशयसर्वोत्तमत्वमभिधत्त इति भावः । एतेन वृक्षपतनघोषोऽपि व्याख्यातो मन्तव्यः । तस्यापि नादव्यञ्जकत्वात् । नादस्य च भगवदाधिक्यवाचकत्वात् । यथोक्तं कर्मनिर्णये[६४]-

'नदीसमुद्रघोषाश्च नादत्वाच्छ्रैष्ठ्यवाचकाः ।
नादो हि श्रैष्ठ्यवाची स्यादेवं घोषाः परेऽपि च' इति ।।

अथ भेरीताडनघोषस्य भगवद्गुणाभिधायकतामाह– **तथा भेरीति** ।। अत्रापि भेरीध्वनिरिति तदभिव्यङ्ग्यो नादाख्यो वर्ण एव ग्राह्यः । वाचकताया वर्णधर्मत्वात् । ध्वनेस्तु वर्णव्यञ्जकमात्रत्वात्, एवमुत्तरत्रापि । यथोक्तं कर्मनिर्णये[६५]- 'गर्गरगोधापिङ्गादीनां घोषा अपि नादमात्रव्यञ्जकत्वेन भगवद्वाचका एव' इति ।।

६३. छान्दो.भा. १-१-१ ६४. ३-६

६५. २-५

नन्वेवं तर्हि तस्य श्रैष्ठ्यवाचित्वात् कथमौदार्याभिधायकत्वमित्यत उक्तम्– **अनुदात्तस्वरूपत्वादिति** ।। अनुदात्तस्वरोपेतत्वादित्यर्थः । केवलनादस्य श्रैष्ठ्यार्थत्वेऽपि स्वरविशेषसहकारिमहिम्नाऽर्थान्तरपरत्वमपि तस्य सम्भवतीति भावः । अथ भेरीताडनादीत्यादिपदग्राह्यं दर्शयंस्तस्यापि भगवद्गुणवाचकताप्रकारमाह– **तदपेक्षयेति** ।। भगवदपेक्षयाऽन्येषां रमाब्रह्मादीनां नीचत्वम् । वदन्तीति योज्यम् । **घण्टाद्याः** घण्टातालादिजन्यघोषाः । एषामपि नादव्यञ्जकत्वेन श्रैष्ठ्यार्थत्वात्कथं नीचताभिधायकत्वमित्यत उक्तम्– **स्वरितात्मका इति** ।। स्वरितस्वरसहकारिबलान्नीचतार्थत्वं युक्तमिति भावः । यथोक्तम् ऋग्भाष्ये[६६]- 'नीचता स्वरितस्यार्थः' इति । **स्वर्णचञ्चुः** स्वर्णतुण्डः पक्षिविशेषः । आदिपदेन तद्वदेव कूजन्तः परेऽपि पक्षिणो ग्राह्याः । तथाच स्वर्णचञ्च्वादिपक्षिसम्बन्धी **स्वरो** ध्वनिस्तु **विष्णोरुच्चस्थितिं** सर्वोत्तमतयाऽवस्थानं वक्ति । यत **उदात्तः** उदात्तस्वररूप इत्यर्थः । यथोक्तम् ऋग्भाष्ये[६७]- 'उदात्तस्योच्चतार्थता' इति । कफादिसंरुद्धश्वासादिध्वनेः प्रचयात्मकत्वायोगात् **मन्द्र** इति विशेषणम् । स च सदाप्यचाल्यामेकप्रकारतां विष्णोर्वदतीति योजना । यथोक्तम् ऋग्भाष्ये[६८]- 'प्रचयस्य यथास्थितः' इति । किं बहुना । एवमेव गर्गरगोधापिङ्गादीनां घोषा अपि विष्णोरेव गुणोन्नतिवाचका मन्तव्या इत्याह– **इत्यादय इति** ।। यथोक्तं कर्मनिर्णये[६९]–

'दध्नो मन्थनशब्दश्चाप्यन्तर्नादस्वरूपतः ।
भीषकत्वं हरेर्ब्रूयादन्तर्नादो हि भीषणे ।

---

६६. १-१-८९ ६७. १-१-८९

६८. १-१-८९ ६९. २-५ (१६३पुटम्)

गजबृंहितमप्येवं धिक्कारसहितं वदेत् ।
स्वरितेन समायोगाद्धिक्कृतौ स्वरितो यतः ।

महामन्त्रं जलाद्यैश्च युक्तमेतादृशं वदेत् ।
पादभूषा च धिक्कारं तत्कृतं स्वरितो वदेत् ।

अद्भुतत्वं हरेर्ब्रूयात् पिङ्गा कण्ठकशब्दवत् ।
तामेवाद्भुततां वक्ति गृहगोधा परापि च ।' इति ।

यदैवं सर्वे घोषा अपि भगवद्गुणाभिधायिनः, किमु तदा वेदादीनां तदभिधायकत्वं वाच्यमित्युक्तमर्थं निगमयति– **किमु वेदाद्या इति** ।। नेदं सर्वनामत्ववचनं भगवतः प्रौढिवादमात्रमित्यश्रद्धेयमिति भावेन क्षुद्रवस्तुवाचका शब्दा अपि भगवति महार्थानेव वदन्तीत्यभिप्रेत्याह– **मार्जारेति** ।। तथाशब्दो विष्णोरेव गुणोन्नतिं वदन्तीत्यस्यानुकर्षणार्थम् । उपलक्षणतया कांश्चिच्छब्दान्निरुच्य दर्शयति– **मारयित्वेति** ।। हरिरिति वक्ष्यमाणमत्रापि वर्तते । जरणस्य भक्षणसापेक्षत्वात्प्रभक्ष्येत्युक्तम् । अखिलमेवेति सम्बन्धः । तेन **मारयित्वा** जीर्णताप्रापणेन । तथाच मारयतीति मारः । जरयतीति जारः । मारश्चासौ जारश्चेति मार्जारः । मारशब्दस्यान्तलोपश्च निर्वचनत्वादिति भावः । **मोषणात्**, 'मुष स्तेये' भक्तानां सर्वपापहरणात्, अभक्तानां सर्वपुण्यापहरणाच्च मूषक इत्यर्थः । वल वल्ल संवरणे सञ्चरणे च । भक्तानां संवरणात् सर्वत्र सञ्चरणाद्वा **वल्लिनामकः**, वल्लीनामकः । वलतेर्लच्, धात्वन्तलोपश्च, ततो ङीष् । **तारणात्** भक्तानां संसारादुत्तारणाद्, अन्तर्णीतण्यर्थात् 'तॄ प्लवनतरणयोः' इत्यतः क्रः । **इत्यादि** इति क्रियाविशेषणम् । अविभक्तिनिर्देशो वा । इत्यादिप्रकारेण इत्यादिभिः सर्वैः शब्दैः एक एव भगवानभिधीयत इत्यर्थः ।।

### सर्वनामत्वेऽपि भगवतः सर्वविलक्षणत्वम्

#### भाष्यम्

सर्वनामाऽपि भगवान् सर्वशक्तिश्च सर्ववित् ।
ब्रह्मरुद्रादिजीवेभ्यो जडेभ्यः श्रिय एव तु ॥

व्यतिरिक्तः सदानन्तसान्द्रानन्दैकरूपकः ।
तस्यैव मुख्यनामानि समाकृष्येतरेष्वपि ॥

उपचारात् प्रवर्तन्ते व्यवहारप्रसिद्धये ।
तथैव सर्वनामानि प्रवर्तन्ते च मारुते ॥

न तावन्मुख्यवृत्त्यैव मुख्यतोऽन्यव्यपेक्षया ।
मुख्यतः सर्वनामा तु विष्णुरेको न चापरः ॥

तस्मात् प्राणादिशब्दाश्च विष्णावेव हि मुख्यतः ।
अन्यव्यपेक्षया वायौ मुख्यवृत्तिर्विधीयते ॥

वायुश्च सूर्यसंस्थः संस्तपत्येतज्जगत्त्रयम् ।
आज्ञयैव हरेर्वायोः शक्त्या सूर्यस्तपत्ययम् ॥ इत्यादि ।

#### भावप्रदीपः

ननु भगवतः सर्वनामत्वे सर्वाभेदोऽपि स्वीकार्यः स्यात् । नहि तद्भिन्नस्य तन्नामता सम्भवति, घटस्यापि पटनामतापातादित्यत आह– **सर्वनामापीति** ॥ चो हेत्वर्थः । भगवान् ब्रह्मादिभ्यो व्यतिरिक्त एवेत्येवकारान्वयः । तुश्चार्थः । श्रियश्चेत्यन्वेति । कुतः, यतः सदा सर्वशक्तिः सर्ववित्, अनन्तसान्द्रानन्दैकरूपश्च, तस्मादित्यर्थः । नन्वेवं भगवतः सर्वनामत्वे तदन्यत्र नामैव नास्तीत्यागतम् ।

तथाचान्यत्र शाब्दव्यवहारविलोपस्यैवापात इत्यत आह– **तस्यैवेति** ।। **मुख्यनामानि** मुख्यतया वाचकानि नामानि । **उपचारात्** अमुख्यवृत्त्या ।।

'प्राणो ह्येष य एष तपति' इति वाक्यं वायुपरतयापि व्याकरिष्यन्नुपोद्धातमाह– **तथैवेति** ।। यथा विष्णौ तथैवेत्यर्थः । तर्हि साम्यमेव किम्? नेत्याह– **न तावदिति** ।। विष्णौ यादृशी मुख्यवृत्तिस्तादृश्यैव मुख्यवृत्या नेत्यर्थः । तर्हि वायोरन्यैरमुख्यार्थता साम्यमेव किं नेत्याह– **मुख्यत इति** ।। अन्यव्यपेक्षया मुख्यतः सर्वनामानि मारुते प्रवर्तन्त इति पूर्वेणान्वयः । नन्वेवं तर्हि 'प्राणो ह्येषः' इति वाक्ये वायुरेव प्राणशब्दवाच्यः किन्न स्यात्, मुख्यार्थपरित्यागाभावादित्यत आह– **मुख्यत इति** ।। परममुख्यतयेत्यर्थः । अस्तु किं प्रकृत इत्यत आह– **तस्मादिति** ।। **मुख्यतः** वाय्वपेक्षयेति शेषः । तर्हि वायावमुख्यवृत्तिरेव प्राप्तेत्यतो मोक्तं विस्मार्षीरित्याशयेनाह– **अन्येति** ।। एवमुपोद्धातमभिधायेदानीं तद्वाक्यं वायौ योजयति– **वायुश्चेति** ।। **तपति** सन्तापयति, प्रकाशयति च । एतेन य एष सूर्यमण्डले स्थित्वा विष्ण्वाज्ञया तपति, एष प्राणो वायुर्हीति तद्वाक्यं व्याख्यातं भवति । नन्वेवं सूर्यमण्डले स्थित्वा तापकत्वं मुख्यामुख्यतया विष्णुवाय्वोरेव चेत्तर्हि सूर्यस्य तापकत्वं नास्त्येव किम्, नेत्याह– **वायोः शक्त्येति** ।। हरेराज्ञयेति च सम्बद्ध्यते । तथाच यद्यपि सूर्यस्य तापकत्वमस्त्येव । तथापि पराधीनत्वादयसो दग्धृत्ववदसत्कल्पत्वमेव । अतो नात्र स प्रतिपाद्य इति भावः ।

## वायोरपि सर्ववेदप्रतिपाद्यत्वम्

### भाष्यम्

**न प्रसिद्धसूर्यस्येयं तापनशक्तिरिति ज्ञापयितुं 'प्राणो ह्येष य एष तपती'त्युक्तम् ।**

**'प्राणाद्वा एष उदेति प्राणेऽस्तमेति'[७०] इति श्रुतिः । प्राणशब्दश्च मुख्यतो विष्णौ [७१]प्रवर्तमानोऽपि वायावपि वर्तते । अतः सर्ववेदाद्यभिधेयत्वं वायोरप्यस्ति । 'प्राणस्य प्राणः'[७२] इति श्रुतेरुभयोऽपि प्राणशब्दः प्रसिद्ध[७३] एव । 'अयं वाव शिशुर्योऽयं मध्यमः प्राणः'[७४] इति वायोर्विशेषणादुत्तमप्राणो विष्णुरिति च सिद्धम् ॥**

### भावप्रदीपः

अत एव 'य एष तपती'त्युक्त्वापि पुनः 'प्राणो ह्येष य एष तपती'त्युक्तम् । तेन च न प्रसिद्धस्य सूर्यस्येयं तापकत्वशक्तिः, पराधीनत्वात् । किन्तु तदन्तर्गतस्य वायोस्तत्स्वामिनो हरेश्चैवेति लभ्यत इत्याशयेनाह– **नेति** ॥

स्यादेतत् । यदि सूर्यस्य प्राणाधीनत्वं स्यात् । तदेव कुत इत्यतस्तत्र श्रुतिं प्रमाणयति– **प्राणाद्वा इति** ॥ एषः सूर्यः । ननु नायं प्राणशब्दो वायुपर इति वक्तुं शक्यते । तस्य विष्णुपरतया व्याख्यातत्वात् । सकृदुक्तशब्दस्यानेकार्थकल्पने वाक्यभेदापत्तेरित्यत आह–

---

७०. बृ.उ. ३-६-२३ ७१. वर्तमानोऽपि इति ह.पाठः

७२. तल.उ १-२ ७३. सिद्ध इति ह.पाठः

७४. बृ.उ ४-२-१

**प्राणशब्दश्चेति** ।। वर्तते, अमुख्यत इति शेषः । समकक्षापन्नतयाऽर्थद्वयाङ्गीकार एव वाक्यभेदापत्तिर्दोषो नान्यथेति भावः । नन्वेवं 'प्राणो ह्येष य एष तपति' इति वाक्यस्य विष्णुपरत्ववत् वायुपरत्वस्याप्यङ्गीकारे 'तं शतं वर्षाणी'त्यादिना वक्ष्यमाणं सर्वशब्दाभिधेयत्वं वायोरप्यङ्गीकार्यं स्यादित्यत इष्टमेवेदमित्याह– **अत इति** ।। ननु प्राणशब्दस्योभयवाचित्वे सिद्धे सर्वमिदं कल्प्यताम्, तदेव कुत इत्यतस्तत्र प्रयोगं दर्शयति– **प्राणस्य प्राण इति** ।। अत्र हि प्राणशब्दद्वयं श्रूयते । न चैतदेकविषयमेव । प्रथमस्य षष्ठ्यन्तत्वात्, द्वितीयस्य प्रथमान्तत्वात् । यथा पितुः पितेति प्रयोगेऽन्यः पिता षष्ठीनिर्दिष्टोऽन्यः प्रथमानिर्दिष्टः पितामह इति गम्यते, तद्वत्प्राणस्य प्राण इति शब्दभेदात्प्रसिद्धात्प्राणादन्यः प्राण इति निश्चीयते । न हि स एव तस्येति भेदनिर्देशार्हो भवति । अतः प्रथमः प्राणशब्दो वायुवाची, द्वितीयो विष्णुवाचीत्यवश्यमङ्गीकार्यमिति भावः । नन्वेवं सति प्राणशब्दस्योभयत्रापि साम्यस्यैवापत्त्या विष्णौ मुख्यो वायौ त्वमुख्योऽसावित्युक्तिः कथमित्यत आह– **अयं वावेति** ।। विशेषणात्, मध्यमत्वेनेति शेषः ।।

## विष्णुवायू अज्ञानाभिभवास्पृष्टौ

### भाष्यम्

**द्वावात्मानौ हि वेदेषु द्वौ प्राणौ द्वौ च चेतनौ ।**
**अज्ञानाभिभवास्पृष्टौ वायुर्नारायणश्च तौ ।।**
**तदन्ये चेतनास्सर्वे प्राणाश्चात्मान एव च ।**
**अज्ञानाभिभवस्पृष्टास्तस्मात् ते ह्यधमाः श्रुताः ।।**

**मध्यमो वायुरेवैक उत्तमः केवलो हरिः ।**
**सर्वशब्दोदितौ तस्मादेतौ द्वावेव नापरः ।।**

**अन्ये चैव मितैः शब्दैरुच्यन्ते नामितैः क्वचित् ।**
**श्रीरप्यखिलशब्दोक्ता विष्णुवन्न तु मुख्यतः ।।**

**तस्मादमितनामानावपि तौ मितनामवत् ।**
**श्रीश्च वायुश्च विष्णुस्तु मुख्योक्तेरमिताभिधः ।।**

**अनन्तनामकत्वाच्च सोऽनन्तगुण ईरितः ।**
**पृथङ्नामानि यस्मात् तद्गुणानेव प्रचक्षते ।। इत्यादि ब्रह्माण्डे ।।२.२.२।।**

**भावप्रदीपः**

'मध्यमः प्राणः' इत्युक्त्या प्राणत्रयं प्रतीतम् । तत् प्रमाणेन विविच्य दर्शयति– **द्वाविति** ।। अत्रात्मत्वं स्वप्रकाशत्वम् जडतानाश्रयत्वं वा । प्राणत्वं क्रियाशक्तिमत्त्वम् चेतनत्वं ज्ञानशक्तिमत्त्वमिति धर्मभेदमाश्रित्यात्मानौ प्राणौ चेतनाविति पृथगुक्तिः । वेदेषु प्रसिद्धाविति शेषः । अज्ञानाभिभवास्पृष्टविति प्रत्येकं सम्बन्धः । कौ तौ? **वायुर्नारायणश्चेत्येतौ** । तदन्ये **सर्वे** रुद्राद्या अज्ञानाभिभवस्पृष्टा एवेत्येवशब्दान्वयः । अज्ञानाभिभवास्पृष्टत्वमात्रेण न वायुनारायणयोः साम्यं मन्तव्यमित्याह– **मध्यम इति** ।। कुतो हरेरुत्तमत्वमित्यत उक्तम्– **केवल इति** ।। ब्रह्माद्यप्राप्यमाहात्म्य इत्यर्थः । यथोक्तं–

'ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुं नैव शक्यते ।
तद्यत् स्वभावः कैवल्यं स भवान् केवलो हरे'[७५] ।। इति ।

---

७५. आथ.भा. ६-८, भाग.ता ६-१५-३६, बृ.भा. ५-५, ब्र.सू.भा २-१-१४.

एवं प्राणत्रयविवेचनेन विष्णुवाय्वोः सर्वाधिकत्वमुपपाद्यात एव तयोः सर्वनामत्वमुक्तमुपन्नमित्याह– **सर्वेति** ।। **तस्मात्** सर्वाधिकत्वादेव । नापर इत्युक्तमेव विशदयति– **अन्ये चेति** ।। मितैरेवेत्यन्वयः । कतिपयैरेवेत्यर्थः । यदा वायोरप्यखिलशब्दोदितत्वम्, किमु तदा वायूत्तमायाः श्रीदेव्याः [७६]सकलशब्दवाच्यत्वमित्याह– **श्रीरपीति** ।। तर्हि सर्वशब्दोदितौ तस्मादेतौ द्वावेव, नापर इत्युक्तिः कथमित्यत आह– **विष्णुवदिति** ।। श्रीरिति वर्तते । तथा च श्रिय ईशकोटिगणनान्न द्वावेवेत्यवधारणविरोध इति भावः । तर्हि श्रियो विष्णुसाम्यमेव प्राप्तमित्यत आह– **न तु मुख्यत इति** ।। अखिलशब्दोक्तेति पूर्वेणान्वयः । अमुख्यतस्सर्वशब्दाभिधेयत्वस्य वायोरपि सत्वात्को विशेषस्तयोरित्यतोऽप्युक्तम्– **विष्णुवदिति** ।। मुख्यत इत्यावर्तनीयम् । तथाच वाय्वपेक्षया मुख्यतोऽखिलशब्दोक्तापि विष्णुवन्मुख्यतो न त्वित्यन्वयः । एवं श्रीदेव्या ईशकोटौ प्रवेशमङ्गीकृत्य द्वावेवेत्यवधारणविरोधाभाव उपपादितः । इदानीं मध्यमप्राणकोटौ प्रवेशमभिप्रेत्यापि विरोधाभावं सूचयन्नाह– **तस्मादिति** ।। विष्णुवन्मुख्यतः सर्वशब्दवाच्यत्वाभावादेव श्रीश्च वायुश्चेत्येतौ अमितनामानावपि **मितनामवत्** मितनामानाविव मन्तव्यौ । अमुख्यतया सर्वशब्दवाच्यावित्यर्थः । एतेन 'एष इमं लोकमभ्यार्चत्' इत्यादिकं विष्णुवायुपरतयेव श्रीदेवीपरतयापि व्याख्येयमिति सूचयति । एवं मितामितनामतया श्रीवाय्वोर्मध्यवाच्यत्वमभिधायोत्तमवाच्यत्वं तु विष्णोरेव नान्यस्येत्याशयेनाह– **विष्णुस्त्विति** ।। तुशब्दः श्रीवायुभ्यां विशेषद्योतकः । अवधारणार्थो वा । विष्णुस्तु **मुख्योक्तेः**

---

७६. सकलशब्द इति पदं 'ख'पाठे नास्ति

**मध्यमो वायुरेवैक उत्तमः केवलो हरिः ।**
**सर्वशब्दोदितौ तस्मादेतौ द्वावेव नापरः ।।**

**अन्ये चैव मितैः शब्दैरुच्यन्ते नामितैः क्वचित् ।**
**श्रीरप्यखिलशब्दोक्ता विष्णुवन्न तु मुख्यतः ।।**

**तस्मादमितनामानावपि तौ मितनामवत् ।**
**श्रीश्च वायुश्च विष्णुस्तु मुख्योक्तेरमिताभिधः ।।**

**अनन्तनामकत्वाच्च सोऽनन्तगुण ईरितः ।**
**पृथङ्नामानि यस्मात् तद्गुणानेव प्रचक्षते ।। इत्यादि ब्रह्माण्डे ।।२.२.२।।**

**भावप्रदीपः**

'मध्यमः प्राणः' इत्युक्त्या प्राणत्रयं प्रतीतम् । तत् प्रमाणेन विविच्य दर्शयति– **द्वाविति** ।। अत्रात्मत्वं स्वप्रकाशत्वम् जडतानाश्रयत्वं वा । प्राणत्वं क्रियाशक्तिमत्त्वम् चेतनत्वं ज्ञानशक्तिमत्त्वमिति धर्मभेदमाश्रित्यात्मानौ प्राणौ चेतनाविति पृथगुक्तिः । वेदेषु प्रसिद्धाविति शेषः । अज्ञानाभिभवास्पृष्टविति प्रत्येकं सम्बन्धः । कौ तौ? **वायुर्नारायणश्चेत्येतौ** । तदन्ये **सर्वे** रुद्राद्या अज्ञानाभिभवस्पृष्टा एवेत्येवशब्दान्वयः । अज्ञानाभिभवास्पृष्टत्वमात्रेण न वायुनारायणयोः साम्यं मन्तव्यमित्याह– **मध्यम इति** ।। कुतो हरेरुत्तमत्वमित्यत उक्तम्– **केवल इति** ।। ब्रह्माद्यप्राप्यमाहात्म्य इत्यर्थः । यथोक्तं–

'ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुं नैव शक्यते ।
तद्यत् स्वभावः कैवल्यं स भवान् केवलो हरे'[७५] ।। इति ।

---

७५. आथ.भा. ६-८, भाग.ता ६-१५-३६, बृ.भा. ५-५, ब्र.सू.भा २-१-१४.

एवं प्राणत्रयविवेचनेन विष्णुवाय्वोः सर्वाधिकत्वमुपपाद्यात एव तयोः सर्वनामत्वमुक्तमुपपन्नमित्याह– **सर्वेति** ।। **तस्मात्** सर्वाधिकत्वादेव । नापर इत्युक्तमेव विशदयति– **अन्ये चेति** ।। मितैरेवेत्यन्वयः । कतिपयैरेवेत्यर्थः । यदा वायोरप्यखिलशब्दोदितत्वम्, किमु तदा वायूत्तमायाः श्रीदेव्याः [७६]सकलशब्दवाच्यत्वमित्याह– **श्रीरपीति** ।। तर्हि सर्वशब्दोदितौ तस्मादेतौ द्वावेव, नापर इत्युक्तिः कथमित्यत आह– **विष्णुवदिति** ।। श्रीरिति वर्तते । तथा च श्रिय ईशकोटिगणनान्न द्वावेवेत्यवधारणविरोध इति भावः । तर्हि श्रियो विष्णुसाम्यमेव प्राप्तमित्यत आह– **न तु मुख्यत इति** ।। अखिलशब्दोक्तेति पूर्वेणान्वयः । अमुख्यतस्सर्वशब्दाभिधेयत्वस्य वायोरपि सत्वात्को विशेषस्तयोरित्यतोऽप्युक्तम्– **विष्णुवदिति** ।। मुख्यत इत्यावर्तनीयम् । तथाच वाय्वपेक्षया मुख्यतोऽखिलशब्दोक्तापि विष्णुवन्मुख्यतो न त्वित्यन्वयः । एवं श्रीदेव्या ईशकोटौ प्रवेशमङ्गीकृत्य द्वावेवेत्यवधारणविरोधाभाव उपपादितः । इदानीं मध्यमप्राणकोटौ प्रवेशमभिप्रेत्यापि विरोधाभावं सूचयन्नाह– **तस्मादिति** ।। विष्णुवन्मुख्यतः सर्वशब्दवाच्यत्वाभावादेव श्रीश्च वायुश्चेत्येतौ अमितनामानावपि **मितनामवत्** मितनामानाविव मन्तव्यौ । अमुख्यतया सर्वशब्दवाच्यावित्यर्थः । एतेन 'एष इमं लोकमभ्यार्चत्' इत्यादिकं विष्णुवायुपरतयेव श्रीदेवीपरतयापि व्याख्येयमिति सूचयति । एवं मितामितनामतया श्रीवाय्वोर्मध्यवाच्यत्वमभिधायोत्तमवाच्यत्वं तु विष्णोरेव नान्यस्येत्याशयेनाह– **विष्णुस्त्विति** ।। तुशब्दः श्रीवायुभ्यां विशेषद्योतकः । अवधारणार्थो वा । विष्णुस्तु **मुख्योक्तेः**

---

७६. सकलशब्द इति पदं 'ख'पाठे नास्ति

मुख्यत एव वाच्यत्वाद**मिताभिधः** अमितनामैव, नतु श्रीवायुवत् मितामितनामेत्युच्यत इत्यर्थः । अस्तु विष्णुरमितनामा, किं तत इत्यत आह– **अनन्तनामकत्वाच्चेति** ।। चशब्दः प्रकृतानुसन्धानार्थः । अनन्तनामत्वेऽपि कुतोऽनन्तगुणत्वं विष्णोरित्यत आह– **पृथगिति** ।। पृथक् प्रत्येकं प्रचक्षत इति सम्बन्धः ।।

**द्वितीयाध्यायप्रथमखण्डार्थः**

ततश्चायं खण्डद्वयार्थः । **एषः** परमेश्वरः श्रिया वायुना च सह **इमं लोकं** ब्रह्मादिप्राणिशरीरजातं **पुरुषरूपेण** अन्तर्यामिरूपेणा**भ्यार्चत्** प्रविवेश । कोऽयं परमेश्वरः, **य एषः** सूर्यमण्डलस्थितसूर्ये स्थित्वा **तपति** जगत्त्रयं सन्तापयति प्रकाशते च, स एवेत्यर्थः । सोऽपि कः? येन शरीप्रविष्टोऽमुक एवेति निश्चिनुम इत्यत आह– **प्राणो वावेति** ।। य एष तपति स **प्राणो हि** उत्तमप्राणो भगवान्नारायण एव प्रसिद्धः । अतः प्राणो नारायण एव । **तत्** ब्रह्मादिप्राणिशरीरजातम**भ्यार्चत्** प्रविवेशेत्येषोऽर्थः सिद्ध्यति । वावेति निपातद्वयं प्रसिद्धिद्योतकम् । अत्र प्राणपदेन मध्यमप्राणो वायुः, श्रीश्च अमुख्यतया विवक्षिते । एवमुत्तरत्रापि ।

एवं विष्णोरेव सर्वदेहान्तर्यामित्वमुक्त्वाऽपूर्णस्य देवदत्तादिवत् तदनुपपत्तेस्तस्य गुणपूर्णत्वं वक्तुं तत्सिद्ध्यर्थं सर्वशब्दवाच्यतामभिधास्यन् कियत्कालमिमं लोकमभ्यार्चदिति शङ्कापरिहाररूपतया प्रकृतसङ्गतत्वाच्छतर्चिशब्दवाच्यतां तावदादौ दर्शयति– **तं शतमिति** ।। एष इति वर्तते । भगवांस्तं लोकं ब्रह्मादिशरीरजातं **शतं वर्षाण्यभ्यार्चत्** पुरुषेषु शतं वर्षं गत इति यावत् । तस्मादेव कारणात्

पुरुषायुषः परिमाणं शतं वर्षाणि भवन्ति । **तं** लोकं **यत्** यस्मात् शतं वर्षाणि एषोऽभ्यार्चत्तस्मात् **एतं** विष्णुमेव सन्तं शतर्चिनामार्थं सन्तं शतर्चिन इत्याचक्षते विद्वांसः शतमर्चतीति योगेन । बहु-रूपत्वाद् बहुवचनम् । मधुच्छन्दःप्रभृतींस्तु रूढार्थानप्यमुख्यत एव तच्छब्दवाच्यानाचक्षत इत्यर्थः । यद्यपि लोके योगरूढयोर्मध्ये रूढे-रेव मुख्यत्वम्, झटित्युपस्थापकत्वात् । तथापि प्रकृते केवलरूढ्य-पेक्षया भगवति महायोगस्यैव मुख्यत्वम् । विद्वद्रूढिसहितस्य तु सुतरां । यथोक्तमनुव्याख्याने[७७]–

'एतमेव तथा सन्तं शतर्चीत्यादिका श्रुतिः ।
आचक्षत इति ह्यत्र सन्तमित्यवधारणात् ।

योगस्य रूढेः प्राबल्यं विद्वद्रूढिं च तत्रगाम् ।
बहुशो दर्शयन्त्यञ्जस्तात्पर्यात्सन्निरुक्तिकम् ।।' इति ।

अतो भगवति महायोगविद्वद्रूढ्योरुभयोरपि सत्वात्तस्यैव मुख्यत-स्तच्छब्दवाच्यत्वमिति भावः । अत्र तात्पर्यद्योतनाय तस्माच्छत-र्चिनस्तस्माच्छतर्चिन इति द्विरुक्तिः ।

**स** भगवान् **इदं सर्वं** जगत् **मध्यतो दधे** आत्मन उदरे धृतवान् । सर्वस्य मध्ये अन्तःस्थित्वा धृतवांश्च । यथा देवदत्तादिः कवचम् । सर्वशब्दो न सङ्कुचितवृत्तिरित्याशयेनोक्तम्– **यदिदं किञ्चेति** ।। तथाच स्वमध्ये धारकत्वान्मध्ये स्थित्वा धारकत्वाच्च मध्यमः, स एव मध्यमाः । पूर्ववद् बहुरूपत्वाद् बहुवचनमित्युक्तं भवति ।

---

७७. १-१-३७

**प्राणः** प्राणस्थः प्राणनामा भवगान् **गृत्सो** गृत्सनामा । **अपानो**ऽपानस्थितोऽपाननामा हरिर्**मदो** मदनामा । तस्माद् गृत्सश्चासौ मदश्चेति गृत्समद इति व्युत्पत्त्या गृत्समद इत्याचक्षते ।

**तस्य** भगवत इदं **विश्वं** सर्वं **मित्रं** प्रियमासीत् । अनिष्टहेतुरप्रियमित्युच्यते । नहि भगवतः किमप्यनिष्टहेतुरस्ति । तस्माद् विश्वामित्रः ।

**तं** भगवन्तं **देवाः** ब्रह्माद्या अब्रुवन् । **अयं** भगवान् **नः** सर्वेषां **वामो** भद्रः कल्याणकारक इति । **तस्मात्** देवानां वामत्वाद्वामदेव इत्याचक्षते । **स** भगवान् **इदं सर्वं** भक्तजातं पाप्मनोऽत्रायत । **तस्मात्** पापात् त्राणहेतुत्वादत्रय इत्याचक्षते । 'त्रैङ् पालने', अस्मात्किः । सुबन्तादप्यडागमः छान्दसः । अधिकं त्राणादत्रय इति वा ॥

**इति द्वितीयाध्यायस्य प्रथमः खण्डार्थः**

**अथ द्वितीयाध्यायस्य द्वतीयः खण्डार्थः**

**उ** उत किश्च **एष** हरिरेव बिभ्रद्वाज इति तावदुच्यते । प्रजा वै वाज इत्युच्यन्ते । **ताः** प्रजाः **एष** भगवान् बिभर्ति । तस्माद्वाजानां प्रजानां[७७] बिभ्रद् बिभ्रद्वाज इति योगेन, ततश्च **यत्** यस्मादेष बिभर्ति वाजानिति शेषः । यतो बिभ्रद्वाज इति यावत् । तस्माद्भरद्वाजः । वाजानां भरन्निति व्युत्पत्त्या । **वसिष्ठो** वसतामुत्तमः । स्वातन्त्र्येण सदा सर्वत्र वासकर्ता । उपलक्षणमेतत् । सर्वऋषिनामान्यप्येवमेव मुख्यतो भगवदेकवाचकानीति ज्ञेयम् ॥

---

७७. प्रजानां इति पदं 'क'पाठे नास्ति

एवं ऋषिनामसमन्वयमभिधाय शब्दनामसमन्वयमुपक्रमते– **स इदं सर्वमभिप्रागादित्यादिना** । **सर्वं** वेदादिकं अभितः **प्रागात्** प्रकर्षेणागायत । 'गै शब्दे' उच्चारितवान् व्याख्यातवांश्च, तस्मात् प्रगाथाः । प्रपूर्वाद् गातेः कर्तरि थन् । प्रगाथा इति ऋग्विशेषयोः सञ्ज्ञा । तदुक्तमनुक्रमणिकायाम् 'अथ प्रगाथाः बृहतीसतो बृहत्यौ बार्हतः'[७८] इत्यादि । द्वादशाक्षरस्तृतीयः पादः । इतरे त्रयोऽष्टाक्षराश्चेत्सा बृहती । आद्यतृतीयौ द्वादशाक्षरौ इतरावष्टाक्षरौ चेत्सा सतो बृहतीति तयोर्लक्षणमपि तत्रैव व्यक्तम् । तन्नाम्नः समन्वयोऽयम् । पावमान्य इति काश्चन ऋचः । तन्नामनिर्वचनं दर्शयति– **स इदं सर्वमभ्यपवयतेति** ।। संसारात्पावयामासेत्यर्थः । **तस्मात्** पावनकर्तृत्वात् **पावमान्यः** । स्त्रीरूपत्वात् स्त्रीलिङ्गम् । बहुरूपत्वाद् बहुवचनं च । **स** भगवानिदं **सर्वं** सर्ववेदप्रसिद्धं **यत्** परिपूर्णं वस्तु तद्रूपोऽहं, **यच्च क्षुद्रं यच्च महत्तदसानि** भवानि क्षुद्रप्राणिषु प्रविश्य सूक्ष्मरूपो महाप्राणिषु प्रविश्य महारूपश्च भवानीति यावत्, इत्यब्रवीत् । **तस्मात्** क्षुद्रोऽसानीति भगवता सुष्टूक्तत्वात् ते क्षुद्रप्राणिषु स्थिता भगवद्रूपसञ्ज्ञाः **क्षुद्रसूक्तास्त**न्नामानोऽभवन् । महानसानीति सुष्टूक्तत्वान्महासूक्ष्माश्च तेऽभवन् । तस्मादित्यादि पूर्ववत् ।।

**तत्** विष्ण्वाख्यं ब्रह्म **सूक्तं** सूक्तोपलक्षितं सर्वं वेदजातं **अवोचत** ब्रह्मादिभ्य उपदिष्टवान् । बतेत्यास्वादने । **इति** हेतो**स्तत्** ब्रह्म **सूक्तं** तन्नामकमभवत् । सूक्तवक्तृत्वात् । यद्वा **तत्** ब्रह्म स्वात्मनैव स्वयं सुष्टूक्तमतः सूक्ताख्यमभवदिति । अस्मिन् पक्षेऽवोचतेत्यस्य न निर्वचनप्रवेशः । किन्तु वेदादिकमेवमवोचतेति प्रमाणसम्मतिकथनम् ।।

---

७८. ऐ.आ. १-१

**एष** भगवान् **ऋक्** ऋक्शब्दाच्यः । कुतः? एष हि **सर्वेभ्यो भूतेभ्यो** प्राणिभ्योऽ**र्चत** गतवान् । मृतिकाले म्रियमाणं प्राणिजातं परित्यज्य भागेन स्थलान्तरं गतो भवतीति यावत् । **सर्वेभ्योऽर्धेभ्यो** प्राणिशरीररूपस्थानेभ्योऽ**र्चत** गतवानित्यर्धर्चः । सर्वाणि भूतानि **पादि** अपादि अपद्यत प्रापेत्यर्थः । **तस्मात्** सर्वभूतप्राप्तिमत्त्वात् पदन्नाम ॥

**एष** भगवानक्षरं इत्युच्यते । कुतः? एष हि सर्वेभ्यो भूतेभ्यः **क्षरति** सर्वाभीष्टं सन्ततं ददात्यतः क्षरम् । एनं **अति** अतीत्य कश्चन न क्षरति । अयमेवाधिकं क्षरतीति यावत् । तथाचाधिकं क्षरमित्यक्षरमित्यर्थः । न केवलमृष्यादीनां नाम भगवतः, किन्तु ता वा एताः सर्वा ऋचोऽपि तस्यैव नाम । न केवलं सर्वा ऋचः, किन्तु सर्वे वेदाश्च तन्नामैव । अपि च समुद्रमेघवृक्षपतनभेरीताडनघण्टा-स्वर्णचञ्चुश्वासगर्गरगोधापिङ्गादिघोषा अपि स्वव्यङ्ग्यवर्णद्वारा तस्यैव नामानि किमु च सर्वे वेदाः । एतत्सर्वमपि **एकैव व्याहृतिरेकमेव** व्याहरणम् । निर्दोषगुणपूर्तिवाचित्वादेकप्रकारमेव नाम । एतच्च **प्राणे** नारायणे विषय एव, नान्यत्र । तत्राप्यृचस्तु विशेषतो भगवद्गुण-प्रकाशकत्वात् **प्राणे** नारायण एव, तत्परा एवेति विद्यादित्यर्थः ॥

**॥ इति द्वितीयाध्यायस्य द्वितीयः खण्डार्थः ॥**

विश्वामित्रेण बृहतीसहस्रशंसनम् तत्फलनिरूपणं च

**उपनिषत्**

**विश्वामित्रं ह्येतदहः शंसिष्यन्तमिन्द्र उप निषसाद । स ह 'अन्नं' इत्यभिव्याहृत्य बृहतीसहस्रं शशंस । तेनेन्द्रस्य प्रियं धामोपेयाय ।**

**तमिन्द्र उवाच– 'ऋषे प्रियं वै मे धामोपागाः । स वा ऋषे द्वितीयं शंस' इति । स ह 'अन्नं' इत्यभिव्याहृत्य बृहतीसहस्रं शशंस । तेनेन्द्रस्य प्रियं धामोपेयाय । तमिन्द्र उवाच– 'ऋषे प्रियं वै मे धामोपागाः । स वा ऋषे तृतीयं शंस' इति । स ह 'अन्नं' इत्यभिव्याहृत्य बृहतीसहस्रं शशंस । तेनेन्द्रस्य प्रियं धामोपेयाय । तमिन्द्र उवाच– 'ऋषे प्रियं वै मे धामोपागाः । वरं ते ददामी'ति ।**

**स होवाच– 'त्वामेव जानीयामि'ति । तमिन्द्र उवाच– 'प्राणो वा अहमस्म्यृषे । प्राणस्त्वम् प्राणः सर्वाणि भूतानि । प्राणो ह्येष य एष तपति । स एतेन रूपेण सर्वा दिशो विष्टोऽस्मि । तस्य मेऽन्नं मित्रं दक्षिणम् । तद्वैश्वामित्रम् । एष तपन्नेवास्मि' इति होवाच ।।२.२.३।।**

बृहतीसहस्रमन्त्राणां हरिवाय्वोरतिप्रीतिकरत्वनिरूपणम्

**भाष्यम्**

अन्यदेवताविषयत्वेन प्रतीयमाना अप्यृचो भगवद्विषया एव मुख्यतः । तदनन्तरं वायुविषयाश्च । तस्माद् बृहतीसहस्रं सर्वं मुख्यतो नारायणस्यान्नं तदाज्ञया वायोश्च । तस्मात् तच्छंसनेन भगवान् वायुश्चातिप्रीयेत[७९] इति दर्शयति– 'विश्वामित्रं ह्येतदहः [८०]शंसिष्यन्त'मित्यादिना ।।

७९. अतिप्रीते इति ह.पाठः

८०. शंसिष्यन्तं इति पदं ह.पाठे नास्ति

**एष** भगवान् **ऋक्** ऋक्शब्दाच्यः । कुतः? एष हि **सर्वेभ्यो भूतेभ्यो** प्राणिभ्योऽ**र्चत** गतवान् । मृतिकाले म्रियमाणं प्राणिजातं परित्यज्य भागेन स्थलान्तरं गतो भवतीति यावत् । **सर्वेभ्योऽर्धेभ्यो** प्राणिशरीररूपस्थानेभ्योऽ**र्चत** गतवानित्यर्धर्चः । सर्वाणि भूतानि **पादि** अपादि अपद्यत प्रापेत्यर्थः । **तस्मात्** सर्वभूतप्राप्तिमत्त्वात् पदन्नाम ॥

**एष** भगवानक्षरं इत्युच्यते । कुतः? एष हि सर्वेभ्यो भूतेभ्यः **क्षरति** सर्वाभीष्टं सन्ततं ददात्यतः क्षरम् । एनं **अति** अतीत्य कश्चन न क्षरति । अयमेवाधिकं क्षरतीति यावत् । तथाचाधिकं क्षरमित्यक्षरमित्यर्थः । न केवलमृष्यादीनां नाम भगवतः, किन्तु ता वा एताः सर्वा ऋचोऽपि तस्यैव नाम । न केवलं सर्वा ऋचः, किन्तु सर्वे वेदाश्च तन्नामैव । अपि च समुद्रमेघवृक्षपतनभेरीताडनघण्टा-स्वर्णचश्रुश्वासगर्गरगोधापिङ्गादिघोषा अपि स्वव्यङ्ग्यवर्णद्वारा तस्यैव नामानि किमु च सर्वे वेदाः । एतत्सर्वमपि **एकैव व्याहृतिरेकमेव** व्याहरणम् । निर्दोषगुणपूर्तिवाचित्वादेकप्रकारमेव नाम । एतच्च **प्राणे** नारायणे विषय एव, नान्यत्र । तत्राप्यृचस्तु विशेषतो भगवद्गुण-प्रकाशकत्वात् **प्राणे** नारायण एव, तत्परा एवेति विद्यादित्यर्थः ॥

**॥ इति द्वितीयाध्यायस्य द्वितीयः खण्डार्थः ॥**

विश्वामित्रेण बृहतीसहस्रशंसनम् तत्फलनिरूपणं च

**उपनिषत्**

**विश्वामित्रं ह्येतदहः शंसिष्यन्तमिन्द्र उप निषसाद । स ह 'अन्नं' इत्यभिव्याहृत्य बृहतीसहस्रं शशंस । तेनेन्द्रस्य प्रियं धामोपेयाय ।**

**तमिन्द्र उवाच– 'ऋषे प्रियं वै मे धामोपागाः । स वा ऋषे द्वितीयं शंस' इति । स ह 'अन्नं' इत्यभिव्याहृत्य बृहतीसहस्रं शशंस । तेनेन्द्रस्य प्रियं धामोपेयाय । तमिन्द्र उवाच– 'ऋषे प्रियं वै मे धामोपागाः । स वा ऋषे तृतीयं शंस' इति । स ह 'अन्नं' इत्यभिव्याहृत्य बृहतीसहस्रं शशंस । तेनेन्द्रस्य प्रियं धामोपेयाय । तमिन्द्र उवाच– 'ऋषे प्रियं वै मे धामोपागाः । वरं ते ददामी'ति ।**

**स होवाच– 'त्वामेव जानीयामि'ति । तमिन्द्र उवाच– 'प्राणो वा अहमस्म्यृषे । प्राणस्त्वम् प्राणः सर्वाणि भूतानि । प्राणो ह्येष य एष तपति । स एतेन रूपेण सर्वा दिशो विष्टोऽस्मि । तस्य मेऽन्नं मित्रं दक्षिणम् । तद्वैश्वामित्रम् । एष तपन्नेवास्मि' इति होवाच ॥२.२.३॥**

बृहतीसहस्रमन्त्राणां हरिवाय्वोरतिप्रीतिकरत्वनिरूपणम्

**भाष्यम्**

अन्यदेवताविषयत्वेन प्रतीयमाना अप्यृचो भगवद्विषया एव मुख्यतः । तदनन्तरं वायुविषयाश्च । तस्माद् बृहतीसहस्रं सर्वं मुख्यतो नारायणस्यान्नं तदाज्ञया वायोश्च । तस्मात् तच्छंसनेन भगवान् वायुश्चातिप्रीयेत[७९] इति दर्शयति– 'विश्वामित्रं ह्येतदहः [८०]शंसिष्यन्त'मित्यादिना ॥

---

७९. अतिप्रीते इति ह.पाठः

८०. शंसिष्यन्तं इति पदं ह.पाठे नास्ति

**भावप्रदीपः**

'विश्वामित्रमेतदहः' इति खण्डं व्याख्यातुं पूर्वखण्डसङ्गतत्वेनावतारयति– **अन्यदेवतेति** ।। 'प्राण ऋच इत्येव विद्यात्' इत्युक्तार्थस्यानुवादोऽयम् । **तस्मात्** ऋक्सामान्यस्यैव परममुख्यमुख्यतया भगवद्वायुविषयकत्वात् तद्विशेषभूतं बृहतीसहस्रमपि नारायणस्य वाचकतया **अन्नं** प्रियम् । तदाज्ञया वायोश्च । अत एव तच्छंसनेन तावुभावतिप्रीयेते इतीममर्थं विश्वामित्रमित्याद्याख्यायिकया दर्शयतीत्यर्थः । ननु बृहतीसहस्रे प्रायेणेन्द्रः प्रतिपाद्यते । [81]'इन्द्राग्नी युवं सुनः' 'स्वस्तये तार्क्ष्यमिहा हुवेम' इत्यादिषु कचिदग्निगरुडादयोऽपि । अतः कथं विष्णोरेव तत्प्रतिपादकमित्यत उक्तम्– **सर्वमिति मुख्यत इति च** ।। इन्द्रादयस्तु तत्र तत्रामुख्यतयैव प्रतिपाद्याः । भगवांस्तु सर्वत्रापि मुख्यत एव प्रतिपाद्य इति भावः । अत एवान्यदेवताविषयत्वेन प्रतीयमाना अप्यृचो भगवद्विषया एव मुख्यत इति प्रथमत एवोक्तम् ।।

**इन्द्रेण महाव्रतयज्ञकरणम्**

**भाष्यम्**

**वृत्रं हत्वा पुरेन्द्रस्तु महेन्द्रत्वाभिपत्तये ।**
**महाव्रतं कर्म चक्रे हौत्रं चक्रेऽत्र कौशिकः ।।**

**भृगुरध्वर्युरभवत् ब्रह्म ब्रह्माभवत् स्वयम् ।**
**उद्गाता वायुरभवत् स्वयं नारायणः प्रभुः ।।**
**सादस्यमकरोत् तत्र तदन्येऽन्येऽपि चर्त्विजः ।**

८१. ऋक्.सं. ८.४०.१, १०.१७८.१

### भावप्रदीपः

बृहतीसहस्रशंसितारं विश्वामित्रं प्रतीन्द्रोपनिषदनादिकमाख्यायिकोक्तं प्रमाणेनैव विवृणोति– **वृत्रं हत्वेति ।। महेन्द्रत्वाभिपत्तये** वृत्रवधपापभ्रष्टस्वस्थानप्राप्तये । अथवा **महेन्द्रत्वाभिपत्तये** महत्त्वं विनेन्द्रस्य महेन्द्रत्वायोगाद्धर्माभिवृद्धिद्वारा स्वस्य महत्त्वप्राप्त्या महेन्द्रत्वसिद्धये वृत्रं हत्वेत्यन्वयः । तदुक्तं भारततात्पर्यनिर्णये[८२]-

'इन्द्रोऽप्यवाप स्वं स्थानमिष्ट्वा विष्णुं विपापकः ।
धर्मवृद्ध्यर्थमेवैतत् पापमासीच्छचीपतेः ।

न हि लोकावनं पापं त्रैलोक्येशस्य वज्रिणः ।
वृत्रं हत्वा महानास इत्यादिवेदवचश्च यत्' ।। इत्यादि ।

**कौशिको** विश्वामित्रः । **सादस्यं** सदस्यधिष्ठानम् । तदन्ये ये ऋत्विजस्तेऽपि सादस्यमकुर्वन्नित्यर्थः । नारायणश्चेति चशब्दान्वयः ।।

### विश्वामित्रेण बृहतीसहस्रपठनम्

### भाष्यम्

**बृहतीसहस्रं शंसिष्यन् यदा सस्मार केशवम् ।**
**वायुना सह देवेशस्तदा वासवमाविशत् ।**

**आविष्टो विष्णुनाथेन्द्रो वायुना सह कौशिकम् ।।**
**शंसेत्युक्त्वा निषण्णोऽभूदिदमन्नं तवेति सः ।**

**ऋक्साहस्रं शशंसाथ[८३] यज्ञाङ्गत्वेन भक्तितः ।।**
**तत् श्रुत्वा तुष्टिमगमत् केशवो वायुसंयुतः ।**

---

८२. म.भा.ता.नि २२-३५०,३५१ ८३. शशंसात्र इति ह.पाठः

विश्वामित्रेण द्वितीयवारं बृहतीशंसनम्

**द्वितीयवारं शंसेति प्राह तं च जनार्दनः ।।**
**प्रीत्यैव शक्रमाविष्टो विश्वामित्रः शशंस तत् ।**
**अतिप्रियत्वाद्भगवान् पुनरप्याह कौशिकम् ।।**

विश्वामित्रेण तृतीयवारं बृहतीशंसनम् शंसनफलनिरूपणं च

**तृतीयं च शशंसाथ[८४] विष्णोरन्नं प्रकल्प्य तत् ।**
**ततोऽतितुष्टो भगवान् ददामि वरमित्यमुम् ।।**
**ऊचे स प्रथमे त्वेव निजसालोक्यमीश्वरः ।**
**प्रादाद् द्वितीये सामीप्यं तृतीये पुनरेव च ।।**
**वरं ददानीत्युक्तः सन् मुनिः प्राह जनार्दनम् ।**
**सम्यक्त्वामेव जानीयामिति मोक्षे सुखोच्चताम् ।**
**इच्छन् तमाह[८५] भगवानिन्द्रस्थो वायुसंयुतः ।।**

**भावप्रदीपः**

एवमुपयुक्तमभिधाय खण्डं व्याचष्टे– **बृहतीति** ।। कौशिक इति संयोज्यम् । वायुना सहेति पूर्वं पश्चाच्च सम्बद्ध्यते । अत्र निषण्णोऽभूदित्यन्तेन विश्वामित्रमित्यादि निषसादेत्यन्तं व्याख्यातं भवति । 'सहान्न'मित्यादेरर्थ– **इदमन्नं तवेतीत्यादि** । 'तेनेन्द्रस्य प्रियं धामोपेयाये'त्यस्यार्थः– **तच्छ्रुत्वा तुष्टिमगमदित्यादि** ।। 'तमिन्द्र उवाचे'त्यादेरर्थः– **द्वितीयवारमित्यादि** ।। तत्रेन्द्रशब्दं घटयति– **शक्रमाविष्ट इति** ।। पुनः सहान्नमित्यादेर्व्याख्या–

---

८४. शशंसासौ इति ह्.पाठः

८५. तं प्राह इति पाठान्तरं

**विश्वामित्रः शशंस तदिति** ।। 'पुनस्तमिन्द्रं' इत्यादेस्तात्पर्यम्– **अतिप्रियत्वादि** ।। पुनरप्याह तृतीयवारं शंसेतीति योज्यम् । पुनः 'सहान्नं' इत्यादेरर्थः– **तृतीयं चेत्यादि** ।। तृतीयवारमित्यर्थः । 'पुनस्तमिन्द्रः' इत्यादेर्विवरणम्– **ततोऽतितुष्ट इत्यादि** ।। ननु प्रतिशंसनं तेनेन्द्रस्य प्रियं धामोपेयायेतीन्द्रनामकभगवतः प्रियधाम-प्राप्तिः फलत्वेनोच्यते । नैतद् युज्यते । प्राप्तस्य पुनः प्राप्त्ययोगात् । कथञ्चिद् योगे वा फलत्वायोगात् । भगवद्धामप्राप्तेरेव मोक्षरूपत्वेन विश्वामित्रस्य तदानीमेव मोक्षप्राप्तिप्रसक्तेश्च । मोक्षादधिकफलाभावेन वरं ते ददामीति वरदानप्रतिज्ञानाद्ययोगाच्चेत्याशङ्क्य निराचष्टे– **स प्रथम इति** ।। **प्रथमे** बृहतीसहस्रशंसने निजसालोक्यमेवेत्यन्वयः । **प्रादात्** क्लृप्तमकरोत् । द्वितीये शंसने **सामीप्यं** स्वपुरप्राप्तिरूपम् । तृतीये शंसने च पुनः सामीप्यमेव स्वान्तःपुरप्राप्तिलक्षणं प्रादादित्यर्थः । वक्ष्यते चैतत्–

'बृहतीसहस्रे प्रथमे सालोक्यं प्रददौ हरिः ।
द्वितीये स्वपुरप्राप्तिं तृतीयेऽन्तःपुरस्य च'[८६] ।। इति ।

पुनरेवेत्यावर्तते । एवं वरत्रयदानानन्तरं, पुनरेव वरान्तरं ददानीति भगवतोक्ते **मुनि**र्विश्वामित्रो मोक्षे सुखोच्चतामिच्छन् 'सम्यक् त्वामेव जानीया'मिति जनार्दनं प्राहेति योजना । अत्र सम्यगित्यनेन ज्ञानिनो मुनेः पुनर्ज्ञानप्रार्थनमयुक्तमिति निरस्तम् । ततश्च शंसन-त्रयेऽपि फलानां भिन्नत्वेनैक्याभावादाद्यशङ्कया निरासः । भगवद्धाम-प्राप्तेर्भविष्यन्त्या एव वरत्वेन क्लृप्ततासम्पादनाद् द्वितीयायाः ।

---

८६. ऐत.भा २-२-३ पु.२१२

तृतीयशंसने पुनर्वरस्य मौक्तानन्दोन्नाहरूपत्वात्तृतीयाया इति बोध्यम् । 'पुनस्तमिन्द्र उवाचे'त्यस्यार्थः– **तमाहेति** ॥

भगवतः सर्वशब्दवाच्यत्वसमर्थनम्

**भाष्यम्**

**सर्वनामाऽहमस्म्येक इति ज्ञानं ममोत्तमम् ।**
**यस्मात् सर्वगुणत्वं स्यात् सर्वनामत्व एव तु ॥**
**न हि दोषाभिधायीनि विष्णोर्नामानि कानिचित् ।**
**अदोषत्वान्महाविष्णोर्न सामान्यवचांस्यपि ॥**
**सर्वोत्तमगुणात्मत्वात् सदा नारायणस्य हि ।**
**सर्वोत्तमगुणानेव नामान्याचक्षते हरेः ॥**

**भावप्रदीपः**

'प्राणो वाऽहमस्मिृषे' इत्यादेस्तात्पर्यमाह– **सर्वनामेति** ॥ सर्वज्ञानेष्वपि 'सर्वनामाऽहमेक एवास्मी'ति **मम ज्ञानं** मद्विषयं ज्ञानमुत्तममित्यभिप्रेत्य 'प्राणो वा' इत्यादिकमाहेति योजना । अहंशब्दस्य जीवपरतां वारयितुं **ममेत्युक्तम्** । कथमस्य ज्ञानस्य सर्वज्ञानोत्तमत्वमित्यत आह– **यस्मादिति** ॥ तुर्विशेषे । यस्मान्महायोगवृत्त्या सर्वनामत्वे सत्येव हि सर्वगुणत्वं स्यान्नान्यथा । अतः सर्वगुणपूर्णत्वज्ञानसाधनत्वात् सर्वनामताज्ञानस्योत्तमत्वमिति भावः ॥

ननु न सर्वगुणतासिद्ध्यर्थं सर्वनामत्वं विष्णोरभ्युपेतम्[८५] । तथात्वे दुःखिबद्धावर[८६]शब्दानां दोषाभिधायितया तद्वाच्यस्य हरे-

---

८५. अभ्युपेयम् इति 'ख'पाठः ८६. दुःखिबद्धावरादि इति 'ख'पाठः

दोषित्वमपि प्रसज्येतेत्यत आह– **न हीति** ।। दुःख्यादिनामान्यपि विष्णोः कर्हिचिदपि दोषाभिधायीनि न भवन्ति । किन्तु परगत-दुःखादिस्वामितारूपगुणाभिधायकान्येव । कुतः? विष्णोरदोषत्वात् । 'निरनिष्टो निरवद्य' इत्यादिश्रुतेरित्यर्थः । न चेतरवद् विष्णोरपि दोषित्वं वक्तुं युक्तम् । तस्य सर्वोत्तमत्वात् । दोषित्वे तदयोगात् । तदिदमुक्तम्- **महाविष्णोरिति** ।। यथोक्तमनुव्याख्याने[८७]-

'दुःखिबद्धावराद्यास्तु तदधीनत्वहेतुतः ।
शब्दा ब्रह्मणि वर्तन्ते राज्ञि यद्वत् पराजयः' ।। इति ।

[८७अ]'अतो दोषातिदूरत्वात् संशयस्याप्यसम्भवात् ।
दोषाणां विष्णुगत्वस्य प्राज्ञबुद्धिव्यपेक्षया ।
स्वातन्त्र्यार्थमभिप्रेत्य दोषशब्दाश्च विष्णवि' ।। इति च ।

मास्तु तर्हि शब्दानां विष्णौ दोषाभिधायित्वम् । अस्तु च गुणाभिधायकत्वमेव । नैतावता तस्य सर्वोत्तमता सिद्ध्यति । वाच्यगुणानामितरगुणसाधारण्ये तदुत्तमताऽलाभादित्यत आह– **न सामान्येति** ।। नामानीति वर्तते । न केवलं दोषाभिधायीनि नेत्येव । किन्तु **सामान्यवचांसि** इतरसाधारणगुणवाचीन्यपि न भवन्ति । किन्नाम नारायणस्य सर्वोत्तमगुणात्मत्वाद्धरेस्सर्वोत्तमगुणानेवाचक्षत इत्यर्थः ।।

---

८७. १-४-१

८७अ. अनु. १-४-७

## परमात्मनि सर्वशब्दसमन्वयक्रमनिरूपणम्

### भाष्यम्

यावज्ज्ञानेन मोक्षः स्यात् तावज्ज्ञात्वाऽपि कौशिकः ।
अधिकज्ञानलब्ध्यर्थं मोक्षेऽधिकसुखाप्तये ॥

जानीयां त्वामिति प्राह तस्मा आह स केशवः ।
इन्द्राविष्टः प्राणनाम तथान्याश्चाभिधाः प्रभुः ॥

प्रकृष्टानन्दरूपत्वात् प्राण इत्यभिधीयते ।
अहेयत्वादहंनामास्म्यसनान्मिनुतेरपि ॥

ततो "वेत्तीति च त्वं स पूर्णत्वात् सर्वनामकः ।
सर्वाणि बहुरूपत्वात् सर्वरूपेषु पूर्तितः ॥

प्रभूतत्वात् भूतनामा सर्वरूपप्रभूततः ।
बहुरूपः स भूतानीत्युक्तो विष्णुस्सनातनः ॥

सर्वैश्वर्यस्वरूपत्वादेष इत्यभिधीयते ।
स एव सूर्यसंस्थः सन् लोकं तपति केशवः ॥

### भावप्रदीपः

'त्वामेव जानीयां' इति वाक्यं ज्ञानिनो मुनेः पुनर्ज्ञानप्रार्थनमयुक्तमित्याशङ्कानिरासाय सम्यक् त्वामेव जानीयामिति व्याख्यातम् । तदप्ययुक्तमिवाभाति । मुनेः प्राक् तत्त्वज्ञानस्य सम्यगेव सत्वात् । अन्यथा तस्य सालोक्यादिमोक्षदानानुपपत्तेः । अतः पुनः तत्प्रार्थन-

---

८८. वेत्तेति इति ह्र.पाठः

मनुपपन्नमेवेत्यत आह– **यावदिति** ।। तथाच सम्यगित्यस्य मोक्षपर्याप्तज्ञानापेक्षयाऽधिक्येनेत्यर्थ इत्याशयः । इदानीं 'तमिन्द्र उवाच' इत्यादिकं व्याचष्टे– **तस्मा इति** ।। इन्द्र इत्यस्यार्थः– **इन्द्राविष्ट इति** ।। प्राणो वा इति प्राणनाम । तथा **अन्याः** अहं अस्मि त्वं सर्वाणीत्याद्या अभिधाश्च **तस्मै** ऋषये आह । स्ववाचकत्वेनेति शेषः । प्राणादिशब्दान् क्रमेण विष्णौ निर्वक्ति– **प्रकृष्टेति** ।। णशब्दस्य निर्वृतिवाचकत्वेन प्रणः प्रकृष्टानन्दः, स एव प्राण इति । नञ्पूर्वाद् 'ओ हाक् त्यागे' इति धातोः कर्मणि डप्रत्ययेऽहमिति रूपम् । असनाद्दोषाणां निरसनान्मनुते ज्ञानाच्चास्मि । अस्तेर्मातेश्च डिः । **ततो** व्याप्तः वेत्ता चेति **त्वम्** । तनोतेः कर्तरि ड्विप्रत्यये तकारमात्रं रूपम् । 'वा गतिगन्धनयोः' इति धातोः कः । तथाच त् वं चेति **त्वम्** । सर्वाणीत्यत्र प्रातिपदिकार्थमाह– **पूर्णत्वादिति** ।। प्रत्ययार्थमाह– **सर्वाणीति** ।। समुदायलब्धार्थमाह– **सर्वरूपेष्विति** ।। **पूर्तितः** पूर्णत्वात् । तथाच पूर्णात्मकसर्वरूपत्वात् सर्वाणीति बहुवचनान्तसर्वशब्दवाच्य इत्यर्थः । एवमेव भूतानीत्यस्याप्यर्थः ज्ञेय इत्याह– **प्रभूतत्वादिति** ।। पूर्णत्वादित्यर्थः । इदं च भूतशब्दप्रातिपदिकार्थकथनम् । विभक्त्यर्थकथनम्– **बहुरूप** इत्यादि ।। समुदायार्थकथनम्– **सर्वरूपप्रभूतत इति** ।। सर्वरूपेष्वपि प्रभूतत्वाद् भूतानीत्युक्त इत्यन्वयः । 'ईश ऐश्वर्ये' इति धातोर्घञ्, तथाचैष इति रूपम् । 'य एष तपती'त्यस्यार्थः– **स एवेति** ।।

परमात्मनि सर्वशब्दसमन्वयक्रमनिरूपणम्

भाष्यम्

यावज्ज्ञानेन मोक्षः स्यात् तावज्ज्ञात्वाऽपि कौशिकः ।
अधिकज्ञानलब्ध्यर्थं मोक्षेऽधिकसुखाप्तये ।।

जानीयां त्वामिति प्राह तस्मा आह स केशवः ।
इन्द्राविष्टः प्राणनाम तथान्याश्चाभिधाः प्रभुः ।।

प्रकृष्टानन्दरूपत्वात् प्राण इत्यभिधीयते ।
अहेयत्वादहंनामास्म्यसनान्मिनुतेरपि ।।

ततो [८८]वेत्तीति च त्वं स पूर्णत्वात् सर्वनामकः ।
सर्वाणि बहुरूपत्वात् सर्वरूपेषु पूर्तितः ।।

प्रभूतत्वात् भूतनामा सर्वरूपप्रभूततः ।
बहुरूपः स भूतानीत्युक्तो विष्णुस्सनातनः ।।

सर्वैश्वर्यस्वरूपत्वादेष इत्यभिधीयते ।
स एव सूर्यसंस्थः सन् लोकं तपति केशवः ।।

भावप्रदीपः

'त्वामेव जानीयां' इति वाक्यं ज्ञानिनो मुनेः पुनर्ज्ञानप्रार्थनमयुक्तमित्याशङ्कानिरासाय सम्यक् त्वामेव जानीयामिति व्याख्यातम् । तदप्ययुक्तमिवाभाति । मुनेः प्राक् तत्त्वज्ञानस्य सम्यगेव सत्वात् । अन्यथा तस्य सालोक्यादिमोक्षदानानुपपत्तेः । अतः पुनः तत्प्रार्थन-

---

८८. वेत्तेति इति ह.पाठः

मनुपपन्नमेवेत्यत आह– **यावदिति** ।। तथाच सम्यगित्यस्य मोक्षपर्याप्तज्ञानापेक्षयाऽधिक्येनेत्यर्थ इत्याशयः । इदानीं 'तमिन्द्र उवाच' इत्यादिकं व्याचष्टे– **तस्मा इति** ।। इन्द्र इत्यस्यार्थः– **इन्द्राविष्ट इति** ।। प्राणो वा इति प्राणनाम । तथा **अन्याः** अहं अस्मि त्वं सर्वाणीत्याद्या अभिधाश्च **तस्मै** ऋषये आह । स्ववाचकत्वेनेति शेषः । प्राणादिशब्दान् क्रमेण विष्णौ निर्वक्ति– **प्रकृष्टेति** ।। णशब्दस्य निर्वृतिवाचकत्वेन प्रणः प्रकृष्टानन्दः, स एव प्राण इति । नञ्पूर्वाद् 'ओ हाक् त्यागे' इति धातोः कर्मणि डप्रत्ययेऽहमिति रूपम् । असनाद्दोषाणां निरसनान्मनुते ज्ञानाच्चास्मि । अस्तेर्मातेश्च डिः । **ततो** व्याप्तः वेत्ता चेति **त्वम्** । तनोतेः कर्तरि ड्विप्रत्यये तकारमात्रं रूपम् । 'वा गतिगन्धनयोः' इति धातोः कः । तथाच त् वं चेति **त्वम्** । सर्वाणीत्यत्र प्रातिपदिकार्थमाह– **पूर्णत्वादिति** ।। प्रत्ययार्थमाह– **सर्वाणीति** ।। समुदायलब्धार्थमाह– **सर्वरूपेष्विति** ।। **पूर्तितः** पूर्णत्वात् । तथाच पूर्णात्मकसर्वरूपत्वात् सर्वाणीति बहुवचनान्तसर्वशब्दवाच्य इत्यर्थः । एवमेव भूतानीत्यस्याप्यर्थः ज्ञेय इत्याह– **प्रभूतत्वादिति** ।। पूर्णत्वादित्यर्थः । इदं च भूतशब्दप्रातिपदिकार्थकथनम् । विभक्त्यर्थकथनम्– **बहुरूप इत्यादि** ।। समुदायार्थकथनम्– **सर्वरूपप्रभूतत इति** ।। सर्वरूपेष्वपि प्रभूतत्वाद् भूतानीत्युक्त इत्यन्वयः । 'ईश ऐश्वर्ये' इति धातोर्घञ्, तथाचैष इति रूपम् । 'य एष तपती'त्यस्यार्थः– **स एवेति** ।।

बृहतीसहस्राणां भगवदन्नत्वनिरूपणम्

**भाष्यम्**

**सर्वनामवतस्तस्य ममान्नं मित्रमुच्यते ।**
**अन्नाभिमानिनी साक्षाच्छ्रीरेव प्रमदोत्तमा ।।**

**साऽन्नमित्युच्यते विष्णोर्भोग्यत्वान्मित्रमेव च ।**
**दक्षभागस्थितेनत्वाद् दक्षिणं नाम सोच्यते ।।**

**तस्या इनो हि विष्णुः स दक्षभागे स्थितः सदा ।**
**यस्याभिमानिन्यन्नस्य लक्ष्मीः सा देवतोत्तमा ।।**

**वैश्वामित्रं तदन्नं तु ऋक्सहस्रात्मकं मतम् ।**
**विश्वामित्रेण दृष्टत्वाद् वैश्वामित्रमितीर्यते[८९] ।।**

**भाप्रदीपः**

'तस्य मेऽन्नं मित्रं दक्षिणं' इत्येतद् व्याचष्टे– **सर्वेति** ।। तस्येत्यनुवादः सर्वनामवत इति व्याख्या । प्राणादिसर्वनामवत इत्यर्थः । ममेतीन्द्राविष्टभगवद्वाक्यम् । कथमन्नस्य विष्णुमित्रत्वमित्यतस्तद् घटयति– **अन्नेति** ।। 'ताश्चेन्द्रधर्मनासत्यसंश्रयाच्छ्रिय ईरिताः'[९०] इति श्रीशब्दस्यान्यत्रापि प्रयोगात् **साक्षादित्युक्तम्** । सा केत्यतो महालक्ष्मीरेवेति भावेनोक्तम्– **प्रमदोत्तमेति** ।। तस्या अन्नशब्दवाच्यत्वे निमित्तम्– **अन्नाभिमानिनीति** ।। सा च **भोग्यत्वाद्** भोगयोग्यत्वादेव विष्णोर्मित्रम् । न तु क्लेशस्थानं निरूप्य रक्षकत्वादित्येवकारार्थः । दक्षिणशब्दार्थमाह– **दक्षेति** ।। दक्षभागे स्थित इनः

---

८९. तदीर्यते इति ह्.पाठः  ९०. म.भा.ता.नि १८-१०५

पतिर्विष्णुर्यस्यास्सा दक्षिणा विष्णुवामभागस्थिता । तदर्धदेहरूपेत्यर्थः । अन्नशब्देन प्रसिद्धान्नपरिग्रहे तस्य तद्वैश्वामित्रमित्युच्यमानं वैश्वामित्रत्वमनुपपन्नं स्यादतो बृहतीसहस्रमेव विवक्षितमत्रेति भावेनाह– **यस्येति** ।। सा देवतोत्तमा लक्ष्मीर्यस्यान्नस्याभिमानिनी तदन्नमृक्सहस्रात्मकं यद् वैश्वामित्रं मन्त्रजातं तदेव मतम्, नान्यदित्यर्थः । तस्य वैश्वामित्रत्वं कुत इत्यत आह– **विश्वामित्रेणेति** ।।

इन्द्रे भगवतो विशेषावेशनिरूपणम्

**भाष्यम्**

**इन्द्राविष्टः कोऽयमिति शङ्कां परिहरन् हरिः ।**
**आदित्यसंस्थितो विष्णुस्तपन्नस्मीति चोचिवान् ।।**

**त्वां जानीयामिति प्रश्नं विश्वामित्रस्य कुर्वतः ।**
**अभिप्रायद्वयं ह्यस्ति शक्राविष्टो न चापरः ।।**

**हरेरिति तु मे तर्कस्तेजोबाहुल्यतोऽजनि ।**
**तस्य तर्कस्य सत्यत्वं ज्ञातव्यं प्रथमं मम[११] ।।**

**द्वितीयं यदि विष्णुः स्याज्ज्ञातव्यो मे विशेषतः ।**
**इत्यभिप्रायमस्यैव ज्ञात्वा विष्णुः सनातनः ।।**

**अभिप्रायद्वयस्यापि परिहारं हरिर्ददौ ।**
**प्राणो वा अहमित्यादि नामसन्दर्भमुक्तवान् ।।**

---

११. मया इति प्र.पाठः, ह.पाठेऽपि मम इत्येव ।

**विशेषज्ञानसिद्ध्यर्थं नाम्नामुक्तिः परात्मनः ।**
**इन्द्रविष्टः कोऽयमिति शङ्कानुत्यर्थमेव च ।।**

**तपन्नेवास्मीत्यवदत् तपन्तं वेद सोऽपि हि ।**
**नारायणं सूर्यगतं गायत्र्योपासको हि सः ।। इति ब्रह्माण्डे ।**

**भावप्रदीपः**

'प्राणो ह्येष य एष तपती'त्युक्तत्वात्पुनः 'एष तपन्नेवास्मी'ति वचनस्य पुनरुक्ततां परिहर्तुं वाक्यमवतार्य व्याचष्टे– **इन्द्राविष्ट इति** ।। तथापि पुनरुक्तिपरिहारः कथं जात इत्यत आह– **त्वामिति** ।। अयं तावन्न केवलः शक्रः, **तेजोबाहुल्यतः** पूर्वतेजोऽपेक्षया शक्रदेहे तेजसो बाहुल्यदर्शनात् । अतः कश्चन तदुत्तम एव तत्र प्रविष्ट इति भाति । सोऽपि शक्राविष्टो हरेरन्यो न भवितुमर्हति । कुतः? **तेजो-बाहुल्यत एव** शक्रदेहे दृश्यमानतेजसः सर्वदेवतातेजोऽपेक्षयाऽ-धिक्यदर्शनादिति **मे** मम **तर्क** ऊहस्तावदजनि । तस्य तर्कस्य **सत्यत्वं** यथार्थत्वं तावत् प्रथमं मम ज्ञातव्यम् । द्वितीयं तु ज्ञातव्यमिदमेव । किं तत्? यदि स इन्द्राविष्टो विष्णुः स्याच्चेत् तर्हि मे विशेषतो ज्ञातव्य इति । इत्यभिप्रायं अभिप्रायं[९३] ज्ञात्वैवेत्यन्वयः । तत्र द्वितीयाभिप्रायेण प्रवृत्तस्य त्वामेव जानीयामिति वाक्यस्य 'प्राणो वा' इत्यादिवाक्यं परिहाररूपमित्याह– **प्राणो वा इति** ।। **नामसन्दर्भं** अन्वर्थकनाममालाम् । एतावता कथं द्वितीयाभिप्रायप्रश्नः समाहित इत्यत उक्तमर्थं प्रयोजनोक्त्या विशदयति– **विशेषेति** ।। नाम्नामुक्ति-रित्यनेन प्राणोऽहमस्म्यादीनामिव य एष तपतीत्यस्यापि नामत्व-

---

९३. अभिप्रायद्वयं इति 'ख'पाठः

मेवेति सूचयति । तपननामनिर्वचनत्वावगमात् । तथाचेदं विशेषज्ञानसिद्ध्यर्थं गुणनामोक्तिरूपत्वाद् द्वितीयशङ्कोत्तरं भवतीति भावः । 'य एष तपन्नेवास्मी'ति वाक्यं तु प्रथमशङ्कापनोदनार्थं प्रवृत्तम् । अतो 'य एष तपती'ति वाक्येन न पुनरुक्ततेति भावेनाह– **इन्द्राविष्ट इति** ।। अयं चेन्द्राविष्ट इति चशब्दान्वयः । एवशब्दो द्वितीयशङ्काव्यावर्तकः । तावतापि कथमेतच्छङ्कानुत्थितिरित्यत आह– **तपन्तमिति** ।। **स** विश्वामित्रः । सूर्यगतं तपन्तं नारायणं वेदेत्यन्वयः । तत्कुत इत्यत आह– **गायत्र्येति** ।। गायत्री च विष्णुमात्रपरपुरुषसूक्तव्याख्येयत्वाद् विष्णुपरैवेति प्रसिद्धमेवेति भावः ।।

### 'प्राणोऽहं' इत्युक्तिः भगवत एव

### भाष्यम्

**उपनिषण्णमिन्द्रं दृष्ट्वाऽपि त्वामेव जानीयामिति वरस्वीकारादिन्द्रादेव चेन्द्राविष्टो भगवानत्रोक्त इति ज्ञायते । इन्द्रं तु जानात्येव हि विश्वामित्रः । भगवन्तमपि स्वरूपत आगतं जानात्येव । विशेषज्ञानप्रार्थने 'प्राणो वा अहमस्म्यृषे' इत्यादिकमेव पूर्यते । 'एष तपन्नेवास्मि' इति व्यर्थम् । 'प्राणो ह्येष य एष तपति' इत्युक्तत्वात् ।**

### भावप्रदीपः

एवमागमेनेन्द्राविष्टो भगवानेवात्र प्रतिपाद्यते, न त्विन्द्र इति प्रसाध्य युक्त्यापि साधयति– **उपनिषण्णमिति** ।। अत्र 'इन्द्र उपनिषसाद' इतीन्द्रस्य विश्वामित्रसमीपे निषण्णत्वं तावदवगम्यते । तेन तस्यान्तर्हितत्वात्तद्दर्शनकामेन त्वामेव जानीयामित्युक्तमिति शङ्कानवकाशः । अतस्तमिन्द्रमपरोक्षेण दृष्ट्वापि त्वामेव जानीयामिति

प्रार्थनापूर्वकं प्रत्यक्षविषयादिन्द्रादेव वरस्वीकारान्नेन्द्रोऽत्र प्रतिपाद्यः । किं त्विन्द्राविष्टो भगवानेवेति **ज्ञायते** अनुमीयत इत्यर्थः । नन्विन्द्रशरीरमात्रस्य प्रत्यक्षत्वेऽपि तत्स्वरूपस्याप्रत्यक्षत्वात्तदर्थमेव वरस्वीकार इति किन्न स्यादित्यत आह– **इन्द्रं त्विति** ।। ऋषित्वात् तस्य देवतास्वरूपज्ञानमप्यस्त्येवेति भावः । नन्वेवं तर्हि विष्णुज्ञानमपि तस्यास्त्येव । 'स्वयं नारायणः प्रभुः । सादस्यमकरोत्तत्र'[९४] इति विष्णोरपि यज्ञे व्यक्ततयैवावस्थितेरुक्तत्वात् । विश्वामित्रस्य ऋषित्वेन भगवज्ज्ञानाभावासम्भवाच्चेत्यत आह– **भगवन्तमपीति** ।। स्वरूपत एव, न तु विशेषतः । अतो विशेषज्ञानार्थमेवं प्रार्थनादिकं युज्यत इति भावः । नन्वस्तु तर्हि विष्णुविशेषज्ञानप्रार्थनमेकमेवात्र विवक्षितम् । इन्द्राविष्ट कोऽयमिति तत्स्वरूपजिज्ञासाऽपि कुतो युज्यत[९५] इत्यत आह– **विशेषेति** ।। **ज्ञानप्रार्थने** ज्ञानमात्रप्रार्थने विवक्षिततया व्याख्यायमाने **पूर्यते** प्राणादिशब्दवाच्यत्वकथनेन विशेषज्ञानस्य सम्पादितत्वात् । उक्तत्वात् सूर्यस्थितत्वस्येति शेषः ।।

## इन्द्राविष्टस्य विष्णुत्वसमर्थनम्

### भाष्यम्

**[९६]'स एतेन रूपेण सर्वा दिशो विष्टोऽस्मि' इत्यादिनाऽप्याविष्टस्य विष्णुत्वं किञ्चिज्ज्ञायते । तथाप्येतेनेति तृतीयात्वात् करणत्वाशङ्का भवति । तस्य म इति वैय्यधिकरण्यमिति च । अतो भगवन्नामानि पृथगुक्त्वाऽहं विष्णुरित्येव तपन्नेवास्मीत्युवाच, इन्द्रशरीरमेव पश्यतो विश्वामित्रस्य तर्कमात्रतो भगवानिति किञ्चिज्ज्ञानत इति ज्ञायते ।**

---

९४. ऐत.भा २-२-३ (१८४पुटम्)

९५. योज्यते इति 'ख'पाठः

९६. ऐत.उ २-२-३ (१८३पुटम्)

**भावप्रदीपः**

किञ्चायमिन्द्राविष्टो विष्णुरेव नान्यः । दिशो विष्टोऽस्मीति विष्णुशब्दार्थस्यैव सूचनात् । 'विश प्रवेशने' इति धातुरूपत्वाद् विष्णुशब्दस्य । एवं 'तस्य मेऽन्नं मित्रं दक्षिणं' इत्यपि विष्णुलिङ्गम् । दक्षिणाख्यरमापतित्वस्यान्यत्रासम्भवात् । अतोऽप्ययं विष्णुरेवेति ज्ञायत इत्याशयेनाह– **स एतेनेति** ।। आदिपदेन 'तस्य मेऽन्नम् मित्रं दक्षिणं' इति वाक्यं ग्राह्यम् । न च विष्णुशब्दस्य विशिष्टप्राणबलत्वादिरूपार्थान्तरस्यापि भावात्कथं विष्टोऽस्मीत्युक्तिमात्रेण विष्णुत्वं ज्ञायत इति वाच्यम् । अस्यापि विष्णुशब्दार्थतया प्रमितत्वेन विष्णुत्वसूचनस्याव्याहतत्वात् । यथोक्तं मोक्षधर्मे[९७]–

'अधिभूतं निविष्टश्च तदिच्छुश्चास्मि भारत ।
क्रमणाच्चाप्यहं पार्थ विष्णुरित्यभिसञ्ज्ञितः ।।' इति ।

न च दक्षिणमित्रत्वस्य विष्णुलिङ्गत्वेऽप्यत्र दक्षिणमिति नपुंसकशब्दश्रवणात्तेन तदलाभ इति वाच्यम् । लिङ्गवैषम्येऽपि दक्षे इनो यस्येति प्रातिपदिकार्थस्योभयपक्षेऽपि साम्यात् । अव्यक्तादिशब्दवत् रमावाचित्वेऽपि नपुंसकत्वोपपत्तेश्च । अतो न काऽप्यनुपपत्तिरिति । अत एवोक्तम्– **किञ्चिदिति** ।। अनतिव्यक्तमित्यर्थः । नन्वेवमेव ताभ्यां[९८] वाक्याभ्यामेवेन्द्राविष्टस्य विष्णुत्वे सिद्धे 'एष तपन्नेवास्मी'ति वाक्यं पुनर्व्यर्थता[९९]मापन्नमित्याशङ्क्य यथा न वैय्यर्थ्यं तथोपपादयति– **तथापीति** ।। इन्द्राविष्टस्य विष्णुताया उक्तरीत्या

---

९७. महा. मोक्षधर्म.प १२८-३८, गी.भा १०-२१,२५

९८. एताभ्यां इति 'ख'पाठः ९९. व्यर्थं इति 'ख'पाठः

कथञ्चिदवगमेऽपि न 'एष तपन्नेवास्मी'त्यस्य वैय्यर्थ्यम् । अवगतस्यापि विष्णुत्वस्य शङ्काकलङ्कितत्वेन निश्चेतुमशक्यत्वात् । तथाहि– न तावत् 'एतेन रूपेण' इति वाक्यात्तन्निश्चयः । एतेनेत्यादि तृतीयायास्तृतीयात्वादेव करणत्वार्थेऽपि सम्भवेन 'दिशो विष्टोऽस्मी'ति [१००]दिग्वेदनक्रियायां तस्य कर्तृत्वमेवेति निर्णयायोगात् । तदयोगे च दिग्विष्टताया 'य एष तपति' इत्युक्तसूर्यस्थभगवद्रूपादेतेनेत्युक्तादन्यस्यैव प्राप्त्या तस्य विष्णुशब्दार्थत्वसम्भवेऽप्युपपत्तिविरोधेन सूर्यस्थस्य विष्णुत्वनिश्चायकत्वायोगात् । नापि 'तस्य मेऽन्नं मित्रं दक्षिणं' इति वाक्यादाविष्टस्य विष्णुत्वनिश्चयः । स हि तस्य म इत्यनयोः सामानाधिकरण्ये सूर्यस्थितस्यैवेन्द्राविष्टत्वप्राप्त्या तस्य दक्षिणामित्रत्वलिङ्गेन कर्तुं शक्येत । **मे** मदीयस्य **तस्य** सूर्यस्थितस्य विष्णोर्दक्षिणं मित्रमिति वैय्यधिकरण्येनान्वये तु न तत्सिद्धिः । म इति वक्तुरिन्द्राविष्टस्य ततो भिन्नत्वात् । अतो नेयं तृतीया करणे । नापि तस्य म इति व्यधिकरणमिति स्वाभिप्रायं प्रकटयितुमुक्तशङ्काद्वयनिरासाय 'एष तपन्नेवास्मि' इति वाक्येनेन्द्राविष्टोऽहं विष्णुरेवेत्युवाचेत्यर्थः । एवं तर्हि 'प्राणो वा अहं' इत्यादिकं किमर्थमित्यतो विशेषज्ञानसिद्ध्यर्थमित्युक्तं मा विस्मार्षीरिति भावेनोक्तम्- **भगवन्नामानि पृथगुक्त्वेति** ।। शक्रशरीरे तेजोबाहुल्यदर्शनाच्छक्राविष्टो न हरेरन्य इति विश्वामित्रस्य तर्को जातस्तस्य सत्यत्वं ज्ञातुं त्वामेव जानीयामिति प्रश्नः प्रवृत्त इत्युक्तम् । तत्कथं ज्ञायते? परबुद्धेरप्रत्यक्षत्वादित्यतस्तदुपपादयति– **इन्द्रशरीरमिति** ।।

---

१००. दिग्वेशन इति 'ख'पाठः

इन्द्रस्य प्राणशब्दवाच्यत्वाभावसर्वशब्दवाच्यत्वाभावसमर्थनम्

**भाष्यम्**

न चेन्द्रस्य प्राणशब्दः सर्वशब्दाभिधेयत्वं च विद्यते । 'अजस्य नाभावध्येकमर्पितम्'[१०१] इत्युक्तस्य पद्मनाभस्य हि 'यो देवानां नामधा एक एव'[१०२] इति सर्वदेवाभिधानत्वमुक्तम् । इन्द्रे हीन्द्र-शब्दोऽपि न मुख्यतो वर्तते । परमैश्वर्याभावात् । इन्द्रशब्दोऽपि विष्णावेव वर्तते । स हि परमेश्वरः ।

'यमिन्द्रमाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमु सत्यमाहुः' इति श्रुतेश्च ।

'इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्' इत्यादिश्रुतेश्च ।

'सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि'[१०३] इत्यादिना विष्णुरेव हि अत्र प्रस्तुतः ।

नामानि विश्वाभि न सन्ति लोके यदाविरासीदनृतस्य सर्वम् ।
नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदा-हरन्ति[१०४] ।। इति श्रुतिः ।

[१०५]'यो देवानां नामधा एक एव' इत्यवधारणान्नान्यस्य सर्व-नामवत्वम् । स च विष्णोर्नान्यः । पद्मनाभत्वादेव ।

---

१०१. ऋक्.सं १०-८२-६

१०२. ऋक्.सं १०-८२-३

१०३. ऋक्.सं १-१६४-३६

१०४. ब्र.सू.भा १-१-१ इत्यत्रोदाहृता भाल्लवेयश्रुतिः

१०५. ऋक्.सं १०-८२-३

## भावप्रदीपः

नन्वयमुपदेश इन्द्रकर्तृक एव किन्न स्यात्कुतस्तत्राविष्टादिकल्पनेत्यत आह– **न चेति** ।। उपदेष्टुः प्रसिद्धेन्द्रत्वाङ्गीकारे 'प्राणो वा अहं' इत्यादिकमनुपपन्नम् । नहि प्रसिद्धेन्द्रस्य प्राणशब्दवाच्यत्वं अहमस्म्यादिसर्वशब्दाभिधेयत्वं चास्ति । प्रमाणाभावादिति भावः । ननु विष्णोरपि प्राणादिसर्वशब्दाभिधेयत्वे प्रमाणाभावात्साम्यमेवेत्यत आह– **अजस्येति** ।। 'यो देवानां नामधा एक एव' इति विष्णोरेकस्यैव सर्वदेवनामधारकत्वमुच्यते । न चात्र य इत्युक्तो विष्णुरेवेति कुत इति वाच्यम् । अस्मिन्नजस्य नाभावध्येकमर्पितमिति पद्मनाभत्वलिङ्गश्रवणात् । न च तन्नाभ्यर्पितवस्तुनः पद्मत्वे विवदितव्यम् । वाक्यशेषे 'यस्मिन् विश्वानि भुवनानि तस्थुः'[१०६] इति समस्तभुवनाधारताश्रवणात् । प्रसिद्धं हि विष्णुनाभिपद्मस्य चतुर्दशभुवनाधारत्वमिति भावः । कैमुत्येनापि शक्रस्य सर्वशब्दवाच्यत्वं प्रतिषेधति– **इहेति**[१०७] ।। किमुत प्राणादिसर्वशब्दजातमित्यपिशब्दार्थः । प्रसिद्धिविरोधपरिहाराय **मुख्यत** इत्युक्तम् । महायोगवृत्त्येत्यर्थः । तदेव विशदयति– **परमेति** ।। 'इदि परमैश्वर्ये' इति धातोरिति भावः । ननु प्रसिद्धेन्द्रस्य प्राणादिशब्दवाच्यत्वानुपपत्त्या यथा नायमिन्द्रः प्रसिद्ध इत्युच्यते, एवं विष्णावपि वक्तुं शक्यत एव । तस्मिन्निन्द्रशब्दानुपपत्तेरित्याशङ्क्य महायोगविद्वद्रूढ्योस्सत्त्वात्का नामानुपपत्तिरि भावेनाह– **इन्द्रशब्द इति** ।। न केवलं प्राणादिशब्दा

---

१०६. ऋक्.सं १०-८२-६

१०७. इन्द्रेति इति प्रतीकं स्यात् इति भाति । किन्तु सर्वासु मातृकासु इहेति इत्येव प्रतीकः गृहीतः । अथवा, भाष्य एव 'इह' इति पाठः स्यात्

इत्यपेरर्थः । वर्तते मुख्यत इति शेषः । तत्र योगं तावत् प्रदर्शयति– **स हीति** ।। रूढिमपि दर्शयति– **यमिन्द्रमाहुरिति** ।। दाढर्यार्थं श्रुत्यन्तरमप्युदाहरति– **इन्द्रमिति** ।। नन्विन्द्रमित्रमित्यत्रापि विष्णुः कुतः? तदितर एव कश्चित् प्रतिपाद्यः किन्नस्यादित्यत आह– **सप्तेति** ।। तत्र सूक्ते **आ ऋद्धो**ऽतिसमृद्धो ब्रह्माण्डाख्यो गर्भो येषां तेऽर्धगर्भाः ब्रह्माण्डावरणभूताः **भुवनस्य रेतो** रतिप्रदाः सारभूता वा महदङ्कारपञ्चभूताख्यसप्तदेवताः, भुवनस्य रेत इति विष्णोरपि विशेषणम् । प्रथमा षष्ठ्यर्थे, भुवनरतिप्रदस्य विष्णोः **प्रदिशा** आज्ञया **विधर्मणि** विविधविश्वधारणे तिष्ठन्तीति पूर्वमन्त्रे विष्णुरेव प्रस्तुतः, प्रकृतो **हि** यस्मात् तस्मादिन्द्रमित्यत्रापि स एवोच्यत नान्य इति गम्यत इत्यर्थः । किञ्च सर्वनामापि स एव किम्विन्द्रादिदेवनामेति भावेन श्रुतिमुदाहरति– **नामानीति** ।। **विश्वा** विश्वानि सर्वाणि नामानि **लोके** इन्द्रादिजगति मुख्यतो न सन्ति । **यत्** यतो**ऽनृतस्य** ऋतः पूर्वावगतवत्सदा स्थितो विष्णुस्तदितरस्य जगतः **सर्वं** नामप्रवृत्तिनिमित्तं **आविरासीत्** उत्पत्तिमत् । तर्हि कस्मिंस्तानि मुख्यतः सन्ति, सर्वाणि नामानि यं **आ** मुख्यतो वाचकत्वेन विशन्ति, **तं परमं** अपरिच्छिन्नप्रवृत्तिनिमित्तं विष्णुं वदन्ति विद्वांस इत्यर्थः । यथा सर्वनामत्वेन विष्णुरेवात्रोच्यत इत्युच्यते, तथाऽन्येषामपि सर्वनामत्वे तेषामेवेन्द्रादिशब्दवाच्यत्वं किन्न स्यादित्यत आह– **य इति** ।। यच्छब्देन विष्णुरिति कुतः? अस्य सूक्तस्य विश्वकर्मीयत्वादित्यतः पूर्वोक्तामेव युक्तिं व्यञ्जयन्नाह– **स चेति** ।। देवनामधारकश्चेत्यर्थः । उत्सर्गतो लिङ्गाच्छ्रुतेः प्राबल्येऽपि निरवकाशलिङ्गेन सावकाशविश्वकर्मश्रुतेर्बाधसम्भवादिति भावः ।।

### भगवत एव नारायणशब्दवाच्यत्वसमर्थनम्

#### भाष्यम्

**श्रियो वायोरपि न नारायणादिनामवत्त्वम् । 'एको वासुदेवस्तत्स-दृशपरौ न स्तः' इति श्रुतिः । 'एको नारायणस्तत्समो वाऽधिको वा नास्ति' इति च ।**

**'येनावृतं खं च दिवं च मही च येनादित्यस्तपति तेजसा भ्राजसा च । यमन्तः समुद्रे कवयो वयन्ति यदक्षरे परमे प्रजाः'[१०८] इत्युक्तस्य समुद्रशायिन एव नारायणस्य,**

**'तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनाम्'[१०९] इति परब्रह्मत्वावधारणाच्च विष्णोः परं सदृशं वा नास्त्येव । अतस्तदत्रो-च्यत इत्यपि न वक्तव्यम् ।**

#### भावप्रदीपः

ननु पूर्वं श्रीवाय्वोरपि सर्वशब्दवाच्यताया अभिहितत्वादेक एवे-त्यवधारणमनुपपन्नमित्यत आह– **श्रिय इति** ।। सत्यमेव श्रीवाय्वोः सर्वशब्दवाच्यत्वमभिहितम् । तथापि नावधारणविरोधः । तयोरपि नारायणादितत्रप्रसिद्धनामवत्त्वाभावादित्यर्थः । यथोक्तम् ऋग्भाष्ये–

'पूर्वप्रसिद्धवर्जं तु शक्रान्ता देवता मताः'[१०९अ] । इति ।

मास्तु तर्हि इन्द्रोऽत्र प्रतिपाद्यः, तस्य प्राणादिसर्वशब्दाभिधेयत्वा-भावात् । इन्द्रशब्दस्यापि तस्मिन् मुख्यतो वृत्त्यभावाच्च । मा च

---

१०८. महा.ना.उ १-३ १०९. महा.ना.उ १-७

१०९अ. ऋक्.भा. १-१-४७

रमावायू । तयोरपि नारायणादिसर्वनामवत्त्वाभावात् । अत्र चोपलक्षणयाऽशेषनाम्नां ग्रहणात् । तथापि नारायण एवेति कुतः? तदुत्तमस्य तत्सदृशस्य वाऽन्यस्य सत्त्वे तस्यैवात्र प्रतिपाद्यतासम्भवादित्यतो विष्णोरधिकसदृशाभावं तावच्छ्रुतियुक्तिभ्यां साधयति– **एक इति नास्तीति च ।** श्रुतिरिति वर्तते । कवीनां मते तदेव परमं ब्रह्मेति नारायणस्य परब्रह्मत्वावधारणाच्च तत्परसदृशाभावोऽवगम्यते । न हि ततः परस्य तत्सदृशस्य वाऽन्यस्य भावे तस्यैव परब्रह्मत्वं नान्यस्येत्यवधारयितुं शक्यते । न चात्र तदिति नारायणस्यैव परामर्शः कुत इति वाच्यम् । 'यमन्तः समुद्रे कवयो वयन्ति'[११०] इति समुद्रशायित्वोक्तेः । तस्य च नारायणलिङ्गत्वात् । न च समुद्रस्थत्वमादित्यस्यापि सम्भवति, 'असौ वाव गविष्ठोऽप्सूदेत्यप्स्वस्तमेति'[१११] इति श्रुतेरिति वाच्यम् । 'येनादित्यस्तपति'[११२] इति तत्पूर्ववाक्ये आदित्यस्य तदधीनत्वमुक्त्वा 'यमन्तः समुद्रे'[११३] इत्युक्तत्वेनादित्ये तदन्वयासम्भवादतो नारायणस्यैव परब्रह्मत्वान्न तत्परं तत्सदृशं वाऽन्यदस्तीति सिद्ध्यतीति भावः । अस्त्वेवं किं प्रकृत इत्यत आह– **अत इति ॥** विष्णोः परस्य तत्सदृशस्य वाऽन्यस्याभावादित्यर्थः । तत्परं सदृशं वा वस्तु । अत्र तमिन्द्र उवाचेत्यादाविन्द्रदिशब्दैरुच्यत इति न वक्तव्यम् । न केवलमिन्द्रादयो नोच्यन्त इत्येव वक्तव्यमित्यपेरर्थः ॥

---

११०. महा.ना.उ १-३

१११. भा.ता.उ.मा.श्रु. १-१०-३७

११२. महा.ना.उ १-३

११३. महा.ना.उ १-३

अन्येषां भगवत्समानत्वनिषेधः

भाष्यम्

परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति ।
न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप[११४] ।।
इत्यादेश्च ।

'नकिरिन्द्र त्वदुत्तरो न ज्यायान् अस्ति वृत्रहन् ।
नकिरेवा यथा त्वम्' इत्याद्यपि सर्वनामकत्वात् तस्यैव ।
'किमेकं दैवतं लोके किं वाप्येकं परायणम्'[११५] इत्यादिप्रश्नस्यापि,

[११६]परमं यो महत्तेजः परमं यो महत्तपः ।
परमं यो महद्ब्रह्म परमं यः परायणम् ।।

पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम् ।
दैवतं देवतानां च भूतानां योऽव्ययः पिता ।।

यतः सर्वाणि भूतानि भवन्त्यादियुगागमे ।
यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये ।।

तस्य लोकप्रधानस्य जगन्नाथस्य भूपते ।
विष्णोर्नामसहस्रम्....... । इत्येव भारते[११७] परिहाराच्च ।

भावप्रदीपः

ननु प्रागुदाहृतयोः श्रुत्योस्तत्सदृशपरौ न स्त इति लटा वर्तमान-

---

११४. ऋक्.सं ७-९९-१ ११५. महा.भा. अनु.प १४९-२

११६. महा.भा अनु.प १४९-९,१२ ११७. भारतेषु इति ह्.पाठः

मात्रनिषेधप्रतीतेः कालान्तरे तत्सद्भावः किन्न स्यादित्यतः श्रुत्यन्तरमुदाहरति– **परो मात्रयेति** ।। हे **विष्णो तन्वा** स्वमूर्त्यैव **वृधान** वर्धमान अपरिच्छिन्नः न कीर्तिमात्रेण त्वं **मात्रया** मात्रायाः मितेः परोऽसि । अतोऽपरिमितित्वात् **ते महित्वं** महिमानं केऽपि **नाश्नुवन्ति** न प्राप्नुवन्ति । हे विष्णो देव ते महिम्नः **परं अन्तं** परमं सीमानं जायमानो न प्राप्नोति । जातो नाप जनिष्यमाणो नाप्स्यतीत्यर्थः । मापयन्ति विषयानिति मात्रा इन्द्रियगणः, ततः परोऽसि इन्द्रियागोचरोऽसीति वाऽर्थः । नन्वेवं समाधिकाभावः इन्द्रस्यापि 'नकिरिन्द्र' इत्यादि श्रुतौ श्रूयते । हे इन्द्र **त्वत्** त्वत्त **उत्तरो** गुणैरुत्कृष्टो **नकिः** न कोऽप्यस्ति । हे वृत्रहन् त्वत्तो **ज्यायान्** वयसा ज्येष्ठोऽपि नास्ति । यथा त्वं एव एवं त्वत्समोऽपीति यावत् । **नकिर्न**कोऽपीति । अतः कथं विष्णुरेव समाधिकवर्जित इति निर्णयो युज्यत इत्यत आह– **नकिरिति** ।। इन्द्रादिसर्वनामकत्वात्तस्य विष्णोरेव समाधिकवर्जितत्वमभिधत्त[११८] इति शेषः । अयं भावः– न तावत् द्वयोरपि सर्वोत्तमत्वमङ्गीकारार्हम् । परस्परं सर्वान्तःपातित्वेन व्याहतत्वात् । नापीन्द्रस्यैकस्यैव । विष्णुसर्वोत्तमत्वश्रुतिविरोधात् । नच तत्र विष्णुशब्देनापीन्द्र एवाभिधत्त इति वाच्यम् । इन्द्रस्य विष्ण्वादिशब्दवाच्यत्वाभावात् । विष्णोस्तु 'नामानि सर्वाणि' इत्यादिश्रुतेः सर्वनामत्वादिन्द्रशब्दस्यापि तत्परत्वात्तस्यैकस्यैव सर्वोत्तमत्वाङ्गीकारे न कोऽपि विरोध इति ।

किञ्च सर्वशास्त्रोत्तमे भारतेऽपि विष्णोः सर्वोत्तमत्वस्य सतात्पर्यं प्रतिपादनान्नान्यस्यैतन्मन्तव्यमित्याशयेनाह– **किमेकमिति** ।। **तेजः**

११८. अभिधीयते इति 'ख'पाठः

तेजोरूपः । **तपो** ज्ञानरूपः । अतिशयेन परं **परमम्,** अतिशयार्थे मप्रत्ययः । तथाच ब्रह्मशब्दस्य क्वचिज्जीवेऽपि प्रयोगात् तद्व्या-वृत्त्यर्थम्- **परमिति** ।। मुक्तजीवव्यावृत्त्यर्थम्- **परममिति** ।। प्रकृति-व्यावृत्त्यर्थम्- **महदिति** ।। तथाच श्रुतिः–

'ब्रह्माणि जीवाः सर्वेऽपि परब्रह्माणि मुक्तिगाः ।
प्रकृतिः परमं ब्रह्म परमं महदच्युतः'[११९] ।। इति ।

भूपत इति युधिष्ठिरं प्रति भीष्मस्य सम्बोधनम् । नामसहस्रं म इत्यस्य 'शृणु पापभयापहम्' इत्युत्तरेणान्वयः । प्रकृतानुपयोगादत्रा-नुदाहरणम् । परिहाराच्च विष्णोरेव सर्वोत्तमत्वमवगम्यत इति शेषः । न च भारते क्वचिच्छिवोत्कर्षस्यापि प्रतिपादनात् कथमेतन्निर्णय इति वाच्यम् । पाशुपतादिदर्शनमवलम्ब्यासुरमोहनार्थमेव तस्य कथितत्वेन तत्र तात्पर्याभावात् । यथोक्तम्–

'शैवदर्शनमालम्ब्य क्वचिच्छैवी कथोदिता'[१२०] इति ।
'शैवान् पाशुपतान् चक्रे संशयार्थं सुरद्विषाम्'[१२१] इति च ।

अत एव यत्र शिवाद्युत्कर्ष उच्यते, तत्रासाधारण्येन शिवमाहात्म्यप्रश्ने सत्येव हि तद्वचनम् । अत्र तु न तथा । किन्तु 'किमेकं दैवतं लोके'[१२२] इत्यादिप्रश्नः साधारण एव । यद्यत्र शिवाद्युत्कर्ष एव तात्पर्यं स्यात्तर्हि तदुक्त्यापि परिहारः सङ्गच्छत एव ।

---

११९. गी.ता. २-१८ उदाहृतप्रमाणवचनम्, वि.त.नि उदाहृतप्रमाणवचनम् (प्रथमपरिच्छेदः)
१२०. म.भा.ता.नि २-१२० १२१. म.भा.ता.नि १०-८३
१२२. महा.भा. अनु.प १४९-२

अतः साधारणप्रश्नावसर एव विष्णोर्महोत्कर्षस्योक्तत्वादत्रैव महातात्पर्यम्, नान्यत्रेति सिद्ध्यति । तदिदं सूचितं **इत्यादि प्रश्नस्यापीत्यपिपदेन** । साधारण्येन प्रवृत्तस्यापीत्यर्थः । इत्येव भारते परिहाराच्चेत्येवकारेण च अनेकविशेषणदानेन विष्णोरेवोत्कर्षो यथा सिद्ध्येत्तथा परिहारादित्यर्थः । यथोक्तं गीताभाष्ये[१२३]- 'साधारणप्रश्नावसर एव महान्तमुत्कर्षं विष्णोर्वक्ति' इति ।।

### विष्णोर्दक्षिणामित्रत्वकथनम्

### भाष्यम्

**'मेऽन्नं दक्षिणं' इत्युक्तत्वाच्च विष्णुरेवेति ज्ञायते । स हि विष्णुर्दक्षिणामित्र उक्तो हरिवंशेषु धन्याश्चर्यपर्वणि[१२४]–**

**दक्षिणाभिः सहैवैतन्मदधस्ताज्जगत्सदा ।**
**धन्याश्चर्योऽहमेवैको मित्रं मे दक्षिणा रमा ।।**
**इत्यवादीद्धरिर्भूपा धन्योऽसीत्युदितो मया ।। इति नारदवचनम् ।**

**न च बृहतीसहस्राभिमानिनीं देवीं विना चेतनमात्रस्य मुख्यमित्रत्वं युज्यते ।**

**मिनोति त्रायते चेति मित्रमित्यभिधीयते ।**
**तस्माद्योऽयं विजानाति स मित्रं तस्य नान्यथा ।। इति भारते ।**

### भावप्रदीपः

'तस्य मेऽन्नं मित्रं दक्षिणं' इत्यनेनाप्याविष्टस्य विष्णुत्वं किञ्चित् ज्ञायत इति प्रागुक्तम् । तदुपपादयति– **मेऽन्नमिति** ।। **मे** मदीयस्य

---

१२३. २-२५ १२४. धन्याश्चर्याध्याये इति ह.पाठः

तस्य मित्रमिति प्राक् प्रदर्शितवैय्यधिकरण्यशङ्कानिरासाय तस्येत्यस्यानुवादः । एवं सति हि मेऽन्नं दक्षिणं मित्रमित्येवान्वयः प्रदर्शितो भवति । तस्येत्यस्य म इत्यनेन सामानाधिकरण्यं च सूच्यते । विष्णुरेव 'प्राणो वा अहं' इत्याद्युपदेष्टेति शेषः । तदुपपादयति– **स हीति** ।। तद्वाक्यं पठति– **दक्षिणाभिरिति** ।। **दक्षिणाभिः** दक्षभागस्थितेनत्वाद्दक्षिणाभिमानित्वाच्च दक्षिणाशब्दवाच्याभिः रमामूर्तिभिः सहैतज्जगत्त्रयं **मदधस्तात्** मत्तो नीचमेव । अतोऽहमेक एव 'धन्याश्चर्योऽद्भुतश्च । **दक्षिणा** मद्वामभागस्था रमा मे **मित्रं** भोगयोग्येति हरिरवादीत् । मया धन्य आश्चर्यश्चासीदित्युदितः सन्नित्यर्थः । भूपा इति रैवते मिलितानां राज्ञां सम्बोधनम् । मयेत्यस्मच्छब्दविषयप्रदर्शनायोक्तम्– **नारदवचनमिति** ।। दक्षिणाभिस्सहेति पृथगुक्तिस्तस्याः सर्वोत्तमत्वज्ञापनार्थम् । तदपि स्वस्य कैमुत्येन सर्वोत्तमत्वसूचनार्थं निरवधिकोत्तमत्वज्ञापनार्थं च । उक्तं चैतद्भारततात्पर्यनिर्णये[१२५]-

'सा दक्षिणा मानिनी देवता च सा च स्थिता बहुरूपा मदर्धा ।
वामार्धो मे तत्प्रविष्टो यतो हि ततोऽहं स्यामर्धनारायणाख्यः ।

तदाप्यस्या उत्तमोऽहं सुपूर्णो न मादृशः कश्चिदस्त्युत्तमो वा ।
इत्येवावादीद् दक्षिणाभिस्सहेति सर्वोत्तमत्वं दक्षिणानां स्मरन् सः' । इत्यादि ।

(किश्चात्रोच्यमानमन्नस्य कचिज्जीवेऽपि प्रयोगात्तद्व्यावृत्त्यर्थ– **परमिति** ।।)[१२६] मित्रत्वमेव तस्य विष्णुत्वमवगमयति । किमुत

---

१२५. म.भा.ता.नि २०-७४,७५

१२६. () एतच्चिह्नस्था पंक्तिः 'ख'पाठे नास्ति

दक्षिणत्वोपेतान्नमित्रत्वमित्यभिप्रेत्यान्नशब्दार्थतां तावद्रमातोऽन्यस्य निषेधति– **न चेति** ।। अत्र चेतनमात्रस्याचेतनमात्रस्येत्युभयथापि च्छेदो विवक्षितः ।

अयमर्थः । 'तद्वैश्वामित्रं' इत्युत्तरवाक्यात्तावदिदमन्नं बृहतीसहस्र-रूपमित्यवगम्यते । 'सहान्नमित्यभिव्याहृत्य' इति प्रागुक्तत्वाच्च । न चाचेतनमात्रस्य तस्य मुख्यमन्नत्वं युज्यते । तर्पकस्यैवान्नतार्हत्वात् । नच जडस्य चेतनाधिष्ठानं विना तर्पकत्वादिकं सम्भवति । अतस्तदभिमानिचेतनमेव ग्राह्यम् । नच यत्किञ्चिच्चेतनमात्रस्य तदभिमानित्वं सम्भवति । नापि विशिष्टचेतनस्य देवादेः । मुख्या-भिमानिताऽयोगात् । अतो मुख्याभिमानिनी देवी रमैव ग्राह्या । [१२७]'यस्याभिमानिन्यन्नस्य लक्ष्मीः सा देवतोत्तमा' इति प्रागु-क्तत्वाच्चेति ।

एवमन्नशब्दार्थताया अन्यत्रासम्भवमुपपाद्य मित्रत्वमप्यन्यत्र निषेद्धुं मित्रशब्दार्थं प्रमाणेन दर्शयति– **मिनोतीति** ।। जानातीत्यर्थः । **तस्मात्** मित्वा त्राणस्यैव मित्रशब्दप्रवृत्तिनिमित्तत्वात् **यः** पुरुषो यं विजानाति त्रायते चेत्यपि ग्राह्यम् । स एव तस्य मित्रं भवति, नान्यथेत्यर्थः । अत्र रमाया भगवत्त्राणं नामायोग्येष्वप्रकाशनरूपं गोपनमेव विवक्षितम् । तथाचैतादृशं मित्रत्वमपि नान्यत्रास्ति । मुख्यामुख्ययोर्मुख्यमित्रत्वस्यैव ग्राह्यत्वात् । अतोऽन्नमित्रत्वलिङ्ग-मपि प्रकृतस्य विष्णुत्वमवगमयतीति भावः ।।

---

१२७. ऐत.भा १९२ पुटम्

विष्णोरेव बृहतीसहस्रप्रतिपाद्यत्वसमर्थनम्

भाष्यम्

उक्थायुत्वाच्च विष्णुरेवात्रोक्त इत्यवगम्यते । बृहतीसहस्रं ह्युक्थनामकं मुख्यतः ।

महाव्रतनियुक्तं यदृक्सहस्रं हरेः प्रियम् ।
तदुक्थमिति सम्प्रोक्तं तेने यो विष्णुरेव हि ॥
तस्मादुक्थायुरित्युक्त ऐश्वर्यादिन्द्र उच्यते ।
तस्मादुक्थायुरिन्द्रेति विष्णुर्यज्ञेषु पूज्यते ॥ इति हि गारुडे ।

विष्णुर्ह्युक्थायुरिन्द्र इत्युच्यते यज्ञेष्वन्य इन्द्रः पृथक्चोच्यते । 'यमिन्द्रमाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमु सत्यमाहुः' इत्युक्त्वा 'तस्मै त्वा तेभ्यस्त्वा' इति भेदवचनाच्च । सत्य इति वायुः । 'सदिति प्राण'[१२८] इति श्रुतेः ।

सदेव सत्यमित्युक्तं सत्यो वायुरुदाहृतः ।
साधुत्वं सत्यता प्रोक्ता साधुर्वायुर्हि सर्वतः ॥ इति शब्दनिर्णये ।

भावप्रदीपः

युक्त्यन्तरेणात्र प्रतिपाद्यो विष्णुरेव नान्य इत्येतमर्थं साधयति– **उक्थायुत्वादिति** ॥ किमिदमुक्थमित्यत आह– **बृहतीसहस्रमिति** ॥ आश्विनादिसहस्रस्याप्युक्थत्वेन व्यवहारान्**मुख्यत** इत्युक्तम् । अस्त्विदमेव मुख्यमुक्थं ततः किं प्रकृत इत्यत आह– **महाव्रतेति** ॥ **ऋक्सहस्रं** बृहतीसहस्रं **तेने** यः प्रतिपाद्यः । तस्मादुक्थेयत्वादुक्थायुः । 'इण् गतौ' इति धातोरुण् । **इन्द्रेति** । **इन्द्र इति** । अयमर्थः ।

१२८. ऐत.उ २-१-५ (५३पुटम्)

नात्रेन्द्रशब्देन पुरन्दरो ग्राह्यः । अस्य बृहतीसहस्रप्रतिपाद्यतयो-क्थायुत्वावगमात् । पुरन्दरस्य च मुख्यतस्तदसम्भवात् । अत एव यज्ञेषु विष्णोरेवोक्थायुरिन्द्र इति स्तुतिविषयता प्रसिद्धेति । ननु यज्ञेषु प्रसिद्धेन्द्रस्यापि स्तूयमानत्वात् कथमयं निश्चय इत्यत आह– **विष्णुरिति** ।। **अन्य इन्द्रः** पुरन्दरस्तु केवलेन्द्रशब्देनोक्थाय्वि-न्द्रात्पृथक् चोच्यते । तेन ज्ञायते नायमुक्थायुरिन्द्र इति । यथा कामधेनुर्धेनुश्चेत्यादौ नेयं धेनुः कामधेनुरिति तथेत्यर्थः । किञ्च प्रसिद्धेन्द्रस्य 'तस्मै त्वा तेभ्यस्त्वा' इति श्रुताविन्द्रादेव भेदवचना-दिन्द्रद्वयं प्रतीयते । स चेन्द्रो विष्णुरेव । 'यमिन्द्रमाहु'रिति पूर्व-वाक्ये तस्येन्द्रवरुणादिसर्वदेवनामवत्त्वाभिधानात् । नहि पुरन्दरस्य सर्वदेवनामत्वं सम्भवति । अतः प्राणादिसर्वनामाऽयमिन्द्रो विष्णुरेव नान्य इत्याशयेनाह– **यमिन्द्रमिति** ।। इत्युक्त्वोत्तरार्धे 'यो देवानां देवतमस्तपोजास्तस्मै त्वा तेभ्यस्त्वा' इति भेदवचनाच्चेत्यर्थः । हे इन्द्र **यं** विष्णुमिन्द्रादिशब्दवाच्यमाहुर्विद्वांसः । यश्च देवानां देवतमः तपसा प्रसन्नः सन् **जायते**ऽभिव्यज्यत इति तपोजः स चासौ अश्चेति तपोजा**स्तस्मै** तदर्थं तदुपासनार्थमेव जातं **त्वा** त्वां विद्म इति शेषः । तथा **तेभ्यो** देवेभ्यो भवदवरवरुणादिभ्यस्तत्पालनार्थं भग-वत्प्रसादात् **त्वा** त्वां क्लृप्तं विद्म इति श्रुत्यर्थः । ननु प्रसिद्धेन्द्रस्यापि वरुणादिशब्दवाच्यत्वं सम्भवत्येव । 'पूर्वप्रसिद्धवर्जं तु शक्रान्ता देवता मताः'[१२९] इत्युक्तेः । अतो नेयं श्रुतिर्विष्णुपरैवेति निश्चयो युज्यत इति चेन्न । वरुणादिशब्दानां कथञ्चित्सम्भवेऽपि प्रसिद्धेऽन्द्रे सत्यशब्दायोगात् । तत्कुत इत्यत आह– **सत्य इति** ।। **वायुरिति**।।

---

१२९. ऋक्.भा १-१-४७

उच्यत इति शेषः । वरुणमित्रयोरिन्द्रावरत्वेन तच्छब्दवाच्यत्व-सम्भवेऽपि वायोरुत्तमत्वेन तद्वाचकसत्यशब्दस्य तस्मिन्नयोगात् । पूर्वप्रसिद्धवर्जमिति वचनादेवेति भावः । सत्यशब्दस्य वायुवाचित्वे प्रमाणं त्वनुपदमेव वक्ष्यते । प्रमाणान्तरमपि ज्ञापकमाह– **सदितीति**।। सच्छब्दवाच्यत्वेऽपि सत्यशब्दवाच्यत्वं वायोः कुत इत्यतस्तयोः पर्यायत्वादिति भावेन प्रमाणमुदाहरति– **सदेवेति** ।। **साधुत्वं** निर्दोषत्वम् । सत्यतामुद्दिश्य साधुत्वं विधीयते । अतः प्रोक्तेति युज्यते । यथाकथञ्चित् साधुत्वस्येन्द्रेऽपि सत्वात् सोऽपि सत्यनामा किन्न स्यादित्याशङ्कानिरासायोक्तम्– **सर्वतः साधुरिति** ।। मुख्या-मुख्ययोर्मुख्यस्यैव ग्राह्यत्वादिति भावः ।।

### बृहतीसहस्रपठनफलनिरूपणम्

### भाष्यम्

**प्रियधाम्न उप समीपे गमनं नाम तद्धामप्राप्तिकारण-भगवत्प्रसादप्राप्तिः । अन्यथोपशब्दो व्यर्थः स्यात् । न च तदैव भगवतः प्रियं धाम विश्वामित्रेण प्राप्तम् ।**

**बृहतीसहस्रे प्रथमे सालोक्यं प्रददौ हरिः ।**
**द्वितीये स्वपुरप्राप्तिं तृतीयेऽन्तःपुरस्य च ।**
**तथा स्वविषयं ज्ञानं विश्वामित्रे ददौ प्रभुः ।। इति च गारुडे ।**

### भावप्रदीपः

'तेनेन्द्रस्य प्रियं धामोपेयाय' इति विश्वामित्रस्य बृहतीसहस्र-शंसनेन तदानीमेव भगवद्धामप्राप्तिर्जातेत्युच्यते । न चैतद्युज्यते । इदानीमपि तस्या अजातत्वादित्यतस्तत्र विवक्षितमर्थमाह– **प्रिय-**

**धाम्न इति** ।। तत्कुत इत्यत आह– **अन्यथेति** ।। उपशब्दो हि समीपवचनः । न च भगवद्धामसमीपगमनमपि तस्य तदानीमस्ति । अत उपशब्देनाविलम्बेन धामप्राप्तिकारणभगवत्प्रसाद एव ग्राह्यः । अन्यथेयायेत्येतावतैव पूर्ताबुपशब्दो व्यर्थ एवापद्येतेत्यर्थः । ननूपसर्गा हि धातुलीनस्यार्थस्य व्यञ्जका भवन्ति । अतो गमनमेवो-पगमनं किन्न स्यात्, किमौपचारिकार्थकल्पनयेति तत्राह– **न चेति**।।

अस्त्वेवं तत्कारणप्रसादप्राप्तिरेवोपगमनशब्दार्थः । तथापि शंसन-त्रयेऽपि तदेव पुनःपुनः फलरूपं कथं स्यात् । प्राप्तस्य पुनः प्राप्त्ययोगात् फलताऽयोगाच्चेत्याशङ्क्य फलभेदात्तत्कारणप्रसादेऽपि भेदो युज्यत इति भावेन फलभेदं प्रमाणेनैव दर्शयति– **बृहतीति** ।। प्रथम इत्यादितच्छंसनोपलक्षणमेतत् । **प्रददौ** क्लृप्तमकरोत् । एतेन 'तेनेन्द्रस्य प्रियं धामोपेयाय' इति वाक्यतात्पर्यं प्रदर्शितं भवति । तथा च स्वविषयं ज्ञानमित्यनेन च 'वरं ते ददामि' इत्यादि-वाक्यतात्पर्यम् ।।

**इन्द्रेण स्वात्मोपदेशो न कृतः**

**भाष्यम्**

**न चेन्द्रादिभिरैक्यमत्रोच्यते । 'प्राणस्तथाऽनुगमात्'[१३०] इति च विष्णोरेव प्राणशब्दाभिधेयत्वमुक्त्वा 'न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन्'[१३१] इति च वक्तुः बृहतीसहस्रं शंसितुर्विश्वामित्रस्येन्द्रेण स्वात्मोपदेशः क्रियत इति पक्षो निराकृतो**

१३०. ब्र.सू. १-१-२८ १३१. ब्र.सू. १-१-२९

**हि भगवता सूत्रेषु । अध्यात्मसम्बन्धशब्देनावेशो विष्णोरिन्द्रे विवक्षितो भगवता । अन्येष्वन्तर्यामिरूपेण सम्बन्धोऽस्त्येव । अस्मिन्निन्द्रे तु विशेषावेशस्तात्कालिकः । अधिकात्मनः परमात्मनः सम्बन्धोऽध्यात्मसम्बन्धः । न हि स्वात्मना स्वस्य सम्बन्धो भवति । यद्यध्यात्ममात्रमत्रोच्यत इति विवक्षितं तर्ह्यध्यात्मभूमेत्येव स्यात् सम्बन्धशब्दो व्यर्थः । तस्मादिन्द्रादिजीवेभ्यो विष्णोर्भेद एवात्र भगवतो विवक्षितः ।।**

### भावप्रदीपः

एवं स्वमतेन 'प्राणो वा' इत्यादिकं व्याख्याय तत्परिशुद्धये परेषामपव्याख्यां प्रत्याख्याति– **न चेति** ।। 'इन्द्रविश्वामित्र-सर्वभूतसूर्यैः' अत्र वाक्ये ऐक्यं नोच्यते । प्राणशब्दवाच्यपरमात्मन इति शेषः । कथमिदं विज्ञायत इत्यत आह– **प्राण इति** ।। चशब्दो यस्मादित्यर्थे । तत्तु इत्यस्याध्यायमनुवृत्तेर्विष्णोरेवेत्युक्तम् ।

अयमर्थः । 'ता वा एताः' इत्यादौ श्रूयमाणः प्राणो विष्णुरेव । 'तं देवाः प्राणयन्त'[१३२] इत्यादिदेवतोपास्यत्वादिविष्णुलिङ्गानां तस्मिन् प्राणेऽ**नुगमात्** 'एतद् ब्रह्म'[१३३] इत्यादिब्रह्मशब्दानुगमाच्चेति । विष्णोरेव प्राणशब्दाभिधेयत्वं प्रसाध्य, नन्विदमयुक्तम्, 'प्राणो वा अहमस्म्यृषे'[१३४] इति **वक्तु**र्बृहतीसहस्रशंसितुर्विश्वामित्रस्येन्द्रेण प्राणतयात्मोपदेशादिति द्वितीयसूत्र आक्षिप्य, स पक्षो भगवता

१३२. ऐत.उ २-१-५ (४५-पुटम्)

१३३. ऐत.उ २-१-१ (१-पुटम्)

१३४. ऐत.उ २-२-३ (१८३-पुटम्)

बादरायणेन निराकृतो यस्मात् तस्मान्नैक्यमत्रोच्यत इति पूर्वेण सम्बन्धः । सूत्रेष्विति निर्धारणे सप्तमी, अतो बहुवचनोपपत्तिः । गीतास्वित्यादिवत् । कथं निराकृत इत्यतः सिद्धान्तांशतात्पर्यमाह– **अध्यात्मेति** ।। तत्कुत इत्यतः सम्बन्धमात्रस्य साधारण्येन विशिष्य निर्देशे निमित्तताऽयोगादावेशरूप एव सम्बन्धो विवक्षित इति भावेनाह– **अन्येष्विति** ।। अन्येष्वपीत्यर्थः । तर्हि तावन्मात्रेणैवालम् । भूमशब्दो व्यर्थ इत्यत आह– **अस्मिन्निति** ।। यद्यपीन्द्रेऽन्तर्यामिरूपेण भगवत्सम्बन्धातिरिक्तोऽन्योऽप्यावेशरूपः सम्बन्धोऽस्ति । यथोक्तं भागवततात्पर्ये[१३५]–

'आविष्टा हरिणा जीवा ब्रह्मा दक्षो मनुः पृथुः ।
शक्राद्या ऋषयश्चैव मत्स्या व्यासादयो हरिः ।।' इति ।

तथापि नासावत्र विवक्षितः । तस्यापीन्द्रेऽसार्वत्रिकत्वेनासाधारण्याभावात् । किन्तु तात्कालिको विशेषावेश एवेत्यर्थः । नन्वावेशः सम्बन्धशब्दार्थस्तथापि स आवेशो विष्ण्वीय इति कुतः? तद्बोधकपदाभावादित्यत आह– **अधिकेति** ।। अस्त्वेवं किं तावता प्रकृत इत्यतः सिद्धो विष्णोरिन्द्राद्भेदः । अन्यथा स्वस्य स्वेनैव सम्बन्ध इत्यापत्तेरित्याह– **न हीति** ।। नन्वत्राध्यात्मसम्बन्धभूमेत्यनेन परमात्मनो विशेषावेश एवेन्द्रे भगवता विवक्षित इति न निश्चेतुं शक्यते । अध्यात्मशब्देनान्तर्यामिमात्रोक्तेरपि सम्भवात् । तथाचाध्यात्मरूपाणामिन्द्रविश्वामित्रादिबहुस्थलसम्बन्धोऽत्र प्रतिपाद्यत इति सूत्रार्थः सम्भवत्येवेत्याशङ्क्य, मैवम्, तथा सत्यध्यात्म-

---

१३५. ४-९-७

भूमेत्येवालम् । अन्तर्यामिरूपाणां **भूमा** बाहुल्यं बहुस्थलसम्बन्ध इत्यर्थलाभात् । सम्बन्धशब्दो व्यर्थ एव स्यात् । अतो विशेशावेश एवात्र भगवतो विवक्षित इति भावेनाह– **यदीति** ।। उपसंहरति– **तस्मादिति** ।। **भगवतो** बादरायणस्य ।।

### अन्तर्यामिविवक्षया अभेदव्यवहारः

### भाष्यम्

‘शास्त्रदृष्ट्या तूपदेशो वामदेववत्’[१३६] इति शास्तुरन्तर्यामिणो विष्णोः सर्वशरीरस्थितत्वात् सर्वनामाभिधेयत्वं चोक्तम् । ‘अहं मनुरभवं सूर्यश्च’ इत्यादिवत् । न हि मनुसूर्यादिर्भवति वामदेवस्तेषां पक्षेऽपि । सर्वप्रवृत्तिहीनतां हि ते मोक्षं वदन्ति । अत्र च ‘अहं भूमिमददामार्याय’ इत्यादिना प्रवृत्तिरेवोच्यते । न च वामदेवेन मन्वादिकर्म क्रियते कदापि ।

अतीतार्थश्चायं दृश्यते भूमिमददामित्यादिना । न हि पूर्वं वामदेवेन तानि कर्माणि कृतानि । भगवान् विष्णुर्हीन्द्राय भूमिमददात् । स एव च सर्वेष्वन्तर्यामित्वेन स्थित्वा नामप्रवृत्तिनिमित्तानि सर्वकर्माणि कुर्वन्नवबोधसूरिनियमनादिभिर्मनुसूर्यादिसर्वनामा भवति । यदि भेदस्य पूर्वमेव मिथ्यात्वमङ्गीक्रियते तर्हि भूमिदानादिसर्वकर्मणां मन्वादित्वस्यापि मिथ्यात्वात् ‘अहं मनुरभवं’ इत्यादि सर्वमनर्थकमेव भवति ।।

---

१३६. ब्र.सू. १-१-३०

## भावप्रदीपः

नन्वत्र यदि [१३७]प्राणशब्देनेन्द्रेणापि विष्णुरेव स्वात्मादिसर्वगततयोच्यते, तर्हि मयि प्राण इत्यादिप्रयोगः स्यात् । विष्णावहमित्यादिरूपोपदेशायोगादिति चेत् । एषाऽप्याशङ्का सूत्रकृतैव परिहृतेति भावेन तत्सूत्रमनूद्य तदभिप्रायमाह– **शास्त्रेति** ।। शास्ता चासावश्चेति शास्त्र इति विग्रहमभिप्रेत्य शास्तुरन्तर्यामिणो विष्णोरित्युक्तम् । [१३८]'अः इति ब्रह्म' इति श्रुतेः । 'स विष्णुराह हि'[१३९] 'तं ब्रह्मेत्याचक्षते'[१४०] इति देवमीमांसासूत्रतश्चाशब्दो विष्णुवाचीति भावः । 'शास्त्रदृष्ट्या' इत्यस्य तात्पर्यं– **सर्वशरीरे स्थितत्वादिति** । उपदेश इत्यस्यार्थः **सर्वनामाभिधेयत्वमुक्तमिति** ।। तथा चैतत्प्राणस्य विष्णुत्वेऽपि 'प्राणोऽहम्, प्राणस्त्वम्, प्राणः सर्वाणि भूतानि' इत्याद्युपदेशो युज्यते । यतोऽयमुपदेशः शास्त्रदृष्ट्या अन्तर्यामिविष्ण्वपेक्षया । ततश्च तस्य सर्वनामाभिधेयत्वमेवानेनोक्तं भवति । अन्तर्यामिणः सर्वशरीरे स्थितत्वादिति सूत्रखण्डस्यार्थ उक्तो भवति । नन्वन्तर्यामिण्यहमादिप्रयोगादर्शनात्तदयोग इत्यतः प्रवृत्तस्य वामदेववदिति सूत्रांशस्यार्थमाह– **अहं मनुरिति** ।। आदिपदेन [१४१]'अहं कक्षीवा ऋषिरस्मिविप्रः । अहं कुत्समार्जुनेयं न्यृञ्जेऽहं कविरुशना पश्यतां' इत्यादिसङ्ग्रहः । तथाच यथाऽन्तर्यामिविवक्षया वामदेवोऽहं मन्वादिशब्दान् प्रयुयुजे तथाऽयमुपदेशो युक्त इति भावः । वामदेववचनमप्यभेदविवक्षयैव किन्न स्यात्कुतोऽन्तर्यामिविवक्षयेति

---

१३७. प्राणपदेन इति 'ख'पाठः १३८. ऐत.उ २-३-८

१३९. देव.मी.सूत्रम् १४०. देव.मी.सूत्रम्

१४१. ऋक्.सं. ४.२६.१

निश्चीयत इति तत्राह– **न हीति** ।। ननु चैतन्यैक्यपक्षे वामदेवस्य मनुसूर्यादिभावो नानुपपन्न इत्यत उक्तम्– **तेषां पक्षेऽपीति** ।। चैतन्यैक्यवादिनां पक्षेऽपि वामदेवादीनां विशिष्टरूपत्वेन विशिष्टानामैक्यस्यानङ्गीकारादिति भावः । मुक्तौ चैतन्यैक्यमात्रविवक्षयेयमुक्तिर्न तु विशिष्टैक्यापेक्षयेत्यतो दूषणसौकर्याय तदभिमतं मौक्षस्वरूपं तावदनुवदति– **सर्वेति** ।। 'निष्कलं निष्क्रियं परम्'[१४५] इति श्रुतेर्निष्क्रियब्रह्मभावावस्थानमेव मोक्ष इति तेषां मतमिति भावः । अस्त्वेवं मोक्षस्वरूपं तदभिमतं किं तत इत्यत आह– **अत्र चेति** ।। वामदेवदृष्टसूक्त इत्यर्थः । **आर्याय** ज्येष्ठभ्रात्रे शक्रायाहं **भूमिं** भूम्युपलक्षितत्रैलोक्यं बलिनाऽपहृतं प्रत्याहृत्याददामित्यादिभूमिदानादिप्रवृत्तिरेव श्रूयते । अतो न वामदेवस्य मुक्त्यवस्थायामपि चैतन्यैक्याभिप्रायेण 'अहं मनुरभवम्' इत्याद्युक्तिर्युज्यते । तथा सति भूमिदानादेरपि तदाऽङ्गीकार्यताप्रसङ्गात् । ततश्च मोक्षत्वव्याघातापातादिति भावः । मास्तु तर्हीदं मुक्तवामदेववाक्यम् । किन्त्वमुक्तस्यैवेदमिति ब्रूमः । नच विशिष्टैक्यानुपपत्तिः । मन्वादिभिरैक्याभावेऽपि तत्तत्कर्मकरणात् तत्तत्त्वेनौपचारिकव्यवहारताङ्गीकारादित्यत आह– **न चेति** ।। येनेदमौपचारिकमपि युज्येतेति भावः ।।

इतोऽपि नेदं वामदेवस्य युज्यत इत्याशयेनाह– **अतीतार्थश्चेति** ।। अयं व्यपदेशः अस्तु, किं तत इति तत्राह– **न हीति** ।। तथाच कथमपि वामदेवोक्तेः स्वात्मपरतानुपपत्त्या स्वान्तर्यामिभगवत्परत्व एव स्वीकर्तव्ये तद्दृष्टान्तीकरणमत्रोपपन्नमेवेति भावः । नन्वस्यान्तर्यामिपरत्वाङ्गीकारेऽपि कथं घटनेत्यत आह– **भगवानिति** ।। अददात् वामनावतार इति शेषः । अत एवार्यायेतीन्द्रस्यार्यत्वोक्तिः ।

---

१४५. ब्र.सू.भा १-४-१ इत्यत्रोदाहृता पिप्पलादश्रुतिः

नन्वेवं भूमिदानस्य भगवति योजनेऽपि 'अहं मनुरभवं सूर्यश्च' इत्यादिमनुसूर्यादिभावः कथमन्तर्यामिणि युज्यत इत्यत आह– **स एव चेति** ।। नात्र मनुसूर्यादिजीवभाव उच्यते । किन्तु तत्तच्छब्द-वाच्यत्वमेव । न च तद्भिन्ने तच्छब्दानां प्रवृत्त्ययोगः । योगेन प्रवृत्ति-सम्भवात् । न च योगानुपपत्तिः । सर्वेष्वन्तर्यामित्वेन तत्तन्नाम-प्रवृत्तिनिमित्तानां सर्वकर्मणां करणात् । प्रकृते च मनुशब्दप्रवृत्ति-निमित्तस्यावबोधस्य, सूर्यशब्दप्रवृत्तिनिमित्तस्य सूरिनियमनस्य, आदिशब्देन कक्षीवदादिशब्दप्रवृत्तिनिमित्तस्य वनस्थोपास्यत्ववन-मालावत्त्वादेश्च भगवति सत्वान्मनुसूर्यकक्षीवदादिसर्वनामवत्त्वं तस्यो-पपद्यत एवेति भावः । नन्वेवं वामदेवोक्तेरन्तर्यामिपरतामङ्गीकृत्य तस्यैवोक्तरीत्या मनुसूर्यादिभावो न वामदेवस्येति कल्पनं व्यर्थमेव । अन्तर्यामिणा वामदेवस्याभेदेनान्तर्यामिणो मनुसूर्यादिभावो वामदेवस्य तद्भावावर्जनीयत्वात् । नच तयोरभेद एव नास्ति । जीवब्रह्मणो-र्भेदस्यैवानुभूयमानत्वादिति वाच्यम् । 'ब्रह्म वेद ब्रह्मैव भवति'[१४६] इति मोक्षे जीवब्रह्मणोरभेदस्य श्रवणेन तद्विरुद्धभेदस्य मिथ्यात्वात् । न च पूर्वं संसारे सत्यतयाऽनुभूयमानस्य भेदस्य कथं मोक्षे मिथ्या-त्वमिति वाच्यम् । पूर्वमपि तस्य मिथ्यात्वात् । अनुभवस्तु श्रुति-विरोधात् भ्रान्त एवेत्यत आह– **यदीति** ।। **सर्वं** वाक्यं । **भवति** आपद्यते । न चास्यानर्थक्यं शक्यमङ्गीकर्तुम् । तथा सति मोक्षे जीवब्रह्माभेदश्रुतेरप्यानर्थक्यमङ्गीकार्यं स्यादविशेषात् । अतो न भेदस्य पूर्वमपि मिथ्यात्वं वाच्यम् । श्रुतिगतिस्तु प्रकरान्तरेणान्यत्र प्रदर्शितेति भावः ।।

---

१४६. आथ.उ ४-९१

## पञ्चभेदनिरूपणम्

### भाष्यम्

**जीवेश्वरभिदा चैव जीवभेदः परस्परम् ।**
**जडेश्वरभिदा चैव जडभेदस्तथैव च ।।**

**जडजीवभिदा चैव सत्योऽयं भेदपञ्चकः ।**
**न कदाचिन्निवर्त्योऽयं मुक्तौ संसार एव च[१४७] ।**

**य एतदन्यथा ब्रूयुस्ते हि यान्त्यधरं तमः ।। इति भविष्यत्पर्वणि।**

### भावप्रदीपः

न केवलं विपक्षे बाधकसद्भावाज्जीवेश्वरादिभेदस्य सत्यत्वमपि तु साधकप्रमाणाभावाच्चेति भावेन तत्र प्रमाणमाह– **जीवेश्वरेति** ।। अत्र जडशब्देन नित्यजडमेव ग्राह्यम् । अनित्यजडधर्मिकभेदस्यानित्यत्वात् ।।

नन्वत्र कथं भेदानां पञ्चत्वम् । प्रातिस्विकभेदग्रहणे भेदानामनन्तत्वात् । धर्मितावच्छेदकमुखेन क्रोडीकरणेऽपि जीवेश्वरजडानां धर्मिणां त्रित्वेन तद्भेदानां त्रित्व एव पर्यवसानादिति चेत्, सत्यम् । तथापि विभाजकोपाधीनां पञ्चत्वविवक्षया भेदानां पञ्चत्वोपपत्तिः । तथा हि– परस्परप्रतियोग्यनुयोगिभावापन्नजीवेश्वरको भेद एकः । तादृशजीवको द्वितीयः । तादृशजडेश्वरकस्तृतीयः । तादृशजडकश्चतुर्थः । तादृशजडजीवकः पञ्चम इति । नच परस्परं जीवभेदे जडभेदे च धर्मितावच्छेदकत्वं प्रतियोगितावच्छेदकत्वं चैकस्यैव कथमिति वाच्यम् । जीवत्वानां जडत्वानां च सादृश्येनैकजाती-

१४७. वा इति ह.पाठः

यत्वेऽपि साक्षादैक्यानङ्गीकारेणाविरोधात् । न ह्येकमेव जीवत्वं जडत्वं वाऽनुगतम् । 'भिन्नाश्च भिन्नधर्माश्च पदार्था निखिला अपि'[१४८] इति श्रुतेः । किन्तु प्रतिव्यक्तिभिन्नमेव । तत्र यदा जीवाज्जीवान्तरस्य जडाज्जडान्तरस्य वा भेद उपगम्यते, तदा प्रतियोगिगतं जीवत्वादिकं प्रतियोगितावच्छेदकं । धर्मिगतं धर्मितावच्छेदकं भवतीति को विरोध इत्यलम् ।।

## ऐक्यज्ञानिनोऽनर्थनिरूपणम्

### भाष्यम्

**'असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्'[१४९] ।**
**'ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी'[१५०] ।**
**'एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः'[१५१] ।**
**'आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।**
**मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्'[१५२] ।। इत्यादि च।**

### भावप्रदीपः

ननु विमतं मिथ्या दृश्यत्वात्, जडत्वात्, परिच्छिन्नत्वात्, शुक्तिरजतवत् । विमता आत्मनस्तत्त्वतो न भिद्यन्ते, आत्मत्वात् परमात्मवत्, इत्याद्यनुमानैर्जडमिथ्यात्वस्य चैतन्यैक्यस्य च प्रमितत्वात्कथं तद्भेदस्य सत्यत्वं कथञ्च तदनङ्गीकारिणामधरतमःप्राप्तिः इति भविष्यत्पर्ववचने विप्रतिपद्यन्तं सुप्रसिद्धगीतावचनेन बोधयति–

१४८. अनु. २-२-१२४ १४९. भ.गी. १६-८
१५०. भ.गी. १६-१४ १५१. भ.गी. १६-९
१५२. भ.गी. १६-२०

**असत्यमित्यादिना** ।। अत्राद्यवाक्येन जगन्मिथ्यात्वानुवादः, द्वितीयेन जीवेश्वराभेदानुवादः । तत्राद्यवाक्यशेषः– **एतां दृष्टिमिति** ।। तेन जगन्मिथ्यात्वनिन्दाऽवगम्यते । द्वितीयवाक्यस्य तु 'पतन्ति नरकेऽशुचौ' इत्यन्तं शेषवाक्यमप्यत्रोदाहर्तव्यम् । तेन जीवेश्वरैक्यनिन्दावगमः । इत्यादीत्यादिपदादासुरीं योनिमिति वाक्यस्यापि 'मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः'[153] इति प्रथमवाक्यं ग्राह्यम् । तेन जीवातिरिक्तेश्वरप्रद्वेषस्य तदभावपर्यवसानात्तेषां चाधमगतिप्राप्तिकथनेन तन्मतनिन्दाऽवगम्यते । तस्माच्चेतनाचेतनभेदस्य सत्यत्ववचनमविप्रतिपन्नमेवेति भावः ।।

### भगवतः प्रपञ्चजीवस्वरूपत्वाभावसमर्थनम्

### भाष्यम्

**न च 'प्राणो वा अहमस्मृषे'[154] इत्यादावहमस्म्यादिशब्दोऽस्मच्छब्दार्थस्थः[155] । [156]'एष तपन्नेवास्मी'त्युपरितनस्य वैय्यर्थ्यात् । [157]'प्राणो ह्येष य एष तपती'त्युक्तत्वात् । अतोऽहमस्मीत्यादि च भगवन्नामैव ।**

**न च जीवैक्यवचनमत्र प्रस्तुतम् । [158]'ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एव' इति सर्वनामाभिधेयत्वं भगवत उक्त्वा तत्रैव प्रमाणत्वेन [159]'विश्वामित्रं ह्येतदहः'**

---

१५३. भ.गी. १६-१८ १५४. ऐत.उ. २-२-३ (१८३-पुटम्)
१५५. शब्दस्थः इति ह.पाठः १५६. ऐत.उ २-२-३ (१८३-पुटम्)
१५७. ऐत.उ २-२-३ (१८३-पुटम्),१५८. ऐत.उ २-२-२ (१६२-पुटम्
१५९. ऐत.उ २-२-३ (१८२-पुटम्)

**इत्याद्याख्ययिकोक्ता । तस्मात् सर्वान्तर्यामित्वात् सर्वगुणत्वात्[१६०] सर्वशक्तित्वाच्च सर्वनामवत्त्वमेव विष्णोरुच्यते न तु सर्वस्वरूपत्वम् ।**

**भावप्रदीपः**

'अहेयत्वादहंनामास्म्यसनान्मनुतेरपि'[१६१] इत्यादिनाऽहमस्म्यादिशब्दानामपि भगवन्नामत्वमुक्तम् । तदयुक्तम्, अहमादिशब्दानामस्मच्छब्दार्थस्थत्वेऽप्यन्तर्यामिपरत्वस्य निर्बाधात् । सम्भवत्यक्लेशेन वाक्ययोजने प्रतीतार्थपरित्यागायोगादित्यत आह– **न चेति** ।। **अस्मच्छब्दार्थस्थः** अस्मच्छब्दस्य योऽर्थस्तदर्थकः । कुत एतदित्यत आह– **एतदिति**[१६२] ।। एवं तर्हि त्वामेव जानीयामिति प्रश्नस्य 'प्राणो वा अहमस्म्यृषे' इत्यनेनैव परिहृतत्वात् 'एष तपन्नेवास्मि' इत्युपरितनस्यान्तिमवाक्यस्य वैय्यर्थ्यं स्यादित्यर्थः । उपलक्षणमेतत् । 'प्राणस्त्वं प्राणः सर्वाणि भूतानि'[१६३] इत्यस्यासङ्गतत्वापत्तेश्चेति द्रष्टव्यम् । ननु नाहमस्म्यादिशब्दानामस्मच्छब्दार्थस्थत्वेऽपि 'एष तपन्नेवास्मि' इत्यस्य वैय्यर्थ्यम् । 'प्राणो वा अहमस्मि' इत्यनेनेन्द्राविष्टस्य विष्णुत्वे सिद्धे तस्य सूर्यान्तर्यामित्वज्ञापनार्थमस्य प्रवृत्तत्वादित्यत आह– **प्राण इति** ।। एतेन वाक्येन 'तपन्नहं प्राणोऽस्मि' इति सूर्यान्तर्यामित्वस्य कथितत्वात्पुनः 'एष तपन्नेवास्मी'ति वाक्यवैय्यर्थ्यं दुर्वारमिति भावः । भगवन्नामत्वपक्षे तु नायं दोष इति भावेनोपसंहरति– **अत इति** ।। आदिपदेन 'त्वं सर्वाणि भूतानि' 'एषः' इत्येतेषां तपननाम्नश्च ग्रहणम् । न केवलं

---

१६०. सर्वगुणवत्त्वात् इति ह.पाठः

१६१. ऐत.भा. २-२-३ (१९०-पुटम्)

१६२. एष इति इति 'ख'पाठः १६३. ऐत.उ २-२-३ (१८३-पुटम्)

प्राणनामैवेति चशब्दार्थः । तथाच 'प्राणो ह्येष य एष तपति' इति विष्णोस्तपनशब्दवाच्यत्वज्ञापनार्थम् । 'एष तपन्नेवास्मि' इति तु शक्राविष्टस्य विष्णुत्वज्ञापनार्थमिति न पौनरुक्त्यमिति भावः । यद्यप्येषा युक्तिः प्रागुक्ता, तथापि तत्र विशेषज्ञानमात्रप्रार्थनविवक्षायां बाधकतयोक्ता । इदानीं तु अहमस्म्यादिशब्दानामस्मच्छब्दार्थस्थत्वे बाधकत्वेनेति भेदः । यथोक्तम् 'मानमेयविशेषेण पुनरुक्तिर्न जायते'[१६४] इति ।।

नन्वहमस्म्यादिशब्दानामुक्तरीत्याऽस्मच्छब्दार्थस्थत्वाभावे सूत्रतद्भाष्यतत्त्वप्रकाशिकाचन्द्रिकादिकं सर्वं विरुद्धमापद्येत । तत्र 'प्राणो वा अहमस्मि' इत्यादेरिन्द्राविष्टः कोऽयमिति प्रथमप्रश्नपरिहारत्वावगमात् । न ह्यहमस्म्यादिशब्दानामस्मच्छब्दार्थत्वाभावे तत्प्रश्नपरिहारस्सम्भवति । अहमिन्द्राविष्टः प्राणो विष्णुरस्मीत्युक्तिं विनेन्द्राविष्टस्य विष्णुत्वबोधानुदयादिति । सत्यम्, इत्थं हि मन्यते भगवानाचार्यः । न सर्वथैवेदं प्रकरणं जीवैक्यपरम् । किन्त्विन्द्रान्तर्यामिविष्णुपरमेव । तत्र च द्वयी गतिः । अहमस्म्यादिशब्दानां भगवन्नामत्वमङ्गीकृत्य विशेषज्ञानसिद्ध्यर्थं तदुक्तिरित्येका । अन्तर्यामिण्यहमादिशब्दप्रयोगस्याहं मनुरभवमित्यादौ दर्शनात्तेषामस्मच्छब्दार्थत्वेऽपि बाधकाभावादिन्द्राविष्टस्य विष्णुत्वज्ञापनार्थं तदुक्तिरित्यपरा । तत्राद्या वरा । 'प्राणो ह्येष य एष तपति' 'एष तपन्नेवास्मि' इत्यनयोरन्यतरवैय्यर्थ्याभावेन निर्बाधत्वात् । द्वितीया त्वाभ्युपगमवादप्रवृत्ता । अस्तु वाऽहमादिपदाना[१६५]मस्मच्छब्दार्थत्वम्, तथापि

१६४. अनु. २-१-१०३ १६५. पदानां इति 'ख'पाठः

नानेन जीवैक्यसिद्धिरिति । वाक्यद्वयेऽन्यतरवैय्यर्थ्यं तु कथञ्चित्परिहरणीयम् । आद्यवाक्येन विष्णोः सूर्यान्तर्यामित्वे कथितेऽपि तस्यौपचारिकत्वशङ्कानिरासार्थं सावधारणं द्वितीयं वाक्यं प्रवृत्तमिति, अतः पक्षद्वयमप्युपपन्नमिति ॥

न चेन्द्रादिभिरैक्यमत्रोच्यत इति जीवब्रह्मैक्योपदेशपक्षः प्राङ् निराकृतः । तत्रैव पुनः सिंहावलोकनन्यायेन दूषणान्तरं वक्तुं प्रतिजानीते– **न चेति** ॥ **वचनं** कथनम् । **अत्र** खण्डे । **प्रस्तुतं** प्रकृतसङ्गतम् । कुत इति तत्राह– **ता वा एता इति** ॥ पूर्वखण्डे प्राणशब्दवाच्यस्य विष्णोस्तावा एता इत्यादिना सर्वनामाभिधेयत्वमुक्तम् । अतस्तदेव प्रकृतं नतु जीवैक्यम् । तत्रैव प्रमाणत्वेन विश्वामित्रमित्याद्याख्यायिकाऽस्मिन् खण्ड उच्यते । अस्य च जीवैक्यपरत्वेन व्याख्याने कथं प्रकृतसङ्गतः[१६६] स्यादित्यर्थः । उपसंहरति– **तस्मादिति** ॥ प्रातीतिकार्थस्यानुपन्नत्वादित्यर्थः । रूढ्या योगेन च नाम्नां वृत्तिर्द्वेधा भवति । तत्र रूढिप्रदर्शनाय **सर्वान्तर्यामित्वादित्युक्तिः** । सादृश्यनिमित्ता हि रूढिः ।

'सर्वेषु युगपच्छब्दः सदृशेषु प्रवर्तते ।

तादृशोऽयं च तच्छब्दः'[१६७] इति वचनात् । अन्तर्यामी च तत्तद्वस्तुषु तत्तदाकारसादृश्येन तिष्ठतीति । योगश्च द्विविधो गुणनिमित्तकः [१६८]क्रियानिमित्तश्चेति । तत्राद्यविवक्षया **सर्वगुणपूर्णत्वादिति** । द्वितीयविवक्षया– **सर्वशक्तित्वादिति** । शक्तिरेव व्यक्तीभावंगता

---

१६६. सङ्गतिः इति 'ख'पाठः १६७. अनु. २-२-१२७

१६८. क्रियानिमित्तकः इति 'ख'पाठः

क्रियोच्यते । यथोक्तमनुव्याख्याने-

'सविशेषोऽपि क्रियाशक्त्याऽऽत्मना स्थिरः'[१६९] इत्यादि ।।

मुक्तावपि भेदास्तित्वसमर्थनम्

**भाष्यम्**

**उक्तं च भारते–**

**स्रष्टृत्वाच्चैव पातृत्वान्नियमाच्च प्रकाशनात् ।**
**सर्वत्वमुक्तं विष्णोस्तु न तु सर्वस्वरूपतः ।। इति ।**

**[१७०]'पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यं' इति पुरुषेणैवेदं सर्वं व्याप्तं यद्भूतं यच्च भव्यम् , आ तृणादाकरीषात् सर्वं भगवानिति [१७१]मिथ्यादृष्टिरेवेति च श्रुतिः । 'हिरण्मयो ह वा अमुष्मिंल्लोके सम्भवति हिरण्मयः सर्वेभ्यो भूतेभ्यो ददृशे य एवं वेद'[१७२] । 'अमृतो ह वा अमुष्मिंल्लोके सम्भवत्यमृतः सर्वेभ्यो भूतेभ्यो ददृशे य एवं वेद'[१७३] । 'स एतेन प्रज्ञेनात्मनास्माल्लोकादुत्क्राम्यामुष्मिन् स्वर्गे लोके सर्वान् कामान् आप्त्वा अमृतः समभवत् समभवत्'[१७४] इत्यादिना मुक्तानामपि भेदस्यैवोक्तेश्च । न हि भेदाभावे 'सर्वेभ्यो भूतेभ्यो ददृशे' इति युज्यते । न चामुक्तैः सर्वभूतैर्मुक्तो दृश्यते ।**

१६९. अनु. १-२-६

१७०. पुरु.सू २

१७१. मिथ्यादृष्टिरेषा इति ह.पाठः

१७२. ऐत.उ २-१-३ (३२-पु)

१७३. ऐत.उ. २-१-८ (९-पु) १७४. ऐत.उ. २-६-१ पु.५६९

**भावप्रदीपः**

सर्वतो भिन्नस्यापि सर्वत्वोक्तिं प्रकारान्तरेणापि प्रमाणेनैव घटयन् सर्वस्वरूपत्वं निषेधति– **उक्तं चेति ।। नियमो** व्यापारेषु प्रेरणम् । **प्रकाशनात्** ज्ञानोत्पादनात् संहारादेरप्युपलक्षणमेतत् । सर्वस्येति शेषः । **सर्वत्वमुक्तं** 'प्राणो वा अहम्'[१७५] इत्यादौ 'सर्वं खल्विदं ब्रह्म'[१७६] इत्यादौ च । **सर्वस्वरूपतः** सर्वस्वरूपत्वात् । यथोक्तं भागवते–

'इदं हि विश्वं भगवानिवेतरो यतो जगत्स्थाननिरोधसम्भवः'[१७७] इति ।

'यदधीना यस्य सत्ता तत्तदित्येव भण्यते'[१७८] इति च ।।

ननु 'पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम्'[१७९] इति सर्ववेदोत्तमे पुरुषसूक्ते स्पष्टमेव भगवतः सर्वात्मकत्वाभिधानात्कुतोऽर्थान्तरं कल्प्यत इति चेत् । तद्व्याख्यानरूपब्राह्मणविरोधात्तत्राप्येतदेवाभिप्रेतं नान्यदिति भावेन ब्राह्मणवाक्यमुदाहरति– **पुरुष एवेदमिति ।।** भव्यमित्यन्तं पुरुषसूक्तमन्त्रानुवादः । 'पुरुषेणेदं' इत्यादि भव्यमित्यन्तं तदर्थकथनम् । आतृणादित्यादिकं सामानाधिकरण्येन जाताया ऐक्यप्रतीतेर्भ्रान्तित्वप्रतिपादनम् । तथाच भगवतः [१८०]सर्वात्मत्वोक्तेः सर्वत्र व्याप्तत्वमपि निमित्तान्तरमुक्तं भवति । यथोक्तं भगवद्गीतायां[१८१]– 'सर्वं समाप्नोषि ततोऽसि सर्वः' इति ।।

---

१७५. ऐत.उ २-२-३ (१८३-पु) १७६. छा.उ ३-१४-१

१७७. भाग. १-५-२० १७८. भाग.ता २-५-२

१७९. पुरु.सू. १८०. सर्वात्मकत्वोक्तेः इति 'ख'पाठः

१८१. ११-४०

अत्राहुः– जीवब्रह्मणोरभेद एव हि श्रुतितात्पर्यविषयः । भेदस्त्वविद्याकल्पितो मिथ्यैव । अत ऐक्यज्ञानपरिपाकेनाविद्यानिवृत्तौ मुक्तावभेदस्यैवावस्थानम् । भेदस्त्वविद्याकल्पितोऽविद्यया सहैव लीयते । अतः सर्वमिदं भेदवचनमविद्वदधिकारिकं सांसारिकापारमार्थिकभेदविषयमेव । अतो जीवेश्वरयोर्न स्वाभाविकैक्यं विरुणद्धीति । तन्मतनिरासाय पूर्वोत्तरखण्डगतवाक्यैरेव मुक्तानां परस्परं ब्रह्मणा च भेदं साधयति– **हिरण्मय इत्यादिना** ।। अत्राद्यं वाक्यद्वयं प्राग् व्याख्यातम् । तृतीयमग्रे व्याख्यास्यते । अतस्तदर्थस्तदनुसारेण बोध्यः । न केवलं संसारिणां किन्नाम मुक्तानामपि भेदस्यैवोक्तेर्न मोक्षेऽभेदप्रत्याशा कर्तव्या । नापि भेदस्याविद्यकतयाऽपारमार्थिकता कल्प्येत्यर्थः । उक्तेश्चेति चशब्दः प्रागुक्तयुक्तिसमुच्चयार्थः । कथमेतेषां वाक्यानां मौक्तभेदपरत्वमित्यतस्तदुपपादयति– **न हीति** ।। एतानि खलु वाक्यानि तावन्मुक्तविषयाणि । हिरण्मयादिभावस्य ज्ञानफलत्वश्रवणात् । मोक्षादन्यस्य ज्ञानफलत्वायोगात् । अमृतशब्दश्रवणाच्च । तस्य च भेदाभावेन सर्वभूतैर्दृश्यत्वोक्तिर्युज्यते । द्रष्टृदृश्यभावस्य भेदव्याप्तत्वात् । सर्वेभ्यो भूतेभ्य इति सर्वशब्दबहुवचनयोरप्यनुपपत्तिरेवेति भावः । स्यादेतत्, यदीमानि द्रष्टृभूतानि मुक्तानि स्युः । न चैवम् । तज्ज्ञापकाभावात् । किन्त्वमुक्तान्येव भवेयुः । बाधकाभावात् । अतो न मुक्तानां भेदसाधकमिदमित्यत आह– **न चेति** ।। न मुक्तोऽमुक्तैर्दृश्यते । [१८२]'न प्रेत्य सञ्ज्ञास्ति' इति श्रुतौ मुक्तस्यामुक्ताज्ञेयत्वाभिधानात् । नच नारदाद्यमुक्तत्वदृश्यत्वं भवद्भिरेवाङ्गीकृतमिति वाच्यम् । तथापि सर्वामुक्तभूतदृश्यत्वाभावात् । तदनङ्गीकारे च सर्वानुभवविरोधापातादिति भावः ।।

---

१८२. बृ.उ. ४-४-१२, ६-५-१२

## बहुजीववादस्य एकजीववादस्य चायुक्तत्वसमर्थनम्

### भाष्यम्

**एकत्वे तु ददृश इत्येतावता पूर्यते सर्वेभ्यो भूतेभ्य इति व्यर्थम् । न च तेषां पक्षे स्वयमपि स्वात्मानं पश्यति । कर्तृकर्मविरोध इति ते वदन्ति । अतः सर्वश्रुतिविरोध एव जीवेश्वरैक्याङ्गीकारे ।**

**न च कर्तृकर्मविरोधो नामास्तीत्यत्र किञ्चिन्मानम् । श्रुत्यनुभव-सिद्धत्वाच्च स्वदर्शनादेः ।**

### भावप्रदीपः

नन्वद्वितीयब्रह्मभावापन्नो हि मुक्त इष्यते । स च एक एव । अत एव श्रुतौ 'हिरण्मयो ददृशे'[१८३] 'अमृतो ददृशे'[१८४] इत्येक-वचनम् । न च तर्हि सर्वेभ्यो भूतेभ्यो इत्यस्यानुपपत्तिः । तेषाममु-क्तत्वे मुक्तस्य तद्दृश्यत्वाभावात् । मुक्तत्वएकत्वाङ्गीकारविरोधादिति वाच्यम् । तेषाममुक्तत्वेऽप्यैक्याविरोधात् । बहुवचनस्य भूतपूर्वगत्या सांसारिकमिथ्याभेदानुवादमात्रपरत्वात् । न चैकत्वे द्रष्टृदृश्यत्वानुप-पत्तिः । स्वाभिन्नमुक्तदृश्यत्वस्य स्वदृश्यत्वे पर्यवसानात् । आत्मनश्च स्वप्रकाशत्वाङ्गीकारेण तदुपपत्तेरित्यत आह– **एकत्वे त्विति** ।। एवं तर्हि ददृश इत्येतावतैव स्वयं स्वेनैव दृश्यत इत्यर्थलाभात्सर्वेभ्यो भूतेभ्य इति पृथग्दर्शनकर्तृतया सर्वभूतोपादानं व्यर्थमेवापद्येतेत्यर्थः । किञ्चैवमङ्गीकारेऽपसिद्धान्तोऽपि स्यादित्याह– **न चेति** ।। कुत इत्यत आह– **कर्तृकर्मेति** ।। भावप्रधानोऽयं निर्देशः । एकस्यां

---

१८३. ऐत.उ२-१-६ (३२-पुटम्)

१८४. ऐत.उ २-१-८ (९०-पुटम्)

क्रियायां कर्तृकर्मणोर्भेद एव वाच्यः । एकस्यैव कर्तृकर्मभावस्य विरुद्धत्वादिति हि तेऽद्वैतवादिनो वदन्ति । अत एव तेषां पक्षे स्वप्रकाशत्वमप्यवेद्यत्वरूपमेवेति भावः । निगमयति– **अत इति** ।। मुक्तस्याप्यैक्याभावात् । संसारे तु सुतरामैक्यानुपपत्तेरित्यर्थः । **एवेत्यनेन** विरोधस्यापरिहार्यतामाह । अपसिद्धान्तकथनार्थं **कर्तृकर्मविरोध इति** ।।

'ते वदन्ती'ति तन्मतमुपन्यस्तम् । साम्प्रतं प्रसङ्गात्तदपि नोपपद्यत इत्याह– **न चेति** ।।

अयं भावः । न तावत्प्रत्यक्षमागमो वाऽस्मिन्नर्थे मानम् । तदभावात् । नाप्यनुमानम् । तत्प्रतिबद्धलिङ्गाभावात् । क्रियाश्रयः कर्ता, परसमवेतक्रियाफलशालि कर्मेति कर्तृकर्मणोर्लक्षणविरोध एव कर्तृत्वकर्मत्वयोरेकत्र विरोधे मानमिति चेन्न । कर्मलक्षणस्यातिव्याप्त्यादिदुष्टत्वात् । तथाहि– देवदत्तो ग्रामाद् ग्रामं गच्छतीत्यादौ देवदत्तसमवेतगतिक्रियाफलसंयोगशालित्वं यथोत्तरग्रामे तथा पूर्वग्रामेऽपि तत्क्रियाफलविभागशालित्वसत्त्वेन तस्यापि कर्मतापत्तिः । अनागतादिविषयेच्छादिक्रियाफलशालित्वमनागतादेरसत्वेन नास्तीति तत्कर्मत्वं न स्यात् । वर्तमानेऽपि घटादौ न ज्ञानादिजन्यफलमुपलभ्यते । ज्ञातताया ज्ञानातिरिक्ताया अभावात् । संस्कारादेरात्मन्येवोत्पादात् । व्यवहारस्य च व्याहरणरूपस्य कर्तृनिष्ठत्वात् । उपादानादिरूपस्योपेक्षणीयाव्याप्तेः । अतः क्रियास्वातन्त्र्यं कर्तृत्वं तद्विषयत्वं कर्मत्वमिति वाच्यम् । न च तयोः कमपि विरोधं पश्याम इति ।।

एवं कर्तृकर्मत्वविरोधं प्रमाणाभावेन निराकृत्य बाधकप्रमाणेनापि निराचष्टे– **श्रुत्यनुभवेति** ।। स्वकर्मकं दर्शनं स्वदर्शनम् । तत्र

श्रुतिस्तावत् 'यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्'[१८५] इत्याद्युक्त्वा 'विज्ञातारमरे केन विजानीयात्'[१८६] इति । अत्र हि विज्ञातारं स्वात्मानं केन विजानीयात् न केनापि, तस्मान्मुक्तौ जीवस्य मनआद्यनङ्गीकारे स्वज्ञानमपि न स्यात् । अस्ति च स्वज्ञानम् । तेन तत्करणं मनआदिकमङ्गीकरणीयमिति मनआद्य-नङ्गीकारे जीवस्य स्वज्ञानाभाव आपद्यते । तेन ज्ञायते स्वदर्शनं श्रुतिसिद्धमिति । तथा 'अहमित्येव यो वेद्यः'[१८७] इत्याद्याश्च स्पष्टार्था एव । अनुभवोऽप्यस्मिन्नर्थे मामहं जानामीति साक्षिरूपः । आदि-पदेन स्वकर्मकं करणम् । इदमपि मामहं ज्ञानिनं सुखिनं तत्साधनोद्योगिनं च करोमीत्याद्यनुभवसिद्धम् । एवं श्रुतिरप्यूह्या । तथाचैवं स्वदर्शनादेः श्रुत्यादिसिद्धत्वेन कर्तृकर्मविरोधवादस्तद्बाधित इति भावः ॥

### शून्यवादिमायावदिनोरविशेषत्वसमर्थनम्

### भाष्यम्

**न च तेषां पक्षे प्रज्ञेन सर्वज्ञेन परमात्मना सर्वकामावाप्ति[१८८]र्नामाङ्गीक्रियते शरीरादुत्क्रान्तस्य ज्ञानिनः । तस्माद्वेद-विरुद्धवादिन एव तेऽपि ।**

**न च शून्यवादिनः कश्चिद्विशेषो दृश्यते । न हि सर्वावाच्यं सर्वाज्ञेयं शून्यं चेति कश्चिद्विशेषः । केनापि शब्देनावाच्यस्य**

१८५. बृ.उ ४-४-१४ १८६. बृ.उ ४-४-१४

१८७. वि.त.नि इत्यत्रोदाहृता परमश्रुतिः (प्रथमपरिच्छेदः)

१८८. कामाप्तिः इति ह.पाठः

**लक्षणायामपि प्रमाणं नास्ति । क्षीरमाधुर्यादयोऽपि तैरेव शब्दैरुच्यन्ते ।**

**विशदं क्षीरमाधुर्यं स्थिरमाज्यस्य तीक्षणकम् ।**
**गुडस्य[१८९] पनसादीनां निर्हारीत्यभिधीयते ।। इति शब्दनिर्णये ।**

**न च सर्वगुणदोषक्रियाविनिर्मुक्तस्यास्तित्वमपि कुत्रचित् दृष्टम् । अतः शून्यवादिन एव तेऽपि ।**

**भावप्रदीपः**

एवमुदाहृतवाक्यत्रये आद्यवाक्यद्वयस्य मुक्तानां परस्परं भेदवत्त्वे प्रमाणतां प्रसाध्येदानीं तृतीयवाक्यस्य मुक्तेश्वरभेदपरतामुपपादयति– **न चेति ।। तेषां** जीवेश्वरयोरैक्यवादिनाम् । एतस्यां हि श्रुतौ **प्रज्ञेन** सर्वज्ञेन **आत्मना** परमात्मना तत्प्रसादेन **अस्माल्लोकात्** शरीरादुत्क्राम्यावस्थितस्य ज्ञानिनस्तत्प्रसादेनैव सर्वकामावाप्तिः श्रूयते । न च जीवब्रह्मणोरैक्ये मुक्तावेवंभावस्सम्भवति । अतो मुक्तजीवस्य परमात्मना भेद एवेति भावः । प्रकृतमर्थमुपसंहरन्नेव तत्पक्षे दूषणान्तरं वक्तुमुपक्रमते– **तस्मादिति ।।** जीवेश्वरैक्यस्यैवं विरुद्धत्वादित्यर्थः । **ते** ऐक्यवादिनोऽपि न केवलं शून्यवादिन इत्यर्थः । अपिशब्दसूचितमेवार्थं व्यनक्ति– **न चेति ।।** शून्यवादिन इति पञ्चमी । **विशेषो** वैलक्षण्यम् दृश्यते । जीवब्रह्मैक्यवादिन इति शेषः । ननु कथमनयोरविशेषः । शून्यब्रह्मणोः शून्यब्रह्मशब्दाभ्यामेव विशेषावगमादिति तत्राह– **न हीति ।।** भवेदयं विशेषो यदि ब्रह्मशब्देन ब्रह्मणो गुणपूर्णत्वमभिप्रेतं स्यन्मायावादिनः । किन्तु निर्गुणमेकमेव । किञ्चिद्वस्त्वङ्गीकृत्य तस्य निर्गुणत्वसिद्ध्यर्थं सर्वशब्दावाच्यत्वं सर्व-

१८९. सितस्य इति ह.पाठः

प्रमाणावेद्यत्वं चाङ्गीकुरुते । शब्दवाच्यत्वे हि तत्प्रवृत्तिनिमित्त-गुणयोगः स्यात् । एवं प्रमाणवेद्यत्वेऽपि तज्जन्यप्रमाप्रकारयोगः स्यादिति । सति चैवं तच्छशविषाणवच्छून्यमेव पर्यवस्यतीति भावः ।

ननु ब्रह्मणः सर्वशब्दावाच्यत्वेऽपि तल्लक्ष्यत्वं मायावादिनाऽङ्गी-क्रियते । अन्यथा 'तत्तु समन्वयात्'[१९०] इत्युक्तः शास्त्रसमन्वय एव तस्मिन्न सिद्ध्येत् । शून्यवादिना तु नैवम् । वेदप्रामाण्यस्यैव तेना-नङ्गीकारात् । अतोऽस्ति शून्यवादिमायावादिनोर्विशेष इत्यत आह– **केनापीति** ।। केनचिच्छब्देन वाच्यमेव हि तीरादिकं केनचिल्लक्ष्यं दृष्टम् । ब्रह्मणस्तु केनापि शब्देनावाच्यत्वाङ्गीकारे लक्ष्यत्वमपि न स्यात् । वाच्यार्थद्वारत्वाल्लक्षणायाः । नाप्यत्र किञ्चित्प्रमाणमस्ति येन तथात्वं प्रतीम इति भावः ।।

ननु क्षीरगुडादिमाधुर्यादीनां विशेषास्तावद्विद्यन्ते । अनुभवसिद्ध-त्वात् । न च ते केनापि शब्देन वाच्याः । तद्वाचकशब्दाभावात् । तथापि लक्ष्या दृश्यन्ते । अन्यथा वाग्व्यवहाराभावप्रसङ्गात् । अतोऽवाच्यत्वे लक्ष्यत्वं न स्यादिति कथमुच्यत इत्यत आह– **क्षीरेति** ।। **तैरेव** माधुर्यादिविशेषादिशब्दैरेवोच्यन्ते, नान्यत्तद्वाचकं गवेषणीयमित्यर्थः । न केवलं ते माधुर्यादिविशेषादिसामान्यशब्दै-रेवोच्यन्ते, किन्तु विशेषशब्दैरपीति भावेन प्रमाणमुदाहरति– **विशदमिति** ।

ननु ब्रह्मणो विधिप्रत्ययवेद्यत्वाच्छून्यस्य निषेधप्रत्ययवेद्यत्वात्कथं तयोरविशेष इत्यत आह– **न चेति** ।। **अस्तित्वं** विधिप्रत्यय-

१९०. ब्र.सू. १-१-४

वेद्यत्वरूपम् । अत्र दोषग्रहणं ब्रह्मणो निर्गुणत्वाङ्गीकारे शुभधर्माभावप्राप्त्याऽनौदार्यं दोष इतिवत्तस्यैव दोषरूपत्वात्तेनैव दोषित्वापातः । तदङ्गीकारे च तेनैव निर्धर्मकत्वभङ्गः, अनङ्गीकारे तु भावाभावोभयविकल्पस्य पुनरस्तित्वमेवं दुर्लभमिति दूषणसूचनार्थम् । निगमयति– **अत इति** ।। **तेऽपि** ब्रह्मवादिनोऽपि मायावादिनः ।

### भगवतो गुणवत्त्वप्रतिपादनम्

### भाष्यम्

**'अस्तीत्येवोपलब्धस्य तत्त्वाभावः प्रसीदति'[१९१] इत्यादिना प्रसादादिगुणाश्च भगवतो दृश्यन्ते । 'यस्य ब्रह्म च क्षत्रं च चोभे भवत ओदनः'[१९२] इत्यादिना कर्माणि च । 'तस्मिन् देवाः श्रिताः सर्वे' इत्यादिगुणाश्च तत्रैवोक्ताः ।**

### भावप्रदीपः

ननु 'केवलो निर्गुणश्च' इति निर्गुणत्वं, 'निष्कलं निष्क्रियं शान्तं' इति निष्क्रियत्वं च ब्रह्मणः प्रतिपाद्यते । अतः श्रुत्युक्तनिर्गुणत्वाद्यङ्गीकारे कथं नास्तित्वापादनमिति चेत् । किमापातप्रतीत एव श्रुत्यर्थ, उत प्रमाणाविरुद्धः । नाद्यः । 'असदेवेदमग्र आसीत्'[१९३] इति श्रुत्याऽसतोऽपि जगत्कारणत्वप्रसङ्गात् । न द्वितीयः । श्रुतावेव भगवतो गुणानां कर्मणां चोक्तत्वेन निर्गुणत्वादेस्तद्विरुद्धत्वादिति भावेन श्रुत्यैव गुणादिकमुपपादयति– **अस्तीति** ।। अधिकः सत

---

१९१. काठ.उ २-३-१४ १९२. काठ.उ १-२-११

१९३. बृ.उ. ६-२-१

इत्यस्तिनामा भगवान् । अतस्तं सर्वाधिक इत्येव **उपलब्धस्य** कर्तरि क्तः, विजानतः पुरुषस्य **तत्त्वभावः** प्रकृतेः पुरुषाणां च तत्त्वं स्वरूपं भावयतीति तन्नामा विष्णुः प्रसीदतीति प्रसादलक्षणो गुणो भगवतोऽवगम्यते । यथोक्तं काठकभाष्ये[१९४]–

'प्रकृतेः पुरुषाणां च तत्त्वं भावयति स्फुटम् ।
तत्त्वभावस्ततो विष्णुस्तत्प्रसादात्तु तस्य हि ।।
आधिक्यं ज्ञायते सत्तः प्रसादश्च तथाविदः ।।' इति ।

पूर्वटीकाकारास्तु[१९५] अस्तीत्युपलब्धस्य ज्ञातस्य हरेस्तत्त्वभावस्तत्त्वस्वरूपं प्रसीदति । ज्ञातुरिति शेष इति व्याचक्षते । इत्यादिनेत्यादिपदेन च

'योगो हि प्रभवाप्ययौ । नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा'[१९६] इत्यादितत्पूर्ववाक्यं, 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः । तं विद्याच्छुक्रममृतम्'[१९७] इत्याद्युत्तरवाक्यं च ग्राह्यम् । तेनादिपदगृहीतानां भगवतो जगत्प्रभवादिकर्तृत्ववाङ्मनसाद्यगोचरत्वाङ्गुष्ठपरिमाणत्वसर्वजीवहृदयनिविष्टत्वादिगुणानां, [१९८]चशब्दे सूचितानां शोकमृत्यादिदोषाभावानां च लाभः । 'यस्य ब्रह्म च'[१९९] इति वाक्ये ब्रह्मक्षत्रोपलक्षितसर्वात्तृत्वक्रिया प्रतीयते । आदिपदेन 'ऋतं पिबन्तौ'[२००] इति वाक्योक्तं सुकृतफलभोक्तृत्वं

---

१९४. २-३-१३ १९५. वि.श्वे.तीर्थाः

१९६ काठ.उ २-३-१२ १९७. काठ.उ. २-१-१३

१९८. चशब्दसूचितानां इति 'ख'पाठः

१९९. काठ.उ. १-२-११ २००. काठ.उ. १-३-१

'छायातपौ'[२०१] इत्युक्तं विद्वदविदुषोः सुखदुःखदातृत्वं च ग्राह्यम् । 'तस्मिन् देवाः' इति वाक्ये आदिपदोक्ते 'य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः'[२०२] इति, 'यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतम् । महद्भयं वज्रमुद्यतम्'[२०३] इत्यादौ च वाक्ये सर्वदेवाश्रयत्वाधिशून्यत्व[२०४]स्वाप्नपदार्थनिर्मातृत्वजगच्चेष्टकत्वजगदुत्पादकत्ववज्रवद्भयकारित्वोद्यमितत्वादिगुणाश्च तत्रैव तस्यामेव काठकश्रुतावुक्ता इत्यर्थः । इत्यादीत्यस्यावृत्तिः । आद्यमसमस्तमविभक्तिकं च । द्वितीयं गुणा इत्यनेन समस्तम् । ततश्चेत्यादौ सर्वदेवाश्रयत्वादिगुणा उक्ता इत्यर्थलाभः । यद्यपि 'तस्मिन् लोकाः श्रिताः सर्वे'[२०५] इत्येवोपनिषत्पाठस्तथापि शाखान्तरपाठोऽयमिति बोध्यम् । अत्र यद्यपि तत्त्वभावः प्रसीदतीत्यादिप्रसादादिगुणा भगवतो दृश्यन्ते इत्यनेनैव 'तस्मिन् देवाः' इत्यादिवाक्यानि तदुक्तगुणाश्च सङ्ग्रहीतुं शक्याः, उभयत्रादिपदश्रवणात् । तथापि तत्र तत्त्वभावादिशब्दाः प्रमाणान्तरबलाद्विष्णुपरा अवसेयाः । अत्र तु तस्मिन्नित्यादि तदादिशब्दाः [२०६]'तदेव शुक्रं तद् ब्रह्म' इति ब्रह्मशब्दमुख्यार्थविष्णुनिष्ठा एवावगम्यन्त इति निरवकाशा एत इति सूचनाय योगविभागः । अत एव तत्र दृश्यन्ते विचारेणावगम्यन्त इत्युक्तम् । अत्र तूक्ताः वचनवृत्त्यैव विष्णुनिष्ठतया प्रतिपादिता इति ॥

---

२०१. काठ.उ. १-३-१

२०२. काठ.उ. २-२-८

२०३. काठ.उ. २-२-३

२०४. अधिकशून्यत्व इति 'ख'पाठः,

२०५. काठ.उ २-२-८, २-३-२

२०६. काठ.उ २-१-८, २-२-८

मुक्तानां तारतम्यवत्त्वे प्रमाणोदाहरणम्

**भाष्यम्**

अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः ।
आदघ्नास उपकक्षास उ त्वे ह्रदा इव स्नात्वा उ त्वे ददृश्रे[२०७] ।।

इति मुक्तानामपि तारतम्यं चोक्तम् ।

श्रुत्वा विष्णुं कर्णफलं प्राप्तत्वात् कर्णसंयुताः ।
अक्षण्वन्तो दर्शनाच्च विष्णोर्मुक्ताश्च[२०८] ये गणाः ।।

तारतम्यं च तेषां हि श्रुतावुदितमञ्जसा ।
क्षीरसागरदघ्नास्तु केचित् तिष्ठन्ति मुक्तिगाः ।।

उपस्थिता ब्रह्मवनं केचिदश्वत्थमण्डलम् ।
ऐरे ह्रदे केचिदपि देवा एव परं[२०९] हरिम् ।।

नागभोगशयं मुक्ता ददृश्रेऽधिकंमोदिनः ।
सागरादिस्थिता विष्णुं पश्यन्ति कचिदेव हि ।। इति ब्रह्मसारे ।

**भावप्रदीपः**

प्राङ्मुक्तानां 'हिरण्मयो हवा'[२१०] इत्यादिवाक्यबलाद्भेदमात्रं समर्थितम् । इदानीं तेषां साम्यमतनिरासाय तारतम्यं च श्रुत्या साधयति– **अक्षण्वन्त इति** ।। अक्षण्वन्तोऽक्षिमन्तः । 'आतो

२०७. ऋक्.सं १०-७१-७

२०८. मुक्तास्तु इति ह.पाठः

२०९. सदा इति ह.पाठः

२१०. ऐत.उ २-१-६ (३२-पुटम्)

नुड्'[२११] इति नुड् । अक्षण्वन्तः कर्णवन्त इत्युपलक्षणम् । प्राप्तसमस्तेन्द्रियफलाः परस्परसखायो मुक्ताः **मनोजवेषु** मनोजवः प्रज्ञातिशयः । बहुवचनमाद्यर्थे, ज्ञानादिगुणेषु **असमाः** तारतम्योपेता बभूवुः । भगवत्सामीप्ये च तारतम्यमुच्यते । तेषु केचित् **आदघ्नासः** आस्यशब्दस्याभावः । आस्यपरिमाणमस्येत्यादघ्नममृतम् । तदेषामस्ति स्थानमिति 'अर्श आदिभ्योऽच्'[२१२] । आस्यपरिमाणे सुधानिधौ विहरन्त इति दूरत्वमुच्यते । यद्वा तरतमशब्दवद्दघ्नशब्दो प्रत्ययरूपोऽस्ति । ततश्च **आ** सम्यक् **दघ्ना** मग्ना इत्यर्थः । **त्वे** केचित् उप गताः कक्षं वनमुपकक्षाः । उशब्द एवार्थः । श्वेतद्वीप-गतवनक्रीडारता एवेति मध्यमत्वमुच्यते । 'आज्जसेरसुक्'[२१३] इत्यसुक् । **त्वे** उ केचिदेव **स्नात्वा** स्नातव्याः कृत्यार्थे त्वन् । ह्रदा इव गम्भीराः परमेश्वरं **ददृश्रे** ददृशुः । 'इरयोरे'[२१४] इति सूत्रात् । अनेनातिसामीप्यमुच्यते । अयमर्थः सुधायामुदितोऽनूदितः ।

अथवा ह्रदा इति सप्तम्यर्थे प्रथमा । 'सप्तसु प्रथमा' इति सूत्रात् । तेष्वमृतह्रदेषु **स्नात्वा** स्नाता मग्ना इवामृतं पिबन्तीत्यर्थः । यथोक्तं बृहद्भाष्ये[२१५]– 'अमृतह्रदेषु केचिच्च पिबन्ति स्नातवत्सदा' इति । इतरत्समानम् । इममेवार्थमभिप्रेत्य समाख्यारूपां स्मृतिमुदाहरति–

---

२११. पा.सू. २-३-२२

२१२. पा.सू. ५-२-१२७ सि.कौ.सू.सं १९३३

२१३. पा.सू ७-१-५० सि.कौ.सू.सं ३५७२

२१४. पा.सू ६-४-७६ सि.कौ.सू.सं ३५४७

२१५. ३-४(अव्याकृतब्राह्मणम्, ६१८-पुटम्)

**श्रुत्वेति** ।। कर्णादिमत्वस्य सर्वसाधारण्यात्तत्तात्पर्यकथनं– **श्रुत्वेत्यादि** ।। **अक्षण्वन्तो**ऽक्षिमन्तः प्रशस्ताक्षिफलवन्तः । विष्णोर्दर्शनादिति तदुपपादनम् । विष्णुदर्शनमेवाक्षिफलमिति भावः । आदघ्नास इत्यस्यार्थः– **क्षीरसागरदघ्ना इति** ।। उपकक्षास इत्यस्य **उपस्थिता इत्यादि** ।। ब्रह्मणो विष्णोर्वनं ब्रह्मवनम् । अश्वत्थानां मण्डलं समूहो यस्मिन्नित्यश्वत्थमण्डलम् । **ऐरे** तन्नामके अमृतह्रदे, केचिदपीति 'ह्रदा इव स्नात्वा उ त्वे ददृशे' इत्यस्यार्थः । अथवा केचिन्मुक्ता **ऐरे** ह्रदे तिष्ठन्तीति श्रुतावनुक्तस्याधिकस्यैव कथनम् । 'ह्रदा इव स्नात्वा ददृशे' इत्यस्य तु 'देवा एव परं हरि'मित्याद्येव व्याख्यानरूपमिति बोध्यम् । **सागरः** क्षीरसागरः । आदिपदेन ब्रह्मवनमैरह्रदश्च ग्राह्यौ । तत्र स्थितास्तु मुक्ताः क्वचिदेव काले पश्यन्तीत्यनेन देवाः सर्वदा पश्यन्तीति लभ्यते ।।

### वेदेष्वपि मुक्तलोकवर्णनम्

### भाष्यम्

**यत्र ब्रह्मा पवमान छन्दस्यां वाचं वदन् ।**
**ग्राव्णा सोमे महीयते सोमेनानन्दं जनयन्निन्द्रायेन्दो परिस्रव ।।**

**यत्र ज्योतिरजस्रं यस्मिंल्लोके स्वर्हितम् ।**
**तस्मिन् मां धेहि पवमानामृते लोके अक्षित इन्द्रायेन्दो परिस्रव ।।**

**यत्र राजा वैवस्वतो यत्रावरोधनं दिवः ।**
**यत्रामूर्यह्वतीरापस्तत्र माममृतं कृधीन्द्रायेन्दो परिस्रव ।।**

**यत्रानु कामं चरणं त्रिनाके त्रिदिवे दिवः ।**
**लोका यत्र ज्योतिष्मन्तस्तत्र माममृतं कृधीन्द्रायेन्दो परिस्रव ।।**

यत्र तत्परमं पदं विष्णुलोके महीयते ।
देवैः सुकृतकर्मभिः तत्र मामृतं कृधि इन्द्रायेन्द्रो परिस्रव ।।
यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते ।
कामस्य यत्राप्ताः कामास्तत्र माममृतं कृधीन्द्रायेन्दो परिस्रव[२१६] ।।

इत्यादिना ब्रह्मसूर्ययमादीनां सर्वदेवानां दिवो देव्या अवरोधभूतानां सर्वदेवानां गङ्गाद्यब्देवतानां च वेदव्याख्यानं सोमयागादिकं कामचरणं च मुक्तानां भेदेनावस्थितानामुच्यते ।।

मुक्ताश्चात्रोच्यन्त इति प्रतीयते । अमृतं कृधीति वचनात् । अमुक्तानां स्वे स्वे लोकेऽवस्थानं हि तेषाम् । मुक्तानां हि विष्णुलोकेऽवस्थानं देवानाम् । 'मुक्तः प्रतिज्ञानात्'[२१७] 'सङ्कल्पादेव च तत् श्रुतेः'[२१८] 'जगद्व्यापारवर्जम्'[२१९] 'भोगमात्रसाम्यलिङ्गाच्च'[२२०] 'अनावृत्तिः शब्दात् अनावृत्तिः शब्दात्'[२२१] इत्यादि मुक्तसूत्रेभ्यश्च[२२२] मुक्तानां विष्णोर्भेदो भोगादिकं च सर्वं प्रतीयते । 'ग्राव्णा सोमे महीयते' इति ब्रह्मणोऽन्यमुक्तैः पूज्यत्वं च प्रतीयते ।

**भावप्रदीपः**

मुक्तानां देवादीनां भेदेनावस्थानं वेदव्याख्यानादिकर्माणि च प्रतिपादयन्ति श्रुत्यन्तराण्यप्युदाहृत्य तत्तात्पर्यमभिधत्ते– यत्र ब्रह्मेत्या-

---

२१६. ऋक्.सं ९-१३-६तः१०
२१७. ब्र.सू ४-४-२
२१८. ब्र.सू. ४-४-८
२१९. ब्र.सू. ४-४-१७
२२०. ब्र.सू. ४-४-२२
२२१. ब्र.सू. ४-४-२३
२२२. सूत्रेभ्यश्च इति ह.पाठः

**दिना** ।। ब्रह्मसूर्ययमादीनामित्यादितात्पर्यकथनेन यत्रेत्यादिश्रुतीनामयमर्थः प्रदर्शितो भवति । **हे पवमान** पुनातीति पवमानशब्दवाच्य मुख्यप्राण **ब्रह्मा** चतुर्मुखो **यत्र** यस्मिन् लोके **छन्दस्यां** छन्दःसम्बन्धिनीं **वाचं वदन्** वेदवाक्यं व्याचक्षाणः सन्निति यावत् । **ग्राव्णा** अश्मना **सोमे** सोमविषये **महीयते** सोमाभिषवणसाधनग्रावहस्तः सन् तेन सोममभिषूय तेन सोमेन भगवन्तमिष्ट्वा सोमयागविषयेऽयमेव महानिति सर्वैः सम्भाव्यत इति यावत् । कीदृशः सन् **सोमेन** तेनैव सोमयागेन जातया विष्णुप्रीत्या स्वस्यानन्दं जनयन् हे **इन्दो** इं इष्टं ददातीतीष्टप्रद । तस्मिन् लोके स्थिताय **इन्द्राय** परमेश्वराय मामादाय **परिस्रव** उपसर्प ।।१।।

**यत्र** लोके **ज्योतिः** सूर्योऽजस्रं तिष्ठति यस्मिंश्च **स्वः** आनन्दरूपं विष्ण्वाख्यं ब्रह्म **हितं** सन्निहितम्, तस्मिन्न**मृते** मुक्तस्थाने **अक्षिते** विनाशशून्ये लोके मां धेहि । शिष्टं पूर्ववत् ।।२।।

यत्र **वैवस्वतो राजा** यमो वर्तते यत्र च **दिवो देव्याः** भारत्याः **अवरोधनं** अवरोधः जातावेकवचनम्, परिवाररूपास्सर्वा देव्यः सन्ति यत्र च [२२३]अमूर्य स्यन्दमाना **आपो** गङ्गाद्यब्देवताश्च सन्ति **तत्र** लोके मां **अमृतं** मुक्तं **कृधि** कुरु ।।३।।

अत्र त्रिनाक इति त्रिशब्दस्तृतीयवाची । 'त्रिदशास्त्रिभागः' इत्यादिवत् । निर्दुःखसुखानुभवस्थानत्वान्नाकः । त्रिदिव इति स्वर्लोकसञ्ज्ञा । तत्रेन्द्राधिष्ठितः स्वर्ग आद्यः सत्यलोकादिर्द्वितीयः । विष्णुलोको वैकुण्ठादिस्तृतीयः । तथाच **त्रिनाके** त्रिदिवे तृतीये

२२३. अमूर्यह्वतीः इति भाव्यमिति भाति

निर्दुःखसुखानुभवस्थाने स्वर्गात्मके **दिवो** द्योतमानाया रमायाः सम्बन्धिनि तदात्मके यत्र लोके स्थितानां जनानां **अनुकामं** यथेष्टचरणं भवति । यत्र च[२२४] लोकजाताः[२२५] ज्योतिष्मन्तस्तत्र माममृतं कृधि ॥४॥

यत्र लोके सुकृतकर्मभिर्देवैस्तद्विष्णोः **परमं पदं** स्वरूपं **महीयते** पूज्यते तत्र माम् ॥५॥

यत्र **आनन्दा** भोगाद्यजन्या भगवद्भक्तिरूपाः सुखविशेषाः । **मोदा** भोगेन जायमानाः, **मुदो**ऽत्यल्पभोगनिमित्तकाः । **प्रमुदः** प्रकृष्ट-भोगोत्थाश्च यत्रासते । कामस्य कामा इच्छाया विषया यत्र **आप्ताः** पर्याप्तास्तत्र माममृतं कृधीति ॥६॥

अत्राद्यायां ब्रह्मणो वेदव्याख्यानं सोमयागश्चोच्यते । द्वितीयायां सूर्यादीनां भिन्नतयाऽवस्थानम् । तृतीयायां यमस्य देव्यवरोधभूतानां सर्वदेवीनां गङ्गाद्यब्देवतानां च भेदेनावस्थानम् । चतुर्थ्यां तत्रत्यानां कामचरणम् । पञ्चम्यां देवानां विष्णुपूजकत्वेन भिन्नतयाऽवस्थानम् । षष्ठ्यां कामपर्याप्तिरूपं यथेष्टभोगभोक्तृत्वलक्षणं कामचरणम् । षट्स्वपि सर्वेषामेतेषां मुक्तत्वं मिथो भेदेनावस्थानं चोच्यत इति विवेकः । व्याख्यास्यति चैतदृग्जातं स्पष्टमाचार्यः स्वयमेवोत्तरत्र नवमाध्याये विना पञ्चमीमम् । सा तु खिला । अत एवैतत्स्थाने यत्र कामानि कामाश्चेत्यृच उत्तरत्र निवेशः ॥

---

२२४. च इति पदं 'क'पाठे नास्ति

२२५. लोका इति 'ख'पाठः

नन्वेतत्सर्वममुक्तविषयमेव किन्न स्यात्कुतो मुक्तपरत्वाध्यवसाय इति तत्राह– **मुक्ताश्चेति** ।। चशब्द एवार्थे । अमुक्तविषयत्वे 'तत्र माममृतं कृधी'ति वायुं प्रति मुमुक्षोः प्रार्थनायोगान्मुक्ता एवात्रोच्यन्त इति भावः । मुमुक्षोर्विष्णुलोकेऽमृतत्वप्रार्थनेऽपि तत्रत्यानां ब्रह्मादीनां मुक्तत्वं कुत इत्यत आह– **अमुक्तानामिति** ।। हिशब्दौ तत्तदर्थस्य प्रमाणप्रसिद्धिद्योतकौ । तथाचैतेषाममुक्तत्वे विष्णुलोकनिवासित्वस्यैवानुपपत्तेरत्र च तच्छ्रवणान्मुक्ता एवैत इति गम्यत इति भावः । न केवलं श्रुतिष्वेव मुक्तानां विष्णुतो भेदो भोगादिकं च प्रतिपाद्यते, किन्तु सूत्रेष्वप्येष एवार्थः प्रतिपाद्यत इत्याह– **मुक्त इत्यादिना** ।। तत्र प्रथमसूत्रे [२२६]'स तत्र पर्येती'ति श्रुत्युक्तस्य विष्णुलोके विहर्तुर्मुक्तत्वम् । द्वितीये तस्य सङ्कल्पमात्रसाध्यभोगभोक्तृत्वम् । तृतीये च मुक्तानां जगत्सृष्ट्यादिव्यापाराभावोक्त्या तद्वतो विष्णोर्भेदः । चतुर्थे च मुक्तस्य वृद्धिह्रासाभावरूपशश्वदेकप्रकारतोक्त्या कदापि विष्णुमाहात्म्याप्राप्तेरर्थात्प्राप्त्या पुनस्ततो भेद एव । अन्तिमसूत्रे तस्यापुनरावृत्त्युक्त्या मुक्त्यवस्थाया नित्यत्वेन मुक्तपरमात्मनोर्भेदस्यापि नित्यत्वमभिप्रेतमिति विवेकः । मुक्तानां तारतम्यमपि श्रुतिसिद्धं किमुत भेद इति भावेनाह– **ग्राव्णेति** ।। **ब्रह्मणः** चतुर्मुखस्य । एतेन [२२७]'अत एव चानन्याधिपतिः' इति सूत्रेन मुक्तस्यान्योऽधिपतिर्भवतीत्युच्यमानत्वादभेदो वा साम्यं वा सर्वेषामुक्ताविति निरस्तम् । तथात्वे ब्रह्मणः सर्वपूज्यत्वाभिधायकश्रुतिविरोधात् । सूत्रेऽप्यपतिरित्येतावता पूर्तावनन्याधिपतिरित्यन्यपदवैय्यर्थ्यादतः क्लृप्तपतिभ्योऽन्यपतिनिवारणायैवास्य सूत्रस्य प्रवृत्तत्वान्न तद्विरोध इति ।।

---

२२६. छा.उ ८-१२-३ २२७. ब्र.सू. ४-४-१२

## ब्रह्मसूत्राणां निर्णायकत्वम्

### भाष्यम्

**न च सूत्रेषु निश्चितार्थस्यौपचारिकत्वं[२२८] वक्तुं युज्यते । निर्णयात्मकत्वात् तेषाम् । अतिप्रसङ्गश्चोपचारादिकल्पने । 'ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः'[२२९] इति हि विनिश्चितानि ब्रह्मसूत्राणि ।**

**बहुनाऽत्र किमुक्तेन यावच्छ्वेतं न गच्छति ।**
**योगी तावन्न मुक्तः स्यादेष शास्त्रस्य निर्णयः ।। इति च आदित्यपुराणे ।**

### भावप्रदीपः

कश्चित्त्विमानि सूत्राणि सगुणोपासकप्राप्यगौणमुक्तिपरतया व्याचष्टे । तदसत् । मुख्यमुक्तिपरत्वे बाधकाभावेनामुख्यार्थकल्पनाऽयोगात् । ब्रह्मज्ञानफलकथनार्थं ह्यस्याध्यायस्य प्रवृत्तिः । ज्ञानफलं च मुख्यैव मुक्तिः । न च गौणमुक्तिवर्णने किञ्चित् प्रयो-जनम् । तस्या अपि संसाररूपत्वादिति भावेनाह– **न च सूत्रेष्विति** ।। **औपचारिकत्वं** अमुख्यार्थत्वम् । कुत इत्यत आह– **निर्णयात्मकत्वादिति** ।। [२३०]निर्णायकरूपत्वादित्यर्थः । बाधका-भावेऽप्य-मुख्यार्थकल्पने बाधकमाह– **अतिप्रसङ्गश्चेति** ।। 'तदात्मानमेवावेदहं ब्रह्मास्मि'[२३१] इति 'सदेव सोम्येदमग्र आसीत्'[२३२] इत्यादावपि प्रतिपाद्यमान[२३३]ब्रह्माभेदादेर्गौणत्वप्रसङ्गादित्यर्थः ।

---

२२८. औपचारिकत्वादिकं इति ह.पाठः

२२९. महा.भा भी.प. ३५-४

२३०. सर्वशाखानिर्णायक इति 'ख'पाठः २३१. बृ.उ ३-१-४

२३२. छान्द.उ ६-२-१ २३३. ब्रह्मात्माभेद इति 'ख'पाठः

आदिपदेन अबाधितप्रातीतिकार्थपरित्यागेन अर्थान्तरकल्पनं गृह्यते । तथा च सूत्रेषु प्रतीयमानार्थतोऽन्योऽर्थोऽपि बाधकेन विनैव कल्पनीयः प्रसज्येतेत्यर्थः । तत्कुत इत्यत आह– **ब्रह्मसूत्रपदैरिति** ।। **विनिश्चितानि** असन्दिग्धतयाऽर्थप्रतिपादकानीत्यर्थः । यथोक्तम्- [२३४]'अल्पाक्षरमसन्दिग्धं' इत्यादि । किञ्च मायिना या श्वेतद्वीपादिविष्णुलोकप्राप्तिर्गौणमुक्तिरिति कल्प्यते, सैव मुख्यमुक्तिरिति प्रमाणेनैवाह– **बहुनेति** ।। **श्वेतं** श्वेतद्वीपम् । अत्र श्वेतद्वीपप्राप्त्यभावे मुक्तत्वमेव नास्तीत्युक्त्या 'एष शास्त्रस्य निर्णयः' इत्युक्त्या च तस्या एव मुख्यमुक्तित्वमवगम्यत इति भावः ।।

## मुक्तौ सुखभोगनिरूपणम्

### भाष्यम्

**न च निर्णयकानि[२३५] भगवद्वाक्यान्यपहाय मानुषवाक्यैरेव तेषामुपचारत्वादि[२३६] कल्प्यम् । न च भोगरहिता मुक्तिर्नामान्यास्तीत्यत्र किञ्चिन्मानम् ।**

**भुञ्जते पुरुषं प्राप्य यथा देवग्रहादयः[२३७] ।**
**तथा मुक्तावुत्तमायां विष्णुमाविश्य भुञ्जते ।।**
**विष्णोर्वशाश्च ते सर्वे सर्वदा दुःखवर्जिताः ।**
**न तु विष्णुगुणान् सर्वे भुञ्जते ते कदाचन ।।**

---

२३४. सू.भा. १-१-१ उदाहृतप्रमाणवचनम्

२३५. निर्णयात्मकानि इति ह्.पाठः

२३६. उपचारत्वादिकं इति ह्.पाठः

२३७. चैवग्रहादयः इति ह्.पाठः

बाह्यभोगान् भुञ्जते च तारतम्येन कांश्चन ।
विष्णोर्देहाद् बहिश्चापि निर्गच्छन्ति यथेष्टतः ।। इति स्कान्दे ।

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये[२३८] न व्यथन्ति च ।।
इति भगवद्वचनम् ।

**तस्मात् मुक्तैरपीज्यमानः सर्वस्माद्भिन्नः सर्वोत्तमः सर्वनामा सर्वशक्तिः सर्वगुणसम्पूर्णो नारायणः सर्ववेदादिषूच्यते इति सिद्धम् ।।२.२.३।।**

**भावप्रदीपः**

ननु न वाक्यानामापातप्रतीत एव तात्पर्यार्थ इति निश्चेतुं शक्यते । 'मृदब्रवीत्'[२३९] इत्यादेरपि तथात्वप्रसङ्गात् । किन्तु मानान्तराबाधितः । प्रकृते च मुक्त इत्यादिसूत्राणि न मुख्यमुक्तिपराणि । तथात्वेऽद्वैतब्रह्मभावापत्तिरेव मुख्यामुक्तिरिति वदतां गौडपादादीनां वाक्यविरोधापत्तेः । अत इमानि सूत्राणि गौणमुक्तिपराण्येवेति कल्प्यत इत्यत आह– **न चेति** ।। **वाक्यान्यपहाय** तदुक्तमसन्दिग्धमर्थं परित्यज्य **उपचारत्वं** अमुख्यार्थत्वम् आदिपदादर्थान्तरपरत्वं वा न कल्प्यम् । मानुषाणां भ्रान्त्यादिसम्भवात् (भगवदवतारस्य बादरायणस्य तदसम्भवात्)[२४०] इति भावः । किञ्च कुतो नेयं सूत्रोक्ता मुक्तिर्मुख्येति कल्प्यते, भोगोक्तेरिति चेन्न । भोगरहितमुक्तेरेव अप्रामाणिकत्वादित्याह– **न चेति** ।। **अन्या** मुख्या निष्क्रियत्वादिरूपा । ननु तर्हि कीदृशी

२३८. प्रळये इति ह.पाठः २३९. श.ब्रा. ६-१-३

१४०. () एतत् चिह्नस्थापंक्तिः 'क'पाठे नास्ति

मुख्यमुक्तिः, किञ्च तत्र भोगसद्भावे माननित्यत आह– **भुञ्जत इति** ।। **प्राप्य** प्रविश्य **देवग्रहादयः** देवाश्च ग्रहाश्च । आदिपदेन परकायप्रवेशादिसिद्धिमन्तो योगिनः । **विष्णुगुणान्** आनन्दादीन् **बाह्यभोगान्** विष्णुना भुज्यमानस्रगादिविषयान् कांश्चन स्वयोग्यानेव न सर्वानित्यर्थः । एवंभावश्च सायुज्यभाजामेव नान्येषाम्, तेषां तु सामीप्यादिमात्रमिति बोध्यम् । भगवद्गीतावचनेनापि परमुक्तिस्वरूपं द्रढयति– **इदमिति** ।। अत्र 'मम साधर्म्यमागताः' इत्यनेन मुक्तेश्वरयोर्भेदः । 'सर्गेऽपि' इत्यादिना परमोक्षत्वम् । न हि गौणमुक्तिमतामेवंभावः संभवति । खण्डार्थमुपसंहरति– **तस्मादिति** ।। **ईड्यमानः** स्तूयमान इति । तेनेन्द्रस्य प्रियं धामोपेयाय बृहतीसहस्रं शशंसेत्यादेस्तात्पर्यलब्धार्थकथनम् ।

ततश्चायं खण्डार्थः– अन्यदेवताविषयत्वेन प्रतीयमाना अप्यृचो मुख्यतो भगवद्विषया एव, अमुख्यतो वायुविषयाश्च । तस्मात्तच्छंसनेन भगवान्वायुश्चातिप्रियेते इति दर्शयति– **विश्वामित्रमित्यादिना** ।। अह्नि यज्ञे शंशनीयत्वात् अहरिति मन्त्रविषेशसंज्ञा अहःसंज्ञकं **एतत्** बृहतीसहस्रं महाव्रताख्ये यज्ञे **शंसिष्यन्तं** शंसितुमुद्युक्तं हौत्रे नियुक्तं विश्वामित्रं यजमानः पुरन्दरो दृष्ट्वा विष्णुवायुभ्यामाविष्टः शंसेत्युक्त्वा तस्य **उप** समीपे **निषसाद** निषण्णोऽभूत् । **स** विश्वामित्रः तं वेदमतिप्रीतिहेतुत्वादन्नमिवेत्यभिव्याहृत्य बृहतीसहस्रं शशंस । **तेन** शंसनेनेन्द्रस्येन्द्राविष्टस्य वायुसंयुतस्य हरेः **प्रियं धामोपेयाय** धाम्नः समीपं प्राप । अत्र प्रियधामसमीपप्राप्तिर्नाम भगवत्सालोक्यलक्षणफलप्राप्तिसाधनभगवत्प्रसादप्राप्तिरेव । तदैव विश्वामित्रेण भगवद्धाम्नोऽप्राप्तत्वात् । अत एव सामीप्यवाच्युपशब्दः । साधननिष्पत्तौ फलविलम्बाभावात् ।।

**तं** विश्वामित्रं **इन्द्र** इन्द्राविष्टो विष्णुरुवाच । हे ऋषे इदानीमेकवारशंसनेन **मे प्रियं धामोपागाः** सालोक्यसाधनप्रसादं प्राप्तवानसि । **स** एवं सिद्धसालोक्यस्त्वं **द्वितीयं** द्वितीयवारं शंसेति । स हान्नमित्यादि पूर्ववत् । **तेन** द्वितीयवारशंसनेनेन्द्रस्य **प्रियं धामोपेयाय** भगवत्पुरप्राप्तिसाधनतत्प्रसादं प्राप । तमिन्द्र उवाचेत्यादि पूर्ववत् । **तृतीयं** तृतीयवारम् । **तेन** तृतीयवारशंसनेनेन्द्रस्य **प्रियं धामोपेयाय** भगवदन्तःपुरप्राप्तिसाधन-तत्प्रसादं प्राप । तमिन्द्रो भगवानतितुष्टो भूत्वोवाच ऋष इत्यादि । **मे प्रियं धामोपागाः** अन्तःपुरप्राप्तिसाधनप्रसादं प्राप्तवानसि । पुनश्चतुर्थमेकवारं **ते** तुभ्यं ददामि त्वदभिप्रेतं[२४१] वरं वृणीष्वेति ।

**स** विश्वामित्र उवाच । त्वामेवाहं जानीयामिति । अत्रायमभिप्रायो विश्वामित्रस्य तेजोबाहुल्यादिन्द्रेऽन्योऽपि वर्तते । कोऽसौ? प्रायेणानेन विष्णुनैव भवितव्यम् । अन्यस्यैतादृशतेजोऽयोगात् । यदि चायं विष्णुः स्यात्तर्हि विशेषतो मया ज्ञातव्योऽयमिति । तथाच **त्वां** त्वदाविष्टं तावदहं प्रथमतो जानीयाम् । स विष्णुश्च **त्वां** त्वदाविष्टं विष्णुमेव विशेषतो जानीयामित्यर्थः । तमेवमभिप्रायद्वयेन पृष्टवन्तं विश्वामित्रं प्रति **इन्द्र** इन्द्राविष्टो भगवानुवाच । तत्र द्वितीयप्रश्नस्य श्रेष्ठत्वान्महामल्लभङ्गन्यायेन तस्य प्रथममुत्तरमभिधत्ते– **प्राणो वा इति** ॥ हे ऋषे इन्द्राविष्टो प्रकृष्टानन्दरूपत्वात्**प्राणः** प्राणशब्दवाच्यो **वै** तावत् । तथा अहेयत्वादहंनामा, असनाद्दोषादिनिरसनान्मनुते-र्ज्ञानाच्चास्मिनामा स **प्राणः** प्राणनामाऽहमेव **त्वं** ततत्वाद्वेत्तृत्वाच्च त्वंनामा **स** प्राणनामाऽहं **सर्वाणि** पूर्णत्वात्सर्वनामकः

२४१. त्वदपेक्षितं इति 'ख'पाठः

तादृशबहुरूपत्वाद्बहुवचनम् । एवम्भूतानीत्यप्युक्तोऽहं सर्वरूपेषु प्रभूतत्वात्पूर्णत्वात् सोऽहं प्राणः । **एषः** एषनामा सर्वैश्वर्यस्वरूपत्वात्, 'एश ऐश्वर्ये' । स[२४२] एष सूर्ये स्थित्वा **लोकं तपति** सन्तापयति प्रकाशयति च । अत एव तपन इत्युच्यते सोऽपि तपननामा अहमेवेति शेषः । नामसमन्वयप्रकरणात् नाम्नो सङ्कीर्तनं तु निर्वचनप्रदर्शनेनैव गुणलाभात् नामसङ्कीर्तनस्यापि गुणज्ञापनार्थत्वात् । स एवाहमेतेन सूर्यस्थितेन रूपेण सर्वा दिशो **विष्टः** प्रविष्टोऽस्मि व्याप्त इति यावत् । तस्यैवं सर्वनामवतो **मे** मम **अन्नं** अन्नाभिमानिनी रमा **मित्रं** भोग्यत्वात् भार्येति यावत् । सा कीदृशी **दक्षिणं** दक्षभागस्थितेनत्वाद्दक्षिणाख्या । अन्नशब्दानुसारेण दक्षिणमिति नपुंसकता । किं तदन्नं **तद्** रमाभिमन्यमानमन्नं न प्रसिद्धम्, किन्तु **वैश्वामित्रं** विश्वामित्रेण दृष्टं बृहतीसहस्रमेव । एवं द्वितीयप्रश्नस्य विशेषज्ञानसिद्ध्यर्थं सर्वनामवाच्यत्वादिविधानेन परिहारमुक्त्वा प्रथमप्रश्नस्योत्तरमाह– **एष इति** ।। 'य एष सूर्ये स्थित्वा तपति एष तपन् विष्णुरेवाहमस्मीत्युवाच' । हशब्देन सूर्यमण्डलस्थो विष्णुरिति ज्ञानं गायत्र्युपासकत्वाद्विश्वामित्रस्यास्त्येवेत्येषोऽर्थः प्रमाणप्रमित इति दर्शयति ।। २.२.३.।।

## बृहतीसहस्रस्थव्यञ्जनाद्यभिमानिदेवतानिरूपणम्

### उपनिषत्

**तद्वा इदं बृहतीसहस्रं सम्पन्नम् । तस्य यानि व्यञ्जनानि तच्छरीरम् । यो घोषः स आत्मा । य**

---

२४२. य इति 'ख'पाठः

**ऊष्माणः स प्राणः । एतद्धस्य वैतद्विद्वान् वसिष्ठो वसिष्ठो बभूव । तत एतन्नामधेयं लेभे । एतदु हैवेन्द्रो विश्वामित्राय प्रोवाच । एतदु हैवेन्द्रो भरद्वाजाय प्रोवाच । तस्मात् स तेन बन्धुना यज्ञेषु हूयते ।**

बृहतीसहस्रोपासनाया शतवर्षहरिध्यानफलनिरूपणम्

**तद्वा इदं बृहतीसहस्रं सम्पन्नम् । तस्य वा एतस्य बृहतीसहस्रस्य सम्पन्नस्य षट्त्रिंशतमक्षराणां सहस्राणि भवन्ति । तावन्ति शतसंवत्सरस्याह्नां सहस्राणि भवन्ति । व्यञ्जनैरेव रात्रीराप्नुवन्ति । स्वरैरहानि ।**

बृहतीसहस्रोपासनया ब्रह्मप्राप्तिः

**तद्वा इदं बृहतीसहस्रं सम्पन्नम् । तस्य वा एतस्य बृहतीसहस्रस्य सम्पन्नस्य परस्तात् प्रज्ञामयो देवतामयो ब्रह्ममयोऽमृतमयः सम्भूय देवता अप्येति, य एवं वेद । तद्योऽहं सोऽसौ । योऽसौ सोऽहम् । तदुक्तमृषिणा 'सूर्य आत्मा जगतस्थस्थुषश्च' इति । एतदु हैवोपेक्षेतोपेक्षेत ।।२.२.४।।**

**।। इति द्वितीयारण्यके द्वितीयोऽध्यायः ।।**

**भाष्यम्**

यावतीभिर्ऋग्भिः शंसिताभिः [२४३]षट्त्रिंशत्सहस्राण्यक्षराणि भवन्ति । यस्मात् कस्मादपि छन्दसस्तावत्यः शंसनीयास्तदा सम्पादितं बृहतीसहस्रं[२४४] भवति । तत्र या व्यञ्जनाभिमानिदेवता सैव सर्वप्राणिनां

२४३. षट्त्रिंशति इति ह.पाठः, २४४. सम्पादितबृहतीसहस्रं इति ह.पाठः

**शरीराभिमानिदेवता स्वायम्भुवो मनुः । घोषाभिमानिदेवता सर्वजीवाभिमानी ब्रह्मा । ऊष्माभिमानी वायुः ।**

**भावप्रदीपः**

'तद्वा इदं बृहतीसहस्रं सम्पन्नं' इत्येतत्खण्डं व्याकरिष्यंस्तत्र बृहतीसहस्रमित्येतावतैव पूर्तौ सम्पन्नमिति व्यर्थमिवाभाति । बृहतीसहस्रमित्यनेन च बृहतीच्छन्दस्कानामेवर्चां सहस्रमिदमिति भाति । अतस्तदुभयं निराकर्तुं व्याचष्टे– **यावतीभिरिति** ।। न बृहतीसहस्रसम्पादने बृहतीछन्दस्कानामेवर्चां शंसनं नियामकम् । किंतु बृहत्याः षट्त्रिंशदक्षरकत्वात् षट्त्रिंशत्सहस्राक्षरसम्भूतिमात्रम् । तच्च नानाच्छन्दस्काभिरपि ऋग्भिः शंसिताभिर्भवत्येव । अतस्तत्पूर्तिर्यावतीभिः स्यात्तावत्यः शंसनीयाः । ततश्च बृहतीसहस्रमेव सम्पन्नं भवतीत्यर्थः । एतच्च प्रथमारणे पञ्चमारणे च प्रदर्शितम् । तदनुसारेण तास्ता ऋच उद्धृत्य व्याख्यातं चास्माभिर्मुक्तामञ्जर्याम्[२४५] । 'तस्य यानि व्यञ्जनानि तच्छरीरं' इत्यादिवाक्यत्रयं व्याचष्टे– **तत्र येति** ।। अत्र व्यञ्जनपदेन कादयो मावसानाः स्पर्शा ग्राह्याः । घोषपदेन यरलवा अन्तःस्थाः । ऊष्माणः शषसहाः । स्वराक्षराणां प्रायेण तत्तदवयवानां तत्र तत्रैवन्तर्भावान्न पृथगुक्तिः । आत्मशब्देन ब्रह्मग्रहणे सर्वजीवाभिमानीति निमित्तकथनम् । प्राणशब्दार्थः– **वायुरिति** ।। तस्य प्राणाभिमानित्वात् । ततश्चाभिमानिनोरैक्याद् व्यञ्जनशरीरादीनामैक्यव्यपदेशोऽयमिति भावः ।।

---

२४५. भगवन्तरायैः कृतः बृहतीसहस्रव्याख्यानात्मकः अयं ग्रन्थः अप्रकटितः

## व्यञ्जनाद्यभिमानिदेवताबृहतीसहस्रोपदेशपरम्परयोर्निरूपणम्

### भाष्यम्

**व्यञ्जनानां शरीरस्य चाभिमानी मनुः स्मृतः ।**
**घोषाणां सर्वजीवानामभिमानी चतुर्मुखः ।।**

**ऊष्माभिमानी वायुश्च प्रतिपाद्यो जनार्दनः ।**
**एतेषामधिपं विष्णुं बृहत्युक्थस्य देवताम् ।।**

**उपास्यैव वसिष्ठोऽभूद् वसिष्ठः शक्र एव च ।**
**एतां विद्यां कौशिकाय भरद्वाजाय चादरात्[२४६] ।।**

**एतद्विद्याबलेनैव विद्याधीशेन बन्धुना ।**
**यज्ञेष्वाहूयते नित्यमिन्द्रो विष्णुप्रसादतः ।।**

### भावप्रदीपः

अत्र प्रमाणमाह– **व्यञ्जनानामिति** ।। यानि व्यञ्जनानीत्यादिकं प्रतिपाद्यदेवताया अप्युपलक्षणम् । अभिमानिदेवताज्ञानमात्रेण वक्ष्यमाणविद्याफलप्राप्त्ययोगादिति भावेनाह– **प्रतिपाद्य इति** ।। प्रतिपाद्यदेवताया अभिमान्यभिमन्यमानोभयनियामकत्वमप्यत्रोपलक्षणया ग्राह्यमिति भावेन 'एतद्ध स्म' इति फलवाक्यं व्याचष्टे– **एतेषामिति** ।। व्यञ्जनादीनां मन्वादीनां चेत्यर्थः । **बृहत्युक्थस्य** बृहतीसहस्रस्य **देवतां** प्रतिपाद्यम् । विद्वानित्यस्यार्थः– **उपास्येति** ।। 'एतदुहैवेन्द्रः' इत्यादि व्याचष्टे– **शक्र एव चेति** ।। एतामेवेत्येवकारान्वयः । 'तस्मात्स तेन बन्धुना यज्ञेषु हूयते'

---

२४६. चाददात् इति ह.पाठः

इत्यस्य व्याख्या– **एतदिति** ।। तत्र तस्मादित्यस्यार्थः– **एतद्विद्याबलेनेति** ।। तेनेत्यस्य **विद्याधीशेनेति** ।। तेनैव हूयत इत्य-न्यथाप्रतीतिवारणाय तेनेत्यादितृतीयायास्तात्पर्यार्थमाह– **विष्णु-प्रसादत इति** ।। तथाच **तेन** तत्प्रसादेन **स** इन्द्रो यज्ञेषु होत्रादिभिराहूयते यज्ञभागस्वीकारार्थमिति तद्वाक्यं विवृतं भवति ।

**बृहतीसहस्रगतद्वासप्ततिसहस्रभगवद्रूप-तद्ध्यानफलनिरूपणं**

**भाष्यम्**

**षट्त्रिंशद्रूपवान् विष्णुर्व्यञ्जनेषु च संस्थितः ।**
**तान्येव विष्णुरूपाणि रात्रीनामपि देवताः ।।**

**एकैकं च सहस्रं तद्व्यञ्जनेषु च रात्रिषु ।**
**रूपं विष्णोः स्थितं व्यूह्य षट्त्रिंशतिसहस्रधा ।।**

**षट्त्रिंशतिसहस्राणि स्वरगाणि हरेरपि ।**
**तान्येवाह्नां दैवतानि रूपाणि परमात्मनः ।।**

**द्वासप्ततिसहस्राणि रूपाण्येवं रमापतेः ।**
**शताब्दानामहोरात्रदैवतान्युत्तमानि च ।।**

**बृहतीसहस्रवर्णानामपि ध्यात्वाऽखिलान्यपि ।**
**शतवर्षहरिध्यानफलमाप्नोति पूरूषः ।।**

**भावप्रदीपः**

'तस्य वा एतस्य' इत्यादि व्याख्यातुमाह– **षट्त्रिंशदिति** ।। **व्यञ्जनेषु** बृहतीछन्दस्कर्चसम्बन्धिषु । चशब्दो वक्ष्यमाणरात्रिसमुच्चायकः । एतदेवाह– **तान्येवेति** ।। व्यञ्जनस्थितान्येवेत्यर्थः । ननु बृहती-

व्यञ्जनाक्षराणां षट्त्रिंशत्त्वात् तत्रत्यविष्णुरूपाणामपि तावत्त्वं युक्तम् । रात्रीणां त्वनन्तत्वात्कथं तान्येव विष्णुरूपाणि रात्रीणामपि देवता इत्युच्यन्ते । न च वाच्यं पुरुषायुषघटकरात्रिमात्रविवक्षयैवेयमुक्तिरिति । तथापि न सङ्ख्यासाम्यं तासां षट्त्रिंशत्सहस्रत्वात् । बृहतीव्यञ्जनगतरूपाणां च षट्त्रिंशन्मात्रत्वादित्यत उभयत्र सङ्ख्यासाम्यं घटयति– **एकैकं चेति** ।। तद्विष्णो रूपं षट्त्रिंशत्सङ्ख्याक**मेकैकं** प्रत्येकं सहस्रं भूत्वा बृहतीसहस्रसम्बन्धिषु षट्त्रिंशत्सहस्रेषु व्यञ्जनेषु षट्त्रिंशतिसहस्रधा **व्यूह्य** विभज्य स्थितम् । एतदेव षट्त्रिंशतिसहस्ररूपं **रात्रिषु** शतसंवत्सरसम्बन्धिनीष्वपि स्थितमतो न सङ्ख्यावैषम्यमिति भावः । एतेन 'व्यञ्जनैरेव रात्रिः' इत्येतद्व्यञ्जनरात्रिगतभगवद्रूपपरत्वेन व्याख्यातं भवति । 'स्वरैरहानी'त्येतदप्येवमेव व्याख्येयमित्याह– **षट्त्रिंशतीति** ।। **स्वरगाणि** बृहतीसहस्रगतषट्त्रिंशत्सहस्रस्वराक्षरगतानि स्वरगाण्यपि हरे रूपाणि षट्त्रिंशतिसहस्राणीति सम्बन्धः । **तान्येव** स्वरगाणि रूपाणि **अह्नां** शतसंवत्सरसम्बन्धिनां षट्त्रिंशतिसहस्राणां दैवतानीत्यर्थः । एवञ्च षट्त्रिंशतमक्षराणां सहस्राणि भवन्तीत्यत्र स्वरव्यञ्जनभेदेन प्रत्येकं षट्त्रिंशत्सहस्रत्वमक्षराणां तद्गतरूपाणां च ज्ञेयम् । न तु सम्भूय तावत्त्वम् । एवं 'तावन्ति शतसंवत्सरस्याह्नां सहस्राणि भवन्ति' इत्यत्राप्यहोरात्रि[२४७]भेदेन प्रत्येकमेव तावत्त्वं दिनानां तद्गतरूपाणां च, न तु सम्भूयेति भावेनाह– **द्वासप्ततीति** ।। 'व्यञ्जनैरेव रात्रीराप्नुवन्ति' 'स्वरैरहानी'ति वाक्यद्वये व्यञ्जनादिपदार्थमात्रस्य प्रागुक्तत्वादिदानीं वाक्यार्थमाह– **शताब्दानामिति** ।। 'अहरेव प्राणो

२४७. अहोरात्र इति 'ख'पाठः

रात्रिरेव रयिः' इत्यादिषु प्राणादीनामप्यहोरात्रदेवतात्वेनोक्तत्वात् तद्व्यावृत्त्यर्थं **उत्तमानीत्युक्तम्** । बृहतीसहस्रवर्णानामपीत्यपिपदेनोत्तमानि दैवतानीत्यस्यानुकर्षः । वायोरपि प्रतिपाद्यत्वाङ्गीकारादत्रापि **उत्तमानीति** विशेषणम् । **अखिलान्यपि** द्वासप्ततिसहस्राणि । एतेन **व्यंजनै**र्बृहतीसहस्रव्यंजनाक्षरदैवतैरेव षट्त्रिंशत्सहस्रै**रुपासितः** तेषामुपासनयेति यावत् । **रात्रीः** तावत्संख्याकरात्रिदेवता **आप्नुवन्ति** तत्ध्यानफलं लभन्ते, उपासकाः पुरुषा इति शेषः । व्यंजनदेवतानामेव रात्रिदेवतात्वाद्व्यंजनदेवतोपासने शतवर्षसंबन्धिरात्रिषु क्रमेण भगवदुपासने कृते यावत्फलं तावत्फलं प्राप्नुवन्ति इति यावत् । एवं 'स्वरैरहानी'त्येतदपि व्याख्येयमित्युक्तं भवति ।।

**बृहतीसहस्रपठनफलनिरूपणं प्रज्ञामय-ब्रह्ममय-अमृतशब्दवाच्यकथनं च**

**भाष्यम्**

**एवं ज्ञात्वापि[२४८] सम्पाद्य बृहतीनां सहस्रकम् ।**
**ज्ञानान्नारायणस्यैव प्रकृष्टज्ञानसन्ततेः ।।**

**स एव मे मयो विष्णुः प्रकृष्टज्ञानरूपकः ।**
**प्राधान्यं मयशब्दोऽयं वक्ति विष्णोः सदैव हि ।।**

**प्रधानोऽस्य हरिर्यस्मात् प्रज्ञारूपोऽधिदेवता ।**
**ब्रह्मामृतं च तेनायं ब्रह्मादिमय उच्यते ।।**

**सर्वोत्तमस्वरूपत्वाद्विष्णुरुक्तः स देवता ।**
**ब्रह्म पूर्णगुणत्वाच्च नित्यत्वादमृतं तथा ।।**

---

२४८. ज्ञात्वैव इति ह.पाठः

**एतादृशं तु यो विष्णुं प्रधानं वेत्ति सर्वदा ।**
**प्रज्ञादिभिर्गुणैः स्वस्मात् परेभ्यश्च सदाधिकम् ।।**

**प्रज्ञादेवब्रह्मामृतमयः स परिकीर्तितः ।**
**प्रज्ञादिमय एवं स भूत्वा देवान् क्रमेण च ।।**

**एति मारुतपर्यन्तान्मारुतेन च केशवम् ।**
**सम्पादनाच्च विद्यायाः अस्याः परत एव च ।।**

**भावप्रदीपः**

'तद्वा इदं बृहतीसहस्रं सम्पन्नं तस्य वा एतस्य बृहतीसहस्रस्य संपन्नस्य परस्तात्' इत्यादि व्याचष्टे– **एवमित्यादिना ।। एवं ज्ञात्वा** बृहतीनां सहस्रकं संपाद्य । एवं ज्ञानपूर्वकं बृहतीसहस्रशंसनं कृत्वेति यावत् । एतेन 'बृहतीसहस्रसंपन्नस्य परस्तादि'त्येतत् व्याख्यातं भवति । नारायणस्य ज्ञानात्प्रज्ञादिमयो भूत्वेत्युत्तरेणान्वयः । प्रकृष्ट-ज्ञानसंन्ततेरित्युपलक्षणम् । सर्वोत्तमस्वरूपस्य गुणपूर्णस्य नित्यस्येत्यपि ग्राह्यम् । एतानि च प्रज्ञादेवताब्रह्मामृतशब्दप्रवृत्तिनिमित्त-पराणि[२४९] नाराणस्य विशेषणानि । इदानीं प्रज्ञामयशब्दार्थमाह– **स एवेति ।।** प्रकृष्टज्ञानरूपकः स नारायण एव मे मय इति यो वेत्ति स प्रज्ञामय उच्यत इति शेषः । मयशब्दर्थमाह– **प्राधान्यमिति ।।** तच्च प्राधान्यं विष्णोरन्यस्यापि स्याच्चेत्तर्हि 'स एव मे मयो विष्णुः' इति सावधारणवेदनं भ्रम आपद्यत इत्यत आह– **विष्णोरिति ।।** प्राधान्यमिति वर्तते । विष्णोरेव सदा प्राधान्यं **हि** प्रणाणप्रमितं नान्यस्येत्यर्थः । एवमेव देवतामयो ब्रह्ममयोऽमृतमय इत्यत्राप्यर्थो

२४९. **निमित्तकथनपराणि इति 'ख'पाठः**

द्रष्टव्य इति भावेनोक्तानुवादपूर्वकं शब्दत्रयं व्याचष्टे– **प्रधानोऽस्येति** ।। **अस्य** ज्ञानिनः प्रज्ञारूपो हरिर्यस्मात्प्रधानस्तस्मादयं प्रज्ञामय उच्यते । यस्माच्चाधिदेवताभूतो हरिरस्य प्रधानस्तस्माद्देवतामय उच्यत इति शेषः । एवं ब्रह्माऽमृतशब्दवाच्यो हरिरस्य यस्मात्प्रधानस्तेन कारणेन ब्रह्ममयोऽमृतमयश्चोच्यते इत्यर्थः । अत्र प्रज्ञादिरूपो हरिर्मयो यस्येत्येव विग्रहः । 'स मे मय इति यो वेत्ति स तथोच्यते' इति तु तात्पर्यकथनं । अत एव प्राग्व्याख्यातस्य प्रज्ञामयपदस्य पुनरनुवादेन व्याख्यानमिति बोध्यम् ।

प्रज्ञाशब्दः प्रकृष्टज्ञानरूपक इति प्राग्व्याख्यातः । इदानीं देवताब्रह्मामृतशब्दान्विष्णौ निरूप्य[२५०] दर्शयति– **सर्वोत्तमेति** ।। तथाच देवताशब्द उत्तमवाची । स चात्र निरुपपदः । अतः सर्वोत्तमपर इति भावः । अत एव प्राक् **अधिदेवते**त्युक्तम् । उपपादितमर्थं बुद्ध्यारोहाय क्रोढीकारेणानुवदन्नर्थान्तरमपि दर्शयति– **एतादृशमिति** ।। प्रज्ञादिरूपमित्यर्थः । एतादृशं विष्णुं प्रधानं यो वेत्ति स प्राज्ञादिमयः परिकीर्तित इत्युक्तानुवादः । प्रज्ञादिभिर्गुणैरित्यादि अधिकार्थप्रदर्शनम् । तथा च प्रज्ञारूपो विष्णुः प्रज्ञामयः स्वास्मात्परस्माच्चाधिक इति यो वेत्ति स प्रज्ञामयः । देवतारूपो विष्णुर्देवतया देवत्वेन क्रीडादिगुणवत्त्वेन मयो यस्येति देवतामयः । **ब्रह्म** विष्णुः ब्रह्मत्वेन पूर्णत्वेन मयो यस्येति ब्रह्ममयः । अमृतो विष्णुरमृत्वेन नित्यत्वेन मयो यस्य सोऽमृतमय इति तदर्थ उक्तो भवति । एतेन 'य एवं वेदे'त्यपि विवृतं भवति । एवं प्रज्ञामयादिशब्दार्थमुक्त्वा 'तादृशस्सम्भूय देवता अप्येती'त्येतद्व्याचष्टे– **प्रज्ञादिमय इति** ।। 'सम्भूये'त्यस्यार्थो–

२५०. निरुच्य इति 'ख'पाठः

**भूत्वेति** । समित्युपसर्गार्थं तु वक्षति । एतीत्यनेन अपि एतीति छेदं सूचयति । अपिशब्दो विष्णुसमुच्चयार्थ इति भावेनोक्तं– **मारुतेन च केशवमिति** । 'बृहतीसहस्रस्य सम्पन्नस्य परस्तात्' इत्येतत् 'एवं ज्ञात्वैव संपाद्य बृहतीनां सहस्रकं' इति तात्पर्यतः प्राग्व्याख्यातं । तदेवेदानीं स्पष्टं व्याचष्टे– **सम्पादनादिति** ।। **अस्या** विद्याया बृहतीसस्राख्यायाः **संपादनात्** ज्ञानपूर्वकशंसनात्**परतो**ऽनन्तरमेव न तु विलम्बेन देवानेतीति पूर्वेणान्वयः । आद्यश्चशब्दः प्रकृतानुसन्धानार्थोऽस्याश्च विद्यया इति संबध्यते । द्वितीयस्तु हिशब्दार्थः, प्रमाणप्रसिद्धिद्योतकः ।

**बृहतीसहस्र-शरीरनाडी-अहोरात्रगतभगवद्रूपनिरूपणम्**

**भाष्यम्**

**द्वासप्ततिसहस्राणि रूपाणि हि रमापतेः ।**
**बृहतीसहस्रसंस्थानि स्वरव्यञ्जनभेदतः ।।**

**तान्येव पुरुषस्थानि यस्मात्पुरुषसंस्थितम् ।**
**बृहतीसहस्रं तच्छंस्यं व्यज्यते न ह्यृते नरम् ।।**

**द्वासप्ततिसहस्राणि तान्येवाहर्निशासु च ।**
**[२५१]विष्णुरूपाणि सूर्येऽपि त्वहोरात्रं हि सूर्यगम् ।।**

**तस्माद्योऽयमहं नामा सदाऽहेयत्वहेतुतः ।**
**स एवासौ सूर्यसंस्थः साक्षान्नारायणः प्रभुः ।।**

---

२५१. विष्णो रुपाणि इति ह.पाठः

**योऽसौ सूर्यगतो विष्णुः सोऽहेयो भास्करादिभिः ।**
**एवं मनुष्यजीवेषु सूर्यादिषु च संस्थितः ।।**

**एक एव परो विष्णुरिति जीवसमीपगम् ।**
**ईक्षेन्नारायणं देवं सर्वजीवेश्वरेश्वरम् ।। इत्यैतरेयसंहितायाम् ।**

**भावप्रदीपः**

'तद्योऽहं सोऽसौ योऽसौ सोऽहं' इत्येतद्व्याचष्टे– **द्वासप्ततीति** ।। यानि बृहतीसहस्रसंस्थितानि रूपाणि तान्येव पुरुषस्थानि ज्ञेयानि । कुतः? यस्मात् **छंस्यं** शंसनीयं **तत्** बृहतीसहस्रं पुरुषसंस्थं । तदपि कुतः? **हि** यस्मात् **नरं** शंसितृपुरुषं ऋते तन्न व्यज्यते तस्मादित्यर्थः । यानि च पुरषस्थबृहतीसहस्रसंस्थद्वासप्ततिसहस्राणि विष्णुरूपाणि तान्येव सूर्येऽपि सन्ति । कुतः यतोऽहर्निशासु संस्थितानि । अहर्निशासंस्थितत्वेऽपि सूर्यगत्वं कुतः? **हि** यस्मादहोरात्रं **सूर्यगं** सूर्यनियतमित्यर्थः । अस्त्वेवं ततः किं प्रकृत इत्यत आह– **तस्मादिति** ।। पुरुषस्थितबृहतीसहस्रगतरूपाणामेव सूर्यस्थिताहोरात्रस्थत्वादित्यर्थः । एतेन 'तत्' इति तच्छब्दार्थो विवृतः । 'योऽयमहन्नामेत्यादि' 'योऽहं सोऽसा'वित्यस्य व्याख्या । 'योऽसौ सोऽहं' इत्यस्यार्थो– **योऽसौ सूर्यगत इत्यादि** । भास्करादिभिरहेय इत्यहंशब्दार्थकथनम् । अत्र भास्करादिभिरिति श्रवणात् सदाऽहेयत्वहेतुत इत्यत्राऽपि नरादिभिरित्यध्याहार्यम् । एवं 'योऽहं सोऽसौ' 'योऽसौ सोऽहं' इति वाक्यद्वयं व्याख्याय तत्तात्पर्यं दर्शयति– **एवमिति** ।। 'एतदु है वोपेक्षेत' इति वाक्यमुपेक्ष्याङ्कुर्यादित्यन्यथाप्रतीतिनिरासाय व्याचष्टे– **इति जीवेति** ।। इतिशब्दः प्रकारवचनः । मनुष्यजीवेषु देवेषु संस्थित्वेन प्रकारेणैव जीवसमीपगमित्यर्थः ।

'योऽहं सोऽसौ' इत्यादिकं जीवेश्वरैक्यपरमेव अतस्तथादर्शनमेवेक्षेतेत्यनेन विधीयत इति किन्नस्यादित्यतो हेतुगर्भमिदमुदितं– **सर्वजीवेश्वरेश्वरमिति** । न हि तदधीनस्य तद्भावो युज्यत इति भावः ।।

**प्रज्ञामयादीनां भगवन्नामत्वकथनम् तदभिधेयरूपकथनं च**

**भाष्यम्**

**सम्पन्नस्य परस्तादेवानन्तरमेव । न पुनः कर्मान्तरेण शरीरारम्भ एवंविदो भवति । 'प्रज्ञामयो देवतामयः' इत्यादि पृथक् पृथङ्नय-शब्दोऽनिरुद्धादिचतुर्मूर्तीनामपि परस्परसाम्येन सर्वजीवेभ्य आधिक्यं ज्ञातव्यमिति दर्शयितुम् ।**

**अन्तर्यामिस्वरूपेण ज्ञापयन्ननिरुद्धकः ।**
**प्रज्ञेत्युक्तो द्योतनाच्च प्रद्युम्नो देवतोदितः ।।**

**अमं करोति यच्छास्त्रमृतं स्वस्मिन् पुनः पुनः ।**
**सङ्कर्षणोऽमृतं तस्माद् वासुदेवस्तु बृंहणात् ।।**

**जीवानां मुक्तिदानेन ब्रह्मेति कथितः प्रभुः ।**
**एवमेकोऽपि भगवांश्चतुर्धा समुदीरितः ।। इत्यादि चातुरात्म्ये ।**

**भावप्रदीपः**

एवं प्रमाणेन खंडं व्याख्यायापि पुनः स्पष्टार्थं[२५२] क्वचित्क्वचित्तात्पर्यप्रदर्शनपूर्वकं स्ववचनेन व्याचष्टे– **सम्पन्नस्येत्यादिना** ।। सर्वं वाक्यं सावधारणमसति बाधे इति भावेनानुवादे व्याख्याने चैव शब्दः ।

---

२५२. स्पष्टत्वार्थं इति 'ख'पाठः

तद्व्यावर्त्यप्रदर्शनं– **न पुनरिति** । **कर्मान्तरेण** अप्रारब्धेन । प्रज्ञा-देवताब्रह्मामृतमय इति द्वन्द्वान्ते मयडुक्तावप्युक्तार्थलाभात्पृथक्पृक् तदुक्तिः कुत इत्यतस्तत्प्रयोजनं दर्शयन्विशेषमाह– **प्रज्ञामय इति** ।। अन्यथा चतुर्मूर्तिव्यूहस्यैव जीवेभ्य आधिक्यं न त्वेकैकस्येति प्रतीतिः स्यादिति भावः । प्रज्ञादिशब्दा अनिरुद्धादिचतुर्मूर्तिपरा इति प्रमाणेनैव निरुच्य दर्शयति– **अन्तर्यामीति** ।। 'स एष जीवेना-त्मनाऽनुप्रविश्य' इति जीवाख्यानिरुद्धरूपस्य सर्वशरीरान्तर्यमित्वस्य सिद्धत्वात्– **अन्तर्यामिस्वरूपेणे**त्युक्तं । तथा च प्रकर्षेण ज्ञाप-यतीति **प्रज्ञे**त्युक्त इत्यर्थः । द्योतनात् देवता, प्रद्युम्नशब्दार्थोऽप्ययमेव । प्रकृष्टो द्युम्नः प्रकाशो यस्येति । **अम**ममितं वेदादिशास्त्रं **यद्** यस्मात् स्वस्मिन्नेव विषये **ऋतं** प्रमाणं पुनः पुनरुपदेशेन ब्रह्मादिषु **करोति** ज्ञापयतीत्यमृतं सङ्कर्षण इत्यर्थः । अमशब्दस्यान्तलोपः । सं सर्वं शास्त्रं स्वस्मिन्नेव विषये सम्यक्कर्षतीति संकर्षण इति संकर्षण-शब्दोऽपीममेवार्थं वक्ति । **बृंहणात्** ज्ञानानन्दादिना पूरणात् ।।

### द्वासप्ततिरूपोपासनया विष्णुसर्वोत्तमत्वज्ञानम्

### भाष्यम्

**'सम्भूये'त्यत्र समित्युपसर्गात् बृहतीसहस्रसम्पादनानन्तरं भग-वदाधिक्यं पुनराधिक्येन ज्ञायत इत्युक्तं भवति । भगवदाधिक्यमधिकं ज्ञात्वा देवता अपि क्रमेण प्राप्नोति ।**

**द्वासप्ततिसहस्राणां रूपाणां पर्युपासनात् ।**
**आधिक्यं ज्ञायते विष्णोर्नितरां हि पुनः पुनः ।।**

'योऽहं सोऽसौ' इत्यादिकं जीवेश्वरैक्यपरमेव अतस्तथादर्शनमेवे-क्षेतेत्यनेन विधीयत इति किन्नस्यादित्यतो हेतुगर्भमिदमुदितं– **सर्वजीवेश्वरेश्वरमिति** । न हि तदधीनस्य तद्भावो युज्यत इति भावः ।।

प्रज्ञामयादीनां भगवन्नामत्वकथनम् तदभिधेयरूपकथनं च

**भाष्यम्**

**सम्पन्नस्य परस्तादेवानन्तरमेव । न पुनः कर्मान्तरेण शरीरारम्भ एवंविदो भवति । 'प्रज्ञामयो देवतामयः' इत्यादि पृथक् पृथङ्मय-शब्दोऽनिरुद्धादिचतुर्मूर्तीनामपि परस्परसाम्येन सर्वजीवेभ्य आधिक्यं ज्ञातव्यमिति दर्शयितुम् ।**

**अन्तर्यामिस्वरूपेण ज्ञापयन्ननिरुद्धकः ।**
**प्रज्ञेत्युक्तो द्योतनाच्च प्रद्युम्नो देवतोदितः ।।**

**अमं करोति यच्छास्त्रमृतं स्वस्मिन् पुनः पुनः ।**
**सङ्कर्षणोऽमृतं तस्माद् वासुदेवस्तु बृंहणात् ।।**

**जीवानां मुक्तिदानेन ब्रह्मेति कथितः प्रभुः ।**
**एवमेकोऽपि भगवांश्चतुर्धा समुदीरितः ।। इत्यादि चातुरात्म्ये ।**

**भावप्रदीपः**

एवं प्रमाणेन खंडं व्याख्यायापि पुनः स्पष्टार्थं[२५२] कचित्कचित्ता-त्पर्यप्रदर्शनपूर्वकं स्ववचनेन व्याचष्टे– **सम्पन्नस्येत्यादिना** ।। सर्वं वाक्यं सावधारणमसति बाधे इति भावेनानुवादे व्याख्याने चैव शब्दः ।

---

२५२. स्पष्टत्वार्थं इति 'ख'पाठः

तद्व्यावर्त्यप्रदर्शनं– **न पुनरिति** । **कर्मान्तरेण** अप्रारब्धेन । प्रज्ञा-देवताब्रह्मामृतमय इति द्वन्द्वान्ते मयडुक्तावप्युक्तार्थलाभात्पृथक्पृक् तदुक्तिः कुत इत्यतस्तत्प्रयोजनं दर्शयन्विशेषमाह– **प्रज्ञामय इति** ।। अन्यथा चतुर्मूर्तिव्यूहस्यैव जीवेभ्य आधिक्यं न त्वेकैकस्येति प्रतीतिः स्यादिति भावः । प्रज्ञादिशब्दा अनिरुद्धादिचतुर्मूर्तिपरा इति प्रमाणेनैव निरुच्य दर्शयति– **अन्तर्यामीति** ।। 'स एष जीवेनात्मनाऽनुप्रविश्य' इति जीवाख्यानिरुद्धरूपस्य सर्वशरीरान्तर्यमित्वस्य सिद्धत्वात्– **अन्तर्यामिस्वरूपेणे**त्युक्तं । तथा च प्रकर्षेण ज्ञापयतीति **प्रज्ञे**त्युक्त इत्यर्थः । द्योतनात् देवता, प्रद्युम्नशब्दार्थोऽप्ययमेव । प्रकृष्टो द्युम्नः प्रकाशो यस्येति । **अम**ममितं वेदादिशास्त्रं **यद्** यस्मात् स्वस्मिन्नेव विषये **ऋतं** प्रमाणं पुनः पुनरुपदेशेन ब्रह्मादिषु **करोति** ज्ञापयतीत्यमृतं सङ्कर्षण इत्यर्थः । अमशब्दस्यान्तलोपः । सं सर्वं शास्त्रं स्वस्मिन्नेव विषये सम्यक्कर्षतीति संकर्षण इति संकर्षणशब्दोऽपीममेवार्थं वक्ति । **बृंहणात्** ज्ञानानन्दादिना पूरणात् ।।

### द्वासप्ततिरूपोपासनया विष्णुसर्वोत्तमत्वज्ञानम्

### भाष्यम्

**'सम्भूये'त्यत्र समित्युपसर्गात् बृहतीसहस्रसम्पादनानन्तरं भगवदाधिक्यं पुनराधिक्येन ज्ञायत इत्युक्तं भवति । भगवदाधिक्यमधिकं ज्ञात्वा देवता अपि क्रमेण प्राप्नोति ।**

**द्वासप्ततिसहस्राणां रूपाणां पर्युपासनात् ।**
**आधिक्यं ज्ञायते विष्णोर्नितरां हि पुनः पुनः ।।**

**प्राप्नोति देवताश्चैव केशवान्ताः क्रमेण तु ।**

**योग्या अस्याश्च विद्यायाः देवा ऋषय एव च ।। इत्यादि सत्तत्त्वे ।**

**भाष्यम्**

'संभूये'त्येतत् 'प्राज्ञादिमय एवं संभूत्वे'ति प्राग्व्याख्यातम् । तत्र संशब्दार्थो नोक्तोऽतस्तत्तात्पर्यमिदानीं दर्शयति– **संभूयेत्यत्रेति** ।। तथा च बृहतीसहस्रस्य सम्पन्नस्य परस्तात्तत्संपादानन्तरं **प्रज्ञादिमयः** प्रज्ञादिरूपो भगवानेव मे मयः प्रधान इति ज्ञानवान् **संभूय** सम्यक् भूत्वा पुनः आधिक्येन भगवदाधिक्यज्ञानं संपाद्येति तद्वाक्यार्थो बोध्य इति भावः । संभूय मिलित्वा युगपदेव देवता अप्येति प्राप्नोतीत्यन्यथाप्रतीतिं वारयन्नुक्तार्थानुवादपूर्वकं यथावद्योजयति– **भगवदिति** ।। क्रमेणेत्यनेन संभूयप्राप्तिं निराचष्टे । अत्र प्रमाणमाह– **द्वासप्ततीति** ।। 'बृहतीसहस्रस्य संम्पन्नस्य परस्तात्' इत्यस्य तात्पर्यकथनमेतत् । 'प्रज्ञादिमयः संभूये'त्यस्यार्थः– **आधिक्यं ज्ञायत** इत्यादि । देवताश्चेति चशब्दो देवता अपीत्यपिशब्दान्वयसूचनार्थः । द्वासप्ततिसहस्ररूपोपासनादौ सर्वेषां योग्यताभावादत्राधिकारिणो निरूपयति– **योग्या इति** ।।

भगवतः अहंनामकत्वकथनम्

**भाष्यम्**

**बृहतीसहस्रस्थितानि विष्णुरूपाणि पुरुषे स्थितानि पुरुषैरहेयत्वादहंनामकानि यान्येव तान्येव सूर्ये स्थितानि यान्येव सूर्ये स्थितानि तान्यपि सूर्यादिभिरहेयत्वादहंनामकानि तदेवोक्तं नारायणाख्यं परं ब्रह्मैव सर्वदा उप समीप ईक्षेत ।।**

**भावप्रदीपः**

'तद्योऽहं' इत्यादिकं जीवेश्वरैक्यपरतानिराकरणाय प्रस्तावनार्थं स्पष्टत्वार्थं च पुनर्व्याचष्टे– **बृहतीति** ।। अत्राहंनामकानीत्यन्तं 'योऽहं' इत्यस्यार्थः । तान्येव सूर्ये स्थितानीत्येतत् 'सोऽसौ' इत्यस्य । 'योऽसौ सोऽहं' इत्यस्यार्थो– **यान्येव सूर्येस्थितानीत्यादि** । 'एतदु है वोपेक्षेत' इत्येतदपि स्ववाक्येन विवृणोति– **तदेवेति** ।।

उपसर्गाणां सर्थकत्वम्

**भाष्यम्**

**नात्र जीवेश्वराभेदो विवक्षितः । 'उप समीपे[२५३] ईक्षेत' इति समीपे दर्शनवचनात् । न च निरर्थकत्वमुपसर्गस्याङ्गीकर्तुं युक्तम् । न ह्यार्षेषु वेदादिषु व्याकरणनिरुक्तादिषु चोपसर्गाणां वैय्यर्थ्यमङ्गीकृतं कुत्रचित् । उक्तं च भगवता व्यासेन–**

**नानर्थकः स्वरो वाऽपि वर्णो वा कुत्रचिद् भवेत् ।**
**पदं वाक्यं कुतश्च स्यान्नाल्पार्थमपि कुत्रचित् ।।**

**उच्चाराद्यर्थमपि वा नास्ति किञ्चित् स्वरादिकम् ।**
**महार्थमेव सर्वं हि वेदे वा वैदिकेऽपि वा ।। इति ।**

**सुकरं च सर्वपदानामनर्थकत्वकल्पनम् । यैश्च वाक्यैरर्थवत्त्वं प्रतीयते तेषामप्यनर्थकत्वमेव स्याद्विशेषाभावात् । न च मानुषवाक्येन वेदपदानामानर्थक्यं कल्प्यम् ।।**

---

२५३. ईक्षते इति पदं ह.पाठे नास्ति

## भावप्रदीपः

'तद्योऽहं सोऽसौ' इत्यादौ जीवेश्वराभेद एवोच्यत इति परेषामपव्याख्यानं प्रतिषेधति– **नात्रेति** ।। तथात्वे उत्तरवाक्यविरोधापत्तेरित्याह– **उपेति** ।। ननूपसर्गाणां धात्वर्थमात्रार्थकत्वस्यापि [२५४]'सम्यग्विषमविज्ञाने'त्यादौ दृष्टत्वादीक्षेतेत्यस्य योऽर्थः स एवोपेक्षेतेत्यस्यापि बोध्य इत्यत आह– **न चेति** ।। धात्वर्थातिरिक्तार्थानङ्गीकारे उपसर्गस्य निरर्थकत्वमेवाङ्गीकृतं स्यात् । न च निर्निमित्तं तदङ्गीकर्तुं युक्तमित्यर्थः । तत्कुत इत्यतः क्वाप्येवमदृष्टत्वादित्याह– **न हीति** ।। **आर्षेषु** ऋषिप्रणीतग्रन्थेषु । तत्र प्रणामाह– **उक्तं चेति** ।। पदं वाक्यं तु कुतोऽनर्थकं स्यात् । **उच्चाराद्यर्थमिति** ।। 'हयवरट्'[२५५] इत्यादौ हकारादिष्वकार उच्चारणार्थो यथा तथोच्चारार्थमपि कुत्रचिन्न भवतीत्यर्थः । आदिपदे सामगानभागपूरणार्थं 'हा वु' इत्यादिकमपि न निरर्थकमिति ग्राह्यम् । तथ च वक्ष्यते । निर्निमित्तमुसर्गाणां वैय्यर्थ्याङ्गीकारे पदानामप्यानर्थकत्वकल्पनप्रसङ्ग इत्याह– **सुकरं चेति** ।। किञ्च 'योऽहं सोऽसौ' इत्यादिवाक्यस्योक्तरीत्याऽर्थान्तरे सम्भवति जीवेश्वरैक्यमेवार्थ इति कुतः कल्प्यते । [२५६]'तत्वमसी'त्यादिसमाख्याबलादिति चेत्तत्राह– **यैश्चेति** ।। **यैश्च वाक्यै**स्तत्वमसीत्यादिभिः । 'योऽहं सोऽसौ' इत्यादिवाक्यानां जीवेश्वरैक्यरूपार्थवत्वं प्रतीयते तेषामप्यनर्थकत्वं किन्न स्यात् । उपशब्दतो विशेषाभावात् । ततश्च तद्बलात्प्रकृतवाक्यस्य जीवेश्वरैक्यपरताकल्पनमप्ययुक्तमेवेत्यर्थः । ननु गौड-

---

२५४. अनु. ३-३-९९ २५५. पा.सू. (मा.सू) १-१-१

२५६. छा.उ. ६-८-७

पादादिभिर्जीवेश्वरैक्यस्य स्वग्रन्थे वर्णितत्वादत्रोपशब्दस्य सामिप्यार्थतामङ्गीकृत्य जीवब्रह्मभेदपरताङ्गीकारे तद्विरोधः स्यादतस्तस्यानर्थक्यकल्पनं युक्तमेवेत्यत आह– **न चेति** ।। मानुषाणां भ्रान्त्यादिसंभवेन तद्वक्यस्याप्तिमूलत्वानिश्चयात्तद्विरोधेनापौरुषेयतयाऽनाशङ्कितदोषाणां वेदपदानामानर्थक्यकल्पनमयुक्तमेव, अतिप्रसङ्गादिति भावः ।।

**योऽहं सोऽहं इत्यत्र जीवेश्वराभेदो नोक्तः**

**भाष्यम्**

**जीवेश्वरैक्यङ्गीकारे 'योऽहं सोऽसौ' इत्येव पूर्यते पुनः 'योऽसौ सोऽहं' इति व्यर्थम् । न ह्यस्य तेनैक्ये तस्यानेन भेदशङ्का भवति । अस्य तस्येति भेदाङ्गीकारे नाभेदो मुख्यः । किन्तु तदधीनत्वमेवान्यस्य भवति स्नेहविशेषो वा । चैत्रो मैत्रो मैत्रश्चत्र इतिवत् । तत्र ह्युभयस्नेहापेक्षया पुनर्वचनं युज्यते । अभ्यासत्वे ह्येकप्रकारेण प्रयोगो दृष्टः । अत्र हि प्रयोगद्वैविध्यं दृश्यते ।**

**एकप्रकारा बहुशो वागभ्यास इतीरितः ।**
**अर्थान्तरार्था द्विविधा प्रयुक्तेति हि निर्णयः ।। इति गारुडे ।**

**भावप्रदीपः**

एवमेतद्वाक्यस्य जीवेश्वरैक्यपरत्वाङ्गीकरे बहिरंगानुपपत्तिमभिधायान्तरङ्गानुपपत्तिं चाह– **जीवेति** ।। कुते व्यर्थमित्यत आह– **न हीति** ।। तस्यानेनैक्यं विनाऽस्य तेनैक्यायोगादिति भावः । ननु भेदवदभेदोऽपि धर्मिप्रतियोगिरूपव्यक्तिद्वयसापेक्षः । अन्यथाऽस्य तस्येति निर्देशस्यैवायोगात् । ततश्च 'योऽहं सोऽसावि'ति जीवस्येश्वरेणैक्यक्तावपि व्यक्त्यन्तरलोपाभावादीश्वरस्य जीवेन भेदशङ्का

भवत्येव । अतस्तन्निवृत्यर्थं पुनः 'योऽसौ सोऽहं' इति जीवेनेश्वरस्यैक्यवचनं युक्तमेवेत्यत आह– **अस्य तस्येति** ।। यद्येवमस्य तस्येति निर्देशान्यथानुपपत्या व्यक्तिद्वयमङ्गीक्रियते तर्हि तयोरभेदो बाधित एव भवेत् । व्यक्त्योर्भेदं विना द्वित्वस्यैवायोगात् । तथा च जीवेश्वरयोर्भेद एवाङ्गीकृत इति 'योऽहं सोऽसौ' इत्याद्यभेदव्यपदेशो गौण एवाङ्गीगीकार्य इति भावः । अभेदव्यपदेशस्यामुख्यत्वे कोऽर्थोऽनेन लब्ध इत्यत आह – **किन्त्विति** ।। तयोर्मध्ये **अन्यस्य** अन्यतरस्य **तदधीनत्वं** इतराधीनत्वमेवानेनोक्तम् । न त्वभेदः । तत्रेश्वरस्य जीवाधीनत्वमनुभवादिसर्वप्रमाणबधितमितीश्वराधीनत्वमेव जीवस्याङ्गीकार्यमिति भावः । एवंविधाभेदव्यपदेशस्य लोके प्रकारान्तरेणाऽपि सदृष्टान्तं विषयं दर्शयति– **स्नेहविशेषो वेति** ।। नन्वत्राप्यनुपपत्तिरेव । न हि चैत्रस्य मैत्रस्नेहे मैत्रस्य चैत्रप्रद्वेषो युज्यत इत्यत आह– **तत्र हीति** ।। नायमस्ति नियमो यदेकस्यान्यस्मात् स्नेहेऽन्यस्याप्यस्मिन्स्नेहो वर्तत इति । पित्रादीनां बालादिषु स्नेहसत्वेऽपि बालादीनां पित्रादिषु कचित्तददर्शनात्तस्मात् परस्परस्नेहज्ञापनापेक्षया चैत्रो मैत्र इत्युत्त्वा मैत्रश्चैत्र इति पुनर्वचनं युज्यत इति भावः । ननु जीवेश्वरैक्यपरत्वाङ्गीकारेऽपि नात्रोत्तरवाक्यवैय्यर्थम् । ऐक्ये तात्पर्यद्योतनार्थमभ्यासरूपतोपपत्तेरित्यत आह– **अभ्यासत्व इति** ।।

[२५७]'स एषोऽणिमैतदात्म्यं' इत्यादावेकप्रकारेण प्रयोगाद्युक्तं तस्याभ्यासत्वम् । अत्र तु न तथा । 'तद्योऽहं सोऽसौ योऽसौ सोऽहं' इति द्वैविध्यस्यैव दर्शनादतो नेदमभ्यासरूपमिति भावः । प्रयोगवैचित्र्येऽप्यभ्यासत्वमेव किं न स्यादित्यतोऽत्र प्रमाणमुदाहरति–

२५७. छा.उ. ६-८-७

**एकप्रकारेति** ।। बहुश इत्यनेकमात्रोपलक्षणम् । अभ्यास इत्युद्देश्यैकप्रकारा बुहुशो वागितीरित इति वात्त्वविधानान्न लिङ्गव्यत्यासशङ्कावकाशः । द्विविधानेकप्रकाराप्रयुक्ता वाक् तु **अर्थान्तरार्था** अर्थान्तरपरैव न त्वभ्यासरूपेत्यर्थः ।।

अहंशब्दस्य जीवपरत्वनिषेधः

**भाष्यम्**

**अहंशब्दस्याहेयत्वाङ्गीकारे नराहेयत्वं सुराहेयत्वं चोच्यते इति च वैयर्थ्यम् । [२५८]'अः इति ब्रह्म तत्रागतमहं' इति 'न वा अहमिमं विजानाति'[२५९] 'तस्योपनिषदहं'[२६०] इत्यादौ विष्णोरेवाहेयत्वेनाहंनामकत्वप्रसिद्धेः । अहंशब्दस्यास्मच्छब्दार्थकत्वे 'अहमिमं न जानाति' इति न युज्यते । 'तस्य भूरिति शिरो भुव इति बाहू'[२६१] इत्यादिनाक्षिसंस्थो भगवानेव ह्यहंशब्दोदितः । न हि जीवस्याक्षिणि पृथक् शिरोबाह्वादिकं विद्यते । हृदि स्थितमेव हि तस्य स्वरूपम्[२६२] । जागरितेऽप्यक्ष्यादिषु विशेषसन्निहितं भवति दीपप्रकाशवत् ।**

**'अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि'[२६३] 'गुणाद्वालोकवत्'[२६४] इति च सूत्रात् ।**

---

२५८. ऐत.उ. २-३-८ २५९. बृह.उ. ६-५-१४

२६०. बृह.उ ७-५-३,४ २६१. बृह.उ. ७-५-३

२६२. रूपं इति ह.पाठः २६३. ब्र.सू २-३-२५

२६४. ब्र.सू. २-३-२६

भवत्येव । अतस्तन्निवृत्यर्थं पुनः 'योऽसौ सोऽहं' इति जीवेनेश्वरस्यैक्यवचनं युक्तमेवेत्यत आह– **अस्य तस्येति** ।। यद्येवमस्य तस्येति निर्देशान्यथानुपपत्या व्यक्तिद्वयमङ्गीक्रियते तर्हि तयोरभेदो बाधित एव भवेत् । व्यक्त्योर्भेदं विना द्वित्वस्यैवायोगात् । तथा च जीवेश्वरयोर्भेद एवाङ्गीकृत इति 'योऽहं सोऽसौ' इत्याद्यभेदव्यपदेशो गौण एवाङ्गीगीकार्य इति भावः । अभेदव्यपदेशस्यामुख्यत्वे कोऽर्थोऽनेन लब्ध इत्यत आह – **किन्त्विति** ।। तयोर्मध्ये **अन्यस्य** अन्यतरस्य **तदधीनत्वं** इतराधीनत्वमेवानेनोक्तम् । न त्वभेदः । तत्रेश्वरस्य जीवाधीनत्वमनुभवादिसर्वप्रमाणबधितमितीश्वराधीनत्वमेव जीवस्याङ्गीकार्यमिति भावः । एवंविधाभेदव्यपदेशस्य लोके प्रकारान्तरेणाऽपि सदृष्टान्तं विषयं दर्शयति– **स्नेहविशेषो वेति** ।। नन्वत्राप्यनुपपत्तिरेव । न हि चैत्रस्य मैत्रस्नेहे मैत्रस्य चैत्रप्रद्वेषो युज्यत इत्यत आह– **तत्र हीति** ।। नायमस्ति नियमो यदेकस्यान्यस्मात् स्नेहेऽन्यस्याप्यस्मिन्स्नेहो वर्तत इति । पित्रादीनां बालादिषु स्नेहसत्वेऽपि बालादीनां पित्रादिषु कचित्तददर्शनात्तस्मात् परस्परस्नेहज्ञापनापेक्षया चैत्रो मैत्र इत्युक्त्वा मैत्रश्चैत्र इति पुनर्वचनं युज्यत इति भावः । ननु जीवेश्वरैक्यपरत्वाङ्गीकारेऽपि नात्रोत्तरवाक्यवैय्यर्थम् । ऐक्ये तात्पर्यद्योतनार्थमभ्यासरूपतोपपत्तेरित्यत आह– **अभ्यासत्व इति** ।।

[२५७]'स एषोऽणिमैतदात्म्यं' इत्यादावेकप्रकारेण प्रयोगाद्युक्तं तस्याभ्यासत्वम् । अत्र तु न तथा । 'तद्योऽहं सोऽसौ योऽसौ सोऽहं' इति द्वैविध्यस्यैव दर्शनादतो नेदमभ्यासरूपमिति भावः । प्रयोगवैचित्र्येऽप्यभ्यासत्वमेव किं न स्यादित्यतोऽत्र प्रमाणमुदाहरति–

२५७. छा.उ. ६-८-७

**एकप्रकारेति** ।। बहुश इत्यनेकमात्रोपलक्षणम् । अभ्यास इत्युदेश्यैकप्रकारा बुहुशो वागितीरित इति वात्त्वविधानान्न लिङ्गव्यत्यासशङ्कावकाशः । द्विविधानेकप्रकाराप्रयुक्ता वाक् तु **अर्थान्तरार्था** अर्थान्तरपरैव न त्वभ्यासरूपेत्यर्थः ।।

अहंशब्दस्य जीवपरत्वनिषेधः

**भाष्यम्**

**अहंशब्दस्याहेयत्वाङ्गीकारे नराहेयत्वं सुराहेयत्वं चोच्यते इति च वैयर्थ्यम् । [२५८]'अः इति ब्रह्म तत्रागतमहं' इति 'न वा अहमिमं विजानाति'[२५९] 'तस्योपनिषदहं'[२६०] इत्यादौ विष्णोरेवाहेयत्वेनाहंनामकत्वप्रसिद्धेः । अहंशब्दस्यास्मच्छब्दार्थकत्वे 'अहमिमं न जानाति' इति न युज्यते । 'तस्य भूरिति शिरो भुव इति बाहू'[२६१] इत्यादिनाक्षिसंस्थो भगवानेव ह्यहंशब्दोदितः । न हि जीवस्याक्षिणि पृथक् शिरोबाह्वादिकं विद्यते । हृदि स्थितमेव हि तस्य स्वरूपम्[२६२] । जागरितेऽप्यक्ष्यादिषु विशेषसन्निहितं भवति दीपप्रकाशवत् ।**

**'अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि'[२६३] 'गुणाद्वालोकवत्'[२६४] इति च सूत्रात् ।**

---

२५८. ऐत.उ. २-३-८
२५९. बृह.उ. ६-५-१४
२६०. बृह.उ ७-५-३,४
२६१. बृह.उ. ७-५-३
२६२. रूपं इति ह.पाठः
२६३. ब्र.सू २-३-२५
२६४. ब्र.सू. २-३-२६

## भावप्रदीपः

ननु भवत्पक्षेऽपि वैय्यर्थ्यं दुष्परिहरमेव । अहंशब्दस्य वाक्यद्वयेऽप्यहेयत्वार्थकत्वाङ्गीकारादित्यतो मोक्तं विस्मार्षीरित्याह– **अहंशब्दस्येति** ।। **अङ्गीकारे**ऽअङ्गीकारेऽपि । किञ्चाहंशब्दप्रवृत्तिनमित्तं ह्यहेयत्वम् । तच्च विष्णोरेव मुख्यं नान्यस्य । अतोऽहंशब्दस्तस्मिन्नेव मुख्यो मन्तव्य इति प्रमाणोपन्यासपूर्वकमाह– **अः इतीति** ।। अ इत्यशब्दवाच्यं ब्रह्म **तत्र** ब्रह्मणि अहमिति पद**मागतं** वाचकतयाऽवगतमित्यर्थः । एतच्च वाक्यमेतदुपनिषद्गतमेव । यद्यपीदं भगवत्पादैरेव प्रकारान्तरेण व्याख्यास्यते । तथाप्ययमेवार्थः प्रकृते विवक्षितः सङ्गतत्वात् । अत एव तत्वनिर्णयटीकायामेवमेव व्याख्यातमिति बोध्यम् । द्वितीयं तु बृहदारण्यगतम् । **अह**महंशब्दवाच्यं भगवन्तं न विजानाति जीव इति तदर्थः । तृतीयमपि तद्गतमेव । **तस्य** विष्णोरहमित्युपनिषद्रहस्यं नामेत्यर्थः । अस्तु वा प्रथमवाक्येऽहंशब्दस्यास्मच्छब्दार्थत्वं, तस्य विष्णुवाक्यत्वेनैव व्याख्यास्यमानत्वात् । द्वितीयवाक्ये तु न सर्वथा तदर्थत्वं युज्यते । बाधकसद्भावादित्याह– **अहंशब्दस्येति** ।। विजानामीत्युत्तमपुरुषेण भवितव्ये प्रथमपुरुषप्रयोगो न युज्यत इत्यर्थः । पुरुषव्यत्ययस्तु न वृथाऽङ्गीकार्य इति भावः । नन्वस्तु तथाऽपि तृतीयश्रुतावहंशब्दो विष्णुवाचक इति कुतः ? अन्योऽपि तद्वाच्य किं न स्यादित्यत आह– **तस्येति** ।। अत्र हि [२६५]'योऽयं दक्षिणेऽक्षन्पुरुषस्तस्य' इत्यक्षिस्थस्य भगवतो भूरादिशब्दवाच्यशिरोबाह्वादिमत्वमभिधाय तस्मिन्नेव [२६६]'तस्योपनिषदहं' इत्यहंशब्दः प्रयुज्यते । तेन

२६५. बृह.उ. ४-३-६ २६६. बृह.उ. ७-५-३,४

ज्ञायतेऽत्राहंशब्दोदितो विष्णुरेवेतीति भावः । नन्वत्रोक्तोऽक्षिस्थोऽपि भगवानिति कुतः? जीवस्यापि तत्स्थत्वसंभवादित्यत आह– **न हीति** ।। जीवचैतन्यप्रकाशस्य देहव्यापित्वेनाक्षिणि तदाकारेणावस्थानसत्त्वेऽपि न शिरोबाह्वादिसमग्र्यङ्गतयाऽक्षिण्यवस्थानं विद्यत इत्यर्थः । तथा च पृथक् शिरोबाह्वादिमत्वेन जीवदेहाक्षिणि तस्यावस्थानोक्त्या भगवानेवायं न जीव इति निश्चीयत इति भावः । ननु [२६७]'हृदयस्थात्पराज्जीवो दूरस्थो जाग्रदेष्यति' इति जीवस्य जाग्रदवस्थायां दक्षिणाक्षिस्थत्वोक्तेः । कथं तस्याक्षिणि पृथगवस्थानाभावो वक्तुं शक्य? इत्यत आह– **हृदि स्थितमेवेति** ।। जाग्रदवस्थायामपि न जीवस्य सामग्र्येणाक्षिण्यवस्थानम् । किन्तु सर्वदा हृद्येव स्थितं तस्य ज्योतीरूपं जगरिते विशेषेण अक्ष्यादिषु अवयवेषु प्रकाशरूपेण सन्निहितं भवति । यथा दीपो गृहैकदेशे ज्योतीरूपेणावस्थितोऽपि प्रकाशरूपेण व्यापकोऽपि भवति तथेत्यर्थः ।

एतस्मिन्नेवार्थे सूत्रं प्रमाणयति– **अवस्थितीति** ।। अविरोधश्चन्दनवदित्युक्तमयुक्तम् । चन्दनबिन्दोः शरीरैकदेशे सम्यगवस्थानमन्यत्रासम्यगवस्थानमित्यवस्थितौ वैशेष्यादात्मनश्चातथात्वादिति चोन्न । [२६८]'हृदि ह्येष आत्मा' इति श्रुतेरात्मनोऽपि चन्दनबिन्दुवच्छरीरे **हृदि** हृदयस्थाने सम्यगवस्थितिस्तदितरत्रासम्यगवस्थितिरित्यभ्युपगमादित्याद्यसूत्रार्थः । वाशब्दः पक्षान्तरे । अथवा अणोरप्यात्मनः शीरव्याप्तिगुणाच्चिद्गुणस्य व्याप्तत्वादुपपद्यते । न च गुणिनोऽणुत्वे गुणस्य व्याप्तिरयुक्ता । आलोकवद्दीपवदुपपत्तेरिति द्वितीयसूत्रार्थः । सूत्रादित्यस्य प्रत्येकमन्वयादेकवचनोपपत्तिः । अत एव चशब्दः ।।

---

२६७. सू.भा. ३-२-१० २६८. षट्.उ. ३-६

## भिक्षुकस्य पातालाधिपतित्वं नास्ति

### भाष्यम्

**'आदित्ये हिरण्मयः पुरुषस्तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी'[२६९] इत्यादि सूर्ये स्थितस्य विष्णो रूपमुक्त्वाऽक्षिस्थितस्य[२७०] [२७१]'एतस्यैतस्य तदेव रूपं' इति[२७२] कथनाच्च । 'स एष एवैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे'[२७३] इत्यादि लोकाधिपत्यकथनाच्च । न हि कश्चिद् भिक्षुकः [२७४]पातालाद्यधिपतिरित्यत्र किञ्चिन्मानम् । तस्माद् भगवानेवाहेयत्वादहं नामा ।**

### भावप्रदीपः

इतश्चायमक्षिस्थो भगवनेवेत्याह– **आदित्य इति** ।। छान्दोग्ये प्रथमप्रपाठके[२७५] 'अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेष आप्राणनखात्सर्व एव सुवर्णस्तस्य यथा कप्यासं पण्डरीकमेवमक्षिणी तस्योदिति नाम' इत्यादिनाऽधिदैवतं सूर्यस्थितस्य विष्णोर्हिरण्मयादिरूपं नामादिकं चोक्त्वा [२७६]'अध्यात्मं य एषोऽन्तरक्षिणि पुरुषो दृश्यते सैवर्क तत्साम तदुक्थं तद्यजुस्तद्ब्रह्म तस्यैतस्य तदेव रूपं यदमुष्य रूपं' इत्यादिनाऽक्षिस्थस्यापि हिरण्मयरूपादिकथनाच्चाक्षिस्थो भगवनेवेत्यवगम्यते । अन्यथा तयोरैक्यरूप्याद्ययोगादित्यर्थः । लिङ्गान्तरेणाप्याक्षिस्थस्य विष्णुत्वं

---

२६९. छा.उ १-६-७
२७०. अक्षिस्थितस्यापि इति ह.पाठः
२७१. छा.उ १-७-५
२७२. रूपमित्यादि इति ह.पाठः
२७३. छा.उ १-७-६
२७४. पाताळाद्यधिपति इति ह.पाठः
२७५. छा.उ १-६-६
२७६. छा.उ १-६-७

प्रतिष्ठापयति– **स एष इति** ।। [२७७]'तेषां चेष्टे मनुष्यकामानां चेति' इति पातालाद्यर्वाङ् लोकाधिपत्यमस्मिन्नेवाक्षिस्थे कथ्यते । अतोऽप्ययमक्षिस्थो भगवानित्यवगम्यत इति भावः । लोकाधिपत्यकथनेऽपि कुतोऽयमक्षिस्थो भगवानेव न जीव इत्युच्यत इत्यत आह– **न हीति** ।। यदि लोकाधिपतित्वेन प्रसिद्धं भगवन्तं विना जीवस्यैतत्कल्प्यते तर्हि भिक्षुकस्यापि कस्यचित्कल्प्यताम् । तदप्रामाणिकमिति चेदिदमपि तथेति सममेवेति भावः । तस्मात् 'योऽहं' इत्यादावहंशब्दवाच्यो भगवानेवेत्युक्तं उपसंहरति– **तस्मादिति** ।।

### सूर्यान्तर्गतस्य जीवभिन्नत्वसमर्थनम्

#### भाष्यम्

**'चक्षुर्मित्रस्य वरुणस्याग्नेः'**[२७८] [२७९]**'जगतस्तस्थुषश्चात्मा'**[२८०] **इत्यादि जीवेभ्यो भेददर्शनाच्च ।**

**यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह ।**
**यच्चास्य सन्ततो भावस्तस्मादात्मेति कथ्यते ।। इति भारते ।**

#### भावप्रदीपः

किञ्चोक्तार्थे [२८१]'सूर्य आत्मा' इति सौरमन्त्र उदाह्रियते । तत्पर्यालोचनयाऽप्यत्र जीवेश्वरैक्यपरत्वकथनमनुपपन्नमेवेति भावेनाह– **चक्षुरिति** ।। मित्रादीनां चक्षुर्ज्ञानप्रदः । जङ्गमस्थावरात्मकसर्वजगत

---

२७७. छा.उ १-७-६
२७८. ऋक्.सं १-११४-१
२७९. ऋक्.सं १-११४-१
२८०. तस्थुषः आत्मा इति ह्.पाठः
२८१. ऋक्.सं १-११४-१

आत्मेत्यादिना सूर्यशब्दवाच्यस्य विष्णोः सर्वजीवेभ्यो भेदस्यैव प्रतिपादनान्नाभेदोऽत्र विवक्षित इत्यर्थः । नन्वात्मेत्यनेनैव जगदभेदः प्राप्त इति तत्राह– **यच्चेति** ।। नात्रात्मशब्दः स्वरूपार्थकः । जगत इत्यादिषष्ठ्या औपचारिकत्वप्राप्तेः । चक्षुर्मित्रस्येत्यादिपूर्ववाक्यविरोधापत्तेश्च । किन्तु आप्नोति आदत्ते अत्तीति चात्मेति व्युत्पत्त्या जगतो व्यापकः स्वामी संहर्ता चेत्यर्थक एवातो नाभेदप्रत्याशा कर्तव्येति भावः ।।

उपासकस्य देवतासु न च लयः

**भाष्यम्**

**देवता अपि एति प्राप्नोतीत्येव चार्थः । लयश्चेद्देवतास्वप्येतीति स्यात् । न च विनाशः पुरुषार्थः । मयट्शब्दस्य भगवत्प्राधान्यार्थत्वानङ्गीकारे 'सम्भूय देवता अप्येती'ति ल्यप् न युज्यते । उपासनायास्तु सम्पन्नस्य परस्तादित्युक्तत्वात् पूर्वमेव सिद्धिः ।**

**भावप्रदीपः**

नन्वत्र यद्यभेदो विवक्षितो न स्यात्तदा 'देवता अप्येती'ति ज्ञानिनो देवतासु कथं लयोक्तिः संभवति । चैतन्यैक्यं विना तास्वस्य लयासंभवादित्यत आह– **देवता इति** ।। **चो** यस्मादित्यर्थे । तस्मान्न विलीयत इत्यर्थः । कल्पनीय इति शेषः । तत्कुत इत्यत आह– **लय इति** ।। चेत् विवक्षित इति शेषः । तदा देवतास्वाप्येतीति सप्तमीनिर्देशः स्यान्न तु देवता इति द्वतीयानिर्देशः । लयस्याधिकरणसापेक्षत्वेन कर्माकांक्षाभावदित्यर्थः । अस्तु वा लयार्थकत्वं । न तावता चैतन्यैक्यसाद्धिः । लयो नाम विनाश एव । स च

देहस्यैव वा? स्वरूपस्य वा? नाद्यः । देहविनाशेऽपि चैतन्यैक्यानापत्तिसंभवात् । न द्वितीयः । स्वरूपनाशे देवताचैतन्येनैक्योत्त्यसंभवात् । स्वरूपनाश एवैकीभावव्यवहारगोचर इति चेन्न । तस्यापुरुषार्थत्वादित्याशयेनाह– **न चेति** ।। ननु 'प्रज्ञामयो देवतामयः' इत्यादिमयटः प्राधान्यार्थत्वमङ्गीकृत्य व्याख्यातम् । तत्तु न बुध्यामहे । तादात्म्यार्थकताया अपि संभावादित्यत आह– **मयडिति** ।। ल्यपा प्रज्ञादिमयता प्राप्त्यानान्तर्यं देवताप्ययस्य लभ्यते । न च तद्युज्यते । प्रज्ञादिभावस्यैव मोक्षरूपत्वेन देवताप्ययस्य तदनन्तरफलत्वायोगात् । [२८२]'देवतामयो भूत्वा देवता अप्येति' इत्यस्य तु सुतरामयोगाच्चेत्यर्थः । ननु 'देवता अप्येति' इत्येतदेव फलवाक्यं 'प्रज्ञामयः' इत्यादि तु प्रज्ञादिमयोऽहमिति भावनां कृत्वा इत्युपासनापरम् । अतो न ल्यबनुपपत्तिरित्यत आह– **उपसनायास्त्विति** ।। अतः फलवाक्यमेवेदमिति वाच्यम् । अन्यथा 'परस्तात्संभूय' इत्यानन्तर्यद्वयकल्पनापातात् । न हि कथितरीत्या बृहतीसहस्रसम्पादनातिरिक्तं प्रज्ञादिमयत्वेनोपासनमस्ति । सत्वे वा तत्संपादनस्यैवापत्तेः । न च तत्संपादनस्य प्रज्ञादिमयत्वेनोपासने कमप्युपयोगं पश्यामः । तथा च तत्पक्षे ल्यपोऽनुपपत्तिर्दुष्परिहारेति भावः ।।

## अभेदोपासनस्य अनर्थहेतुत्वकथनम्

### भाष्यम्

**सर्वस्माद्भिन्नमीशेशं जीवाभेदेन यः स्मरेत् ।**

---

२८२. ऐत.उ. २५०-पु

**स यात्यन्धतमो घोरं नित्यातिशयदुःखदम् ॥**

**सर्वोत्तमं तु यो विष्णुं भिन्नं जानाति सर्वतः ।**
**नित्यानन्दमसौ याति वासुदेवप्रसादतः ॥**

**इति चैतरेयसंहितायाम् ।**

**अतः सर्वव्यतिरिक्तः सर्वोत्तमः सर्वगुणसम्पूर्णो नारायण इति सिद्धम् ।**

**सर्वप्रमाणसिद्धत्वं वक्तुमाध्यायमूलतः ।**
**अध्यायान्ते द्विरुक्तिः स्यात् पूर्वोक्तस्यावधारणे ॥**

**इति शब्दनिर्णये ॥**

**॥ इति द्वितीयारण्यके द्वितीयोध्यायः ॥**

**भावप्रदीपः**

अभेदज्ञानस्यानर्थफलकत्वाच्च नाभेदोऽत्र विवक्षितः । किन्तु भेदज्ञानस्य पुरुषार्थहेतुत्वात्तत्रैव तात्पर्यमिति प्रमाणेनैवाह– **सर्वस्मादिति** ॥ खण्डार्थमुपसंहरति– **अत इति** ॥ अध्यायान्ते 'उपेक्षेतोपेक्षेत' इति द्विरुक्तेः प्रयोजनं प्रमाणेनैवाह– **सर्वेति** ॥ **आ अध्यायमूलतः** अध्यायमूलादारभ्य सर्वस्याप्युक्तस्य प्रमाणसिद्धत्वं **वक्तुं** सूचयितुम् । तथा च पूर्वोक्तस्यार्थस्य **अवधरणे**ऽवधारणार्थं चाध्यायान्ते द्विरुक्तिः स्यादित्यर्थः ॥

ततश्चायं खण्डार्थः । यावतीभिः ऋग्भिः शंसिताभिः षट्त्रिंशत्सहस्राण्यक्षराणि भवंति यस्मात् कस्मादपि छन्दसस्तावत्यः शंसनीयास्तदा तद्वा इदं बृहतीसहस्रं संपन्नं भवत्येव । न बृहतीछन्दस्कऋक् सहस्रेणैव भाव्यमिति नियमः । तत्र बृहतीसहस्रे यानि

**व्यंजनानि** कादिमावसानानि स्पर्शाक्षराणि **तच्छरीरं** तानि शरीराभिमानि स्वायंभुवमनुदेवताकानि । **यो घोषः** यानि यरलवरूपाणि घोषापरपर्यायाण्यन्तस्थाक्षराणि **स आत्मा** तानि जीवाभिमानिचतुर्मुखदेवताकानि । **ये ऊष्माणः** शषसहाः **स प्राणः** ते वायुदेवताकाः । स्वराक्षराणि तु तत्तदवयवभूतानि तत्रैवान्तर्भूतानीति न पृथुगुक्तानि । उपलक्षणमेतत् । बृहतीसहस्रवर्णानां तदभिमानिनां च नियामकस्तत्प्रतिपाद्यश्च भगवानित्यपि ग्राह्यम् । अत एव फलवाक्ये एतदेतदिति पदद्वयम् । **एतत्** मन्वादीनां बृहतीतीसहस्रवर्णाभिमानत्वम् । पुनः **एतत्** भगवतस्तत्प्रतिपाद्यत्वं तदुभयनियामकत्वं च **विद्वान्** जानन् एतादृशं विष्णुमुपास्यैवेति यावत् । **वसिष्ठो** वसिष्ठपदयोग्यो जीवो **वसिष्ठो बभूव** ततश्च सर्वेषु वेदपुराणादिष्वेतन्नामधेयं वसिष्ठ इति नाम **लेभे** प्रसिद्धोऽभूदिति यावत् । ह,स्म,वेति निपातत्रयमतिप्रसिद्धिद्योतकम् । **एतदु है व** एतद्विद्यामेव इन्द्रो विश्वामित्राय प्रोवाच । एतदु है वेन्द्रो भरद्वाजायापि प्रोवाच । **तस्मात्** एतद्विद्याबलादेव **स इन्द्रस्तेन बन्धुना** विष्णुना एतद्विद्याप्रतिपाद्यविष्णुप्रसादेन यज्ञेषु यज्ञभागस्वीकारार्थं होत्रादिभिः **हूयते** आहूयत इत्यर्थः ॥

बृहतीसहस्रनिष्ठं विद्यान्तरं वक्तुं पुनस्तन्निर्दिशति– **तद्वा इदं बृहतीसहस्रं संपन्नमिति** ॥ तस्य वा एतस्य बृहरतीसहस्य संपन्नस्य संभूयाक्षरपरिगणने स्वरव्यंजनभेदेन प्रत्येकं षट्त्रिंशतमक्षराणां सहस्राणि भवन्ति । षट्त्रिंशतशब्दः षट्त्रिंशच्छब्दपर्यायः । द्वासप्ततिसहस्राणि भवन्तीति यावत् । एवमेतदक्षरदेवतानां भगवद्रूपाणामपि स्वरव्यंजनभेदेन प्रत्येकं षट्त्रिंशत्सहस्राणि द्वासप्तति-

सहस्राणि भवन्ति । शतसंवत्सरस्य **अह्नां** दिनानां सहस्राण्यपि **तावन्ति** षट्त्रिंशदेव भवन्ति । तद्गतविष्णुरूपाणामपि तावन्त्येव सहस्राणि भवन्ति । अत्राप्यहोरात्रभेदेन दिनानां तद्गतरूपाणां च प्रत्येकं षट्त्रिंशत्सहस्रत्वमेव ज्ञेयम् ।

तत्रायं विवेकः । बृहतीसहस्रे यानि व्यञ्जनगतानि रूपाणि तान्येव शतसंवत्सररात्रीणां देवताः । यानि च स्वरगतानि तान्येव शतसंवत्सरीयान्ह्वामिति । ततश्च **व्यंजनैरेव रात्रीराप्नुवन्ति** बृहती-सहस्रगतव्यंजनाक्षरदेवतैरेव षट्त्रिंशतिसहस्रैरुपासितैः तेषां उपासन-येति यावत् । तावत्संख्याकरात्रिदेवता **आप्नुवन्ति** तद्ध्यानफलं लभन्ते उपासकाः पुरुषाः । व्यंजनगतरूपाणामेव रात्रिदेवतात्वा-द्व्यंजनगतरूपोपासने शतवर्षसंबन्धिरात्रिषु क्रमेण भगवदुपासने कृते यावत्फलं तावत्फलं प्राप्नुवन्तीति यावत् । एवं स्वरैरहानीत्येतदपि व्याख्येयम् ।।

विद्यान्तरकथनाय पुनर्निर्दिशति– **तद्वा इति** ।। तदेव विद्यान्तरं निरूपयति– **तस्येति** ।। तस्य वा एतस्य बृहतीसहस्रस्य संपन्नस्य **परस्तात्** एवं ज्ञानपूर्वकं बृहतीसहस्रसंपादनानन्तरमेव तच्छंसना-नन्तरमेव । न पुनः कर्मान्तरेण शरीरारंभे तत्पातानन्तरमिति यावत् । **प्रज्ञामयः** प्रज्ञा प्रकृष्टज्ञानं तद्रूपो विष्णुः प्रज्ञामयः । स्वस्मात्परेभ्यश्च मयः प्रधानो यस्य, तथा यो वेत्तीति यावत् । स प्रज्ञामयः । सर्वोत्तमस्वरूपत्वाद्देवतारूपो विष्णुः देवतया देवत्वेन क्रीडादिगुणवत्वेन मयो यस्येति **देवतामयः** । पूर्णगुणत्वाद्ब्रह्म विष्णुः ब्रह्मत्वेन पूर्णत्वेन मयो यस्येति **ब्रह्ममयः** । अमृतो नित्यो विष्णुः सोऽमृतत्वेन नित्यत्वेन मयो यस्येत्य**मृतमयः** । एवं प्रज्ञादि-मयोऽधिकारी **संभूय** सम्यग्भूत्वा । अत्र समित्यनेन बृहतीसंपादनान-

न्तरं भगवदाधिक्यं पुनर्विशेषेण ज्ञायत इत्युक्तं भवति । एवमतिशयेन भगवदाधिक्यज्ञानवान् भूत्वा **देवताः** स्वोत्तमाः मारुतान्ताः, अपिशब्दात् मारुतमुखेन विष्णुं च **एति** क्रमेण प्राप्नोति । एतद्विद्योपासनायोग्यो देवर्षन्यतमोऽधिकारीत्यर्थः । मारुतविष्ण्वन्तादेवता **अप्येति** प्राप्नोतीति वा । अत्र प्रज्ञादेवतामृतब्रह्मशब्दैः सामान्यतो विष्णुवाचकैरनिरुद्धप्रद्युम्नसंकर्षणवासुदेवाख्याश्चतस्रो मूर्तयो विशेषतोऽप्युच्यन्ते । अत एव तासां चतसृणामपि परस्परसाम्येन सर्वजीवेभ्य आधिक्यं ज्ञातव्यमिति पृथक् पृथक् मयशब्दः । अन्यथा प्रज्ञादेवताब्रह्मामृतमय इति निर्देशापत्तेः । **य एवं वेदे**त्यस्य योऽधिकर्येवं प्रज्ञादिरूपो हरिर्मे मय इति वेद स प्रज्ञामयो देवतामय इत्याद्युच्यते । ततश्च प्रज्ञादिमयः संभूय देवता अप्येतीत्यावृत्या योजना । एवं द्वासप्ततिसहस्रभगवद्रूपाणां स्वरव्यंजनभेदेन बृहतीसहस्रगतत्वोक्त्या पुरुषसंस्थितत्वमपि लब्धम् । शंसनीयबृहतीसहस्रस्य पुरुषसंस्थत्वात् पुरुषं विना तदनभिव्यक्तेः तथैव तेषामेव रूपाणामहोरात्रगतत्वोक्त्या सूर्यगतत्वमपि लभ्यते । अहोरात्रस्य[२८३] सूर्यगतत्वत् । सूर्यगत्यैवाहोरात्रभेदावक्लृप्तेः । तथा च **तत्** तस्मादुक्तरीत्या पुरुषस्थितबृहतीसहस्रगतरूपाणामेव सूर्यस्थिताहोरात्रगतत्वात् । **योऽहं** नराहेयत्वादहंनामा द्वासप्ततिसहस्ररूपवान् विष्णुः पुरुषस्थः स एव **असौ** सूर्यसंस्थः । न चैवमभेदेऽपीन्द्रार्जुनादिवत्कश्चिद्विशेषः शङ्कनीयः । किन्तु **योऽसौ** सूर्यगतो विष्णुः **सोऽहं** भास्करादिभिरहेयत्वादहंनामा पुरुषसंस्थ इत्यर्थः । अत्र मन्त्रसंमतिमाह– **तदुक्तमिति** ।। **तत्** सर्वान्तर्यामिभगवद्रूपाणामैक्यं **ऋषिणा**

---

२८३. अहोरात्राणं इति 'ख'पाठः

मन्त्रद्रष्ट्रोक्तम् । कथं **सूर्यः** सूर्यगतः सूरिगम्यत्वात्सूर्यनामा भगवान् **जगतो** जङ्गमस्य **तस्थुषः** स्थावरस्य च **आत्मा** व्यापकोऽन्तर्यामी चेत्युक्तमित्यन्वयः । यत एवं सर्वान्तर्यामी तत एतन्नारायणाख्यं परं ब्रह्म **उप** जीवसमीपगं जीवान्तर्यामितयैवावस्थितं **ईक्षेत** जानीयादिति यावत् । न तु तदैक्येन । उपलक्षणमेतत् । सर्वोत्तमत्वेन सर्वगुणसम्पूर्णत्वेन च जानीयादित्यपि द्रष्टव्यम् ॥

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचित**

**श्रीमन्महैतरेयोपनषद्भाष्यभावप्रदीपे द्वितीयारण्यके**

**द्वितीयोऽध्यायः ॥**

## अथ द्वितीयारण्यके तृतीयोऽध्यायः

बृहतीसहस्रेषु पञ्चविधभगवद्रूपोपासनम्

उपनिषत्

**ॐ यो ह वा आत्मानं पञ्चविधमुक्थं वेद, यस्माद्धीदं सर्वमुत्तिष्ठति, स सम्प्रतिवित् ।**

आत्मा-उक्थादिशब्दनिर्वचनपूर्वकं पञ्चविधरूपनिरूपणम्

भाष्यम्

योऽसौ नारायणो देवः परमात्मा सनातनः ।
नित्याततगुणत्वात् स आत्मेत्युक्तः सदा श्रुतौ ।।

नारायणादिरूपेण पञ्चधाऽवस्थितः सदा ।
सर्वस्योत्थापकत्वात् स उक्थमित्यभिधीयते ।।
बृहतीसहस्ररूपे च स उक्थे पञ्चधा स्थितः ।

बृहतीसहस्रस्य पाञ्चविध्यकथनम्

पञ्चभेदं हि तच्छस्त्रं तृचाशीतित्रयं च यत् ।
पूर्वापरं तृचाशीत्या इति पञ्चात्मकं हि तत् ।।

भावप्रदीपः

अनिरुद्धादिपञ्चात्मा बृहत्युक्थसमीडितः ।
अर्धनारीनराकारो भासतां मे हरिर्हृदि ।।

'यो ह वा आत्मानं' इत्येतत्खण्डं व्याचष्टे[१]– योऽसावि-

१. व्याख्याति इति 'ख'पाठः

**त्यादिना** ।। तत्रात्मानं जीवमित्यन्यथाप्रतीतिनिरासाय व्याचष्टे– **योऽसाविति** ।। पूर्वाध्यायद्वयोक्तो नारायण एवात्राततगुत्वात्मशब्देनोक्तो न जीवः । अन्यथा प्रकृतहानाप्रकृतस्वीकारापत्तेरिति भावः । आङ् पूर्वात्तनोतेर्डनिन् । तस्य पञ्चविधत्वं घटयति– **नारायणादीति** ।। उक्थशब्दं तस्मिन्निर्वक्ति– **सर्वस्येति** ।। **उत्थापकत्वात्** जनकत्वात् । एतेन 'यस्मादिदं सर्वमुत्तिष्ठति' इत्येतदुक्थशब्दनिर्वचनपरमित्युक्तं भवति । पञ्चविधोक्थस्थितत्वाच्चायं तथोच्यत इति भावेनाह– **बृहतीति** ।। चशब्दो व्याख्यानान्तरसमुच्चये । उक्थस्यापि कथं पांचविध्यमित्यतो निरूपयति– **पञ्चभेदमिति**।। **शस्त्रं** बृहतीसहस्रमुक्थम् । कथं पञ्चभेदं **यत्** यस्मात् **तृचाशीतित्रयं, तृचाशीत्याः** तृचाशीतित्रयात् पूर्वात्परं पूर्वमपरं चेति तच्छस्त्रं पञ्चात्मकं **तत्** तस्मात्पञ्चभेदमित्यर्थः । एतच्च बृहतीसहस्रटीकायां मुक्तामञ्जर्यां अस्माभिः सविस्तरमुक्तं तत्रैव द्रष्टव्यम् ।।

### पञ्चविधबृहतीसहस्रे भगवतो रूपकथनम्

### भाष्यम्

**प्रथमे पञ्चकाद्भागे स्थितो नारायणः स्वयम् ।**
**ऋक्त्रयाशीतिके पूर्वे गायत्रीच्छन्दआत्मके ।।**

**वासुदेवः स्थितो नित्यमृगशीतित्रये तथा ।**
**द्वितीये बृहतीच्छन्दस्यसौ सङ्कर्षणः स्थितः ।।**

**यस्यावेशबलेनैव जीवः सङ्कर्षणोऽपरः ।**
**पृथिवीं बिभर्ति सततं तत्प्रसादात्तवैभवः ।।**

**तृतीयायां तृचाशीत्यामुष्णिक्छन्दसि केशवः ।**
**प्रद्युम्नरूपी सततं स्थितो यस्यैव सन्निधेः ।।**

**कामः प्रद्युम्ननामाभूत् तत्प्रसादात्तवैभवः[२] ।**
**उक्थस्यैवान्त्यभागे तु सोऽनिरुद्धो हरिः स्थितः ।।**

**कामपुत्रोऽनिरुद्धाख्यां यदावेशेन लब्धवान् ।**
**एवं पञ्चात्मकं विष्णुं बृहत्युक्थस्य देवताम् ।**
**यो वेद सम्यग्वेत्ता सः..............।।**

## भावप्रदीपः

एवमधिष्ठेयपांचविध्यं निरूप्य अधिष्ठातुः पांचविध्यं विशदयति– **प्रथम इति ।। पञ्चकात्** पञ्चकस्य प्रथमे भागे नारायणः । **पूर्वे** पूर्वस्मिन् ऋक्त्रयाशीतिके गायत्रीछन्दोरूपे वासुदेवः । **द्वितीये** बृहतीछन्दस्के ऋगशीतित्रये संकर्षणः । नायं संकर्षणः शेषो मन्तव्यः इति भावेनाह– **यस्येति ।। अपरः** संकर्षणः शेषः । एवमुत्तरत्र 'यस्यैव सन्निधेः' इत्यादावपि शङ्कासमाधानं च ज्ञातव्यम् । **तृतीयायां** तृचाशीत्यां प्रद्युम्नरूपी केशवः । उक्थस्यान्तभगेऽनिरुद्धो हरिः स्थितः । एवं पदार्थमभिधाय वाक्ययोजनां दर्शयन्व्याचष्टे– **एवमिति ।। देवतां** प्रतिपाद्यम् । 'संप्रतिविदि'त्यस्यार्थः– **सम्यग्वेत्तेति** । स एव सम्यग्ज्ञानीत्यर्थः ।।

---

२. प्रसादादाप्तवैभवः

पञ्चभूतेषु पञ्चरूपिणो हरेरुपासनम्

उपनिषत्

**पृथिवी वायुराकाश आपो ज्योतींषीत्येष वा आत्मोक्थं पञ्चविधम् । एतस्माद्धीदं सर्वमुत्तिष्ठति । एतमेवाप्येति । अयनं ह वै समानानां भवति य एवं वेद ।**

पृथिव्यादिशब्दनिर्वचनपूर्वकं तत्स्थभगवद्रूपनिरूपणम्

भाष्यम्

................तानि रूपाणि वै हरेः ।
स्थितानि पञ्चभूतेषु पृथिव्याद्यभिधानि च ।।

तदावेशात् पृथिव्यादिनाम भूतेषु पञ्चसु ।
पृथुत्वात् पृथिवीनामा भूमौ नारायणः स्थितः ।।

बलज्ञानस्वरूपत्वाद्वायुनामा स एव च ।
वायौ सङ्कर्षणो नित्यं स्थित आकाशनामकः ।।

व्याप्तत्वाद्वासुदेवस्तु सदाऽऽकाशे स्थितः प्रभुः ।
अनिरुद्धस्तथैवाप्सु बहुरूपो व्यवस्थितः ।।

अम्नामा पालनान्नित्यं प्रद्युम्नो ज्योतिषि स्थितः ।
ज्योतिर्नामा द्योतनाच्च बहुरूपः पृथक् पृथक् ।।

भावप्रदीपः

'पृथिवी वायु'रित्यादिकं व्याचष्टे– **तानीति** ।। नाराणादीनीत्यर्थः । पञ्चभूतेषु स्थितानि । अत एव पृथिव्याद्यभिधानि । न तु तदभेदात् । तर्ह्यमुख्यवाच्यानि किं नेत्याह– **तदावेशादिति** ।। मुख्यतः

पृथिव्यादिनामकभगवत्संबन्धादित्यर्थः । तथा च भूतान्येवामुख्य-वाच्यानीति भावः । पृथिव्यादिनामानि पञ्च भूतेषु निर्वक्ति- **पृथुत्वादिति** ।। विस्तृतत्वात् भूमौ स्थितो नारायण इति संबन्धः । वशब्दो बलवाची, आयुरिति ज्ञानमुच्यते । तथा च बलज्ञानरूपत्वाद्वायुनामा स भगवानेव संकर्षणरूपी वायौ स्थितः । व्याप्तत्वादाकाशनामको वासुदेव आकाशे स्थितः । आसमन्तात् स्थित्वा काशत इत्याकाश इति व्युत्पत्तिः । आपालनादन्नामाऽनिरुद्धोऽप्सु स्थितः । आङ् पूर्वात्पा पालन इति धातोः कः । उपसर्गह्रस्वता धात्वन्तलोपश्च । निर्वचनत्वात् । आप इति बहुवचननिर्वाहार्थ- **बहुरूप इति** । एवं स्त्रीलिङ्गनिर्वाहाय **स्त्रीरूपश्चेत्यपि** ग्राह्यम् । यथोक्तं- [3]'आप आपालनाच्चैव' इति । **द्योतनात्** प्रकाशनात् ज्योतिर्नामा प्रद्युम्नो ज्यतिषि स्थितः । ज्योतींषीति बहुवचननिर्वाहय अत्रापि **बहुरूप** इत्युक्तम् । अप्शब्दवज्जोतिःशब्दस्य नियतबहुवचनत्वाभावात्कुतो ज्योतींषीति मूले बहुवचनमित्यतस्तदुपपादनाय- **पृथक् पृथक्** इत्युक्तम् । पृथक् पृथग्जोतिषि स्थित इति संबन्धः । तथाचा-चेतनवह्नीनां बहुत्वात्तदपेक्षया ज्योतींषीति बहुवचनमिति भावः । यथोक्तं काठकभाष्ये[4]- 'रूपं रूपं प्रति ह्येते सन्त्यचेतनवह्नयः' इति । [5]पूर्वटीकाकारास्तु- भगवानेव बहुरूपस्सन् पृथिव्यादिषु पृथक् स्थित इति व्याचक्रुः ।।

---

३. अनु. १-१-२०५

४. २-२-९

५. वि.ती. ८८पु

पञ्चरूपधारणं हरेर्लीलैव

**भाष्यम्**

**यद्यप्यस्य हरेः सर्वरूपाण्यप्यखिलैर्गुणैः ।**
**पूर्णान्यथापि [६]चैकैकरूपेषु स पृथग्गुणैः ।।**
**व्यवहारान्पृथग्देवः करोतीव हि लीलया ।**
**तस्मात् पृथगिवास्येति नाम विष्णोः परात्मनः ।**
**सर्वत्र सर्वनाम्नोऽपि व्यवहारार्थमीर्यते ।।**

**भावप्रदीपः**

न चेते पृथिव्यादिशब्दप्रवृत्तिनिमित्तभूताः पृथुत्वादिगुणाः सर्वेष्वपि रूपेषु सन्ति न वा । नेति पक्षे रूपाणामपूर्णतापत्तिः[७] । आद्ये सर्वत्र सर्वनामसंभवेन पृथिवीनामा नारायण इत्यादिविशेषनिर्देशायोग इत्याशंक्य द्वितीयपक्षमङ्गीकृत्य तत्रोक्तदोषं परिहरति– **यद्यपीति** ।। स देवो लीलयैकैकरूपेषु **पृथग्गुणैः** एकैकगुणैरेव व्यवहारात्पृथगिव **करोति** संपादयति **हि** यस्मात् तस्मात्सर्वत्र पृथिव्यादिषु वाय्वादि-सर्वनाम्नोऽपि **अस्य** विष्णोः **इति** एवंविधं, पृथिव्यादिनामव्यवहारार्थं पृथुगिवेयत इत्यन्वयः ।।

पञ्चरूपोपासनस्य फलनिरूपणम्

**भाष्यम्**

**एतस्माद्धि हरेर्नित्यं जगदुत्तिष्ठति प्रभोः ।**
**मुक्तौ लये च तं याति स च सर्वाश्रयः प्रभुः ।।**

---

६. चैवैक इति ह.पाठः

७. प्रसङ्गः इति 'ख'पाठः

**य एवं वेत्ति तं विष्णुमुपास्ते चापरोक्षतः ।**
**स मुक्तः समजातीनामाश्रयश्च भविष्यति ।।**

**स्वजातीनामुत्तमत्वपदयोग्या हि ये सुराः ।**
**ब्रह्मेन्द्राद्यास्ते हि योग्याः साक्षादस्मिन्नुपासने ।**
**अन्येषां ज्ञानमात्रेण योग्यमाधिक्यमाप्यते ।।**

**भावप्रदीपः**

'एतस्माद्धीदं सर्वमुत्तिष्ठती'त्येतद्व्याचष्टे– **एतस्मादिति** ।। 'एतमेवाप्येती'त्येव्द्याचष्टे– **मुक्ताविति** ।। 'अयनं ह वा' इत्येतदावर्तते । तत्राद्यस्यार्थमाह– **स चेति** ।। द्वितीयं फलवाक्यषेशत्वेन योजयन्व्याचष्टे– **य एवमिति** ।। वेदेत्यस्य उपास्ते आपरोक्ष्यतो वेत्ति चेत्यर्थद्वयकथनम् । 'अयनं ह वै समानानां भवन्ति' इत्यस्यार्थः– **स मुक्तः समजातीनामित्यादि** । मुक्तौ समानत्वे तदाश्रयत्वायोग इत्यतः **समजातीनामित्युक्तम्** । जातिमात्रसाम्येऽपि योग्यतायां तारतम्यमुपपद्यत एवेति भावः । सजतीयोत्तमत्वमपि देवानामेव मुख्यमन्येषां यथायोग्यमिति भावेनोक्तमेव विशदयति– **सजातीनामिति** ।। देवत्वादिना समानजातीनां मध्ये उत्तमत्वमेव पदं नियामकतारूपं तद्योग्याः । **अन्येषामुपासानाऽनधिकारिणां** मानुषादीनां तु ज्ञानमात्रेण योग्यमाधिक्यम् । अनियामकत्वेऽपि मान्यतादिरूपमाप्यत इत्यर्थः ।।

अन्नस्थितभगवद्रूपोपासनं तत्फलनिरूपणम् च

**उपनिषत्**

**तस्मिन् योऽन्नं चान्नादं च वेदा हास्मिन्ननादो जायते ।**

**भवत्यस्यान्नम् । आपश्च पृथिवी चान्नम् । एतन्मयानि ह्यन्नानि भवन्ति । ज्योतिश्च वायुश्चान्नादम् । एताभ्यां हीदं सर्वमन्नमत्ति ।**

**आवपनमाकाशः । आकाशे हीदं सर्वं समोप्यते । आवपनं ह वै समानानां भवति य एवं वेद ।**

सङ्कर्षणप्रद्युम्नौ भोक्तारौ भोग्यौ च

**भाष्यम्**

सङ्कर्षणश्च प्रद्युम्नस्तत्र भोक्तृषु संस्थितौ ।
भोक्तृशक्तिप्रदौ नित्यं भोक्तारौ च विशेषतः ।।

नारायणानिरुद्धौ तौ[८] भोग्यवस्तुषु संस्थितौ ।
तर्पकौ सर्वलोकानां तस्माद्भोग्यौ न चर्व्यतः ।।

अवकाशप्रदो नित्यं वासुदेवो नभःस्थितः ।
एवं पञ्चात्मकं विष्णुं य उपास्ते सदैव च ।।

अवकाशप्रदः सोऽपि स्वजातीनां भविष्यति ।
भोक्ता चाप्यायकश्चैव तस्य विष्णोः प्रसादतः ।।

ब्रह्मेन्द्राद्याः स्वजातीयपदयोग्या अमुष्य च ।
योग्या उपासनस्य स्युस्तदन्ये ज्ञानमात्रके ।।

**भावप्रदीपः**

'तस्मिन्योऽन्नमन्नादं च वेद' इत्यादिकं व्याचष्टे– संकर्षणश्चे-

---

८. तु इति ह.पाठः

**त्यादिना** ।। 'तत्र ज्योतिश्च वायुश्चान्नादं' इत्यस्यार्थः- **संकर्षणश्च प्रद्युम्न** इत्यादि । अत्र ज्योतिः प्रद्युम्नो वायुश्च संकर्षण इति प्रागेव व्यक्तम् । **तत्र** पञ्चकमध्ये इति तस्मिन्नित्यस्यार्थः, 'एताभ्यां हीदं सर्वमन्नमत्ति' इत्यस्य तात्पर्यं– **भोक्तृशक्तिप्रदाविति** । 'भोक्तृषु संस्थितौ भोक्तारौ च विशेषतः' इत्यनेन तयोरन्नादत्वं द्वेधा उपपादितं भवति । 'आपश्च पृथिवीचान्नं' इत्यस्यार्थो– **नारायणानिरुद्धावित्यादि** । अत्रापि यथायोग्यमेव क्रमो न यथासंख्यम् । भोग्यवस्तुषु संस्थितावित्यन्नत्वोपपादनम् । उपलक्षणमेतत् । भोग्यौ चेत्यपि ग्राह्यम् । ततोऽप्यन्नत्वमनयोरिति कथमनयोर्भोग्यत्वम् । तथात्वे प्रसिद्धान्नवच्चर्व्यताप्राप्त्या विनाशादिप्रसङ्गादित्यत आह– **तर्पकाविति** ।। **चर्व्यत**श्चर्व्यत्वात् । 'आवपनमाकाशः' इत्यस्य व्याख्या– **अवकाशप्रद** इति । आवपनशब्दार्थोऽ**वकाशप्रद** इति । आकाशशब्दप्रवृत्तिनिमित्तं **नभस्थित** इति । 'आवपनं ह वै समानानां' इति फलवाक्यं व्याचष्टे– **एवमिति** ।। 'आहास्मिन्नन्नादो जायते भवत्यस्यान्नं' इति पूर्वोक्तं फलवाक्यं व्याचष्टे– **भोक्ता चाप्यायकश्चेति** ।। अत्राप्युक्तफलं देवनामेव मुख्यमन्येषां यथायोग्यमेवेत्याह– **ब्रह्मेन्द्राद्या इति** ।। **स्वजातीयपदयोग्याः** स्वसमानजातीयनियामकतारूपपदयोग्याः । **अमुष्य** उपासनस्य योग्याः । ज्ञानमात्रके न तूपासने ।।

### जङ्गममनुष्याणां अन्ननिरूपणम्

### उपनिषत्

**तस्मिन् योऽन्नं चान्नादं च वेदा हास्मिन्नन्नादो जायते । भवत्यस्यान्नम् । ओषधिवनस्पतयोऽन्नं । प्राणभृतोऽन्नादम् । ओषधिवनस्पतीन् हि प्राणभृतोऽदन्ति ।**

**तेषां य उभयतोदन्ताः पुरुषस्यानुविधां विहिता-स्तेऽन्नादाः । अन्नमितरे पशवः । तस्मात् त इतरान् पशूनधीव चरन्ति । अधीव ह्यन्नेऽन्नादो भवति । अधीव ह समानानां जायते य एवं वेद ॥२.३.१॥**

जङ्गमस्थावरगतभगवद्रूपनिरूपणम् प्राणभृत्-ओषधिशब्दनिर्वचनपूर्वकं भगवन्नामत्वकथनम्

**भाष्यम्**

सङ्कर्षणश्च प्रद्युम्नो जङ्गमेषु व्यवस्थितौ ।
नारायणानिरुद्धौ तु स्थावरान्तर्गतौ प्रभू ॥

तत्राप्याकाशगो नित्यं वासुदेवो निरञ्जनः ।
प्राणानां भरणान्नित्यं प्राणभृन्नाम तद्धरेः ।

न ह्यन्यः प्राणभर्ताऽस्ति तमृते पुरुषोत्तमम् ॥
ओषणाच्च निधानाच्च[१] स एवौषधिनामकः ।

वननीयपतित्वाच्च स एव हि वनस्पतिः ।
अन्ने स्थित्वा तृप्तिदत्वं तस्याद्यत्वमपीष्यते ॥

**भावप्रदीपः**

'औषधिवनस्पतयोऽन्नं प्राणभृतोऽन्नादं' इत्येतद्व्याचष्टे– **संकर्षणश्चेति** ॥ जङ्गमेष्विति प्राणभृच्छब्दार्थः । तेषु संकर्षणप्रद्युम्नावन्नादत्वेन व्यवस्थितौ । एवं नारायणानिरुद्धौ स्थावरेषु । औषधिवनस्पतिष्वन्नत्वेनान्तर्गतावित्यर्थः । अत्राप्यावपनमाकाश इति

---

१. निधानात्तु इति ह.पाठः

वाक्यमनुवर्तनीयमिति भावेन तद्याचष्टे– **तत्रापीति** ।। 'प्रणभृतोऽन्नादं' इत्यादिसामानाधिकरण्यव्यपदेशोपपत्यर्थं प्राणभृदादिशब्दान् हरौ निर्वक्ति– **प्राणानामिति** ।। प्राणानां भरणात्प्राणभृत् । **तत्** तस्मात् प्राणभृदित्येतद्धरेर्नामेत्यर्थः । जीवस्यापि प्राणभृत्वेन प्रसिद्धेः को विशेषो हरेरित्यत आह– **न ह्यन्य इति** ।। **भर्ता** पोषको धारकश्च । जीवस्तु भगवता प्राणेषु देहे स्थापितेषु सत्सु प्राणसंबन्धात्प्राणभृदित्युपचर्यत इति भावः । **ओषणात्** दाहकत्वाद्दोषः । उष दाहे, अस्माद् घञ् । **निधानात्**सर्वस्यापि जगतः स्वात्मनि स्थापनाद्धिः । दधातोः किः । ओषश्चासौ धिश्चेति ओषधिनामकः । **वननीयानां** भजनीयानां पतित्वात् वनस्पतिः । वन षण संभक्तौ, पारस्करप्रभृतित्वात्सुट् । ननु भवेदन्नादत्वं भगवतोऽन्नभोक्तृत्वादन्नत्वं तु कथं तस्याद्यत्वाभावादित्यतः [१०]'तर्पकौ सर्वलोकानां' इत्युक्तमेव परिहारं स्मारयितुमाह– **अन्न इति** ।। चर्व्यत्वरूपाद्यत्वाभावेऽपि तृप्तिदत्वरूपाद्यत्वमस्त्येवातोऽन्नादत्ववदंद्यत्वमपि तस्येष्यत इत्यर्थः ।।

देवगन्धर्वादिषु तत्तदाकारेण भगवद्रूपनिरूपणम्

**भाष्यम्**

**पुरुषस्य हरेर्ये तु तदाकारेण संस्थिताः ।**
**देवगन्धर्वमर्त्याद्यास्तेषु सङ्कर्षणो हरिः ।**
**प्रद्युम्नश्च स्थितो नित्यं पुरुषाकृतिरेव तु ।।**
**तौ भोक्तारौ च भोग्यानां भोजकावखिलस्य च ।**

---

१०. ऐत.भा. २-३-१ (२८६-पु)

पशुस्थितभगवद्रूपनिरूपणम्

**नारायणानिरुद्धौ तु तथान्यपशुषु स्थितौ ।।**
**वृषभाश्वादिरूपेण तृप्तिदावखिलस्य च ।**
[११]**वाहनोपानहादीनामारोढारो**[१२] **नरादयः ।।**
**यतः सङ्कर्षणश्चैव प्रद्युम्नस्तेषु संस्थितौ ।**
**ततस्तयोर्हि सञ्चार उपरीव भविष्यति ।।**
**आकाशगो वासुदेवः पञ्चमोऽत्राप्युपास्यते ।**
**वाहनादियुतो मुक्तौ भवेदेतदुपासकः ।।** इत्यैतरेयसंहितायाम् ।

**भावप्रदीपः**

'तेषां य उभयतोदन्ताः पुरुषस्य' इत्यादि व्याचष्टे– **पुरुषस्येति** ।। पुरुषाकारस्य हरेरनु अनुसारेण । तस्यैव विवरणं **तदाकरेणेति** । पुरुषाकेण संस्थिता ये देवाद्यास्तेषु संकर्षणः । प्रद्युम्नश्च हरिः पुरुषाकृतिरेव सन् स्थित इत्यन्वयः । एतेन **पुरुषस्य हरेर्विधा**माकृतिमनुसृत्य **विहिताः** स्थिता ये ते पुरुषाकारा देवादिप्राणभृतोऽन्नादास्तेषु स्थितौ संकर्षणप्रद्युम्नाविति तद्वाक्यं व्याख्यातं भवति । तयोरन्नादत्वं पूर्ववदेव द्वेधा मन्तव्यमित्याह– **ताविति** ।। भोग्यानामित्यस्य पुरतः परतश्चान्वयः । **अखिलस्य** भोक्तृवर्गस्य **भोजकौ** भोगशक्तिप्रदौ । 'अन्नमितरे पशवः' इत्यस्य व्याख्या– **नारायणानिरुद्धाविति** ।। यथायोग्यवस्तुषु स्थावरेषु च तदाकारेण स्थितौ तथान्यपशुषु वृषभाश्वादिरूपेण स्थितावित्यर्थः । तत्रान्ये-

---

११. वाहनानुडुह इति पाठान्तरम्  १२. आरोढारो इति ह.पाठः

त्यस्यैव विवरणम्– **पशुष्विति** ।। अथवा कश्चित्पुरुषस्यापि पशुत्वेनोक्तेस्तद्व्यावृत्यर्थम्– **अन्येति** । तयोरन्नत्वमुपपादयति– **तृप्तिदाविति** ।। कथं पशुषु स्थितयोरखिलतृप्तिदत्वमित्यतश्चोक्तम्– **वृषभाश्वादिरूपेणेति** ।। नन्वेवमपि कथं तृप्तिदत्वमित्यतस्तदुपपादयति– **वाहनेति** ।। तत्र जीवतां वृषभादीनां वाहनत्वम् । मृत्यनन्तरं चर्मरूपेणोपानत्वं । वाहनानडुहादीनामिति पाठे वाहनशब्देनाश्वगजाद्याः । अनडुहशब्देन वृषभा ग्राह्याः । आदिपदेन तैरेवोपबद्धानां रथशकटादीनां ग्रहणम् । तथा च तदारोहे नरादीनां तृप्तिरनुभवसिद्धेति भावः । 'तस्मात्त इतरान्पशूनधीव चरन्ती'त्येतद्व्याचष्टे– **यत इति** ।। एवशब्दस्य तत एवेत्यन्वयः । यतः संकर्षणः प्रद्युम्नश्च **तेषु** आरोढृषु नरादिषु संस्थितौ । उपलक्षणमेतत् । नारायणानिरुद्धौ त्वारोह्येषु पशुषु संस्थितावित्यपि ग्राह्यम् । तत एव आरोढ्राऽऽरोह्यस्थितत्वादेव हेतोस्**तयोः** संकर्षणप्रद्युम्नयोः संचारो नारायणानिरुद्धयोरुपरीव भविष्यति । न तु तदपेक्षया गुणाधिक्यादित्यर्थः । अत्राप्यावपनमाकाश इत्येदनुषंजनीयमिति भावेन तदर्थमनुवदति– **आकाशग इति** ।। **अत्रापि** पञ्चके । 'अधीव ह समानानां जायते य एवं वेद' इति फलवाक्यमिव शब्दं विना व्याचष्टे– **वाहनादीति** ।। एतेन य एवं **वेद** उपास्त स **समानानां** समानजातीयानां मध्ये **अधि** आधिक्येन **अधि** अश्ववृषभादीनामुपरि संचारी जायत इति तद्वाक्यं व्याख्यतं भवति ।।

अन्नान्नादप्रकरणस्य भूतमात्रपरत्वनिषेधः

**भाष्यम्**

**आत्मशब्दाच्च न भूतमात्रमत्रोच्यते । न च मुख्यार्थं परित्यज्यो-**

**पचारार्थोऽङ्गीकर्तव्यो विरोधाभावे । सर्वनामवत्त्वं च भगवतः श्रुत्यैवोपपादितं पूर्वत्र । वप नीरोमकरणावकाशप्रदानबीजवर्धनेषु इति च धातुः ।**

**भावप्रदीपः**

एवं समाख्याप्रमाणेन खण्डं व्याख्याय तत्र विप्रतिपन्नमुपपत्या बोधयितुमुपक्रमते– **आत्मशब्दादित्यादिना** ।। तत्र पृथिवीवायुरित्यादिना भूतानामेव पञ्चविधोक्थत्वं प्रतीयते । तत्कुतो नारायणादिरूपपञ्चकपरताकल्प्यत इत्यत आह– **आत्मशब्दाच्चेति** ।। न केवलं समाख्याप्रमाणबलात्किंत्वात्मशब्दाच्चेति **च**शब्दः । आत्मशब्दो हि चेतनवाची । न चासावनात्मसु भूतेषु युज्यते । अतो नात्र भूतमात्रमुच्यते । किन्तु तदन्तर्गतनारायणदिभगवद्रूपपञ्चकमेव । तत्र चात्मशब्दः श्लिष्टतरः ।

'आत्मब्रह्मादयः शब्दास्तमृते विष्णुमव्ययम् ।
न वदन्ति यतो नाप्ता क्वापि तैर्गुणपूर्णता'[१३] इत्यादेरिति भावः ।

नन्वयमात्मशब्दो विष्णौ मुख्योऽपि प्रकृते भूतेष्वौपचारिकः किं न स्यात् । 'अनात्मन्यात्मशब्दस्तु सोपचारः प्रयुज्यते'[१४] इति वचनादिति तत्राह– **न चेति** ।। नन्वात्मशब्दबलात् यद्यत्र विष्णुः प्रतिपाद्य इत्युच्यते तर्हि पृथिव्यादिशब्दबलाद्भूतान्येव प्रतिपाद्यानि किं न स्युः । तेषां भूतेष्वेव मुख्यत्वादित्यत आह– **सर्वनामवत्त्वं चेति** ।। **श्रुत्यैव** 'ता वा एताः सर्वा ऋचः'[१५] इत्याद्युपनिषदैव ।

१३. अनु.१-४-४०     १४. सू.भा.उदाहृतप्रमाणं १-१-६

१५. सू.भा.उ.वामनपुराणवचनम् १-१-६

तथा च भूतनाम्नामपि विष्णावेव मुख्यत्वान्न भूतप्रापकत्वमिति भावः । 'आवपनमाशः' इत्यत्रावपनशब्दोऽवकाशप्रद इति व्याख्यातः । तत्कथमित्यतस्तत्र धातुं पठति– **वपेति** ।।

### भाष्यम्

**तस्मिन् पञ्चके योऽन्नमन्नादं च वेद सोऽस्मिन् स्वजातियूथे विशेषेणान्नाद आजायते ह । तस्मिन् वेद अस्मिन्नाजायत इति पृथक् पृथक् पुनः पुनर्विशेषणादुपासकस्य स्वजातिसन्निधानाच्च स्वजाताविति ज्ञायते ।**

### भावप्रदीपः

'तस्मिन्योऽन्नमन्नादं च' इत्यादिवाक्यं 'एवं पञ्चात्मकं विष्णुं' इत्यादिना प्राग्व्याख्यातमपि पुनरिदानीं स्पष्टत्वाय व्याचष्टे– **तस्मिन्निति** ।। **पञ्चके** पृथिवीवायुरित्याद्युक्तनारायणादिरूपपञ्चके **यो**ऽधिकारी **अन्नं** पृथिव्यप्शब्दवाच्यं तत्स्थं नारायणानिरुद्धाख्यरूपद्वयम् । **अन्नादं** वायुज्योतिःशब्दवाच्यं तत्स्थं संकर्षणप्रद्युम्नाख्यरूपद्वयं वेद च सो**ऽस्मिन् स्वजातीययूथे** स्वसमानजातीयसमूहे तेभ्यो विशेषेणा**न्नादो** भोगभोक्ता **आजायते** संपद्यते **ह** प्रसिद्धमित्यर्थः । [१६]'व्यवहिताश्च' इति सूत्राच्छंदसि व्यवहितैरप्युपसर्गैः क्रिययोगो भविष्यति । अत आजायत इत्युपपन्नम् । नन्वस्मिन्नित्यस्य स्वजातियूथ इत्यर्थः कथमवगम्यते । तस्य सामान्यशब्दत्वादित्यत आह– **तस्मिन्वेदेति** ।। 'तस्मिन्योऽन्नमन्नादं च वेद' इत्युक्तस्य अन्नान्नादोपासकस्य अस्मिन्नन्नाद आजायत इति

१६. पा.सू. १-४-८२ सि.कौ.सू.सं ३३९२

**पचारार्थोऽङ्गीकर्तव्यो विरोधाभावे । सर्वनामवत्वं च भगवतः श्रुत्यैवोपपादितं पूर्वत्र । वप नीरोमकरणावकाशप्रदानबीजवर्धनेषु इति च धातुः ।**

**भावप्रदीपः**

एवं समाख्याप्रमाणेन खण्डं व्याख्याय तत्र विप्रतिपन्नमुपपत्या बोधयितुमुपक्रमते– **आत्मशब्दादित्यादिना** ।। तत्र पृथिवीवायुरित्यादिना भूतानामेव पञ्चविधोक्थत्वं प्रतीयते । तत्कुतो नारायणादिरूपपञ्चकपरताकल्प्यत इत्यत आह– **आत्मशब्दाच्चेति** ।। न केवलं समाख्याप्रमाणबलात्किंत्वात्मशब्दाच्चेति **च**शब्दः । आत्मशब्दो हि चेतनवाची । न चासावनात्मसु भूतेषु युज्यते । अतो नात्र भूतमात्रमुच्यते । किन्तु तदन्तर्गतनारायणदिभगवद्रूपपञ्चकमेव । तत्र चात्मशब्दः श्लिष्टतरः ।

'आत्मब्रह्मादयः शब्दास्तमृते विष्णुमव्ययम् ।
न वदन्ति यतो नाप्ता क्वापि तैर्गुणपूर्णता'[१३] इत्यादेरिति भावः ।

नन्वयमात्मशब्दो विष्णौ मुख्योऽपि प्रकृते भूतेष्वौपचारिकः किं न स्यात् । 'अनात्मन्यात्मशब्दस्तु सोपचारः प्रयुज्यते'[१४] इति वचनादिति तत्राह– **न चेति** ।। नन्वात्मशब्दबलात् यद्यत्र विष्णुः प्रतिपाद्य इत्युच्यते तर्हि पृथिव्यादिशब्दबलाद्भूतान्येव प्रतिपाद्यानि किं न स्युः । तेषां भूतेष्वेव मुख्यत्वादित्यत आह– **सर्वनामवत्त्वं चेति** ।। **श्रुत्यैव** 'ता वा एताः सर्वा ऋचः'[१५] इत्याद्युपनिषदैव ।

१३. अनु.१-४-४०  १४. सू.भा.उदाहृतप्रमाणं १-१-६

१५. सू.भा.उ.वामनपुराणवचनम् १-१-६

तथा च भूतनाम्नामपि विष्णावेव मुख्यत्वान्न भूतप्रापकत्वमिति भावः । 'आवपनमाशः' इत्यत्रावपनशब्दोऽवकाशप्रद इति व्याख्यातः । तत्कथमित्यतस्तत्र धातुं पठति– **वपेति** ।।

**भाष्यम्**

**तस्मिन् पञ्चके योऽन्नमन्नादं च वेद सोऽस्मिन् स्वजातियूथे विशेषेणान्नाद आजायते ह । तस्मिन् वेद अस्मिन्नाजायत इति पृथक् पृथक् पुनः पुनर्विशेषणादुपासकस्य स्वजातिसन्निधानाच्च स्वजाताविति ज्ञायते ।**

**भावप्रदीपः**

'तस्मिन्योऽन्नमन्नादं च' इत्यादिवाक्यं 'एवं पञ्चात्मकं विष्णुं' इत्यादिना प्राग्व्याख्यातमपि पुनरिदानीं स्पष्टत्वाय व्याचष्टे– **तस्मिन्निति** ।। **पञ्चके** पृथिवीवायुरित्याद्युक्तनारायणादिरूपपञ्चके **यो**ऽधिकारी **अन्नं** पृथिव्यप्शब्दवाच्यं तत्स्थं नारायणानिरुद्धाख्य-रूपद्वयम् । **अन्नादं** वायुज्योतिःशब्दवाच्यं तत्स्थं संकर्षणप्रद्युम्नाख्य-रूपद्वयं वेद च सो**ऽस्मिन् स्वजातीययूथे** स्वसमानजातीयसमूहे तेभ्यो विशेषेणा**न्नादो** भोगभोक्ता **आजायते** संपद्यते ह प्रसिद्धमित्यर्थः । [१६]'व्यवहिताश्च' इति सूत्राच्छंदसि व्यवहितै-रप्युपसर्गैः क्रिययोगो भविष्यति । अत आजायत इत्युपपन्नम् । नन्वस्मिन्नित्यस्य स्वजातियूथ इत्यर्थः कथमवगम्यते । तस्य सामान्यशब्दत्वादित्यत आह– **तस्मिन्वेदेति** ।। 'तस्मिन्योऽन्नमन्नादं च वेद' इत्युक्तस्य अन्नान्नादोपासकस्य अस्मिन्नन्नाद आजायत इति

१६. पा.सू. १-४-८२ सि.कौ.सू.सं ३३९२

**पृथक् पृथक्** स्थानद्वयेऽपि **विशेषणात्** निर्धारणान्निर्धारणस्य च स्वजतीयेभ्य एकदेशस्य पृथक्करणरूपत्वादस्मिन्नित्यस्य समान्य-शब्दत्वेऽपि निर्धारणार्थकत्वेन स्वजतावित्यर्थो लभ्यते । किञ्चायं शब्दः सन्निहितपरामर्शकः सर्वनामशब्दत्वात् । प्रकृते च फल-कथनावसरे स्वजातेरेव बुद्धौ सन्निधानात्तस्या एवायं परामर्शको युक्तः । अतोऽप्यस्मिन्नित्यस्य स्वजातियूथ इत्यर्थोऽवगम्यत इति भावः ॥

**भाष्यम्**

**क्षीराब्धिशयनं विष्णो रूपं यत्पुरुषाभिधम् ।**
**सङ्कर्षणश्च प्रद्युम्नस्तदाकारौ नृषु स्थितौ ॥**
**नारायणानिरुद्धौ तु पश्वाकारौ पशुस्थितौ ॥** [१७]**इति सत्तत्त्वे ।**

**गुणवैशेष्याभावेन वहनादिषु चरणमात्रादधीव चरन्ती-त्यादाविवशब्दः**[१८] **॥२.३.१॥**

**भावप्रदीपः**

'पुरुषस्यानुविधां विहिताः' इति वाक्यं 'पुरुषस्य हरेर्ये तु तदाकारेण संस्थिताः' इति व्याख्यातम् । तत्र किं हरेः पुरुषाकार एव स्वाभाविकः । पश्वाद्याकारास्तु आगन्तुका इत्यभिप्रायो वा । अथवा उभयेऽप्यागन्तुका इति । किं वा उभयेऽपि स्वाभिका एवेति । नाद्यः । 'सर्वे नित्याः शाश्वताश्च देहास्तस्य महात्मनः'[१९] इत्यादिमान-विरोधात् । अत एव न द्वितीयः । विशिष्य पुरुषस्येति पुरुषत्वो-त्कीर्तनायोगाच्च । अत एव न तृतीयोऽपि । मैवम् । तृतीय-

१७. इत्यादीवशब्दः इति ह्.पाठः        १८. इति च इति ह्.पाठः

१९. भाग.ता. १-३-१

पक्षस्यैवाङ्गीकरात् । न चैवं विशिष्य पुरुषत्वोत्कीर्तनायोगः । क्षीराब्धिशायिरूपविवक्षया तत्संभवादिति भावेन प्रमाणमुदाहरति– **क्षीराब्धीति ।।** नारायणानिरुद्धौत्वित्यंशस्तु प्रागुक्तार्थदार्ढ्यार्थम् ।

अधि चरन्तीत्येतावतैव पूर्ताविवशब्दो व्यर्थ इवाभाति । अत आह– **गुणेति ।।** लोके वृषभाश्वादिवाहनाद्यपेक्षयाऽऽरोढृषु नरादिषु गुणवैशेष्यवद्वाहनादिस्थितनारायणानिरुद्धापेक्षयाऽरोढृस्थितसंकर्षण-प्रद्युम्नयोर्गुणवैषम्याभवेन वाहनादिषु स्थित्वा चरणमात्रादधीव चरन्तीत्यत्र इवशब्दः । आदिपदेन 'अधीव ह्यन्नऽन्नादो भवति' इत्यत्रापि एतदभिप्रायेणैवेवशब्दप्रयोग इति ग्राह्यम् ।।

ततश्चायं खण्डार्थः । **यो** अधिकारी नित्याततगुत्वात् **आत्मानं** आत्मशब्दवाच्यं परमात्मानं **पञ्चविधं** नारायणादिरूपेण पञ्चधा-वस्थितं उक्थं च वेद **स एव** पुमान् **संप्रतिवित्** सम्यक् ज्ञानी । कथमुक्थत्वं तस्योत्य आह– **यस्मादिति ।। यस्मात्** कारणात् **यत्** यस्मादात्मनः **सर्वमिदं** जगदु**त्तिष्ठति** उत्पन्नं भवति तस्मात्तमुक्थं यो वेदेत्यन्वयः । अथवा तृचाशीतित्रयं तस्य पूर्वमपरं चेति यत्पञ्चविधं बृहतीसहस्राख्यमुक्थं तस्मिन्नारायणादिपञ्चात्मनाऽवस्थितत्वात् पञ्च-विधमुक्थं भगवन्तं यो वेद स संप्रतिविदित्यर्थः ।

प्रकारान्तरेणापि पांचविध्यं भगवतो निरूपयति– **पृथीवी-त्यादिना ।।** पृथुत्वात् पृथिवीनामा पृथिवीस्थितः स्त्रीरूपो नारायणः । बलज्ञानस्वरूपत्वाद्वायुनामा वायुस्थितः संकर्षणः । आसमन्तात् स्थित्वा काशनादाकाशनामा वासुदेवः । आपलनादपोऽप्शब्द-वाच्योऽप्सु स्थितः स्त्रीरूपो बहुरूपश्चानिरुद्धः । प्रकाशमानत्वात्

ज्योतिर्नामा ज्योतिष्षु स्थितो बहुरूपश्च प्रद्युम्नः । इत्येवं **एष वै** एष एवाऽ**त्मा** भगवान् पञ्चभूतस्थितत्वादुक्थत्वाच्च पञ्चविधमुक्थमित्युच्यते । नन्वस्तु पञ्चभूतस्थितस्य पञ्चविधत्वम् । उक्थत्वं तु कथमित्यत आह– **एतस्मादिति ।। एतस्मात्** पञ्चभूतस्थितात् हरेरेव **सर्वं** जगत् ब्रह्माण्डादिक**मुत्तिष्ठति** उत्पद्यते । **हि** यस्मात् तस्मादुक्थमित्यर्थः । न केवलमुक्थं जगल्लयाधिकरणं चासौ ज्ञेय इत्याह– **एतमेवेति ।। एतं** पञ्चपञ्चभूतस्थितं भगवन्तमेव सर्वमिदं जगत् **अप्येति** प्रविशति मुक्तौ प्रलये चेत्यर्थः । अयनं ह वा इत्यनुवर्तते । **एष** भगवानेव**ायनं** सर्वाश्रयो ह वै । एवं वेत्तुः फलमाह– **अयनं ह वा इति ।।** य एवं **वेद** विष्णुमुपास्तेऽपरोक्षतो जानाति च स मुक्तस्सन्**समानानां** समजातीनां **अयनं** आश्रयो **भवति** भविष्यति ।।

अत्रायं विवेको बोध्यः । एतदुपासने योग्या ये ब्रह्मेन्द्राद्या देवास्ते सजातीयस्वाधमनियामकतामश्नुवते । उपासनाऽनधिकारिणो मानुषादयस्तु ज्ञानमात्रेण स्वयोग्यमाधिक्यमाप्नुवंति इति । फलं कथयन्नेव विद्यान्तरं निरूपयति– **तस्मिन्निति ।। तस्मिन्** भूतान्तर्गते नारायणादिरूपपञ्चके **यो**ऽधिकारी **अन्नं** सर्वलोकतर्पकत्वादन्नशब्दवाच्यं भोग्यवस्तुषु स्थितम् । **अन्नादं** भोक्तृभूतं भोक्तृषु स्थितं भोगशक्तिप्रदं भगवतो रूपं वेद । मिथः समुच्चे चशब्दौ । सोऽ**स्मिन्** सजातीययूथेऽ**न्नादो** भोगभोक्ता **आ** आधिक्येन जायते । **ह** प्रसिद्धमेतत् । तथाऽ**स्य** स्वजातीयूथस्य **अन्नं** आप्यायकश्चायं भवति । नन्वेतस्मिन् रूपपञ्चके किमन्नं किञ्चान्नादमित्यतो विविच्य दर्शयति– **आपश्चेत्यादिना ।। आपो**ऽप्सु स्थितोऽम्नामाऽनिरुद्धः **पृथिवी** पृथिवीस्थस्तन्नामा नारायणश्च **अन्नं** भोग्यवस्तुषु स्थित्वा सर्वलोकतर्पकौ ।

कुतो पृथिवीस्थियोस्सर्वलोकतर्पकतयाऽन्नत्वमित्यतस्तदुपपादयति– **एतन्मयानीति** ।। लोके सर्वाण्यप्यन्नानि **एतन्मयानि** अप्पृथिवीमयान्येव भवन्ति हि । अत एतान्यन्नानि **एतन्मयानि** अप्पृथिवीस्थिरूपद्वयाधीनान्येव भवन्ति । ततश्च सर्वलोकतर्पकतयाऽन्नत्वमनयोस्सेत्स्यतीति भावः । **ज्योति**र्ज्योतिस्थितो ज्योतिर्नामा प्रद्युम्नः **वायुर्वायुस्थो** वायुनामा सङ्कर्षणश्चा**न्नादं** भोक्तृषु स्थित्वा भोगशक्तिप्रदौ स्वयं च भोक्तारौ । कुतो [२०]अनयोरूक्तरूपमन्नादत्व मित्यतस्तदुपपादयति– **एताभ्यामिति** ।। ज्योतिर्वायुगतप्रद्युम्नसङ्कर्षणाभ्यामेव **इदं** सर्वं प्राणिजातमन्नमत्ति । शरीरवायुनोद्दीपितो जाठरोजातवेदा हि भुक्तमन्नं परिणामयतीति तावत् प्रसिद्धम् । न च भगवत्प्रेरणामन्तरेण ज्योतिर्वायुभ्यां तत्कार्यं निष्पद्यते । अतस्तद्गतभगवद्रूपयोरेव तद्धेतुत्वाद्भोक्तृत्वाच्चोपपन्नमन्नादत्वमिति भावः ।।

एवं पञ्चके रूपचतुष्टयोपास्तिप्रकारमुक्त्वाऽवशिष्टवासुदेवोपास्तिप्रकारमाह[२१]– **आवपनमाकाश इति** ।। आकाशनामा तत्स्थो वासुदेव **आवपन**माकाशप्रद इत्यर्थः । तदुपपादयति– **आकाशे हीति** ।। आकाशान्तर्गते हरावेव **सर्व**मिदं जगत् **समोप्यते** सम्यगवकाशवद्भवति **हि** यस्मात्तस्मादाकाश आवपनमुच्यते इत्यर्थः । अनिरुद्धादिरूपचतुष्टयज्ञानफलस्य 'आहास्मिन्नन्नादो जायते' इत्युक्तत्वात् वासुदेवज्ञानफलमाह– **आवपनमिति** ।। य एवमाकाशनामकं वासुदेवमवकाशप्रदं वेद स मुक्तौ **समानानां** समजातीनां **आवपन**मवकाशप्रदो भवति ।।

---

२०. उभयोः इति 'ख'पाठः

२१. प्रकारमप्याह इति 'ख'पाठः

अस्मिन्नेव पञ्चके पुनः प्रकारान्तरेण विद्यान्तरं फलकथनपूर्वकं निरूपयति– **तस्मिन्निति** ।। तस्मिन्नेव रूपञ्चके वक्ष्यमाणप्रकारेण योऽन्नमन्नादं च वेद **सोऽस्मिन्** स्वजातियूथेऽन्नाद आजायते ह । स्वस्य[२२] स्वजातियूथस्याप्यायकत्वादन्नं चासौ भवति । किं तदन्नं किञ्च तदन्नादं यद्वेदनेनेदं फलं भविष्यतीत्यत आह– **ओषधिवनस्पतयोऽन्नमिति** ।। ओषणान्निधानाच्चौषधिशब्दवाच्यौ वननीयपतित्वेन वनस्पतिनामकौ बहुरूपौ नारायणानिरुद्धा[२३]वोषधिवनस्पतिषु स्थावरेष्वन्नत्वेनान्तर्गतौ । प्राणानां भरणात्प्राणभृच्छब्दवाच्यौ बहुरूपौ सङ्कर्षणप्रद्युम्नौ प्राणभृत्सु जङ्गमप्राणिष्वन्नादत्वेन व्यवस्थितौ । कथमोषधिवनस्पतिस्थस्यान्नत्वं जङ्गमप्राणितगस्यान्नादत्वमित्यत आह– **ओषधिवनस्पतीन् हीति** ।। तस्मादोषधिवनस्पतीनामन्नत्वं प्राणभृतामन्नादत्वं च तावदनुभवसिद्धम् । अतस्तद्गतभगवद्रूपाणापि तत्प्रेरकत्वात्तृप्तिदत्वभोक्तृत्वाभ्यां चान्नत्वमन्नादत्वं चेति भावः । अत्रापि ‘आवपनमाकाशः’ इति वाक्यमनुषज्यते । **आकाश** आकाशस्थितो वासुदेव **आवपनं** अन्नान्नादयोरवकाशप्रद इत्यर्थः ।।

तत्रैव पञ्चके पुनर्विद्यान्तरमारभते– **तेषामिति** ।। **तेषां** प्राणभृतां जङ्गमप्राणिनां मध्ये य **उभयतोदन्ताः** अलुक्समासोऽयं, ऊर्ध्वमधश्च दन्तोपेताः **पुरुषस्य** पुरुषाकारस्य क्षीराब्धिशायिनो हरे**र्विधां** प्रकारमनुसृत्य **विहिताः** तदाकारेण स्थिता देवगन्धर्वमर्त्याद्यास्तेऽन्नादास्तेषु पुरुषाकारेण स्थितौ सङ्कर्षणप्रद्युम्नौ **अन्नादौ** भोक्तारौ भोगशक्तिप्रदौ च ।

---

२२. अस्य इति ‘ख’पाठः    २३. अनिरुद्धादिरूपौ इति ‘ख’पाठः

**इतरे** पुरुषभिन्नाः पशवो वृषभाश्वादयोऽ**न्नं** पशुषु स्थितौ तदाकारौ नारायणानिरुद्धावखिलतृप्तिदत्वादन्नशब्दवाच्यावित्यर्थः । पशूनां वाहनादिरूपत्वेन नरादितर्पकत्वं प्रसिद्धमेव अतस्तदाकारेण पशु-स्थितस्य भगवतोऽप्यखिलतर्पकत्वम् । कुतः पुरुषानुविधानामन्ना-दत्वं पशूनामन्नत्वं चेत्यतस्तदुपपादयति– **तस्मादिति** ।। यत एवं सङ्कर्षणप्रद्युम्नौ वृषभाश्वाद्यारोढृनरादिगतौ, नारायणानिरुद्धौ चारोह्येषु पशुषु स्थितौ तस्मादेव कारणात् ते पुरुषाकाराः देवाद्याः । तेषु स्थितौ संकर्षणप्रद्युम्नौ **इतरान्** पशून् तत्स्थितौ नारायणानरुद्धौ **अधि** तयोरुपरि **चरन्ति** सञ्चरतः । यत् यदुपचरति तत् तस्य भोक्तृ इतरच्च भोग्यमिति स्थितिः । अत एव ह्यन्ने भोग्ये विषये अन्नादो **अधि उपरिचरो**ऽधिपतिर्भवति । एवं च पुरुषाणां पश्वधिचरणा-दन्नादस्य चान्नाधिचरणा पुरुषा अन्नादाः पशवश्चान्नमुच्यन्त इति भावः । नन्वेवं सङ्कर्षप्रद्युम्नयोः नाराणानिरुद्धोपरि चरणात्तद्भोक्तृत्वाच्च ततोऽपि गुणवैशेष्यप्राप्त्या भगवद्रूपेषु तारतम्यप्रसङ्ग इत्यतो 'अधीव चरन्त्य-धीव भवन्ति' इत्युभयत्रापीवशब्दप्रयोगः आरोढृषु स्थित्वा चरणमात्रात्तथोक्तिर्न तु गुणवैशेष्यमस्तीति भावः । अत्राप्यावपनम-वकाशप्रद इत्यनुषञ्जनीयम् । **आकाशो** वासुदेव आरोढृणामारोह्याणां चावपनमाकाश इत्यर्थः । एतद्विद्याफलमाह– **अधीवेति** ।। य एवं वेद स पुमान् मुक्तो **समानानां** समजातीनां मध्ये **अधि** अधिको भवतीत्यर्थः । क्लृप्तस्यैवाधिक्यस्य मुक्तावभिव्यक्तेरागन्तुका-धिक्यालाभादिवशब्दः । **ह** प्रसिद्धमेतत् ।।२.३.१।।

## अथ द्वितीयारण्यके तृतीयाध्याये द्वितीयः खण्डः

तारतम्यानुगुणं भगवत्सन्निधानकथनम्

### उपनिषत्

**तस्य य आत्मानमाविस्तरां वेद । अश्नुते ह्याविर्भूय ओषधि वनस्पतयो यच्च किञ्च प्राणभृत् । स आत्मानमाविस्तरां वेद । ओषधिवनस्पतिषु हि रसो दृश्यते । चित्तं प्राणभृत्सु । प्राणभृत्सु त्वेवाविस्तरामात्मा । तेषु हि रसोऽपि दृश्यते । न चित्तमितरेषु । पुरुषे त्वेवाविस्तरामात्मा । स हि प्रज्ञानेन सम्पन्नतमः । विज्ञातं वदति, विज्ञातं पश्यति, वेद श्वस्तनम् । वेद लोकालोकौ । मर्त्येनामृतमीप्सति । एवं सम्पन्नः । अथेतरेषां पशूनामशनापिपासे एवाभिविज्ञानम् । न विज्ञातं वदन्ति, न विज्ञातं पश्यन्ति, न विदुः श्वस्तं, न लोकालोकौ । त एतावन्तो भवन्ति । यथाप्रज्ञं हि सम्भवाः ॥२.३.२॥**

अधिष्ठानतारतम्येन भगवत्सन्निधानम्

### भाष्यम्

आविर्भावं तारतम्याद्यो वेद परमात्मनः ।
स तस्यैव विशेषेण प्रीतियोगाद्भविष्यति ॥

स्थावरं जङ्गमं चैव भूयस्त्वेनाश्नुते हरिः ।
आविर्भूतस्तेषु सदा सम्यक्स्वात्मानमेव च ॥

**तारतम्यात् सन्निहितं सर्वभूतेषु केशवः ।**
**वेत्त्येक एव विष्णोर्यद्विशेषावेशनं सदा ।।**

**जङ्गमेषु च वृक्षेषु नैव तादृक्शिलादिषु ।**
**तस्माद् वृक्षादिषु रसश्चित्तं चलनवत्सु च ।**

**दृश्यते न शिलाद्येषु सन्निधिर्न हि तादृशी ।।**

**भावप्रदीपः**

'तस्य य आत्मानमाविस्तारां वेद' इत्येतत्खण्डं व्याचष्टे– **आविर्भावमित्यादिना** ।। परमात्मन **आविर्भावं** सन्निधानं यो वस्तुषु तारतम्याद्वेत्ति स **तस्यैव भविष्यति** तदीय एव भविष्यति । ननु सर्वेषां भगवदधीनत्वेन तदीयत्वात्किं विशिष्योच्यत इत्यत उक्तम्– **विशेषेणेति** ।। तमेव विशेषं दर्शयति– **प्रीतियोगादिति** ।। भगवत्प्रीतिगोचरो भविष्यतीति भावः । एतेन य **आत्मानं** परमात्मानं वस्तुष्वा**विस्तरां** आविर्भावतारतम्येन, तारतम्येनाविर्भूतं सन्निहितमिति यावत् । **(वेद स)**[२४] **तस्यैव भवति** तत्प्रीतिगोचरो भवतीति तद्वाक्यं व्याख्यातं भवति ।।

'अश्नुत इत्यादिप्राणभृत्' इत्यन्तं व्याचष्टे– **स्थावरमिति** ।। **भूयस्त्वेन** शिलादिभ्य उत्तमत्वेन, स्थावरं जङ्गमं च **अश्नुते** प्राप्नोति । हरि**स्तेषु** स्थावरजङ्गमप्राणिषु सदाऽऽ**विर्भूतः** सन्निहितः सन्नित्यर्थः । एतेन **ये** ओषधिवनस्पतयः स्थावराः **यच्च** किञ्च प्राणभृज्जङ्गमं वस्तुजातं तत्सर्वं तत्राविर्भूतः परमात्मा **भूयः** शिलादिभ्यो भूयस्त्वेन **अश्नुते** प्राप्नोतीति व्याख्यातं भवति ।।

---

२४. () एतच्चिह्नस्थापंक्तिः 'क'पाठे नास्ति

'स आत्मानमाविस्तारं वेद' इत्येतद्व्याचष्टे– **सम्यगिति** ।। तारतम्यादेवेत्यन्वयः । चशब्दोऽप्यर्थः । सर्वभूतेषु चेति सम्बध्यते । सर्वेष्वपि भूतेषु तारतम्यादेव सन्निहितं स्वात्मानं केशव एक एव सम्यग्वेत्ति नान्यदित्यन्वयः । एतेन **स** भगवान्सर्वभूतेषु **अविस्तरां** तारतम्येनाविर्भूतमा**त्मानं** स्वात्मानं स्वयमेक एव सम्यग्वेदेति व्याख्यातं भवति । 'ओषधिवनस्पतिष्वित्यादिप्राणभृत्सु' इत्यन्तं वाक्यं व्याख्यातुमाह– **विष्णोरिति** ।। **विशेषावेशनं** विशेषसन्निधानं, **जङ्गमेषु** वृक्षेषु वृक्षादिस्थावरेषु च **यत्** यस्मात्सदाऽस्ति शिलादिषु तादृग्विशेषसन्निधानं नैवास्ति । तस्माद्रसादिकं स्थावरादिषु दृश्यते न शिलादिष्विवित्यर्थः । दार्ढ्यार्थं पुनरुक्तमेव हेतुमाह– **सन्निधिर्न हि तादृशीति** ।। शिलाद्येष्विति वर्तते ।।

पदार्थतारतम्येऽपि भगवद्रूपेषु तारतम्याभावः

**भाष्यम्**

**शिलाद्येषु स्थितो विष्णुर्भारदार्ढ्यादिकारणम् ।**
**नैव चित्तादिकस्यातो वृक्षाद्या उत्तमास्ततः ।।**

**विशेषोऽयं पदार्थानां न तु विष्णोः कदाचन**[२५] **।**
**यत्र विष्णुर्गुणाधिक्यं दर्शयेद् वस्तु तद्वरम् ।।**

**गुणपूर्णो हि सर्वत्र स्वयं विष्णुः सनातनः ।।**
**वृक्षेभ्योऽप्यधिकं विष्णुर्जङ्गमेषु प्रकाशितः ।**

**तेभ्योऽपि पुरुषे विष्णुर्गुणाधिक्यप्रकाशकः ।।** इत्यादि च ।

२५. कथञ्चन इति ह.पाठः

### भावप्रदीपः

ननु शिलाद्येषु तादृशसन्निधानाभावेऽपि सन्निधानामात्रसत्वात् किमपि तत्कार्यमावश्यकमेव किं तदित्यत आह– **शिलाद्येष्विति** ॥ दार्ढ्यादीत्यादिपदेन स्थैर्यस्थौल्यादिकमुच्यते । चित्तादिकस्येत्यादिपदेन रसः । **ततः** शिलादितः । नन्वेवं पदार्थेषु भगवत्सन्निधानतारतम्यात्तत्तारतम्यं चेत्सन्निधातुर्भगवतोऽप्यस्ति किं तदित्यत आह– **विशेषोऽयमिति** ॥ ननु किमिदं सन्निधानं नाम? यद्वैशेष्यात्पदार्थेषु तारतम्यमित्यत आह– **यत्रेति** ॥ गुणाधिक्यव्यञ्जनमेव सन्निधानम् । तत्तारतम्यात्पदार्थतारतम्यमिति भावः । यथोक्तम्– 'सन्निधानं तु तत्प्रोक्तं सामर्थ्यव्यञ्जनं तु यत्'[२६] इति । नन्वेवं सन्निधतुर्विष्णोरपि गुणतारतम्यं स्यादेव । सन्निधातृतारतम्यनिबन्धनत्वात् पदार्थतारतम्यस्येत्यत आह– **गुणपूर्णो हीति** ॥ 'प्राणभृत्सु त्वेवाविस्तरामात्मा' इति वाक्यं व्याचष्टे– **वृक्षेभ्य इति** ॥ स्थावरेभ्य इत्यर्थः । 'पुरुषेत्वेवाविस्तरामात्मा' इत्येतद्विवृणोति– **तेभ्योऽपीति** ॥ पश्वादिजङ्गमेभ्योऽपीत्यर्थः । अथवा तेषां मध्येऽ-पीत्यर्थः ॥

### स्ववाक्येन खण्डव्याख्यानम्

### भाष्यम्

**य आत्मानं परमात्मानमाविस्तरां आविर्भावतारतम्येन वेद स तस्य विष्णोरेव । सर्वेषां तदीयत्वेऽपि प्रियत्वात् तदीयत्वविशेषणम् । ओषधिवनस्पतयो यच्च किञ्च प्राणभृत् तत्सर्वं शिलादिभ्यो भूयस्त्वेन तेष्वाविर्भूतोऽश्नुते भगवान् । स एव च नारायणः सम्यक्**

---

२६. भाग.ता ४-८-५२

**स्वात्मानमाविस्तरां वेद । [२७]अन चेष्टायामिति धातोश्चेष्टावत्त्वमेव प्राणभृत्त्वं पश्वादीनां ज्ञानानुसारेण ह्युत्पत्तयः सम्भवाः ।।२.३.२।।**

**भावप्रदीपः**

एवं प्रमाणेन खण्डं व्याख्याय स्पष्टत्वार्थं स्ववचनेनापि कानिचिद्वाक्यानि व्याचष्टे । तत्राद्यं वाक्यं योजयति– **य आत्मानमिति** ।। **विष्णोरेव** तदीय एव । भवतीति शेषः । एतेन तस्येत्यस्यानन्वयशङ्का य इत्यस्योत्तरवाक्येनान्वयशङ्का च परास्ता भवति । ननु सर्वेषां तदीयत्वात्को विशेष एवं वेत्तुरित्यत आह– **सर्वेषामिति** ।। 'अश्नुते ह' इति वाक्यं 'यो वेद स ओषध्यादिकं सर्वमश्नुते' इत्यादिपूर्ववाक्यशेषताभ्रान्तिवारणाय व्याचष्टे– **ओषधीति** ।। स आत्मानमित्येतत्पुनरुक्तमिवाभाति । अतो व्याख्याति– **स एवेति** ।। नोपासको जीव इत्यर्थः । अतो 'य आत्मानमाविस्तरां वेद' इति पूर्ववाक्येन नास्य पुनरुक्ततेति भावः । ननु [२८]चोषधिवनस्पतीनामपि प्राणभृत्वेन कथं तेभ्यः प्राणभृज्जातं पृथगुच्यत इत्यत आह– **अन चेष्टायामिति** ।। ननु पुरुषे त्वेवाविस्तारामात्मेति प्राणभृदपेक्षया पुरुषाणां आधक्यमुच्यते । तदनुपपन्नम् । पुरुषाणामपि प्राभृत्वादित्यत उक्तं– **पश्वादीनामिति** । तथा च प्राणभृच्छब्देन जङ्गमविवक्षायामप्यत्र पश्वादिजङ्गमापेक्षयैवाधिक्यमुच्यतेऽतो न विरोध इति भावः । 'यथाप्रज्ञं हि सम्भवाः' इत्येतत्प्रमाणवाक्येनाव्याख्यातत्वाद्व्याचष्टे– **ज्ञानानुसारेणेति** ।। कर्मानुसारेण चेत्यपि ग्राह्यम् । तथा हि सूत्रं [२९]'ॐ अदृष्टानियमात्' इति । इत्युच्यन्ते इति शेषः ।।

---

२७. अन चेष्टायां इत्यारभ्य सम्भवाः इत्यन्तं वाक्यं 'समुद्रिक्तोऽन्येभ्यः' इत्यतः परं ह.पाठे दृश्यते ।

२८. च इति पदं 'ख'पाठे नास्ति

२९. ब्र.सू. २-३-५१

ततश्चायं खण्डार्थः । **यो**ऽधिकारी **आत्मानं** परमात्मानं **आविस्तरां** आविर्भावतारतम्येन तारतम्येनैव सर्वभूतेषु सन्निहितं वेद स **तस्य** विष्णोरेव तदीय एव **भवति** तत्प्रीतिगोचरो भवतीति यावत् । ओषधिवनस्तपतयो **यच्च** किञ्च **प्राणभृत्** चेष्टावज्जङ्गमजातं तत्सर्वं **भूयः** भूयस्त्वेन शिलादिभ्यो विशेषेण **आविः** तेषु स्थावरजंगमेषु आविर्भूतः सन्निहितोऽ**श्नुते** प्राप्नोति भगवान् । स एव नारायण **आत्मानं** स्वात्मानं **आविस्तरां** तारतम्येन सर्वभूतेष्वाविर्भूतं सम्यग्वेद नान्यः । भगवत्सन्निधानतारतम्येनैव पदार्थानां तारतम्यमिति भावेन पदार्थतारतम्यमुपपादयिति– **ओषधीत्यादिना** ।। शिलाद्यपेक्षया भगवद्वशेषसन्निधानपात्रत्वादेवोषधिवनस्पतिषु स्थावरेषु रसो दृश्यते । **प्राणभृत्सु** चलनवत्सु जङ्गमेषु च चित्तं दृश्यते न शिलाद्येष्वतो वृक्षाद्या शिलादिभ्य उत्तमा इति भावः । तत्रापि **प्राणभृत्सु** जङ्गमेष्वेव, तुशब्दो विशेषार्थः । स्थावरापेक्षया गुणाधिक्यप्रकाशकतया **आत्मा** परमात्मा **आविस्तरां** उत्कर्षतारतम्येन **आविर्भूतः** सन्निहितः । किं तत्स्थावरापेक्षया जङ्गमेषु गुणाधिक्यमित्यत आह– **तेषु हीति** ।। **तेषु** जङ्गमेषु स्थावरेष्वविद्यमानरसः, अपिशब्देन तेष्वविद्यमानं चित्तं च दृश्यते हि । **इतरेषु** स्थावरेषु तु रस एक एव न चित्तम् । अतो गुणद्वयसद्भावाज्जङ्गमानां स्थावरेभ्य उत्तमत्वमित्यर्थः । यद्यपि स्थवराणामपि चित्तमस्त्येव । यथोक्तं सुधायाम्–

[३०]गीतात्पुष्पफलावाप्तिः स्पर्शात्कार्श्यं रसात्स्थितिः ।
अपि वृक्षस्य दृश्यन्ते...। इत्यनुव्याख्यानव्याख्यानावसरे ।

---

३०. अनु. २-२-२६५

'एवं कमनीयकान्तावलोकनेनोत्कोरकत्वं तिलकवृक्षस्योपलक्ष्यते । तेन दर्शनकामौ । तेन नयनमनसी सिध्यतः'[३१] इति । तथापि जङ्गमप्राणिवच्चित्तकार्यप्रयत्नाद्यभावादभावव्यपदेशः । यथा सन्नपि भृत्यो यस्य न भृत्यपदे वर्तते स ह्यभृत्य इति व्यपदेश इति । अथ **तेषु** जङ्गमेष्वपि पश्वाद्यपेक्षया पुरुषे त्वेवाविस्तरामात्मागुणाधिक्यप्रकाशकः सन्वर्तते । गुणाधिक्यमेवोपपादयति– **स हीति** ।। पुरुषो हि **प्रज्ञानेन** प्रज्ञाया **संपन्नतमः** पश्वादिभ्योऽप्यतिशयेन युक्तः । कथं स पुरुषो विज्ञातमर्थं **वदति** वाचा व्याहरति । **विज्ञातं पश्यति** सामान्यतो विज्ञातमर्थं युक्तिभिर्विचार्य विनिश्चिनोति । **श्वस्तनं वेद** भविष्यदर्थं लिङ्गैरनुमिनोति । **लोकालोकौ** लोकालोकप्रदेशौ संसारमोक्षौ वा स्वर्गनरकौ वा ससाधनौ, वेदशास्त्रतो जानाति । पौरुषेयापौरुषेयागमौ वा विजानाति । **मर्त्येन** शरीरेण **अमृतं** मोक्षं **ईप्सति** प्राप्तुमिच्छति । अल्पकालीनेन शरीरेणानन्तकालीनमोक्षार्थं साधनमनुतिष्ठतीति यावत् । एवं **संपन्नः** प्रज्ञासंपत्तिमानिति निगमनम् । अथ पुरुषादितरेषां पशूनां तु नैवंविधगुणसंपत्तिः किन्तु अशनापिपासे एव । तद्विषयोपलक्षणमेतत् । अशनापिपासाविषयप्राप्तिं प्रत्येवाभिविज्ञानं प्रज्ञा नान्यत्र । तदेव विशदयति– **न विज्ञातं वदन्तीत्यादिना** ।। पशव इति योज्यम् । निगमयति– **त एतावन्तो भवन्तीति** ।। **ते** पशव उक्तविधा एव भवन्तीत्यर्थः । एवं हरिसन्निधानतारतम्यात्प्राणिनां तारतम्यमभिधाय सन्निधानतारतम्येऽपि किमपि निमित्तं वाच्यम् । अन्यथा भगवतो वैषम्यनैर्घृण्यापत्तेरित्यतो निमित्तं निरूपयति– **यथा प्रज्ञमिति** ।।

---

३१. न्याय.सु. नैकस्मिन्नधिकरणम्

प्रज्ञेत्युपक्षणम् । एषां प्राणिनां संभवा उत्पत्तयः यथाप्रज्ञं तत्तज्ज्ञानकर्माद्यनुसारेण भवन्तीति ।।२.३.२।।

आगतेऽप्यैश्वर्ये न भगवद्विस्मृतिः कार्या

### उपनिषत्

**स एष पुरुषः समुद्रः सर्वं लोकमति यद्ध किञ्चाश्नुतेऽत्येनं मन्यते । यद्यन्तरिक्षलोकमश्नुतेऽत्येनं मन्यते । यद्यमुं लोकमश्नुवीतात्येवैनं मन्येत ।**

### भाष्यम्

योऽस्मिन् पुरुषे पश्वादिभ्य आधिक्येन सन्निहितो भगवान् स एष पुरुषः समुद्रः समुद्रिक्तोऽन्येभ्यः[३२] । स जीवो यद्यपि भगवत्प्रसादात् सर्वलोकाधिपो[३३] भवति सर्वलोकानतीत्य यत्किञ्चिदलौकिकं मोक्षाख्यमप्यश्नुते तदाऽपि तमेनमात्मशब्देन प्रस्तुतं विष्णुमत्येव मन्यतेऽधिकमेव मन्यते स्वात्मनः सर्वस्माच्च ।

मुक्तोऽपि न तेन साम्यं तद्भावं वा मन्यते । [३४]'कृष्णो मुक्तैरिज्यते वीतमोहैः' 'मुक्तानां परमा गतिः'[३५] 'अमृतस्यैष सेतुः'[३६] इत्यादिवाक्याच्च ।।

### भावप्रदीपः

'स एष पुरुषः' इत्येतत्खण्डं व्याचष्टे– **योऽस्मिन्नित्यादिना** ।।

---

३२. अन्यप्राणिभ्यः इति ह्.पाठः ३३. अधिपतिः इति ह्.पाठः

३४. म.भा.ता.निर्णयोदाहृतमहाभारतवचनम् २-६२

३५. विष्णुसहस्रनाम २ ३६. मुं.उ. २-२-५

'एवं कमनीयकान्तावलोकनेनोत्कोरकत्वं तिलकवृक्षस्योपलक्ष्यते । तेन दर्शनकामौ । तेन नयनमनसी सिध्यतः'[३१] इति । तथापि जङ्गमप्राणिवच्चित्तकार्यप्रयत्नाद्यभावादभावव्यपदेशः । यथा सन्नपि भृत्यो यस्य न भृत्यपदे वर्तते स ह्यभृत्य इति व्यपदेश इति । अथ **तेषु** जङ्गमेष्वपि पश्वाद्यपेक्षया पुरुषे त्वेवाविस्तरामात्मागुणाधिक्यप्रकाशकः सन्वर्तते । गुणाधिक्यमेवोपपादयति– **स हीति** ।। पुरुषो हि **प्रज्ञानेन** प्रज्ञाया **संपन्नतमः** पश्वादिभ्योऽप्यतिशयेन युक्तः । कथं स पुरुषो विज्ञातमर्थं **वदति** वाचा व्याहरति । **विज्ञातं पश्यति** सामान्यतो विज्ञातमर्थं युक्तिभिर्विचार्य विनिश्चिनोति । **श्वस्तनं वेद** भविष्यदर्थं लिङ्गैरनुमिनोति । **लोकालोकौ** लोकालोकप्रदेशौ संसारमोक्षौ वा स्वर्गनरकौ वा ससाधनौ, वेदशास्त्रतो जानाति । पौरुषेयापौरुषेयागमौ वा विजानाति । **मर्त्येन** शरीरेण **अमृतं** मोक्षं **ईप्सति** प्राप्तुमिच्छति । अल्पकालीनेन शरीरेणानन्तकालीनमोक्षार्थं साधनमनुतिष्ठतीति यावत् । एवं **संपन्नः** प्रज्ञासंपत्तिमानिति निगमनम् । अथ पुरुषादितरेषां पशूनां तु नैवंविधगुणसंपत्तिः किन्तु अशनापिपासे एव । तद्विषयोपलक्षणमेतत् । अशनापिपासाविषयप्राप्तिं प्रत्येवाभिविज्ञानं प्रज्ञा नान्यत्र । तदेव विशदयति– **न विज्ञातं वदन्तीत्यादिना** ।। पशव इति योज्यम् । निगमयति– **त एतावन्तो भवन्तीति** ।। **ते** पशव उक्तविधा एव भवन्तीत्यर्थः । एवं हरिसन्निधानतारतम्यात्प्राणिनां तारतम्यमभिधाय सन्निधानतारतम्येऽपि किमपि निमित्तं वाच्यम् । अन्यथा भगवतो वैषम्यनैर्घृण्यापत्तेरित्यतो निमित्तं निरूपयति– **यथा प्रज्ञमिति** ।।

---

३१. न्याय.सु. नैकस्मिन्नधिकरणम्

प्रज्ञेत्युपक्षणम् । एषां प्राणिनां **संभवा** उत्पत्तयः **यथाप्रज्ञं** तत्तज्ज्ञानकर्माद्यनुसारेण भवन्तीति ।।२.३.२।।

आगतेऽप्यैश्वर्ये न भगवद्विस्मृतिः कार्या

**उपनिषत्**

**स एष पुरुषः समुद्रः सर्वं लोकमति यद्ध किञ्चाश्नुतेऽत्येनं मन्यते । यद्यन्तरिक्षलोकमश्नुतेऽत्येनं मन्यते । यद्यमुं लोकमश्नुवीतात्येवैनं मन्येत ।**

**भाष्यम्**

योऽस्मिन् पुरुषे पश्वादिभ्य आधिक्येन सन्निहितो भगवान् स एष पुरुषः समुद्रः समुद्रिक्तोऽन्येभ्यः[३२] । स जीवो यद्यपि भगवत्प्रसादात् सर्वलोकाधिपो[३३] भवति सर्वलोकानतीत्य यत्किञ्चिदलौकिकं मोक्षाख्यमप्यश्नुते तदाऽपि तमेनमात्मशब्देन प्रस्तुतं विष्णुमत्येव मन्यतेऽधिकमेव मन्यते स्वात्मनः सर्वस्माच्च ।

मुक्तोऽपि न तेन साम्यं तद्भावं वा मन्यते । [३४]'कृष्णो मुक्तैरिज्यते वीतमोहैः' 'मुक्तानां परमा गतिः'[३५] 'अमृतस्यैष सेतुः'[३६] इत्यादिवाक्याच्च ।।

**भावप्रदीपः**

'स एष पुरुषः' इत्येतत्खण्डं व्याचष्टे– **योऽस्मिन्नित्यादिना** ।।

३२. अन्यप्राणिभ्यः इति ह्.पाठः ३३. अधिपतिः इति ह्.पाठः
३४. म.भा.ता.निर्णयोदाहृतमहाभारतवचनम् २-६२
३५. विष्णुसहस्रनाम २ ३६. मुं.उ. २-२-५

तत्र पुरुषपदेन 'पुरुषे त्वेव' इति प्राक् पुरुषशरीरिजीवस्यैव प्रकृतत्वात् स एवोच्यते । अन्यथा 'स एष पुरुषः' इति परामर्शानुपपत्तेरित्याशङ्कानिरासायाह– **योऽस्मिन्निति** ।। तथा च पुरुषपदेन जीवस्य प्राक् प्रकृतत्वेऽपि नात्र भगवद्ग्रहणे बाधकमस्ति । पुरुषे पश्चाद्याधिक्येन सन्निहितत्वाद्भगवतोऽपि प्रकृतत्वाहानेः । पुरुषसन्निहितस्य पुरुषपदवाच्यतासद्भावाच्च । तत्पूर्वखंडे 'पुरुषस्यानुविधां' इति भगवत्येव पुरुषशब्दस्य प्रयुक्तत्वाच्च । अन्यथाऽ'त्येनं मन्यते' इत्येतच्छब्देनोत्तरवाक्ये भगवतः परामर्शानुपपत्तेरिति भावः । समुद्र इत्यनुवादः समुद्रिक्त इति व्याख्या । समुत्पूर्वात् द्ररिचेरौणादिको डप्रत्ययेति भावः । **अन्येभ्यो** रमाब्रह्मादिसर्वेभ्यः । सर्वलोकमतीत्यादिवाक्यं 'स पुरुषः समुद्रः' इत्यनुवृत्तिमभिप्रेत्य व्याचष्टे– **स जीव इति** ।। समुद्र इत्यस्यार्थः– **सर्वलोकाधिपतिर्भवतीति**[३७] । सर्वं लोकमतीत्यस्य– **सर्वलोकानत्येति** । 'यद्ध किञ्च' इत्यस्य यत्किंचदित्युवादेनालौकिकं मोक्षाख्यमिति व्याख्या । न केवलं सर्वलोकाधिपो भवति किन्तु मोक्षाख्यं महाभाग्यमप्यश्नुत इत्यपिशब्दार्थः । अस्तु वा 'स एष पुरुषः समुद्रः' इति वाक्यं जीवपरमेव न भगवत्परम् । न च तर्हेनमिति भगवतः परामर्शानुपपत्तिः । पूर्वखंडे आत्मशब्देन प्रस्तुत्वेन परामर्शोपपत्तेरित्याशेनोक्तम्– **तमेनमात्मशब्देन प्रस्तुतमिति** ।

केचिन्मुक्तौ विष्णुसाम्यप्राप्तिमाहुः । अन्ये पुनर्ब्रह्मभावापत्तिमाहुः । तदुभयनिरासाय श्रुतौ 'यद्ध किंचाश्नुते' इति मोक्षप्राप्तिमुक्त्वा मोक्षेऽपि 'एनमत्येव मन्यते' इति भगवत आधिक्यमेवाभिधीयत

---

३७. सर्वलोकाधिपो भवतीति 'ख'पाठः

इति तद्वाक्यतात्पर्यमाह– **मुक्तोऽपीति** ।। अत्र प्रमाणमाह– **कृष्ण इत्यादि** ।। **कृष्णो** भगवान्मूलरूपी ।।

### भगवद्दत्तपदवीं अशुचित्वादिबुद्ध्या नापह्नवीत

### भाष्यम्

**यद्यपि देवलोकाधिपत्यं तद्योग्यस्य विष्णुर्ददाति तदप्यश्नुवीतैव । बहुगणिकादिपरिवाररूपमशुचीदं पदमित्यादिबुद्ध्या नापह्नवीत । एनं भगवन्तमतिमन्येतैव[३८] सर्वथा स्वतः सर्वस्माच्चाधिकमेव मन्येत । यद्यमुं लोकमश्नुते प्राप्नोति अश्नुवीत भुञ्जीत ।**

### भावप्रदीपः

'यद्यमुं लोकमश्नुवीत' इत्येतद्व्याचष्टे– **यद्यपीति** ।। अश्नुवीतैवेत्येवकारव्यावर्त्यमाह– **बह्वीति** ।। एतेन यद्यमुं **लोकं** स्वर्गं भगवत्प्रसादात् **अश्नुवीत** प्राप्नुयात् तर्हि **अश्नुवीतैव** अनुभुञ्जीतैवेति क्रियाऽऽवृत्त्या तद्वाक्यं व्याख्यातं भवति । 'अत्येवैनं मन्येत' इत्येतद्व्याचष्टे– **एनं भगवन्तमिति** ।। अत्येवेत्येवशब्दस्याधिकमेव मन्येतैवेत्युभयथापि संबन्ध इत्यभिप्रायेणानुवादे मन्येतैवेति व्याख्यानेऽधिकमेवेत्युक्तम् । मन्येतैवेत्येवकार्थः– **सर्वथेति** । 'यद्यमुं लोकमश्नुवीत' इति वाक्यं प्रकारान्तरेण व्याचष्टे– **यद्यमुमिति** ।। यद्यन्तरिक्षलोकमश्नुत इति पूर्ववाक्यादश्नुत इत्यनुवर्तत इति भावेनाश्नुत इत्यनूद्य प्राप्नोतीति व्याख्यातम् । अश्नुवीतेत्यस्य– **भुञ्जीतेति** । तात्पर्यं तु पूर्वोक्तमेव ।

---

३८. च इति ह.पाठः

अवधारणपूर्वकं 'अत्येवैनं मन्येत' इति कथने प्रयोजनाभिधानम्

**भाष्यम्**

**[३९]पृथिवीलोकाधिपत्येऽपि विष्णोराधिक्यं सत्पुरुषो मन्यत इति प्रत्यक्षसिद्धत्वान्न पृथगुक्तम् । अतिशब्दात् 'यद्ध किञ्च' इति प्रथमोक्तो मोक्ष इति सिद्धम् । अन्तरिक्षप्राप्तेरल्पत्वान्मोक्षे स्वतः सिद्धत्वाच्चा-तिमन्यते इति सिद्धवचनमेव कृतम् । स्वर्गादिप्राप्तेरधिकैश्वर्याद् भगवत्समोऽहं भगवत्स्वरूप इति वा मन्तुं प्राप्तिरस्तीत्येवैनं मन्येतेति सावधारणविधिः ।।**

**भावप्रदीपः**

'यद्यन्तरिक्षलोकमश्नुतेऽत्येनं मन्यते यद्यमुं लोकमश्नुवीतात्येवैनं मन्यते' इतिवत् यद्यमुं लोकमश्नुतेऽत्येनं मन्येत इत्यपि वक्तव्ये तदनुक्तौ कारणमाह– **पृथिवीति** ।। 'यद्ध किञ्च' इत्येतत् यत्किंचिदलौकिकं मोक्षाख्यमिति व्याख्यातम् । सामान्यशब्दस्य कथं विशेषे पर्यवसानमित्यतस्तत्र ज्ञापकमाह– **अतिशब्दादिति** ।। 'सर्वं लोकमति' इत्यतिशब्देन सर्वलोकातिक्रममुक्त्वा 'यद्ध किंच' इति तदनन्तरप्राप्यस्थाननिरूपणात् स प्रथमोक्तोऽन्तरिक्षस्वर्गलोकप्राप्ति-वाक्यापेक्षया पूर्ववाक्योक्तो लोको **मोक्षो** मोक्षस्थानभूतो वैकुंठादि-रेवेति सिध्यतीत्यर्थः । **अलोको** लोकविलक्षणः स्थानविशेष इति वा । अत्र 'यद्यन्तरिक्षिलोकमश्नुते तर्हित्येनं मन्यते' इतिवत् 'यद्ध किञ्चाश्नुते अत्येनं मन्यते' इतिवच्च 'यद्यमुं लोकमश्नुवीत' इत्यत्रापि अत्येनं मन्यत इत्यनुक्त्वा अत्येवैनं मन्येतेति सावधारणविधिवचनं

---

३९. पृथिवीलोके भगवदाधिक्यं इति ह्.पाठः

कुत इत्यतस्तत्रपयोजनमाह– **अन्तरिक्षप्राप्तेरिति** ।। स्वर्गमोक्ष-प्राप्त्यपेक्षयाऽन्तरिक्षलोकप्राप्तेरल्पफलत्वात् । तत्र भगवत्समोऽहं भगवत्स्वरूप इति वा मन्तुं प्रसक्तेरभावादत्येनं मन्यत इति सिद्धवचनमेव कृतम् । न तु मन्येतेति विधानम् । मोक्षे तु स्वात्मनः सर्वस्माच्च भगवदतिमननस्य मिथ्याभिमानादिप्रसक्तेरभावेन स्वत एव सिद्धत्वात् तत्राप्येनं[४०] मन्यत इत्येवोक्तम् । 'यद्यमुं लोकमश्नुवीत' इत्यत्र तु स्वर्गाधिपत्यप्राप्तेरन्तरिक्षाधिपत्याप्त्य-पेक्षयाऽधिकैश्वर्यादिरूपत्वात् भगवत्समोऽहमिति वा भगवत्स्व-रूपोऽहमिति वाऽभिमन्तुं प्राप्तिरस्तीत्यतस्तद्वारणायात्येवैनं मन्येतेति सावधारणवधिरित्यर्थः ।।

परोक्तार्थखण्डनम्

**भाष्यम्**

**न च मन्यते इति काममात्रम् । मनु अवबोधन इति धातोः । न ह्यवबोध एव कामः । अन्यथा राज्यं जानन्नपि राज्यकाम इति स्यात् । न च मन्यते मन्येतेति द्विविधः प्रयोगस्तस्मिन् पक्षे युज्यते । न च सर्वलोकमतीत्याश्नतो मुक्तस्य मुक्तेरन्यत्र कामो विद्यते । सर्वलोकाधिकं च मुक्तिं विना नान्यत् । तस्मान्मुक्तैरमुक्तैरपि[४१] भगवान् सर्वोत्तमत्वेन चिन्त्य[४२] इति सिद्धम् ।।**

**भावप्रदीपः**

अत्र परेषामपव्याख्यानम् । एष पुरुषो जीवः प्राप्तं सर्व-

---

४०. अत्येनं इति 'ख'पाठः ४१. मुक्तैरपि इति ह.पाठः

४२. चिन्त्यते इति ह.पाठः

लोकमतिक्रम्य यद्ध किंच सुखविशेषमश्नुते ततोऽपि पुनरतिशायितमेनं सुखविशेषं कामयते न तु तं प्राप्नोतीति । तदपाकरोति– **न चेति** ।। कुतो नात्र काममात्रमुच्यत इत्यत आह– **मन्विति** ।। मन्यतेरवबोधार्थतया कामार्थताभावात्तत्कल्पने श्रुतहानिरश्रुतकल्पना च स्यादिति भावः । (नन्वस्तु मन्यतेरवबोधार्थत्वं तथापि नोक्तदोषः । कामस्यापि अवबोधविशेषत्वादित्यत आह- **न हीति** ।।)[४३] यद्यपि रागरूपः कामो ज्ञानरूपो भवति । अशोभने शोभनाध्यासस्यैव रागत्वात् । तथापि नेच्छारूपस्य तस्य ज्ञानात्मकत्वम् । तस्य ज्ञानोत्तरभावित्वादिति भावः । इच्छारूपस्यापि ज्ञानत्वाङ्गीकारे बाधकमाह– **अन्यथेति** ।। बहुदेशसंचारी विरक्तो भिक्षुर्यद्यपि राज्यं जानाति, न तथापि तत्कामयते । यदि ज्ञानमेव्र कामः स्यात्तर्हि सोऽपि राज्यकाम इति व्यवह्रियेतेति भावः । अवबोधस्यैव कामत्वाङ्गीकारे दूषणान्तरं चाह– **न चेति** ।। तस्मिन्पक्षेऽवबोधस्यैव कामत्वमङ्गीकृत्य मन्यतेरपि कामार्थत्वाङ्गीकारे 'अत्येनं मन्यते' 'अत्येवैनं मन्येत' इति द्विविधः प्रयोगो न युज्यते । मन्यत इत्यस्य कामयत इत्यर्थोपपत्तावपि मन्येतेत्यस्य कामयीतेत्यर्थानुपपत्तेः । इच्छाया अविधेयत्वात् । लिङश्च विधिप्रत्यत्वादिति भावः । किंचात्र मन्यत इत्यस्य यदि कामयत इत्यर्थः स्यत्तदा सर्वं लोकमतिक्रम्य यो यत्किंचित्सुखमश्नुते तस्य लोकातीतस्य मुक्तस्यापि ततोऽप्यधिकसुखाकांक्षाऽङ्गीकर्तव्या स्यात् । न च तत्संभवति । मुक्तस्य मुक्तेरन्यत्र संसारिवत्कामनायोगात् । अन्यथा मुक्तत्वव्याघातात् ।

---

४३. () चिह्नस्था पंक्तिः 'क'पाठे नास्ति ।

'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्तिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते'[४४]

इत्यादिश्रुतेरित्यभिप्रेत्याह– **न चेति** ।। ननु 'सर्वं लोकमति' 'यद्ध किंचाश्नुते' इति मोक्ष एव अभिप्रेत इति कुतः । येन मुक्तस्य मुक्तेरन्यत्र कामो न विद्यत इत्युच्यत इत्यत आह– **सर्वेति** ।। अत्र हि 'सर्वलोकमति' इति सर्वलोकाधिकत्वं 'यद्ध किंच' इत्युक्तस्योत्तरप्राप्यस्थानस्योच्यते । न हि मुक्तिस्थानं विनाऽन्यस्य सर्वलोकाधिकत्वं युज्यते । अतोऽत्र वाक्ये मोक्ष एवाभिप्रेत इति भावः । उक्तमर्थमुपसंहरति– **तस्मादिति** ।। 'स एष पुरुषः' इत्यादिवाक्यचतुष्टयस्योक्तार्थस्यैव प्रामाणिकत्वादित्यर्थः । तत्र सर्वलोकमति यद्धेत्यादेस्तात्पर्यं– **मुक्तैरपि भगवान्सर्वोत्तमत्वेन चिन्त्य** इति । शिष्टस्य सर्वस्य तात्पर्यं– **अमुक्तैरपीत्यादि** । सर्वोत्तमत्वेनेत्यनेनैव समुद्रशब्दार्थोऽपि संगृहीतः । अपिशब्दौ मिथः समुच्चये । अथ वा प्रथमापिशब्दोऽनौचित्यशङ्काद्योतनार्थः । मुक्तानां कृतकृत्यत्वान्न भगवच्चिन्तनमुचितमिति । द्वितीयस्तु समुच्चयार्थः ।।

### शरीरे भगवतः पञ्चविधरूपनिरूपणम्

### उपनिषत्

**स एष पुरुषः पञ्चविधः । तस्य यदुष्णं तज्ज्योतिः । यानि खानि स आकाशः । अथ यल्लोहितं श्लेष्मा रेतस्ता आपः । यच्छरीरं सा पृथिवी । यः प्राणः स वायुः ।**

---

४४. बृह.उ. ६-४-७, काठ.उ २-३-१९

**स एष वायुः पञ्चविधः, प्राणोऽपानो व्यानो उदानः समानः । ता एता देवताः प्राणापानयोरेव निविष्टाः, चक्षुः श्रोत्रं मनो वागिति । प्राणस्य ह्यन्वपायमेता अपि यन्ति ।**

**भाष्यम्**

पुरुषस्थपञ्चभूतेषु[४५] पञ्चरूपो हरिः स्थितः ।
प्रद्युम्नादिस्वरूपेण ज्योतिरादौ पृथक् पृथक् ॥

स एव च[४६] पुनर्वायौ पञ्चधाऽवस्थितः[४७] प्रभुः ।
प्राणादिरूपे वसति ह्यनिरुद्धादिरूपवान् ॥

अनिरुद्धः स प्रद्युम्नस्तथा सङ्कर्षणः प्रभुः ।
वासुदेवो नारायणः पञ्चरूप इति क्रमात् ॥

पञ्चरूपोऽपि भगवान् यस्माद्वायौ विशेषतः ।
स्थितस्तेन च खादिभ्यो वायुरेव विशिष्यते ॥

अत एव पृथिव्यादिस्वरूपा मनआदयः ।
देवाः प्राणाश्रिता नित्यं गच्छन्ति प्राणमन्वपि ॥

**भावप्रदीपः**

'स एष पुरुषः पञ्चविधः' इति वाक्यं व्याचष्टे– **पुरुषस्थेति** ॥ **पुरुषस्थो हरिः** पुरुषनामा पुरुषस्थपञ्चभूतेषु पञ्चरूपः स्थितः । तस्यैव विवरणं **प्रद्युम्नादिस्वरूपेणेति** ॥ पृथक् पृथक् स्थित इत्यर्थः ।

---

४५. रूपेषु इति पाठान्तरम्  ४६. तु इति ह्.पाठः
४७. अवस्थिते इति ह्.पाठः

तत्रायं विवेकः । ज्योतिषि जाठराग्न्यादिरूपे प्रद्युम्नरूपेण । नासाकर्णादिविवररूपे आकशे वासुदेवरूपेण । लोहितादिरूपास्वप्सु अनिरुद्धरूपेण । शरीररूपायां पृथिव्यां नारायणरूपेण । प्राणरूपे वायौ संकर्षणरूपेणेति ।

'स वा एष वायुः पञ्चविधः' इति वाक्यं व्याचष्टे– **स एवेति** ।। तस्यैव विवरणं प्राणादिरूपे प्राणापानव्यानोदानसमानरूपे वायावनिरुद्धदिरूपवान्वसति । अनिरुद्धादिक्रममेव विशदयति– **अनिरुद्ध इति** ।। नारायण इति क्रमात्पञ्चरूप इति संबन्धः । 'ता एता देवताः प्राणापानयोरेव निविष्टाः' इति पृथिव्याद्यात्मनां मनआदिदेवतानां प्राणाश्रितत्वमुच्यते । प्राणश्चाधिदैवतं वायुनामा भूतविशेष एव । तस्य कथमितरभूतदेवताश्रयत्वं युज्यते । भूतत्वाविशेषादित्याशंक्य तद्घटनार्थमेव 'वायुः पञ्चविधः' इति प्रथममेवोपोद्घाततयोक्तमिति भावेन तदुक्तेः प्रयोजनमाह– **पञ्चरूपोऽपीति** ।। न केवलं संकर्षणरूपो भगवान् किं नाम पञ्चरूपोऽपीत्यपिशब्दः । खादिषु तु वासुदेवाद्येकैकरूपेणैव स्थितः । तेन कारणेन खादिभ्यः चतुर्भ्यो भूतेभ्यो वायुरेव विशिष्यत इत्यर्थः । ननु आकाशादावपि स्थितो भगवानेकैकरूप एवेति वक्तुं न शक्यते । एकरूपस्यैवानेकरूत्वादतः कथं वायौ पञ्चरूप इति विशिष्योक्तिरित्यत उक्तम्– **विशेषत इति** ।। व्यक्तिविशेषत इत्यर्थः । अस्त्वेवं ततः किमित्यत आह– **अत एवेति** ।। शाखादिभ्यो विशिष्टत्वादेवेत्यर्थः । 'चक्षुःश्रोत्रं मनोवागित्येता देवताः' इत्येतावतैव पूर्तौ 'ता वा[४८] एताः' इति कथं तच्छब्देन परामर्शः । चक्षुरादीनां प्रागप्रकृतत्वादित्यत उक्तम्–

४८. वा इति पदं 'ख'पाठे नास्ति

**पृथिव्यादिस्वरूपा**[४९] **इति** ।। पृथिव्यादिचतुर्भूतानां पूर्वमुक्तत्वेन तेषामेव मनआदिदेवतात्वेनोच्यमानत्वात् 'ता वा[५०] एताः' इति युज्यत इति भावः । 'प्राणस्य ह्यन्वपायमेता अपि यन्ती'त्येतद्व्याचष्टे– **गच्छन्तीति** ।। एतेन प्राणस्य **अपायं** निर्गमनं **अनुयन्त्यपि** अनुगच्छति चेत्यर्थोऽन्वयश्चैतद्वाक्यस्य दर्शितौ भवतः ।।

## इन्द्रियाभिमानिदेवतानिरूपणम्

### भाष्यम्

**पृथिवीमयं मनस्तत्र शेषवीन्द्रशिवेन्द्रकाः ।**
**कामानिरुद्धौ देवगुरुर्मनोदेवाः सचन्द्रकाः ।।**

**श्रोत्रमाकाशरूपं च मित्रधर्मजलाधिपाः ।**
**कुबेरश्च दिशां देवाः श्रोत्रदेवा इति श्रुताः ।।**

**ज्योतीरूपं तथा चक्षुश्चक्षुर्देवो रविः स्मृतः ।**
**किञ्चित् तेजोयुता वाक्च विशेषेण त्वबात्मिका ।।**

**उपचीयते ततः साऽद्भिस्तदभावे च शुष्यति ।**
**तृषितस्य हि वागेव पूर्वं मन्दा प्रवर्तते ।।**

**वाग्देवते ततो वह्निरुमा चापि प्रकीर्तिते**[५१] **।**
**चक्षुष्ट्वमग्नेः श्रोत्रत्वं चन्द्रस्यापि सहोच्यते ।।**

---

४९. पृथिव्यादिरूपा इति 'ख' पाठः,

५०. वा इति पदं 'ख'पाठे नास्ति

५१. प्रकीर्तितौ इति हृ.पाठः

**स्वाहाया अपि वात्त्वं च पर्जन्यस्य मनःस्थितिः ।**
**द्वितीयमेतदास्थानं श्रुतिवाक्यप्रमाणतः ।।**

**शेषवीन्द्रशिवादीनां मनआदिस्वरूपिणाम् ।**
**आश्रयो वायुरेवैकस्तस्य नारायणः स्वयम् ।।**

**भापप्रदीपः**

[52]पृथिव्यादिरूपा मनआदयो देवा इत्युक्तम् । तदेव विशदयति– **पृथिवीमयमिति** ।। तत्र पृथिव्यादिभूतेषु मनआदीन्द्रियेषु च शेषाद्याश्चन्द्रान्ता अष्टौ मनोदेवाः । **दिशां** पूर्वादीनाम् । **ज्योतीरूपं** तेजोमयं चक्षुः । वागिन्द्रियस्वरूपमाह– **किञ्चिदिति** ।। 'तेजोमयी-वाक्' इति श्रुत्यविरोधाय **कंचित्तेजोमयी**त्युक्तम् । कुतेऽबात्मकत्वं वाच इत्यत आह– **उपचीयत इति** ।। तदभावे शुष्यतीत्येतदुपपादयति– **तृषितस्येति** ।। **पूर्वं** जलपानात् । वागेव मन्दा प्रवर्तते न चक्षुरादि । यदर्थं वाच उभयभूतात्मकत्वमुक्तं तदाह– **वाग्देवतेति** ।। **ततः** तेजोबात्मकत्वात् । चापि शब्दौ मिथः समुच्चये । न केवलं चक्षुरादीनामुक्ता एव देवताः किन्तु तदन्या अपि सन्तीत्याह– **चक्षुष्वमिति** ।। चक्षुरभिमानित्वमित्यर्थः । सहोच्यत इत्यस्य वाक्यचतुष्टयेऽप्यन्वयः । पूर्वोक्तैः रव्यादिदेवतैः सहोच्यते । ते यथा चक्षुराद्यभिमानिनस्तथैतेऽग्न्यादयोऽपीति भावः । मनआदीनां प्रागुक्तशेषादिदेवताकक्षातिरक्त[53]कक्षान्तरं कुतोऽङ्गीक्रियत इत्यत आह– **द्वितीयमिति** ।। **आस्थानं** कक्षा । श्रुत्यन्तरेऽग्न्यादीनामपि

---

५२. पृथिव्यादिस्वरूपा..इति 'ख'पाठः

५३. कक्षातिरिक्तं इति 'ख' पाठः

चक्षुरादिदेव[५४]त्वक्तेरविरोधार्थमेषा द्वितीयकक्षाप्यङ्गीक्रियत इति भावः । उक्तमर्थं निगमयति– **शेषेति** ।। **मनआदिस्वरूपिणां** तदभिमानिनाम् । एवं प्राणस्य सर्वदेवोत्तमत्वोक्त्या प्राप्तां स्वातन्त्र्यशङ्कां वारयति– **तस्येति** ।। **स्वयं** साक्षादाश्रय इत्यर्थः ।।

अग्निहोत्रादिपञ्चयज्ञेषु भगवतः पञ्चरूपाणि

**उपनिषत्**

**स एष वाचश्चित्तस्योत्तरोत्तरिक्रमो यद्यज्ञः । स एष यज्ञः पञ्चविधः, अग्निहोत्रं, दर्शपूर्णमासौ, चातुर्मास्यानि, पशुः, सोमः । स एष यज्ञानां सम्पन्नतमो यत्सोमः । एतस्मिन् ह्येताः पञ्चविधाः अधिगम्यन्ते, यत् प्राक्सवनेभ्यः सैका विधा, त्रीणि सवनानि यदूर्ध्वं सा पञ्चमी ।।२.३.३।।**

पञ्चविधभगवद्रूपोपासनार्थं पुरुषादिषु पाञ्चविध्यकथनम्

**भाष्यम्**

तस्माद् वायुवशानां हि वाक्चित्तादिस्वरूपिणाम् ।
देवानां क्रमवृत्तिभ्यो जाते यज्ञेऽपि केशवः ।।

अग्निहोत्रादिके नित्यमनिरुद्धादिरूपकः ।
पञ्चधाऽवस्थितः सोमे पञ्चरूपो व्यवस्थितः ।।

सवनत्रयात् पूर्वके च सवनत्रितये परे ।
अनिरुद्धादिरूपेण क्रमेणैव व्यवस्थितः ।।

---

५४. देवतात्वोक्तेः इति 'ख'पाठः

**तमेतं परमं विष्णुं मुक्तोऽप्यत्येव मन्यते ।**
**अधिकं ह्येव तस्मात् तं मन्येतान्योऽपि सर्वदा ।।** इत्यादि च ।

**पञ्चरूपभगवद्ध्यानार्थमेव चैतत्पञ्चविधत्वं सर्वत्रोक्तम् ।।२.३.३।।**

**भावप्रदीपः**

'स एष वाचश्चित्तस्योत्तरोत्तरिक्रमः' इत्येतद्व्याचष्टे– **तस्मादिति** ।। यस्मात्पञ्चरूपे वायौ पञ्चरूपतया हरिरवस्थितस्तस्मादत्यर्थः । **क्रमवृत्तिभ्यः** क्रमेण जाताभ्यस्तत्तदिन्द्रियप्रेरणादि[५५]रूपाभ्यो वृत्तिभ्यो जाते यज्ञेऽपि केशवः पञ्चधाऽवस्थित इत्यन्वयः । अग्निहोत्रादिक इति यज्ञविशेषणेन 'स एष यज्ञः पञ्चविधः' इत्यादेरर्थसङ्ग्रहः । 'यत्सोम एतस्मिन् ह्येताः पञ्चविधा अधिगम्यन्ते' इत्यादिव्याचष्टे– **सोमे पञ्चरूप इति** ।। तस्यैव विवरणम्– **सवनत्रयादित्यादि** ।। तत्र सवनत्रयादित्यादिकं 'यत्प्राक् सवनेभ्यः' इत्यादेर्व्याख्या । **परे** सवनत्रयादूर्ध्वन्तने सोमे । 'सर्वं लोकमति' इत्येतद्वाक्यं भिन्नवाक्यतया प्राग्व्याख्यातम् । इदानीं तु हेतुहेतुमद्भावापन्नतयैकवाक्यताम-भिप्रेत्य योजयति– **तमेतमिति** ।। **अन्योऽपि** अन्तरिक्षाधिपत्यं प्राप्तो वा स्वर्गलोकाधिपत्यं प्राप्तो वेत्यर्थः । एतेन यद्यन्तरिक्षमिति वाक्येऽपि मन्यत इत्येतन्मन्येतैवेति लिङर्थकमेवेति सूचयति । अत्र पुरुष-वायुयज्ञसोमोषु सर्वत्र पञ्चविधत्वोक्तेः प्रयोजनमाह– **पञ्चरूपेति** ।।

ततश्चायं खण्डार्थः । अत्र 'स एष पुरुषः समुद्रः' इति वाक्यमा-वर्तनीयम् । योऽस्मिन्पुरुषे पश्वादिभ्य आधिक्येन सन्निहितो भगवान् **स एष पुरुषः** पुरुषनामा **समुद्रः** समुद्रिक्तः पूर्णः[५६] अन्येभ्यः

---

५५. 'क' मातृकायां आदिपदं नास्ति   ५६. संपूर्णः इति 'ख'पाठः

सर्वेभ्यः, स एष पश्वादिभ्य आधिक्येन भगवत्सन्निधानपात्रभूतः **पुरुषो** जीवो यद्यपि भगवत्प्रसादात् **समुद्रः** समुद्रिक्तः सर्वलोकाधिपो भवति । तथा **सर्वं लोकं** सर्वान् लोकान् पृथिव्यन्तरिक्षादीन् **अति** अतीत्य **यत्किंच** यत्किंचिदलौकिकं **ह** प्रसिद्धं मोक्षाख्यं महाभाग्यं वैकुंठादि-मोक्षस्थानं वाऽ**श्नुते** प्राप्नोति तथापि **एनं** पुरुषशब्दवाच्यं प्रागात्मशब्देन पस्तुतं वा विष्णुं **अत्येव मन्यते** स्वात्मनः सर्वस्माच्चाधिकमेव मन्यते । मुक्तेऽपि न तेन साम्यं तद्भावं वा मन्यते । यद्यन्तरिक्षलोकं भगवत्प्रसादादश्नुते तदाऽपि **एनं** विष्णु-मत्येव मन्यते । **यद्यमुं लोकं** स्वर्गं देवलोकाधिपत्यमिति यावत् । **अश्नुवीत** अश्नुते भगवत्प्रसादात्प्राप्नोति तद्योग्य**स्तदा** तदपि **अश्नुवीतैव** भुञ्जीतैव । बहुगणिकादिपरिवाररूपमशुचीदं पदमित्यादि-बुध्या नापन्हुवीत । अथवा अश्नुत इति पदं अनुवर्त्य व्याख्येयम् । यद्येवममुं लोकम**श्नुवीत** प्रप्तो भवति तदापि **एनं** भगवन्तं **अति-मन्येतैव** सर्वथा स्वतः सर्वस्माच्चाधिकमेव **मन्येत** अधिकमेव मन्येत । स्वर्गलोकधिपत्यं प्राप्तोऽप्येनमतिमन्येतैवेत्यर्थः । तथा च भगवान् मुक्तैरमुक्तैश्च सर्वोत्तममत्वेन चिन्त्य इति भावः ।

**स एष पुरुषः** पुरुषस्थः पुरुषनामा हरिः **पञ्चविधः** पुरुषदेहस्थ-पञ्चभूतेषु पञ्चरूपः स्थितः । तदेव विशदयति– **तस्येत्यादिना** ।। **तस्य** तदीयदेहस्थपञ्चभूतसमुदायस्य मध्ये **यदुष्णं** जाठराग्न्यादिकं **तज्जोति**स्तत्तत्र ज्योतिषि ज्योतिर्नामा प्रद्युम्नः स्थितः । यानि **खानि** योऽवकाशाः कर्णनासादिविवररूपाः **स आकाश**स्तस्मिन्नाकाशनामा वासुदेवः । **अथ यल्लोहितं** श्लेष्मा रेतश्च **ता आप**स्तासु चाम्नामा स्त्रीरूपो बहुरूपोऽनिरुद्धः । **यच्छरीर**मस्थ्यादिरूपं **कठिणं सा**

**पृथिवी** तस्यां च पृथिवी नामा नारायणः । **यः प्राणः** स वयुस्तस्मिन्वायुनामा संकर्षणः इति ।।

एवं देहस्थपञ्चभूतेषु भगवतः पञ्चरूपाण्युत्त्वा तत्र वायौ पुनः पञ्चरूपस्य भगवतः स्थितिमाह– **स एष वायुरिति** ।। **यः** संकर्षणाधिष्ठानभूतः **स एष वायुः** प्राणादिभेदेन पञ्चविधः । तत्र च वायौ **एषः** भगवान्प्राणादिशब्दवाच्यानिरुद्धप्रद्युम्नसंकर्षणवासुदेव-नारायणभेदेन पञ्चविधः स्थितः । इतरभूतेषु त्वेकैकरूपेणैव स्थितोऽतः खादिभ्यश्चतुर्भ्यो वायुरेव विशिष्ट इति भावः । अत एव **ताः** पूर्वोक्ताः ज्योतिरादिचतुर्भूताभिमानिन्यः **एता** वक्ष्यमाणा देवताः **प्राणापानयोः** प्राणापानरूपे वायावेव **निविष्टा** आश्रिताः । कास्ताः? **चक्षुःश्रोत्रंमनोवागित्येताः** । तत्र **चक्षु**र्ज्योतिर्भूतात्मकं तदभिमानी रविः । **श्रोत्रं** आकाशरूपं तद्देवा मित्रधर्मवरुणकुबेरा-श्चत्वारो दिग्देवताः[५७] । **मनः** पृथिव्यात्मकं तद्देवाश्च शेषवीन्द्रशिवेन्द्र-कामानिरुद्धगुरुचन्द्राः । **वाक्** किंचित्तेजोयुता विशेषेण त्वबात्मिका । अतो भूतद्वयात्मकत्वाद्वाचस्तदभिमान्यग्निरुमा च । अत्र चक्षुरग्निः श्रोत्रं चन्द्रो मनः पर्जन्यो वाक् स्वाहेति चक्षुराद्यभिमानीनि द्वितीय-कक्षास्थितानि देवतान्तराण्यपि ग्राह्याणि । न केवलमेलतासां देवतानां प्राणाश्रितत्वं किं नामैता देवताः **प्राणस्य** वायोः **अपायं** देहान्निर्गमनम**नुयन्ति** अनुसृत्यैव निर्गच्छन्त्यपि ।

**यद्यज्ञो** यो यज्ञः स एष **वाचश्चित्तस्य** चक्षुः श्रोत्रयोश्चेत्यपि ग्राह्यम् । तदभिमानिनां देवानामिति यावत् । **उत्तरोत्तरिक्रमः**

---

५७. दिग्देवा इति 'ख' पाठः

तृतीयोऽतिशये । उत्तरोत्तरक्रमजातः उत्तरोत्तरं तारतम्यक्रमजात-प्रेरणारूपवृत्तिजात इत्यर्थः । यज्ञो हि चक्षुःश्रोत्रमनोवाग्व्यापारसाध्यः । ताश्च तत्तदभिमानिदेवताभिः प्रेरिता एव स्वस्वव्यापारेषु प्रवर्तन्ते इति । यत एवं विष्णुर्वायौ पञ्चधावस्थितस्तस्माद्वाय्वधीनदेवता-प्रेरितवाक्चित्तादिव्यापारसाध्यः **स एष** यज्ञोऽग्निहोत्रादिभेदेन पञ्चविधः । तत्र स्थितो भगवानप्यग्निहोत्रदिनामकोऽनिरुद्धादिरूपकः पञ्चविधः ।

अत्रायं विवेकः । अदनाद्धवनाच्चाग्निहोत्रनामाऽनिरुद्धो अग्निहोत्रे स्थितः । दर्शनात् दर्शः । मासोपलक्षितसर्वकालेषु पूर्णत्वात्पूर्णमासः । एवं दर्शपूर्णमासनामा द्विरूपः प्रद्युम्नो दर्शपूर्णमासनाम्नोरिष्टिविशेषयोः स्थितः । चतुरत्वान्मासोपलक्षितसर्वकालगतत्वाच्चातुर्मास्यत्रय-नियामकत्वाच्च तन्नामा संकर्षणो बहुरूपश्चातुर्मास्याख्येष्टिषु स्थितः । पालनात्सुखरूपत्वात्पशुनामा वासुदेवः पशुनामकेष्टौ स्थितः । सोम्यत्वात् उना रुद्रेण मया लक्ष्म्या च युक्तत्वाद्वा सोमनामा नारायणः सोमयागे स्थित इति ।।

एवं सोमयागेऽपि पञ्चरूपभगवदवस्थानं वक्तुं सोमस्या-ग्निहोत्रादिचतुर्यज्ञेभ्यो वैशिष्ट्यं तावदाह– **स एष इति** ।। **यत्** यः सोमः **स एष** यज्ञानां मध्ये **संपन्नतमः** अतीवश्रेष्ठ इत्यर्थः । सोमस्य पांचविध्यं चाह– **एतस्मिन्निति** ।। **एतस्मिन्** यज्ञश्रेष्ठे सोमे **एताः** पञ्चविधाः प्रकारा **अधिगम्यन्ते** शास्त्रेषु प्रतिपाद्यन्ते हि । कास्ताः? **सवनेभ्यः** प्रातर्मध्यन्दिनसायंसवनेभ्यः प्रागनुष्ठेयो **यत्** यः सोमः स एकविधा । विधेयानुसरणेन सेति स्त्रीलिङ्गं । प्रकार-प्रकारिणोरभेदात्सामानाधिकरण्यम् । त्रीणि सवनानि यानि तास्तिस्रो विधाः । **सवनेभ्यः ऊर्ध्वं यत्** यः सवनत्रयादुपरितनः सोमः सा

पञ्चमी विधेति । एवं पञ्चविधः । एतस्मिन्सोमे **एता** वक्ष्यमाणा अनिरुद्धादिमूर्तयः पञ्चविधा अधिगम्यन्ते । कथं यत्प्राक् सवनेभ्यः सा तस्मिन् प्रागंचनात्प्राक्शब्दवाच्यानिरुद्धाख्या मूर्तिरेकविधा । **त्रीणि सवनानि** त्रिषु सवनेषु जगत्प्रसवकर्तृत्वात्सवननामकानि प्रद्युम्नकंकर्षणवासुदेवाख्यानि त्रीणि रूपाणि तिस्रो विधाः । यदूर्ध्वं सा तस्मिन्सर्वोच्चत्वादूर्ध्वशब्दवाच्यं नारायणाख्यं रूपं पञ्चमी विधेति ।।२.३.३।।

**।। इति द्वितीयारण्यके तृतीयखण्डः ।।**

## अथ चतुर्थखण्डः

स्तोम-साम-चिति-छन्दः-शस्त्रेषु भगवद्रूपाभिधानम्, स्तोमस्य पाञ्चविध्यकथनपूर्वकं तत्स्थभगवद्रूपाभिधानम्

### उपनिषत्

**यो ह वै यज्ञे यज्ञं वेद, अहन्यहर्देवेषु देवमध्यूळ्हं स सम्प्रतिवित् । एष वै यज्ञे यज्ञोऽहन्यहर्देवेषु देवोऽध्यूळ्हो यदेतन्महदुक्थम् । तदेतत्पञ्चविधम् । त्रिवृत्पञ्चदशं सप्तदशमेकविंशं पञ्चविंशमिति स्तोमतः । गायत्रं रथन्तरं बृहद्भद्रं राजनमिति सामतः । गायत्र्युष्णिग्बृहती-त्रिष्टुब्द्विपदेति छन्दस्तः । शिरो दक्षिणः पक्ष उत्तरः पक्षः पुच्छमात्मेत्याख्यानम् ।**

यज्ञादिशब्दनिर्वचनं तत्स्थभगवद्रूपोपासनफलकथनम् च

### भाष्यम्

यज्ञेषु यज्ञनामानं याज्यत्वात् पुरुषोत्तमम् ।
अधिरूढं तथाऽहस्सु चाहर्नामानमेव तु ।।

**अहार्यत्वाद्धि देवेषु देवं सर्वोत्तमत्वतः ।**
**एवं च सर्वनामानं सर्वेषु स्थितमच्युतम् ।।**

**स्तोमादिषु च यो वेद स सम्यग्विदिति श्रुतः ।**
**य एष उक्थनामाऽसौ सर्वोत्थापनको हरिः ।।**

**महांश्च परिपूर्णत्वात् सहस्रबृहतीस्थितः ।**
**अहरह्नां स यज्ञानां यज्ञो देवाधिकोऽपि सः ।।**

**अनिरुद्धादिरूपेण स विष्णुः पञ्चधा स्थितः ।**
**स्तोमसामाचितिच्छन्दःशस्त्रेष्वपि पृथक् पृथक् ।**
**एकैकमेव तद्रूपमनिरुद्धादिपञ्चकम् ।।**

**भावप्रदीपः**

'यो ह वै यज्ञे यज्ञं वेद' इत्येतत्खण्डं व्याचष्टे– **यज्ञेष्वित्यादिना** ।। यज्ञेषु अहस्सु देवेषु चाधिरूढमिति संबन्धः । यज्ञेष्वहस्स्वित्यनेन यज्ञे अहनीत्येकवचनं समुदायापेक्षमित्यभिप्रैति । याज्यत्वाद्यज्ञनामानं । स्वपदादहार्यत्वादहर्नामानम् । सर्वोत्तमत्वतो **देवं** देवनामानम् । **एवं च** एवमेव । स्तोमादिषु सर्वेषु स्तोमसामचितिछन्दःशस्त्रेषु च स्थितं **सर्वनामानं** तत्तन्नामानमच्युतं यो वेद सम्यग्विदित्यर्थः । एवं चेत्यनेन 'तदेतत्पञ्चविधं' इत्यारभ्य 'पुच्छमात्मेत्याख्यानं' इत्यस्य तात्पर्यमुक्तं भवति । 'यदेतन्महदुक्थं' इत्यंशं व्याचष्टे– **य एष इति** ।। य एष उक्थनामा हरिरसौ परिपूर्णत्वान्महांश्चेत्यन्वयः । उक्थनामकबृहतीसहस्रस्थितत्वात् रूढ्याऽप्युक्थनामा भगवानित्यभिप्रेत्याह– **सहस्रबृहतीस्थित इति** ।।

'एष वै यज्ञे यज्ञोऽहन्यहः' इत्यादि व्याचष्टे– **अहरह्नामिति** ।। **स** महदुक्थनामा विष्णुरह्नां समुदाये स्थित्वा तेषामहस्त्वप्रद इत्यर्थः । एवं यज्ञानां यज्ञ इत्येतदपि व्याख्येयम् । 'देवेषु देवः' इत्यस्य तात्पर्यम्– **देवाधिक इति** ।। एतेन 'यदेतन्महदुक्थं' इति वाक्यस्य 'एष वै यज्ञे यज्ञः' इत्यादिपूर्ववाक्येनान्वयमभिप्रैति । 'तदेतत्पञ्चविधं' इति वाक्यं व्याचष्टे– **अनिरुद्धादिरूपेणेति** ।। 'पृथक् पृथक्' इति स्तोमदिषु पञ्चषु प्रत्येकं त्रिवृत्पञ्चदशं गायत्रं रथन्तरमित्यादिरूपेण पञ्चधा स्थित इत्यर्थः । न केवलं स्तोमादिषु पञ्चधा स्थितः किन्तु तत्र पृथक् पृथगपि पञ्चधास्थित इत्यपिशब्दः । एतदेव विवृणोति– **एकैकमिति** ।। **तद्रूपं** अनिरुद्धादिकमनिरुद्धादिपञ्चकं भवतीत्यर्थः ।।

अयं भावः । स्तोमेऽनिरुद्धः, स पञ्चविधः । अनिरुद्धानिरुद्धः, अनिरुद्धप्रद्युम्नः, अनिरुद्धसंकर्षणः, अनिरुद्धवासुदेवः, अनिरुद्धनारायण इति । एवं पञ्चरूपोऽनिरुद्धस्त्रिवृदादिपञ्चविधे स्तोमे क्रमेणास्थितः । एवं प्रद्युम्नादयोऽपि प्रद्युम्नानिरुद्ध इत्यादिभेदेन पञ्चात्मानो भूत्वा गयत्र्यादिपञ्चविधसामादिषु क्रमेण स्थिता इति ।।

'अत्र शिरो दक्षिणः पक्षः उत्तरपक्षः पुच्छामात्मेत्याख्यानं' इति वाक्यं चिति शस्त्रयोरुभयोरपि सङ्ग्रहेण पांचविध्यनिरूपकमिति भावेन चितिशस्त्रयोः पृथग्ग्रहणम् । **चितिः** शेनाकारा वेदिका । **शस्त्रं** मन्त्रसहस्रम् ।।

प्रस्तावादिषु भगवतः पञ्चरूपाभिधानम्

उपनिषत्

**पञ्चकृत्वः प्रस्तौति, पञ्चकृत्व उद्गायति, पञ्चकृत्वः प्रतिहरति, पञ्चकृत्व उपद्रवति, पञ्चकृत्वो निधनमुपयन्ति । तत्स्तोभसहस्रं भवति । एवं ह्येताः पञ्चविधाः अनुशस्यन्ते, यत्प्राक् तृचाशीतिभ्यः सैका विधा, तिस्रस्तृचाशीतयो, यदूर्ध्वं सा पञ्चमी ।**

भाष्यम्

प्रस्तावादिष्वपि विभुः पञ्चधैव व्यवस्थितः ।
प्रस्तावादीन् पञ्चकृत्वस्तस्मादेव प्रकुर्वते ।।

पञ्चरूपं तमेवैकं स्तोतुमेव पृथक् पृथक् ।
तत्र ये स्तोमशब्दाश्च संस्थिता बहुकोटयः ।

पृथक् पृथक् तेऽपि विष्णोः प्रादुर्भावान् प्रचक्षते ।।
अनन्तरूपो हि हरिः शब्दोऽप्येष ह्यनन्तधा ।

भावप्रदीपः

'पञ्चकृत्वः प्रस्तौति' इत्यादिवाक्यपञ्चकं व्याख्यातुं तदुपयुक्तं प्रमेयं तावदाह– **प्रस्तावादिष्विति** ।। प्रस्तावोद्गीथप्रतिहारोपद्रवनिधननामकपञ्चसामस्वपि प्रत्येकं पञ्चधा अनिरुद्धादिरूपेण व्यवस्थित इत्यर्थः । इदानीं 'पञ्चकृत्वः' इत्यादिवाक्यपञ्चकं व्याचष्टे– **प्रस्तावादीनिति** ।। **तस्मादेव** प्रस्तावादिषु प्रत्येकं पञ्चधास्थितत्वादेव **प्रकुर्वते** यथाविधि पठन्ति । प्रस्तोत्रादय इति शेषः ।

प्रस्तावादिषु भगवतः प्रत्येकं पञ्चधास्थितत्वेऽपि कुतः प्रस्तोत्रादीनां पञ्चकृत्वः प्रस्तावादिपठनमित्यत आह– **पञ्चरूपमिति** ।। स्तोतुमेव न तु प्रयोजनान्तरार्थम् । 'तत् स्तोभसहस्रं भवति' इत्येतद्व्याचष्टे– **तत्रेति** ।। प्रस्तावादिसामस्वित्यर्थः । 'बहुकोटयः' इत्यनेन सहस्रशब्दोऽनन्तवाचीत्युक्तं भवति । न केवलं प्रस्तावाद्या एव किन्तु तद्गतास्ते स्तोभशब्दा अपीत्यपिशब्दार्थः । अथवा स्तोभशब्दानां निरर्थकतायाः स्थितत्वात्कथं तेषां प्रादुर्भाववाचकत्वमित्याशङ्कावारणायोक्तम्– **तेऽपीति** ।। निरर्थकतया प्रमिता अपीत्यर्थः । न चैवं स्तोभानां निरर्थकतावचनं व्याहतम् । वाक्यसमन्वयदशायामेव निरर्थकतास्थितेः । पदसमन्वयदशायां तु सार्थकतैवेति । अत एव [५८]'अस्तोभमनवद्यं च' इति सौत्रलक्षणकथने स्तोभाक्षराणां नैरर्थक्याङ्गीकारविरोधोऽपि परास्तो वेदितव्यः । एतेन तत्र तत्र प्रस्तावादिषु सामसु स्तोभसहस्रं भवति । अनन्ताः स्तोभशब्दास्सन्ति । तच्च स्तोभसहस्रं भवति । एतदेव स्पष्टमाचष्टे– **अनन्तरूप इति** ।। तथा चोभयोरप्यानन्त्यान्न पृथक् पृथक् वाच्यवाचकभावानुपपत्तिरिति भावः[५९] । पृथक् पृथक् विष्णुप्रादुर्भावानां वाचकमिति शेष तद्वाक्यं व्याख्यातं भवति ।।

### बृहतीसहस्रस्य विष्णुसहस्रनामव्याख्यानरूपत्वकथनम्

### उपनिषत्

## तदेतत्सहस्रं । तत् सर्वं

---

५८. सू.भा. उदाहृतप्रमाणं १-१-१

५९. अर्थः इति 'ख'पाठः

प्रस्तावादिषु भगवतः पञ्चरूपाभिधानम्

उपनिषत्

**पञ्चकृत्वः प्रस्तौति, पञ्चकृत्व उद्गायति, पञ्चकृत्वः प्रतिहरति, पञ्चकृत्व उपद्रवति, पञ्चकृत्वो निधनमुपयन्ति । तत्स्तोभसहस्रं भवति । एवं ह्येताः पञ्चविधाः अनुशस्यन्ते, यत्प्राक् तृचाशीतिभ्यः सैका विधा, तिस्रस्तृचाशीतयो, यदूर्ध्वं सा पञ्चमी ।**

भाष्यम्

प्रस्तावादिष्वपि विभुः पञ्चधैव व्यवस्थितः ।
प्रस्तावादीन् पञ्चकृत्वस्तस्मादेव प्रकुर्वते ।।

पञ्चरूपं तमेवैकं स्तोतुमेव पृथक् पृथक् ।
तत्र ये स्तोमशब्दाश्च संस्थिता बहुकोटयः ।

पृथक् पृथक् तेऽपि विष्णोः प्रादुर्भावान् प्रचक्षते ।।
अनन्तरूपो हि हरिः शब्दोऽप्येष ह्यनन्तधा ।

भापप्रदीपः

'पञ्चकृत्वः प्रस्तौति' इत्यादिवाक्यपञ्चकं व्याख्यातुं तदुपयुक्तं प्रमेयं तावदाह– **प्रस्तावादिष्विति** ।। प्रस्तावोद्गीथप्रतिहारोपद्रवनिधननामकपञ्चसामस्वपि प्रत्येकं पञ्चधा अनिरुद्धादिरूपेण व्यवस्थित इत्यर्थः । इदानीं 'पञ्चकृत्वः' इत्यादिवाक्यपञ्चकं व्याचष्टे– **प्रस्तावादीनिति** ।। **तस्मादेव** प्रस्तावादिषु प्रत्येकं पञ्चधास्थितत्वादेव **प्रकुर्वते** यथाविधि पठन्ति । प्रस्तोत्रायद इति शेषः ।

प्रस्तावादिषु भगवतः प्रत्येकं पञ्चधास्थितत्वेऽपि कुतः प्रस्तोत्रादीनां पञ्चकृत्वः प्रस्तावादिपठनमित्यत आह– **पञ्चरूपमिति** ।। स्तोतुमेव न तु प्रयोजनान्तरार्थम् । 'तत् स्तोभसहस्रं भवति' इत्येतद्व्याचष्टे– **तत्रेति** ।। प्रस्तावादिसामस्वित्यर्थः । 'बहुकोटयः' इत्यनेन सहस्रशब्दोऽनन्तवाचीत्युक्तं भवति । न केवलं प्रस्तावाद्या एव किन्तु तद्गतास्ते स्तोभशब्दा अपीत्यपिशब्दार्थः । अथवा स्तोभशब्दानां निरर्थकतायाः स्थितत्वात्कथं तेषां प्रादुर्भाववाचकत्वमित्याशङ्कावारणायोक्तम्– **तेऽपीति** ।। निरर्थकतया प्रमिता अपीत्यर्थः । न चैवं स्तोभानां निरर्थकतावचनं व्याहतम् । वाक्यसमन्वयदशायामेव निरर्थकतास्थितेः । पदसमन्वयदशायां तु सार्थकतैवेति । अत एव [५८]'अस्तोभमनवद्यं च' इति सौत्रलक्षणकथने स्तोभाक्षराणां नैरर्थक्याङ्गीकारविरोधोऽपि परास्तो वेदितव्यः । एतेन तत्र तत्र प्रस्तावादिषु सामसु स्तोभसहस्रं भवति । अनन्ताः स्तोभशब्दास्सन्ति । तच्च स्तोभसहस्रं भवति । एतदेव स्पष्टमाचष्टे– **अनन्तरूप इति** ।। तथा चोभयोरप्यानन्त्यान्न पृथक् पृथक् वाच्यवाचकभावानुपपत्तिरिति भावः[५९] । पृथक् पृथक् विष्णुप्रादुर्भावानां वाचकमिति शेष तद्वाक्यं व्याख्यातं भवति ।।

### बृहतीसहस्रस्य विष्णुसहस्रनामव्याख्यानरूपत्वकथनम्

### उपनिषत्

**तदेतत्सहस्रं । तत् सर्वं**

---

५८. सू.भा. उदाहृतप्रमाणं १-१-१

५९. अर्थः इति 'ख'पाठः

भाष्यम्

विष्णोः सहस्रनामस्तु यत्तद्रूपसहस्रकम् ।।
बृहतीसहस्रमेतच्च तद्वक्ति हि पृथक् पृथक् ।
सहस्रशब्दोऽप्यमितं यतो वक्त्यमितान्यतः ।।
नामानि विष्णोरुच्यन्ते सहस्रमिति चाख्यया ।
अनन्तनामवचने त्वशक्तत्वात् सहस्रकम् ।।
नाम्नां पृथगिदं प्रोक्तमनन्ततनुवाचकम् ।
विष्णोरनन्तरूपाणामुक्त्या पञ्चशतद्वये ।।
आसीत् सहस्रमित्याख्या सहस्रं मुख्यतोऽमितम् ।
ब्रह्म यावत् तावती वागिति वेदप्रमाणतः ।।
सहैवानन्तरूपैस्तु सरणेन सहस्रकम् ।
नाम्ना सह सृतेरेव रूपाणां वा सहस्रता ।।
बृहतीसहस्रं चैतस्माद्रूपानन्ताभिधायकम् ।
पृथक् पृथग्धि नामार्था ऋच एताः प्रकीर्तिताः ।।
सर्वनामात्मकं तस्मादृक्सहस्रमिदं हरेः ।
सर्वरूपाण्यतो विष्णोस्संस्तुतान्यमुनैव हि ।।

भावप्रदीपः

एवं बृहतीसहस्रमपि विष्णुरूपसहस्रवाचकमिति वक्तुं बृहती-सहस्रस्वरूपमुच्यते– एवं ह्येता इत्यादिना तदेतत्सहस्रमित्यन्तेन ।। तत्र 'तदेतत्सहस्रं' इत्येतद्व्याचष्टे– विष्णोरिति ।। तत् प्रसिद्धं

यद्रूपसहस्रकं विश्वादिकं तदित्यन्वयः । **पृथक् पृथगिति** ।। एकैका ऋकैकं[६०] रूपं वक्तीत्यर्थः । ननु विष्णोरनन्तनामत्वात्कथं सहस्रनामत्वमित्यत आह– **सहस्रशब्द इति** ।। दशशतलक्षणसहस्रवाचकोऽपीत्यपिशब्दार्थः । अतः सहस्रमित्याख्यया शब्देनैव विष्णोरमितानि नामानि उच्यन्ते इति यजना । तथा च सहस्रनाम्न इत्यस्यानन्तनाम्न इत्येवार्थ इति भावः । तर्हि 'विश्वं विष्णुः' इत्यादिनामसहस्रस्यैव परिगणनं कुत इत्यत आह– **अनन्तनामेति** ।। **वचने** उच्चारणेऽशक्तत्वात् । अल्पाधिकारणामिति शेषः । **इदं** नाम्नां सहस्रकं **पृथक्** निष्कृष्य प्रोक्तं भारतादावित्यर्थः । तर्ह्यनेन नामसहस्रेण रूपसहस्रा[६१]भिधाने एषां नाम्नामितरनामतुल्यतैव प्राप्तेति [६२]विशिष्यैतासामेव निष्कृष्योक्तिः कुत इत्यत उक्तम्– **अनन्ततनुवाचकमिति** ।। विष्णोरनन्तरूपवाचकमित्यर्थः । ननु तर्हि 'यत्तद्रूपसहस्रकं' इति [६३]सहस्रवाच्यरूपाणां सहस्रत्वोक्तिविरोध इत्यत आह– **विष्णोरिति** ।। नायं सहस्रशब्दो विष्णुरूपाणां पञ्चशतद्वयात्मकसहस्रकतामभिधत्ते । तेषामनन्तत्वात् । किं नाम नाम्नां पञ्चशतद्वयात्मकसहस्रे विष्णोरनन्तरूपाणामप्युक्तत्वादनन्तनामापि तेषां सहस्रमित्याख्याऽऽसीदित्यर्थः । एवं सहस्रशब्दं रूपेषु गौणतया व्याख्याय मुख्यतयापि योजयति– **सहस्रमिति** ।। अमितं मुख्यतः सहस्रमिति संबन्धः । सहस्रशब्दमुख्यवाच्यमित्यर्थः । तथा च 'यत्तद्रूपसहस्रकं' इत्यत्र सहस्रशब्दोऽनन्तवाच्येवाभिप्रेत इति भावः ।

---

६०. एकैकं इति 'ख'पाठः

६१. रूपसहस्रस्यैव इति 'ख'पाठः

६२. विशिष्यैवेषां इति 'ख' पाठः ६३. सहस्रनाम इति 'ख'पाठः

अनन्तनाम्नो विष्णोः सहस्रनामत्वमनन्तरूपस्य सहस्ररूपत्वं च प्रकारान्तरेणाप्युपपादयति– **ब्रह्मेति** ।। अनेन 'यावद्ब्रह्म विष्ठितं तावती वाक्'[६४] इति श्रुतिमर्थतोऽनुवदति **ब्रह्म** विणुः **यावद्विष्टितं** यावद्रूपवान् स्थितो **वाक्** तद्वाचकनामापि **तावती** तावत्संख्याकमस्तीत्यर्थः । तथा च विष्णुनामरूपयोः समसङ्ख्यतायाः श्रुतिप्रमितत्वादनन्तरूपैः सहैव **सरणेन** एकैकरूपप्रतिपादकतया पृथक् पृथगवस्थानादिति यावत् । **तत्** अन्तनामजातं **सहस्रकं** सहस्रशब्दवाच्यमभूत् । एवं नाम्नामनन्तनामजातेन सहैव **सृतेः** सरणादेकैकनामवाच्यतया पृथक् पृथगवस्थानाद्रूपाणामनन्तानामपि **सहस्रता** सहस्रशब्दवाच्यता ज्ञेयेत्यर्थः । वाशब्दोऽप्यर्थः । सहोपपदात् सृगताविति धातोः कप्रत्ययः सकारान्तलोपः ।

एवं नाम्नां रूपाणां चामितत्वाविरोधेन सहस्रत्वमुपपाद्य यदुक्तं 'बृहतीसहस्रमेतच्च तद्वक्ति हि पृथक् पृथक्' इति तन्निगमयति– **बृहतीसहस्रमिति** ।। **एतस्मात्** विश्वादिनाम्नामनन्तरूपवाचकत्वात्तदर्थभूतं [६५]सहस्रमपि रूपानन्ताभिधायकमित्यर्थः । एतदेव विवृणोति– **पृथगिति** ।। **एताः** बृहतीसहस्रस्था ऋचः **पृथक् पृथक् नामार्थाः** एकैका ऋगनन्ततनुवाचकविश्वाद्येकैकनामार्थभूतेत्यर्थः । एतेन 'तदेतत्सहस्रं' इति वाक्यमेवं व्याख्यातं भवति । **यदेतत्** पञ्चविधोपेतत्वेनोक्तं **तदेतत्सहस्रं** बृहतीसहस्रं यदेतद्विश्वादि–सहस्रनामवाच्यं विश्वादिरूपसहस्रं तत् पृथक् पृथक्[६६] प्रतिपादयतीति शेष इति । 'तत्सर्व'मिति वाक्यं व्याचष्टे– **सर्वनामात्मक-**

---

६४. वि.त.नि. उ.व २४०पु   ६५. बृहतीसहस्रं इति 'ख'पाठः

६६. पृथक् इति पदं 'क'पाठे नास्ति

**मिति** ।। इदं ऋक्सहस्रं **तस्मात्** अनन्तनामवाच्यानन्तरूपाभिधायकत्वाद्धरेर्यानि सर्वाणि नामानि तदात्मकं ज्ञेयमित्यर्थः । एतेन 'तत्सर्व'मित्येतत् **तत्** बृहतीसहस्रं **सर्वं** सर्वनामात्मकं ज्ञेयमिति व्याख्यातं भवति । एतदेव वाक्यं प्रकारान्तरेण व्याचष्टे– **सर्वरूपाणीति** ।। **अत एव** अनन्तनामवाच्यानन्तरूपाभिधायकत्वादेव **अमुना** बृहतीसहस्रेण विष्णोः सर्वरूपाणि संस्तुतानि हीत्यर्थः । एतेन **तत्** तस्माद्बृहतीसहस्रस्य सर्वरूपाभिधायकत्वादेव **सर्वं** विष्णुरूपजातं **तत्** तेन संस्तुत इति शेष इति तद्वाक्यं व्याख्यातं भवति ।।

बृहतीसहस्रस्य मत्स्यादिनामव्याख्यानरूपत्वकथनम्

**उपनिषत्**

**तानि दश दशेति वै सर्वम् ।**

सामभक्तिप्रतिपाद्यभगवद्रूपनिरूपणम्

**भाष्यम्**

**मत्स्यकूर्मक्रोडसिंहवटुभार्गवराघवाः ।**
**कृष्णबुद्धौ च कल्कीति रूपाणां दशकं हरेः ।।**

**पञ्चभेदविभिन्नेन ह्यृक्सहस्रेण शंस्यते[६७] ।**
**रूपाणां पञ्चकं पूर्वमपरं पञ्चकं हरेः ।।**

**प्रस्तावाद्यैरानिधनैः स्तूयते सामभक्तिभिः ।**
**तानि रूपाण्यस्य दश सर्वरूपात्मकानि च ।।**

**दशनामानि चास्यैव सर्वरूपाभिधान्यपि ।**

---

६७. शष्यते इति ह.पाठः

**पञ्चकं सामभक्तीनामृक्सहस्रं च तद्द्वयम् ।**

**स्तावकं सर्वरूपाणामत एव रमापतेः ॥**

**भावप्रदीपः**

'तानि दशे'ति वाक्यं व्याचष्टे– **मत्स्येति** ॥ पञ्चभेदविभिन्नेन तृचाशीतित्रयं तत्पूर्वं ततः परञ्चेति पञ्चभागोपेतेन ऋक्सहस्रेण हरेर्मत्स्यादिरूपाणां दशकं शंस्यत इत्यर्थः । एतेन **दश** मत्स्यादिदश[68]रूपाणि **तानि** तत्प्रतिपाद्यानि बृहतीसहस्रशंस्यानीति व्याख्यातं भवति । 'पञ्चभेदविभिन्नेन' इत्यनेन 'एवं ह्येताः पञ्चविधा अनुशस्यन्ते यत्प्राक्' इत्यादिकमप्युक्तार्थं भवति । पञ्चभेधविभिन्नेन रूपदशकशंसनं कथं युज्यत इत्यत आह– **रूपाणामिति** ॥ अयमत्र क्रमः । पूर्वभागेन मत्स्यभार्गवौ । प्रथमतृचाशीत्या कूर्मराघवौ । द्वितीयया क्रोडकृष्णौ । तृतीयया नरसिंहबुद्धौ । अपरभागेन वामनकल्किनौ शंस्येते इति ॥

'तानि दशे'त्येतदेव वाक्यं प्रकारान्तरेण व्याचष्टे– **प्रस्तावाद्यैरिति** ॥ प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनाख्याभिः **सामभक्तिभिः** सामप्रभेदै रूपाणां दशकं स्तूयत इति योजना । कथं पञ्चसामभागै रूपदशकस्तवनमित्यतोऽत्रापि तदुत्तरत्वेन रूपाणां पञ्चकं पूर्वमिति वाक्यं योज्यम् । अत्रापि क्रमः पूर्ववदेव द्रष्टव्यः । एतेन 'प्रस्तौति उद्गायति प्रतिहरति उपद्रवति निधनमुपयन्ति' इति यानि पूर्वं प्रस्तावादिसामभक्तिवाच्यानि विष्णुरूपाण्युक्तानि तानि न केवलमनिरुद्धादिपञ्चैव किन्तु दश च मत्स्याद्यात्मनेति तद्वाक्यं विवृतं भवति ॥

---

६८. दश इति पदं 'क'पाठे नास्ति

'दशेति वै सर्व'मिति वाक्यं व्याचष्टे– **तानीति** ।। **अस्य हरेस्तानि** मत्स्यादीनि दशरूपाणि न केवलं तावन्मात्राणि किं नाम सर्वरूपात्मकानि चेत्यर्थः । ननु मत्स्यादिदशरूपाणां सर्वरूपात्मकत्वे मत्स्यादिदशनाम्नां सर्वरूपाभिधायकत्वं स्यादित्यत इष्टमेवैतदित्याशेनाह– **दशेति** ।। **अस्य** हरेर्दशनामान्येव **सर्वरूपाभिधानि** सर्वरूपाणामप्यभिधायकानि भवन्ति बाधकाभावादिति भावः । अत्रोपष्टम्भकमाह– **पञ्चकमिति** ।। **सामभक्तीनां** प्रस्तावादीनां **पञ्चकं** ऋक्सहस्रं चेति यत्तद्वयं रमापतेः सर्वरूपाणां स्तावकमिति यदुक्तं **तत्** अत एव तद्वाच्यदशरूपाणां सर्वरूपात्मकत्वादेव । तथा मत्स्यादिदशनाम्नां सर्वरूपाभिधायकत्वादेव युज्यते । अन्यथा दशरूपप्रतिपादकयोस्तयोः सर्वरूपस्तावकत्वं न स्यादित्यर्थः ।।

दशशब्दनिर्वचनप्रदर्शनम्

**भाष्यम्**

**दशेति सर्वनामैतत्प्रथितं मुख्यतः श्रुतौ ।**
**शं रूपं भगवन्तं यद्द्याद् व्यक्त्या[६९] समस्तशः ।**
**दशेत्यमितनाम्नां तदाख्या रूपेषु शंददेः ।।**
**सर्वनामार्थवचनात् पञ्चकद्वितयस्य च ।**
**अभूद्दशेति वै नाम तस्मादेतद्दशाखिलम् ।।**

---

६९. भक्त्या इति ह.पाठः

## भावप्रदीपः

एवं तानि दशेति वाक्ये दशशब्दस्य पञ्चद्वयार्थतामभिप्रेत्य व्याख्यायेदानीं सर्वशब्दपार्यायतामभिप्रेत्य व्याचष्टे– **दशेति सर्व-नामैतदिति** ।। तथा च **तानि** मत्स्यादिसर्व[७०]नामान्येव **दश** सर्वाणि सर्वनामात्मकानि सर्वनामार्थानन्तरूपवाचकत्वादिति व्याख्यातं भवति । दशशब्दस्य सर्वार्थकता कुत इत्यतस्तामपुपादयितुं उक्तं मूले– **दशेति वै सर्वमिति** ।। तद्व्याचष्टे– **दशेति** ।। तत्र वैशब्दार्थः– **प्रथितं मुख्यतः श्रुताविति** । प्रकारान्तरेणापि दशशब्दार्थमाह– **शंरूप-मिति** ।। दद्यात् बृहतीसहस्रमिति शेषः । साक्षाद्भगवद्दानायुक्ते-रुक्तं– **व्यक्त्येति । व्यञ्जनेन** प्रतिपादनेनेत्यर्थः ।। शं सुखरूपं विष्णुं ददातीति दशेति व्युत्पत्तिः । **समस्तश इति** ।। एकैकाप्यृगिति यावत् । **यत्** यस्माच्छंरूपं दद्यात्तस्मात्कारणादमितनाम्नामिति नामार्थकानां बृहतीसहस्रर्चां दशेत्याख्येत्यन्वयः । एतेन तानि दशेत्यस्य **तानि** बृहतीसहस्ररूपवाक्यानि **दश** ददाति शं रूपं विष्णुमिति दशशब्दोदितानीति [७१]व्याख्यान्तरं प्रदर्शितं भवति ।।

एवं बृहतीसहस्रपरतया इदं वाक्यं व्याख्याय तद्वाच्य-भगवद्रूपपरतयाऽपि व्याख्यातुं दशशब्दस्य तेषु योगं दर्शयति– **रूपेष्विति** ।। **शं ददेर्भ**क्तानां सुखदानिमित्तादशेत्याख्येति सम्बन्धः । तेन **तानि** बृहतीसहस्रवाच्यरूपाणि **दश** भक्तसुखदातृत्वाद्दश–नामकानीति तद्वाक्यं व्याख्यातं भवति ।।

'दशेति वै सर्व'मित्येतत्प्रकारान्तरेणापि व्याचष्टे– **सर्वेति** ।।

---

७०. दश इति 'ख'पाठः ७१. व्याख्यानान्तरं इति 'ख'पाठः

**पञ्चकद्वितयस्य** प्रस्तावादिसामभक्तिपञ्चकमेकम् । तृचाशीतित्रयतत्पूर्वापरभेदेन बृहतीसहस्रस्य पञ्चविधत्वात्तद्रूपं पञ्चकमपरम् । एवं पञ्चकं द्वितयस्य द्वितयत्वादेव दशेति नामाभूत् । तथा सर्वनामार्थवचनात्सर्वनामार्थभूतभगवद्रूपप्रतिपादनाच्च दशेति नामाभूत् । दशेत्यस्य सर्वनामपर्यायताया उक्तत्वादित्यर्थः । एतेन **सर्वं**[७२] बृहतीसहस्रसामभक्तिरूपपञ्चकद्वितयं **दशेति वै** उक्तविधया दशनामकं श्रुतिप्रसिद्धमिति व्याख्यातं भवति । 'तानि[७३] दश दशेति वै सर्वं' इत्येतद्व्याख्यानमुपसंहरति– **तस्मादिति** ।। उक्तरीत्या दशत्वस्य सर्वत्रोपपन्नत्वात् **एतदखिलं** बृहतीसहसस्रं बृहतीसहस्रादिपञ्चकद्वितयं तत्प्रतिपाद्यं मत्स्यादिदशकं अनन्तरूपजातं दशेत्युच्यत इति ज्ञेयमित्यर्थः ।।

दशसङ्ख्यैव सर्वसङ्ख्यायाः मूलम्

**उपनिषत्**

**एतावती हि सङ्ख्या । दश दशतस्तच्छतम् । दश शतानि तत्सहस्रम् । तत्सर्वम् ।**

**भाष्यम्**

**दशैव मूलसङ्ख्या च तद्विभेदाः शतादयः ।**
**ऋक्सहस्रमिदं तस्मादनन्तगुणमच्युतम् ।**
**अनन्तशक्तिममितरूपनामानमेव च ।।**
**वक्ति.............................।**

---

७२. सर्वं इति पदं 'क'पाठे नास्ति ७३. तानि इति पदं 'क'पठे नास्ति

**भावप्रदीपः**

'एतावती हि सङ्ख्या' इति वाक्यं व्याख्याति– **दशैवेति** ।। चशब्दस्तुशब्दार्थः । 'दश दशतस्तच्छतं' इत्यादिकं व्याचष्टे– **तद्विभेदा इति** ।। दशसंख्याप्रभेदा एवेत्यर्थः । आदाय इत्यनेन सहस्रायुतलक्षकोटिप्रभृतीनां ग्रहणम् । तेन दश शतानि तत्सहस्र-मितिवद्दशसहस्राणि तदयुतं दशायुतानि तल्लक्षमित्यादिकमप्युप-लक्षणतया मूले ग्राह्यमिति सूचयति । पुनः 'तत्सर्व'मिति निगमनरूपं वाक्यं व्याचष्टे– **ऋगिति** ।। **तस्मात्** सर्वनामार्थ-वाचकत्वादित्यर्थः । एतेन **तत्** तस्मात् सर्वनामार्थवाचकत्वात् [७४]**तत्** बृहतीसहस्रं **सर्वं** सर्ववाचकं सर्वगुणशक्तिरूपनामभगवद-भिधायकमिति यावदिति व्याख्यातं भवति ।

बृहतीसहस्रस्य अन्नवत् तृप्तिकरत्वम्

**उपनिषत्**

**तानि त्रीणि च्छन्दांसि भवन्ति । त्रेधा विहितं वा इदमन्नमशनं पानं खादस्तदेतैराप्नोति ।।२.३.४।।**

**भाष्यम्**

.....छन्दस्त्रयं चात्र तृचाशीतित्रयात्मकम् ।।
अशनादित्रिकं तच्च भूत्वा विष्णुमुपैति च ।

**भावप्रदीपः**

'तानि त्रीणि छन्दांसी'त्येतद्व्याचष्टे– **छन्दस्त्रयमिति** ।। एतच्च

७४. तत् इति पदं 'क'पाठे नास्ति

बृहतीसहस्रं **छन्दस्त्रयं** गायत्रीबृहत्युष्णगिति छन्दस्त्रयबद्धवर्गात्मकम् । तस्यैव विवरणम्– **तृचाशीतित्रयात्मकमिति** ।। अत्र पूर्वापर-भागयोस्तृचाशीतित्रयोपाधिकत्वादप्राधान्यं विवक्षित्वा छन्दस्त्रय एवान्तर्भावमित्यभिप्रेत्य[७५] पृथगकथनम् । 'त्रेधा विहितं' इत्यादि व्याचष्टे– **अशनादित्रिकमिति** ।। **तच्च** तृचाशीतित्रयात्मकं छन्दस्त्रयं **अशनादित्रिकम्** अशनं पानं खाद इति त्रिकरूपं भूत्वा विष्णुं **उपैति** क्रमेणाशनपानीयखाद्यरूपेण विष्णुभोग्यं भवतीत्यर्थः । अत्र छन्दस्त्रयस्याशनादिरूपत्वं च तद्धत्तृप्तिविशेषजनकत्वम् । एतेन **इदमन्नं** छन्दस्त्रयात्मकबृहतीसहस्राख्यमशनं पानं खाद इति त्रेधा विहितम् । तच्च बृहतीसहस्रं **एतैः** अशनपानखादरूपैस्त्रिभिश्छन्दोभिः **तत्** विष्ण्वाख्यं ब्रह्म **प्राप्नोति** तत्स्तावकतया तत्तृप्तिकरं भवतीति व्याख्यातं भवति ।।

### सर्वशब्दवाच्यत्वात् भगवान् गुणपूर्णः

### भाष्यम्

**सर्वच्छन्दोभिधा[७६]श्चैव सर्वदेवाभिधा[७७]स्तथा ।।**
**सर्वमुन्यभिधा[७८]श्चैव सर्ववस्त्वभिधा हरिः ।**
**अनन्तपूर्णगुणकस्तस्माज्ज्ञेयो रमापतिः ।।**
**मुख्यतोऽस्यां च विद्यायां योग्य एकश्चतुर्मुखः ।**
**एकदेशपरिज्ञाने त्वन्ये योग्याः शिवादयः ।।** [७९]**इति च ।**

---

७५. अन्तर्भावमभिप्रेत्य इति 'ख'पाठः

७६.७७.७८. भिध इति ह.पाठः ७९. इत्यादि इति ह.पाठः

**भावप्रदीपः**

उक्तमर्थं सर्वं फलितकथनेनोपसंहरति– **सर्वच्छन्दोभिधा** इति ॥ **छन्दोभिधाः** गायत्र्युष्णिगादयः प्रगाथपावमान्याद्याश्च । **देवाभिधा** अग्न्यादित्याद्याः । **मुन्यभिधाः** मधुच्छन्दशतर्चिमाध्यमप्रभृतयः । **सर्ववस्त्वभिधा** लोहितश्लेष्मादयः । तस्मादेवं सर्वशब्दवाच्यत्वात्तत्तच्छब्दप्रवृत्तिनिमित्तभूतानन्तपूर्णगुणो रमापतिर्ज्ञेय इत्यर्थः । एतद्विद्याया एकप्रकारेण सर्वाधिकारिकत्वशङ्कानिरासाय मुख्याधिकारिणो निरूपयति– **मुख्यत** इति ॥

त्रिवृदादिस्तोमनामसमन्वयकथनम्

**भाष्यम्**

**त्रिविधो ह्यनिरुद्धोऽसावध्यात्मादिविभेदतः ।**
**अतस्त्रिवृदिति प्रोक्तस्तथा पञ्चदशात्मकः ॥**

**प्रद्युम्नः पञ्चभूतेषु ह्यध्यात्मादिविभेदतः ।**
**लिङ्गसप्तदशस्थत्वात् तावान् सङ्कर्षणः श्रुतः ॥**

**सप्तधातुषु संस्थः सन्नध्यात्मादिविभेदतः ।**
**एकविंशो वासुदेवो मन आदिचतुष्टये ॥**

**गुणत्रये च प्रकृतावध्यात्मादिविभेदतः ।**
**मूलरूपेण च सह पञ्चविंशात्मकः प्रभुः ।**
**नारायणस्त्वचिन्त्यात्मा स एकोऽपि ह्यनन्तधा ॥**

## भावप्रदीपः

उदाहृतप्रमाणे 'त्रिवृत्पञ्चदशं सप्तदशमेकविंशं पञ्चविंशमिति स्तोमतः' इत्यादिवाक्यस्याव्याख्यातत्वात्प्रमाणान्तरेण तद्व्याचष्टे– **त्रिविध इत्यादिना** ।। तत्र स्तोमतः पाञ्चविध्याभिधायके प्रथमवाक्येऽनिरुद्धस्य त्रिवृन्नाम घटयति– **त्रिविध इति** ।। **हि** यस्मात् **असौ** अनिरुद्धोऽध्यात्ममाधिभूताधिदैवेषु तत्तन्नियामकरूपभेदेन त्रिविधो तत् त्रिवृदिति प्रोक्त इत्यर्थः । प्रद्युम्नस्य पञ्चदशनाम घटयति– **तथेति** ।। अध्यात्मादिविभेदेन पञ्चभूतानां पञ्चदशाधास्थितत्वात् तत्र स्थितः प्रद्युम्नोऽपि पञ्चदशात्मक इत्यर्थः । सङ्कर्षणस्य सप्तदशनाम घटयति– **लिङ्गेति** ।। दशेन्द्रियाणि मनः पञ्चभूतानि चेति षोडशकलाः । एतत्संघातरूपं लिङ्गशरीरं चैकमिति लिङ्गेन सह यानि सप्तदशवस्तूनि तत्स्थत्वात् सङ्कर्षणस्तावान्सप्तदशविधः श्रुत इत्यर्थः । वासुदेवस्यैकविंशतिनाम .घटयति– **सप्तधातुष्विति** ।। सप्तधातवोऽध्यात्मे मानुषादिदेहेऽधिदैवतादेहे च तावत्प्रसिद्धा एव । अधिभूतमपि तदभिमानिदेवतादेहेषु सन्त्येव । अतोऽध्यात्मादिभेदेन सप्तधातुषु संस्थस्सन्वासुदेव एकविंश उच्यत इत्यर्थः । नारायणस्य पञ्चविंशमितिनाम घटयति– **मन आदीति** ।। मनो बुद्धिरहङ्कारश्चित्तमिति चतुष्टये सत्वादिगुणत्रये मूलप्रकृतौ चाध्यात्मादिभेदेन स्थितानि चतुर्विंशतिरूपाणि । मूलरूपी नारायणः स्वयमेकः एवं प्रभुर्नारायणः पञ्चविंशात्मक इत्यर्थः । नन्वेकस्य भगवतः कथं त्रिवृतत्वादिकमित्यत आह– **अचिन्त्यात्मेति** ।। अचिन्त्यशक्तिसंपन्नत्वात् **एको** निर्भेदोऽपि **स** भगवानन्तधा भवतीत्यर्थः ।।

गयत्रादिसमानामसमन्वयकथनम्

भाष्यम्

गायकानां त्राणतोऽसौ गायत्रमनिरुद्धकः ।
प्रद्युम्नो हि रथारूढस्तेन चोक्तो रथन्तरम् ।।

बृहद्रूपो बृहन्नामा तथा सङ्कर्षणः प्रभुः ।
भद्रं तु वासुदेवोऽसौ भद्रमोक्षप्रदो यतः ।
नारायणो राजनं स्याद् राजयत्येष मोक्षिणः ।।

भावप्रदीपः

'अथ गायत्रं रथन्तरं बृहद्रथं राजनमिति सामतः' इति वाक्यं क्रमेण पञ्चरूपविषयतया योजयति– **गायकानामिति** ।। गायतस्त्रायत इति गायत्रमिति व्युत्पत्तिः । रथान्तःस्थित्वा रमत इति रथन्तरम् । शकन्ध्वादित्वात्पररूपम् । अन्तःशब्दोपपदाद्रमतेर्डः । उपपदान्तलोपश्च । भद्रप्रदातृत्वाद्भद्रम् । **मोक्षिणो** मुक्तान् ।।

गयत्र्यादिछन्दोनामसमन्वयप्रदर्शनम्

भाष्यम्

गायत्री त्वनिरुद्धोऽसौ त्रिकाले गीयते यतः ।
उष्णिगुष्णस्वरूपत्वात् प्रद्युम्नोऽग्न्यादिसंस्थितः ।।

स्त्रीरूपो बृहतीनामा बृहत्सङ्कर्षणः प्रभुः ।
वासुदेवस्तथा त्रिष्टुप् त्रिवेदैः स्तूयते यतः ।।

नारायणस्तु स्त्रीरूपो द्विधेवासौ व्यवस्थितः ।
द्विपदेति ततो नाम ⁸⁰सर्वच्छन्दोभिधा इमे ।।
वनितातनवः प्रोक्ताः.................।

८०. सर्वे इति ह.पाठः

### भावप्रदीपः

'गायत्र्युष्णिग्बृहती त्रिष्टुप् द्विपदेति छन्दस्त' इति वाक्यमपि पञ्चरूपपरतया योजयति– **गायत्रीति** ।। गीयते त्रिषु कालेषु ब्रह्मादिभिरिति गायत्रीत्यर्थः । त्रिशब्देऽधिकरणे उपपदे गैशब्द इत्यतः कर्मणि घञ् । उपपदस्य परनिपातो दीर्घश्च छान्दसः । उष्णशब्दात्स्वार्थे णिजन्तात् क्विपि उष्ण् इति स्थिते तस्मादिचिः । अन्तलोपः कुत्वं च । तथा चोष्ण एवोष्णिक् । प्रद्युम्नस्य कथमुष्णस्वरूपत्वमित्यत उक्तम्– **अग्न्यादिसंस्थित इति** ।। आदिपदेन सूर्यः । यतः प्रभुः सङ्कर्षणो **बृहत्** बृहन् पूर्णोऽतो बृहतीनामेत्यर्थः । स्त्रीलिङ्गतोपपत्यर्थं स्त्रीरूप इत्युक्तम् । इदं च गायत्रीत्यादावप्यनुसन्धेयम् । अत एव 'वनितातनवः' इति वक्ष्यति । त्रिभिः स्तूयत इति त्रिष्टुबित्यर्थः । त्रिशब्दोपपदात् स्तुत्यधातोर्वप्रत्ययः । **असौ** नारायणस्तु यतः स्त्रीरूपः सन् द्विधा व्यवस्थितस्तस्मादस्य द्विपदेति नाम, द्वे पदे रूपे[८१] यस्यास्सा तथोक्तेति । एवमुपपादितं छन्दस्तः पाञ्चविध्यं भगवतो निगयति– **सर्वेति** ।। **इमे** अनिरुद्धाद्या **वनितातनवः** स्त्रीरूपाः गायत्रादिसर्वछन्दोभिधाः प्रोक्ता इत्यर्थः ।।

### चितिसाम्नयोरपि पञ्चरूपोपासनानिरूपणम्

### भाष्यम्

**................मध्यं नारायणः प्रभुः ।**
**वासुदेवोऽस्य पुच्छं च वामदक्षौ च पक्षकौ ।।**

---

८१. रूपे इति पदं 'क'पाठे नास्ति

सङ्कर्षणश्च प्रद्युम्नः क्रमादेव[८२] प्रकीर्तितौ ।
अनिरुद्धः शिरश्चैव तथैकोऽपि हि पञ्चधा ।।

प्रस्तावनामाऽनिरुद्धो रक्षन् संस्तूयते यतः ।
सृजन् जगच्च रमया प्रद्युम्नस्तत्र गीयते ।।

उद्गीथनामा तेनासौ जगदुद्गमनेन वा ।
संहारात् प्रतिहाराख्यस्तथा सङ्कर्षणः प्रभुः ।।

मोचयित्वा समीपं हि द्रावयेद् वासुदेवकः ।
तेनोपद्रवनामाऽसौ निधीयन्ते यतोऽखिलाः ।।

मुक्ता नारायणे देवे तेनासौ निधनाभिधः ।। इत्यादि च ।

**स्तूयमानत्वात् स्तोमः । समत्वात् साम । छन्द्यत्वात् छन्दः ।।२.३.४।।**

**भावप्रदीपः**

'शिरो दक्षिणः पक्षः उत्तरः पक्षः पुच्छमात्मेत्याख्यानं' इति वाक्यं व्याख्याति– **मध्यमिति** ।। आत्मशब्दार्थोऽयम् । **पुच्छं** चरमाङ्गं पादावित्यर्थः । **पक्षकौ** बहू । **क्रमादेवेति** ।। सङ्कर्षणो वामपक्षः प्रद्युम्नो दक्षिणः पक्ष इत्यर्थः । यथा नारायणादयो मध्यादयस्तथैवा-निरुद्धश्च भगवतः शिर इत्यर्थः । कथमेकस्य भगवतोऽङ्गत्वमङ्गित्वं चेत्यत आह– **एकोऽपीति** ।। अचिन्त्यैश्वर्येण पञ्चधा सन् अङ्गाङ्गित्वेन क्रीडत इत्यर्थः । इदं च चितिशास्त्रगतयोः पाञ्चविध्यमिति ज्ञेयम् । उपयन्तीत्यत्र निधनमिति कर्मश्रवणात् 'प्रस्तौत्युद्गायति प्रतिप्रहरत्युपद्रवति' इति वाक्यचतुष्टयेऽपि प्रस्तावमुद्गीथं प्रतिहारमु-

---

८२. क्रमादेवं इति ह्.पाठः

पद्रवमिति कर्माध्याहारः कर्तव्य इत्यभिप्रेत्य तान्प्रस्तावादिपञ्च-शब्दान्पञ्चरूपे भगवति क्रमेण निर्वक्ति– **प्रस्तावनामेति** ।। **संस्तूयते** प्रकर्षेण स्तूयत इति प्रस्तावनामा । तत्रोद्गीथसाम्नि उच्चैर्गीयत इत्युद्गीथनामेत्यनिरुद्धप्रद्युम्नयोः प्रस्तावोद्गीथशब्दवाच्यत्वे निमित्तप्रदर्शनमरुचिरम् । उभयत्र निमित्तैक्ये नामसाङ्कर्यापातादित्यत उक्तम्– **रमया सह जगद्रक्षन् स्तूयत इति, जगत्सृजन् गीयत इति च** ।। तथा च रक्षकत्वेन स्तुतिविषयोऽनिरुद्धः । स्रष्टृत्वेन गानविषयः प्रद्युम्न इति नानयोर्नामसाङ्कर्यमिति भावः । उक्ताशङ्काऽ-नवकाशाय प्रकारान्तरेणोद्गीथशब्दं निर्वक्ति– **जगदुद्गमनेन वेति** ।। जगदुद्गच्छत्युत्पद्यतेऽस्मादित्युद्गीथः प्रद्युम्न इत्यर्थः । उत्पूर्वाद्गमेरीथक् टिलोपश्च । मोचयित्वा, संसारादिति शेषः । **समीपं** स्वसमीपम् । द्रावयेद्भक्तानिति शेषः । तथा चोप समीपं द्रावयतीत्युपद्रवनामेति भावः । **असौ** नारायणः । **स्तोमतः** सामतः, छन्दस्त इत्यस्य स्तोमसामछन्दोरूपेणेत्यर्थमभिप्रेत्य स्तोमादित्वं कथं भगवत इत्यतः स्तोमसामछन्दःशब्दांस्तस्मिन्निर्वक्ति– **स्तूयमानत्वादिति** ।। समत्वात् सर्वरूपेषु । **छन्द्यत्वात्** काम्यत्वात् ।।

ततश्चायं खण्डार्थः । **योऽ**धिकारी **यज्ञे** यज्ञेषु **अध्यूळ्हं** अध्यूढमधिरूढं **यज्ञं** याज्यत्वाद्यज्ञनामानं **अहनि** अहस्सु अध्यूळ्हं **अहः** अहार्यत्वादहर्नामानं **देवेषु** ब्रह्मादिषु अध्यूळ्हं **देवं** सर्वोत्त-मत्वात् देवनामानं विष्णुं वेद **स संप्रतिवित्** सम्यग्ज्ञानी **ह वै** प्रसिद्धः । यज्ञादिरूढस्य यज्ञादित्वमौपचारिकं चेत् तज्ज्ञानिनः सम्यग्ज्ञानित्वमनुपपन्नं स्यादतो नेदं यज्ञादित्वं विष्णोरौपचारिकं किन्तु वास्तवमेवेत्याशयेनाह– **एष वै यज्ञ इत्यादिना** ।। एष

विष्णुः यज्ञे अहनि देवेषु च **यज्ञोऽहर्देवश्च** यज्ञादीनां यज्ञत्वादिप्रदत्वेन यज्ञादिनामा सन्नेवाध्यूळ्हो वा इत्यर्थः । यज्ञादिनामकभगवद्रूपस्यैव बृहतीसहस्रस्थितत्वमित्यभिप्रेत्याह– **यदेतदिति** ॥ परिपूर्णत्वात् **महत्** सर्वोत्थापनकारित्वादुक्थनामकबृहतीसहस्रस्थितत्वाच्च **उक्थं** यदेतद्भगवद्रूपं, एष वै यज्ञे यज्ञ इत्यादिपूर्वेण संम्बन्धः । **तदेतत्** बृहतीसहस्रस्थितमुक्थनामकं भगवद्रूपं **पञ्चविधं** स्तोमसामचितिछन्दःशस्त्रेषु पञ्चसु तेष्वपि प्रत्येकमनिरुद्धादिनारायणान्तं पञ्चविधतया स्थितमित्यर्थः । तत्र स्तोमे स्थितानिरुद्धस्य तावत् पाञ्चविध्यं दर्शयति– **त्रिवृदित्यादिना** ॥ तिस्रो विधाः वृणोतीति **त्रिवृत्** । अध्यात्माधिभूताधिदैवस्थितं स्तोमगतानिरुद्धस्यानिरुद्धाख्यं रूपं त्रिवृदिति प्रोच्यते । एवं प्रद्युम्नाख्यं रूपं पञ्चभूतेष्वध्यात्मादिभेदेन प्रत्येकं स्थितं पञ्चदशविधत्वात् **पञ्चदश**मित्युच्यते । तथा सङ्कर्षणाख्यं रूपं शोडशकलात्मकलिङ्गशरीरे तदीयषोडषकलासु च स्थितत्वात्**सप्तदशं** प्रोच्यते । वासुदेवाख्यं च रूपमध्यात्मादिभेदेन सप्तधातुषु स्थितत्वादेकविंशतिविधतया **एकविंशं** इत्युच्यते । नारायणाख्यं तु[८३] रूपं मनोबुद्ध्यहङ्कारचित्तेषु सत्वादिगुणत्रये प्रकृतौ चाध्यात्मादिप्रभेदेन स्थितैश्चतुर्विंशतिरूपैर्नारायणाख्यमूलरूपेण च सह **पञ्चविंश**मिति गीयते । **इति स्तोमतः** स्तोमरूपेण । स्तूयमानत्वात् स्तोमशब्दवाच्यतयेति यावत् । अथवा स्तोमतः ल्यब्लोपनिमित्ता पञ्चमी । स्तोममधिष्ठाय विद्यमानमनिरुद्धाख्यं रूपं पञ्चविधमिति संबन्धः ।

---

८३. तु इति पदं 'क'पाठे नास्ति

अथ सामगतप्रद्युम्नस्य पाञ्चविध्यमाह– **गायत्रमित्यादिना** ॥ गायतां त्रायकत्वाद्गायत्रनामकं प्रद्युम्नस्यानिरुद्धाख्यं रूपम् । एवं प्रद्युम्नाख्यं प्रद्युम्नीयं रूपं रथारुढत्वाद्रथन्तरमुच्यते । तथा सङ्कर्षणाख्यं रूपं बृहद्रूपत्वात् **बृहत**दित्युच्यते । वासुदेवाख्यं रूपं भद्रमोक्षप्रदत्वात् **भद्र**मित्युच्यते । [८४]'दातृत्वात्तत्तदाख्योऽसौ' इति वचनात् । नारायणाख्यं तु रूपं मुक्तानां राजनात् **राजन**मित्युच्यते । **इति सामतस्**सामरूपेण । सर्वरूपेषु समत्वात्सामशब्दवाच्यतयेति यावत् । अथवा **सामतः** सामाधिष्ठाय विद्यमानं प्रद्युम्नाख्यं रूपं पञ्चविधमिति पूर्वेण संबन्धः ।

अथ छन्दोगतसङ्कर्षणस्य पाञ्चविध्यं दर्शयति– **गायत्रीत्यादिना** ॥ **त्रिषु** प्रातर्मध्याह्नसायंकालेषु सन्ध्योपास्तिं कुर्वद्भिर्गीयत इति गायत्रीनामकं सङ्कर्षणस्यानिरुद्धाख्यं रूपम् । एवं प्रद्युम्नाख्यं रूपमग्निसूर्यस्थितत्वेनोष्णस्वरूपत्वात् **उष्णिगि**त्युच्यते । तथा सङ्कर्षणाख्यं रूपं पूर्णत्वात् **बृहती**त्युच्यते । वासुदेवाख्यं च रूपं त्रिभिर्वेदैः स्तूयत इति **त्रिष्टुबि**त्युच्यते । नारायणाख्यं तु रूपं द्वे पदे रूपे यस्येति द्विरूपत्वात् **द्विपदे**त्युच्यते । एतानि च रूपाणि पञ्चापि योषिदाकाराणीति बोध्यम् । **इति छन्दस्तः** छन्दोरूपेण । छन्द्यत्वाच्छन्दःशब्दवाच्यतयेति यावत् । अथवा छन्दस्तः छन्दोऽधिष्ठाय विद्यमानं संकर्षणाख्यं रूपं पञ्चविधमिति संबन्धः ।

अथ चितिगतवासुदेवस्य पाञ्चविध्यं कथयति– **शिर इत्यादिना** ॥ चितेः श्येनाकारत्वात्तस्याः शिरआदिपञ्चावयवाः प्रसिद्धाः । अत-

---

८४. तैत.भा. ३-९ (३९१पु)

स्तदन्तर्गतवासुदेवस्यापि पञ्चावयवाः सन्त्येव । तत्र वासुदेवस्यानिरुद्धाख्यं रूपं शिरः । प्रद्युम्नाख्यं रूपं दक्षिणः पक्षः । सङ्कर्षणाख्यं रूपमुत्तरपक्षः । वासुदेवरूपं पुच्छम् । नारायणाख्यं तु रूपं **आत्मा** मध्यदेह इत्येवं वासुदेवाख्यं रूपमाख्यातं पञ्चरूपात्मकावयवतयाऽऽख्यायमानं भवति । [८५]'कृत्यल्युटो बहुलं' इति श्रवणात्कर्मणि ल्युट् । अथवा **इति** एवं वासुदेवरूपस्य शिरआदिपञ्चावयवात्मना **आख्यानं** कथनं भवतीत्यर्थः । इदमेव वाक्यं शास्त्रगतनारायणस्य पाञ्चविध्यपरत्वेनापि व्याख्येयम् । अत्र शास्त्रशब्देन बृहतीसहस्रस्य पञ्चभागोपेतस्य प्रथमभाग एव ग्राह्यो न समग्रः । [८६]'प्रथमे पञ्चकाद्भागे स्थितो नारायणः स्वयं' इत्युक्तत्वात् । शिरःपक्षादिविभागस्यापि पञ्चमारणे तत्रैव कथितत्वाच्च । तथा च शास्त्रविशेषगतस्य नारायणस्य यदनिरुद्धादिरूपं **तच्छिरः** शिरोरूपकतिपयमन्त्रजात[८७]गतं शिरोरूपं च । यच्च प्रद्युम्नाख्यं रूपं तत् **दक्षिणः पक्षः** दक्षिणपक्षात्मकर्कशतगतं स्वयमपि दक्षिणपक्षम्[८८] । यच्च सङ्कर्षणनामकं रूपं तत् **उत्तरः पक्षः** उत्तरपक्षात्मकर्कशतगतं स्वयमप्युत्तरपक्षात्मकम् । यद्वासुदेवाख्यं रूपं तत् **पुच्छं** पुच्छरूपकतिपयमन्त्रगतं स्वयमपि पुच्छरूपम् । यच्च नारायणाख्यं रूपं तत् **आत्मा** मध्यदेहरूपमन्त्रजातगतं स्वयमपि मध्यदेहरूपम् । इत्येवं नारायणाख्यरूपस्याख्यानमित्यर्थः ॥

---

८५. पा.सू. २-२-११३, सि.कौ.सू.सं २८४१

८६. ऐत.भा. (२८०-पु)

८७. जात इति पदं 'क'पाठे नास्ति     ८८. पक्षरूपं इति 'ख'पाठः

हरेस्स्तोमाद्यधिष्ठातुः पाञ्चविध्यकथनप्रसङ्गादन्यदपि पाञ्चविध्यमत्रानुसन्धेयमित्यभिप्रेत्याह– **पञ्चकृत्व इत्यादिना** ।। अत्रादौ प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनलक्षणेषु पञ्चसमासु तत्तन्नामा पञ्चरूपी हरिः प्रत्येकमनिरुद्धादिरूपेण पञ्चधास्थित[८९] इत्युपस्कर्तव्यम् । यत एवं प्रस्तावादिषु प्रत्येकं पञ्चधा भगवानवस्थितस्तस्मादेव प्रस्तोता प्रस्तावसाम्ना पञ्चकृत्वः प्रस्तौति । प्रस्तावगतमनिरुद्धाख्यं भगवन्तमिति शेषः । एवमुद्गाताऽप्युद्गीथगतं प्रद्युम्नाख्यं पञ्चकृत्व **उद्गायति** उद्गीथसाम्ना स्तौति । प्रतिहर्ताऽपि प्रतिहारगतं सङ्कर्षणाख्यं पञ्चकृत्वः **प्रतिहरति** प्रतिहारसाम्ना स्तौति । एवमुपद्रवसामगानकर्ताऽपि तद्गतं वासुदेवाख्यं रूपं च **उपद्रवति** साम्ना स्तौति । निधनसामगानकर्ताऽपि तद्गतं **निधनं** निधीयन्ते सर्वे मुक्ता अस्मिन्निति तन्नामकं नारायणं पञ्चकृत्व **उपयन्ति** निधनसाम्ना **उपगच्छन्ति** स्तुवन्तीति यावत् । अत्र निधनमिति कर्मोक्त्या प्रस्तौतीत्यादावपि प्रस्तावमुद्गीथं प्रतिहारमुपद्रवं चेति तत्र तत्र कर्माध्याहारो द्रष्टव्यः । जगद्रक्षकत्वेन प्रस्तूयत इति प्रस्तावोऽनिरुद्धः । जगत्स्रष्टृत्वेनोच्चैर्गीयमानत्वाज्जगदुद्गमनहेतुत्वाद्वोद्गीथः प्रद्युम्नः । प्रतिहरति संहरति जगदिति प्रतिहारः संङ्कर्षणः । संसारान्मोचयित्वा भक्तान् उप स्वसमीपं द्रवयति प्रापयतीत्युपद्रवो वासुदेव इति तत्तन्नामार्थोऽपि भाष्यरीत्या द्रष्टव्यः । एवं प्रस्तावादिसामभक्तिप्रतिपाद्यत्वमनिरुद्धादिपञ्चक[९०]स्योक्त्वा इदानीं तद्गतस्तोभाक्षराण्यपि भगवदनन्तरूपाभिधायीनि ज्ञातव्यानीत्याह– **तत्स्तोभेति** ।। **तत्** तत्र प्रस्तावादिषु समासु **स्तोभसहस्रं भवति** सहस्रशब्दोऽन्तवाची । अनन्ताः

---

८९. अवस्थित इति 'ख'पाठः  ९०. रूपपञ्चकस्य इति 'ख'पाठः

स्तोभशब्दाः सन्तीति यावत् । तच्च स्तोभसहस्रं भवति । पृथक् पृथक् विष्णुप्रादुर्भावानां वाचकमिति शेषः । एवं बृहतीसहस्रमपि विष्णुरूपसहस्रवाचकमिति वक्तुं बृहतीसहस्रस्वरूपं तावदुच्यते– **एवं ह्येता इत्यादिना** ।। यथा साम्नः पञ्चविधत्वं **एवं हि** एवमेव **ह्येता** वक्ष्यमाणाः पञ्चविधा **अनुशस्यन्ते** कथ्यन्ते बृहतीसहस्रस्येति शेषः । कास्ताविधाः? **तृचाशीतिभ्यः प्राक्** प्रथमभागात्मकं यन्मन्त्रजातं सैका विधा । **तिस्रो** गायत्री बार्हती औष्णिही चेति यास्तिस्रस्तृचाशीतयस्तास्तिस्रो विधाः । अथ यन्मन्त्रजातं **ऊर्ध्वं** तृचाशीतिभ्यः परं सा पञ्चमी विधेति ।

एवं बृहतीसहस्रस्वरूपमुक्त्वा तद्वाच्यं विष्णुरूपजातमभिधत्ते– **तदेतत्सहस्रमिति** ।। एतच्चावर्तनीयम् । तथा च यदेतत्पञ्चविधत्वेनोक्तं **तदेतत्सहस्रं** बृहतीसहस्रं कर्तृ, यदेतद्विश्वादिसहस्रनामवाच्यं **सहस्रं** विश्वादिरूपसहस्रं तत्कर्म, पृथक् पृथक् प्रतिपादयतीति शेषः । न केवलं **तत्** बृहतीसहस्रं विश्वादिरूपसहस्रवाचकमेव किन्तु **सर्वं** सर्वनामात्मकम् । अनन्तनामवाच्यानन्तरूपाभिधायि चेति यावत् । तत्कुत इत्यतस्तत्रापीदमेवोत्तरम्– **तत्सर्वमिति** ।। यत एवं **इदं** बृहतीसहस्रं सर्वरूपाभिधायि **तत्** तस्मात्सर्वरूपाभिधायकत्वादेव **सर्वं** विष्णुरूपजातं **तत्** तेन संस्तुतमिति शेषः । अन्यथा तन्न स्यादिति भावः । किञ्च दशमत्स्यादिरूपाणि च **तानि** तत्प्रतिपाद्यानि बृहतीसहस्रशंस्यानि भवन्ति । अथवा **तानि** प्रस्तावादिसामभक्तिप्रतिपाद्यानि न केवलमनिरुद्धादिपञ्चैव किन्तु दशमत्स्यादिरूपाणि चेत्यर्थः । यद्वा दशेति सर्वनाम । तथा च **तानि** मत्स्यादिदशनामान्येव **दश** सर्वाणि सर्वनामात्मकानि । सर्वनामार्थभूतसर्वरूपवाचकत्वादित्यर्थः । कथं दशनाम्नां सर्वरूपवाचकत्वमित्यत आह–

**दशेति वै सर्वमिति** ।। इति एतानि दशमत्स्यादिरूपाणि **सर्वं वै** सर्वरूपात्मकान्यपि भवन्ति । अतो दशावतारवाचकदशनाम्नां सर्वरूपवाचकत्वमुपपद्यत इति भावः । कथं दशशब्दस्य सर्वार्थकतेत्यतश्चोक्तम् – **दशेति वै सर्वमिति** ।। दशेत्येतत् **सर्वं** सर्वशब्दसमानार्थमित्येतत् **वै** मुख्यत एव श्रुतिप्रसिद्धमित्यर्थः । अथवा तानि दशेत्यस्य **तानि** बृहतीसहस्ररूपवाक्यानि **दश** ददति शंरूपं विष्णुं तद्गुणव्यञ्जनेनेति दशब्दोदितानीत्यर्थः । **तानि** बृहतीसहस्रवाच्यरूपाणि **दश** भक्तसुखदातृत्वाद्दशनामकानीति वा । एवं दशेति वै सर्वमित्यस्यापि सर्वं पञ्चविधं बृहतीसहस्रं सामभक्तिपञ्चकं च पञ्चद्वितयत्वात्सर्वनामार्थभूतभगवद्रूपप्रतिपादनाच्च दशेति । दशनामकं वै श्रुतिप्रसिद्धमित्यर्थान्तरं द्रष्टव्यम् ।

ननु कथं दशेति सर्वमिति दशशब्दस्य सर्वशब्दपर्यायतोच्यते । अल्पसंख्यावाचकस्याधिकसंख्यावाचकताऽयोगादित्यतस्तदुपपादयति– **एतावतीत्यादिना** ।। संख्या **ह्येतावति** दशत्वपर्यवसन्नैव नातोऽधिकाऽस्ति । शतादयोऽपि तत्प्रभेदा एव । कथं दश ये **दशतो** दशवर्गाः । 'पञ्चद्दशतौ वर्गे'[९१] इति सूत्रात् । **तत्** ते शतमित्युच्यन्ते । शतान्यपि दश चेत् तान्येव सहस्रमित्युच्यन्ते । उपलक्षणमेतत्, दशसहस्राणि तदयुतं, दशायुतानि तल्लक्षमित्यादिकमपि द्रष्टव्यम् । अतो मूलसंख्यादशत्व एव पर्यवसितेति भावः । एवं बृहतीसहस्रस्वरूपं तत्प्रतिपाद्यं च निरूप्योपसंहरति– **तत्सर्वमिति** ।। **तत्** तस्मात्सर्वनामार्थवाचकत्वात् **तत्** बृहतीसहस्रं **सर्वं** सर्ववाचकं सर्वगुणशक्तिरूपनामभगवदभिधायकमित्यर्थः ।

९१. पा.सू. ५-१-६०, सि.कौ.सू.सं. १७२६

अस्य च बृहतीसहस्रस्याशनादित्रिकरूपेण भगवद्भोग्यत्वमभिधातुं त्रिविधत्वं तावदाह– **तानीति** ।। **तत्** बृहतीसहस्रं **त्रीणि छन्दांसि भवन्ति** गायत्री बृहत्युष्णिगिति क्रमेण छन्दस्त्रयावबद्धर्गात्मकं भवति । छान्दांसीति वेधेयानुसारेण तानीति बहुवचनम् । एवं त्रिविधमिदं बृहतीसहस्राख्यमन्नं भगवतोऽ**शनं** ओदनं **पानं** पानीयं **खादः** खाद्यमिति त्रेधा विहितं वै । तच्च बृहतीसहस्रमेतैरशनपान-खादरूपैस्त्रिभिः छन्दोभिस्तिसृभिस्तृचाशीतिभिरिति यावत् । **तत्** विष्ण्वाख्यं ब्रह्म **आप्नोति** तत्स्तावकतया तत्तृप्तिकरं भवतीति ।। २.३.४।।

बृहतीसहस्रसम्पादनविषये विप्रतिपत्तिः

**उपनिषत्**

**तद्वा इदं बृहतीसहस्रं सम्पन्नम् । तद्धैतदेके नानाच्छन्दसां सहस्रं प्रतिजानते । किमन्यत्सत् । अन्यद् ब्रूयामेति, त्रिष्टुप्सहस्रमेके, जगतीसहस्रमेके, अनुष्टुप्सहस्रमेके ।**

**भाष्यम्**

तदिदमुक्तप्रकारेणैव बृहतीसहस्रं सम्पन्नं भवति । तदेके नाना-च्छन्दसां सहस्रं शंसितव्यमेव बृहतीसहस्रसम्पादनमविवक्षितमिति प्रतिजानते । केचित् त्रिष्टुप्सहस्रमेव शंसितव्यमिति ।।

**भावप्रदीपः**

'तद्वा इदं बृहतीसहस्रं' इति खण्डं व्याचष्टे– **तदिदमुक्त-प्रकारेणेत्यादिना** ।। तत्र बृहतीसहस्रसंपादनप्रकारस्य प्राङ् निरू-

पितत्वात्तन्निरूपणीयान्तरस्याभावाद्व्यर्थमेवेदं तद्वा इदमित्यादिकथनमित्याशङ्क्य मतान्तरप्रतिशेधार्थं प्रागुक्तप्रकारतावधारणाय पुनः-प्रस्तावनार्थत्वात् नेदं व्यर्थमित्याशयेनादिमवाक्यं व्याख्याति– **तदिदमुक्तेति** ।। **तदिदं** बृहतीसहस्रं **उक्तप्रकारेणैव** यावतीभिः ऋग्भिः शंसिताभिः षट्त्रिंशतमक्षराणां सहस्राणि भवन्ति तावन्त्यः शंसनीया इत्याद्यत्युक्तप्रकारेण शंसनं कृतं चेदेव संपन्नं भवति नान्यथेत्यर्थः । स्यादेतद्बृहतीसहस्रसंपादनस्योक्तप्रकारतावधारणं यदि तत्संपादनमेव कर्तव्यं स्यात् । नैतदस्ति । त्रिष्टुबादिसहस्राणामपि शंसनसंभवादित्याशङ्क्य प्रतिषेधार्थं मातान्तरमनुवदति– **तद्धैक इति** ।। तद्व्याचष्टे– **तदेक इति** ।। **तत्** तत्र शंसनविषये । **नानाछन्दसां** नानाछन्दस्कानामृचां सहस्रम् । एवमनियममतमनूद्य नियममतान्तराण्यनुवदति– **त्रिष्टुप् सहस्रमेक इत्यादि** ।। तदिदं नानाछन्दसां सहस्रमित्यस्यैव विवरणमिति प्रतीतिनिरासयैतेषां मतान्तरत्वज्ञापनायोपलक्षणयैकं वाक्यं सावधारणं व्याचष्टे– **केचिदिति** ।। एवं केचिज्जगतीसहस्रमेव शंसितव्यमिति । केचिदनुष्टुप्सहस्रमेव शंसितव्यमिति प्रतिजानत इत्यपि द्रष्टव्यम् ।।

### अनुष्टुप् छन्दोमहिमानिरूपणम्

#### उपनिषत्

**तदुक्तमृषिणा– 'अनुष्टुभमनु चर्चूर्यमाणमिन्द्रं निचिक्युः कवयो मनीषा' इति । वाचि वै तदैन्द्रं प्राणं न्यचायन्नित्येतत् तदुक्तं भवति ।**

**भाष्यम्**

**अनुष्टुप्सहस्रमेवेति वदन्तोऽनुष्टुप्प्रशंशात्मिकामृचं[92] दर्शयन्ति । बीभत्सूनां जगद्भर्तुमिच्छूनां अपां सयुजं सहैव चरन्तं चाहुः । विष्णुं हंसस्वरूपिणं अनुष्टुभं चर्चूर्यमाणं पुनः पुनर्वदन्तं परमेश्वरं ददृशुश्च ।**

**भावप्रदीपः**

तदुक्तमृषिणेति स्वोक्तार्थे साधकतया पूर्वपक्षिभिर्मन्त्र उदाह्रियते । एतच्चतुर्मतसाधारणमिति प्रतीतिनिरासायैतद्वाक्यमवतारयति– **अनुष्टुबिति** ।। दर्शयन्तीत्यनन्तरं तदुक्तमृषिणेत्यादिनेति शेषः । 'बीभत्सूनां सयुजं हंसमाहुरपां दिव्यानां सख्ये चरन्तं'[93] इति मन्त्रस्य पूर्वार्धः । अत आदित आरभ्य मन्त्रं व्याचष्टे– **बीभत्सूनामित्यादिना** ।। **अपां** अप्शब्दवाच्यानां सर्वेषां देवानां । 'आप इत्याप इति होवाच' इति प्रागुक्तत्वात् । सयुजमित्यनुवादः सहैवेति तस्य तात्पर्यकथनम् । (चरन्तमित्यस्य अत्राप्यनुषङ्ग इति भावेन चरन्तं चेत्युक्तम् । विष्णुमिति विशेष्यप्रदर्शनम् )[94] इन्द्रमित्यस्यार्थः– **परमेश्वरमिति** । निचुक्युरित्यस्य– **ददृशुरिति** । आहुरिति क्रियासमुच्चयार्थश्चशब्दः ।।

नृसिंहानुष्टुबोपासनम्

**भाष्यम्**

**मेघसंस्थं हंसरूपं तं विष्णुं परमेश्वरम् ।**
**विरिञ्चशिवपूर्वेभ्यो नृसिंहानुष्टुभं पराम् ।।**

---

९२. ऋचं च इति ह.पाठः        ९३. ऋक्.सं. १०-१२४-९

९४. () एतच्चिह्नस्था पंक्तिः 'क'मातृकायां नास्ति

**उच्छारयन्तमर्थांश्च व्याचक्षाणं समन्ततः ।**
**ददृशुर्मुनयो दिव्या आचार्यं ब्रह्मशर्वयोः ॥**

**एवं वायुं च ददृशुस्तत्र हंसस्वरूपिणम् ।**
**शिवादिभ्यो व्याहरन्तं तामेवानुष्टुभं पराम् ॥ इत्यादि च ।**

**वागाख्यायामनुष्टुभ्युच्चार्यमाणायां हि मुनयो विष्णुं ददृशुः । अतो ब्रह्मादयोऽपि विष्णोः सकाशादनुष्टुभर्थं सर्वदा शृण्वन्तीति [९५]ज्ञायतेऽतोऽनुष्टुबेव छन्दसां वरेति चोक्तं भवति ।**

**भावप्रदीपः**

एवं स्ववचनेन व्याख्याय दर्ढ्यार्थं विशेषार्थज्ञापनार्थं च प्रमाणवाक्येनापि व्याचष्टे– **मेघसंस्थमिति** ॥ **नृसिंहानुष्टुभं** नृसिंहप्रतिपादिकामनुष्टुप्छन्दस्कामृचम् । परं **परामुत्तमाम्** । चर्चूर्यमाणमित्यस्योच्चारयन्तमर्थांश्च व्याचक्षाणमित्यर्थद्वयम् । समन्तत इति यङोऽर्थकथनम् । यङन्तादन्तर्णीतण्यर्थाच्चरतेः शानचि रूपमेतत् । पुनः पुनरित्यर्थः । एवं विष्णुपरतया व्याख्याय वायुपरत्वेनापि योजयति– **एवं वायुं चेति** ॥ **तत्र** विष्णुसमीपे ।

ततश्चायं मन्त्रार्थः । **बीभत्सूनां** जगद्भर्तुमिच्छूनां **दिव्यानां** स्तुत्यानां **अपां** अप्शब्दवाच्यानां ब्राह्मादिदेवानां **सख्ये चरन्तं** तेषां प्रियार्थमेव कर्माणि कुर्वन्तमिति यावत् । 'अस्मदिष्टैककार्याय'[९६] इति द्वादशस्तोत्रोक्तेः । सख्याचरणमपि न दूरस्थतया किन्तु **सयुजं चरन्तं** सहैव चरन्तं च **हंसं** हंसरूपिणं मेघमण्डलस्थं

९५. विज्ञायते इति ह्.पाठः ९६. द्वा.स्तो. २-९

विष्णुं **कवयो** ज्ञानिन आहुः । **अनुष्टभं** नृसिंहानुष्टभम् । **अनु** अनुकूलेभ्यो विरिञ्चशर्वपूर्वदेवेभ्यः **चर्चूर्यमाणं** पुनः पुनरुच्चारयन्तं तदर्थांश्च व्याचक्षाणं[९७] तमेव हंसरूपिणं **इन्द्रं** परमेश्वरं **मनीषा** मनीषया 'सुपां सुलुक्'[९८] इत्यादि स्मरणात् । **निचिक्युर्ददृशुश्चेति** । एवं वायुपक्षेऽपि शर्वादिभिश्चर्चूर्यमाणमित्यादि यथायोग्यं व्यख्येयम् । इन्द्रशब्दोऽपि 'इन्द्रस्य युज्यः सखा' इत्यादौ वायौ प्रसिद्ध एव ॥

एवं मन्त्रमुदाहृत्य तत्तात्पर्यमभिधातुं प्रवृत्तं 'वाचि वै तदैन्द्रं प्राणं' इति वाक्यं व्याचष्टे– **वागाख्यायामिति** ॥ उच्चार्यमाणायां सत्याम् । व्याख्यायमानायां चेत्यपि ग्राह्यम् । तदैन्द्रमित्यत्र तदेत्यनन्तरं आ इन्द्रमिति पदद्वयमैन्द्रमित्येकपदं च विवक्षितम् । तत्राद्ये **आ** सन्तात् सदा पुनः पुरिति यावत् । वाचि नृसिंहानुष्टुभिर्ब्रह्मादीन्प्रति व्याख्यायमानायां सत्यां **इन्द्रं** परमेश्वरं प्राणं विष्णुं **तदा** व्याख्यानकालं मुनयोऽ**न्यचायन्** ददृशुरिति विष्णुपरतया योज्यम् । अत एवात्र विष्णुं ददृशुरित्येवोक्तम् । द्वितीये तु वायुपरतया योज्यमित्यग्रे स्वयमाचार्य एव वक्ष्यति । नन्वेवं मन्त्रतात्पर्यकथनेऽपि कः प्रकृतोपयग इति तत्राह– **अत इति** ॥ वाच्युच्चार्यमाणायामित्युक्तिबलादेवेत्यर्थः । सदेत्याङोऽर्थकथनम् । **अतः** बृहत्यादीनामेवंभावाभावात् । अनुष्टुभ एव सदा विष्णुमुखतः श्रूयमाणत्वादनुष्टुबेव छन्दसां मध्ये वरेत्येतदुक्तं भवतीत्यर्थः । न केवलं 'वाचि वै तदैन्द्रं प्राणं न्यचायन्' इत्येतदुक्तं भवति किन्तु अनुष्टुबेव छन्दसां वरेति चोक्तं भवतीति चशब्दार्थः ॥

---

९७. व्याचक्षमाणं इति 'क'पाठः

९८. पा.सू. ७-१-३९,सि.कौ.सू.सं. ३५६१

अनुष्टुप् सहस्रपठनफलनिरूपणम्

**उपनिषत्**

**स हेश्वरो यशस्वी कल्याणकीर्तिर्भवितोरीश्वरो ह तु पुरायुषः प्रैतोरिति ह स्माह ।**

**भाष्यम्**

**अनुष्टुभां सहस्रं तु यः शंसीतात एव तु ।**
**भवितुं चेश्वरः स स्याद् भावो मुक्तिर्न चान्यथा ॥**

**यशस्वी [९९]स प्रसिद्धः स्याच्छुभकीर्तिश्च सर्वदा ।**
**स्वच्छन्दमृत्युता च स्यात् तस्येत्याहैतरेयकः ॥**

**भावप्रदीपः**

'स हेश्वरो यशस्वी' इत्यादि 'इति ह स्म' इत्यन्तमनुष्टुप्सहस्रशंसनफलवाक्यं व्याचष्टे– **अनुष्टुभामिति ॥ अत एव** शंसनादेव । भवितुं **ईश्वरः** समर्थः । चशब्दस्य यशस्वी चेत्युत्तरत्र संबन्धः । भवनस्य सर्वसाधारण्यात्कथं शंसनफलत्वमित्यत आह– **भावो मुक्तिरिति ॥ अन्यथा** अनुष्टुप्सहस्रशंसनाभावे मुक्तिर्न च नैव भवतीत्यर्थः । मुक्तिरेवात्र भावो विवक्षितो नान्यथा सत्तादिरूपो विवक्षित इति वा । यशस्वीत्यनुवादः [१००]स प्रसिद्ध इति व्याख्यानम् । यशःकीर्तिशब्दयोः पर्यायत्वात्पौनरुक्तिपरिहाराय यशःशब्दः प्रसिद्धिमात्रपरोऽत्रेति भावेनैवं व्याख्यानम् । कल्याणकीर्तिरित्यस्यार्थः– **शुभकीर्तिरिति** ॥ 'आयुषः पुरा प्रैतोरीश्वरः' इत्यस्य तात्पर्यम्–

९९. सुप्रसिद्ध इति पाठान्तरम्  १००. सुप्रसिद्ध इति 'ख'पाठः

स्वछन्दमृत्युता च स्यादिति । 'इति ह स्माहे'त्यत्र क आहेत्यपेक्षायामाह– इत्याहैतरेयक इति ।। अयमैतरेयकः कश्चन ऋषिः ।।

बृहीछन्दोमहिमानिरूपणम्

उपनिषत्

**अकृत्स्नो ह्येष आत्मा यद्वाक् । अभि हि प्राणेन मनसेस्यमानो वाचा नानुभवति । बृहतीमभि सम्पादयेत् । एष वै कृत्स्न आत्मा यद्बृहती ।**

बृहत्याः सर्वछन्दोत्तमत्वकथनम्

भाष्यम्

महैतरेयो भगवान् तन्नेत्याह रमापतिः ।
नानाच्छन्दःप्रशंसादिप्रमाणरहितत्वतः ।।

परिहाराय चापूर्णमैतरेयमुने शृणु ।
त्वं तु मन्त्रमुदाहृत्य यस्मादेतदवोचथाः ।।

तस्माद् वक्ष्याम्युत्तरं ते प्रियः शिष्योऽसि मे यतः ।
उमैव वागिति प्रोक्ता साऽनुष्टुबभिमानिनी ।।

अकृत्स्ना सा ततो नैव ब्रह्मेत्युक्ता कथञ्चन ।
वागिन्द्रियाभिमानिन्यां न हि ब्रह्मवचः क्वचित् ।।

वायुना प्राणरूपेण मनोरूपशिवेन च ।
अभ्यस्यमानोऽनुभवेत् पुमान् वाचा [१०१]तु न क्वचित् ।।

१०१. न तु इति ह.पाठः

**अभिमानी बृहत्यास्तु वायुरेव यतः प्रभुः ।**
**तस्मादेषा छन्दसां हि वरिष्ठा बृहती स्मृता ॥**

**पूर्णो हि वायुर्देवानां तस्माद् ब्रह्मेति चोच्यते ।**
**माहात्म्याधिक्यतश्चैव बृहतीत्येव नाम तत् ॥**

**भावप्रदीपः**

एवमैतरेयमुनिना पूर्वपक्षिते 'अकृत्स्नो ह्येष आत्मा' इत्यादिना 'इति ह स्माह' इत्यन्तेन सिद्धान्तः क्रियते । तत्रापि क एवमाहेत्यपेक्षायामाह– **महैतरेय इत्यादिना** ॥ तदित्यस्यैव विवरणम्– **नानाछन्दःप्रशंसादीति** ॥ **नानाछन्दसां** त्रिष्टुबादीनां प्रशंसा । आदिपदे बृहतीसहस्रसंपादनस्यानावश्यकता । कुत एतन्न युज्यत इत्यत आह– **प्रमाणरहितत्वत इति, परिहाराय चापूर्णमिति च** ॥ कुतोऽनुष्टुबादीनामाधिक्यमित्याशङ्कायां तत्परिहारस्य साधकत्वेन शङ्क्यमानं यत्किंचित्प्रमाणमप्यपूर्णमसमर्थमित्यर्थः । ननु मास्त्वन्येषां छन्दसामाधिक्यनिश्चयः । अनुष्टभस्तु न तथा । तत्र मया मन्त्रस्योदाहृतत्वादित्यत आह– **त्वं त्विति** ॥ **एतत्** अनुष्टुप्सहस्रशंसनस्यैवाधिक्यम् । 'अकृत्स्नो ह्येष आत्मा' इत्यादिकं व्याचष्टे– **उमैवेति** ॥ यस्मात्**सा** उमा अनुष्टुबाभिमानिनी अनुष्टुप् च वागाख्या तस्मादभिमानिनयन्यायेन उमैव वागाख्या मुख्यतो वाक्शब्दवाच्या । सा चोमा **अकृत्स्ना**ऽपूर्णा । कुत इत्यत आह– **ततो नैवेति** ॥ **ततः** अकृत्स्नत्वादेव हेतोर्वेदादिषु **कथश्चन** केनापि प्रकारेण सा ब्रह्मेति नैवोक्ता । अन्यथा 'प्राणो ब्रह्म' इत्यादौ

वायुरिवेयमपि ब्रह्मत्वेन व्यपदिश्येतेत्यर्थः । ननु मास्त्वनुष्टुबभिमानिरूपेण ब्रह्मशब्दोदितत्वमुमायाः वागिन्द्रियाभिमानिरूपेण किं न स्यात् । तावतापि कृत्स्नत्वोपपत्तेरित्यत आह– **वागिन्द्रियेति** ।। उमाया अकृत्स्नत्वे उपनिषद्यनुक्तं हेतुमुक्त्वा इदानीं 'अभि हि प्राणेन मनसेस्यमानो वाचाऽनुभवति' इत्युक्तं हेतुं विवृणोति– **वायुनेति** ।। अभ्यस्यमान इत्यनेन मूलेऽभीत्युपसर्गस्येस्यमान इत्यनेन योगं सूचयति । पुमानिति मूले कर्त्रनुक्तेरध्याहारमभिप्रैति । अथवा नानुभवतीत्यत्र (ना इति नृशब्दप्रथमान्ततयापि विभागोऽपि विवक्षित इति भावेन तद्व्याख्यानम्- **पुमानिति** ।। अनुभवेदित्यनेन **अनुभवति इति**)[१०२] क्रियाया आवृत्तिं सूचयति । तथा च वागभिमानिन्युमा न पूर्णा जीवानां विषयानुभवप्रेरकत्वाभावात् देवदत्तवत् । व्यतिरेकेण प्राणशिववच्चेत्यनुमानं सूचितं भवति । ततश्चाकृत्स्नोमाभिमन्यमानानुष्टुपूछन्दसो नोत्तमत्वमिति भावः । मास्त्वनुष्टुभो वरिष्ठत्वम् । बृहत्या अपि तत्कुत इत्यतः प्रवृत्तं 'बृहतीमभ्िसंपादयेदेष वै कृत्स्न आत्मा यद्बृहति' इति वाक्यं व्याचष्टे– **अभिमानीति** ।। एतेन **यत्** या **बृहती** बृहत्यभिमानिदेवता वायुः **एष हि कृत्स्नः** पूर्ण आत्मा **यत्** यस्मादेवं तस्माद्बृहतीशब्दवाच्यपूर्णवाय्वभिमन्यमानत्वाद्बृहत्येव छन्दसां मध्ये **बृहती** श्रेष्ठेति तद्वाक्यं व्याख्यातं भवति । वायोरपि पूर्णत्वं कुत इत्यत आह– **पूर्णो हीति** ।। चोवधारणे । यस्मात्पूर्णस्तस्मादेव 'प्राणो ब्रह्म' इत्यादिश्रुतिषु ब्रह्मेत्युच्यत इत्यर्थः । न केवलं देवोत्तमवाय्वभिमन्यमानत्वादेव

१०२. () चिह्नस्था पंक्तिः लिपिकृद्दोषेन 'क'मातृकायां लुप्तः ।

बृहत्या उत्तमत्वं किन्तु स्वतोऽपीतरछन्दोभ्योऽधिकमाहात्म्यवत्वाच्च । अत एवास्या बृहतीनामकत्वं नान्येषामित्याह– **माहात्म्येति** ।। माहात्म्याधिक्यतश्च सा बृहती श्रेष्ठा । **तदेव** तस्मादेव हेतोस्तस्या बृहतीत्येव नामेति योजना । एतेन **यत्** यस्मात् **एषा** बृहती इतरछन्दोभ्योऽधिकमाहात्म्याऽत एव बृहती तन्नाम्नी । तस्मात् बृहतीछन्दसां मध्ये वरिष्ठेति यद्बृहतीत्यंशस्य प्रकारान्तरेण व्याख्यानमभिप्रैति ।।

बृहती सर्वतः छन्दोभिः परिवृता

**उपनिषत्**

**सोऽयमात्मा सर्वतः शरीरैः परिवृतः । तद्यथाऽयमात्मा सर्वतः शरीरैः परिवृत एवमेव बृहती सर्वतश्छन्दोभिः परिवृता । मध्यं ह्येषामङ्गानामात्मा । मध्यं छन्दसां बृहती । स हेश्वरो यशस्वी कल्याणकीर्तिर्भवितोरीश्वरो ह तु पुरायुषः प्रैतोरिति ह स्माह । कृत्स्नो ह्येष आत्मा यद्बृहती । तस्माद् बृहतीमेवाभिसम्पादयेत् ।।२.३.५।।**

बृहत्याः उत्तमत्वे निमित्तकथनम्

**भाष्यम्**

अङ्गेभ्य एव सम्भूतान्यन्यच्छन्दांसि चाब्जजात् ।
मध्यात् तु बृहती जाता तस्मात् सा मध्यमुच्यते ।।

पठ्यते तेन मध्ये सा छन्दसां प्रवरा सती ।
छन्दांस्यन्यान्यङ्गवत् स्युर्मध्यवद् बृहती परा ।
सप्तछन्दांसि चैवं हि प्रतिमा वैष्णवी मता ।।

## भावप्रदीपः

'सोऽयमात्मा सर्वतः शरीरैः परिवृतः' इत्यादिना 'मध्यं छन्दसां बृहती'त्यन्तेन बृहत्या एवोत्तमत्वे हेत्वन्तरमुच्यते । तत्र परिवार-परिवृतयोर्मध्ये परिवृतस्यैव वरिष्ठत्वस्य राजादौ दर्शनादस्त्वितर-छन्दोभिः परिवृतायाः बृहत्या उत्तमत्वं कथञ्चित् । मध्यमत्वं तु कथमुत्तमत्वे निमित्तम् । पाण्डवमध्यमस्यार्जुनस्य भीमोत्तमत्वाभावात् । मध्याङ्गुल्या अप्यङ्गुष्ठोत्तमत्वाभावाच्चेत्याशङ्क्य बृहत्या मध्यमत्वं प्राकारान्तरेणाप्युपपादयति– **अङ्गेभ्य एवेति** ।। चो हेतौ । यस्मात् **अब्जजाद्ब्रह्मणो बृहत्यन्यानि** गायत्र्यादिछन्दांसि **अङ्गेभ्य एव** इतरा-वयवेभ्य एव सम्भूतानि, बृहती तु **मध्यात्** मध्यदेहाज्जाता तस्मात्सा बृहती मध्यमुच्यते । तेन कारणेन सा सप्तछन्दसां मध्ये पठ्यते । अतः **सती** साध्वी **सा** बृहती छन्दसां प्रवरेत्यर्थः । तथा चात्र चतुर्मुखमध्यजातत्वेन मध्यमत्वस्यापि विवक्षितत्वात्तेन हेतुना बृहत्या इतरोत्तमत्वकथनं नानुपपन्नमिति भावः । 'तद्याथाऽयमात्मा सर्वतः शरीरैः परिवृतः' इत्यादेस्तात्पर्यमाह– **छन्दांसीति** ।। **अङ्गवत्** इतरावयववत् । स्युः अवराणीति शेषः । बृहती तु मध्यवत्परा श्रेष्ठेत्यर्थः । 'अकृत्स्नो ह्येष आत्मा कृत्स्नो ह्येष आत्मा' इत्यनुष्टुप्बृहत्योः द्वयोरेवात्मत्वं कृत्स्नाकृत्स्नत्वं चाभिहितम् । तत्रान्येषां सर्वेषामपि गायत्र्यादिछन्दसामुपलक्षणाभिप्रायेणाकृत्स्नत्वमु-पपादितम् । आत्मत्वमप्येवमेव सर्वेषां मन्तव्यमित्याशयेनात्म-शब्दार्थमपि ज्ञापयन्नाह– **सप्तछन्दांसीति** ।। एवं विधानि कृत्स्ना-

कृत्स्नरूपाणि सप्तछन्दांस्यपि **वैष्णवी प्रतिमा मता** वैष्णव्यः प्रतिमा मता इत्यर्थः । एतेनात्मशब्दो विष्णुवद्विष्णुप्रतिमावाचको भवतीत्यतोऽत्र विष्णुप्रतिमापर इति सूचितं भवति । सप्तछन्दांसीत्यनेन बृहत्या मध्यमत्वं चोपपादितं भवति । अन्यथा चतुर्दशछन्दसां ग्रहणे बृहत्या मध्मत्वानुपपत्तेरिति ॥

**विवक्षाभेदेन बृहत्याः अभिमानिदेवतानिरूपणम्**

**भाष्यम्**

**गायत्रीदेवतात्वं च[१०३] लक्ष्म्या यत्राभिधीयते ।**
**बृहती देवता तत्र भगवान् पुरुषोत्तमः ॥**

**आधिक्यं छन्दसां यत्र गायत्र्यास्तु विवक्षितम् ।**
**तत्र तत्पुत्रको वायुः बृहतीदेवता मता ॥**

**ऋचामाधिक्ययोगार्थं नाङ्गीकर्तव्यमत्र तत् ।**
**प्रधानत्वाद् बृहत्यास्तु जगत्याद्यं न युज्यते ॥**

**भावप्रदीपः**

सर्वदेवोत्तमवाय्वभिमन्यमानत्वाद्बृहत्या उमाद्यभिमन्यमानानुष्टुबाद्यपेक्षयोत्तमत्वमित्युक्तम् । तन्न बुध्यामहे । क्वचिल्लक्ष्म्या अपि गायत्रीदेवतात्वस्याभिधीयमानत्वेन बृहत्यपेक्षया गायत्र्या एवाधिक्याङ्गीकारस्य न्यायप्राप्तत्वादित्यत आह– **गायत्रीति** ॥ तथा च बृहत्या वरिष्ठत्ववचनं न विरुद्धमिति भावः । नन्वेवमपि बृहत्या एवोत्तमत्वं न निश्चेतुं शक्यते । 'गायत्रीछन्दसामहं'[१०४] इमित्यादौ

१०३. तु इति ह्.पाठः १०४. भ.गी. १०-३५

गायत्र्या एव सर्वछन्दोधिकत्वस्य तात्पर्यतः कथ्यमानत्वात् । न हि भगवतोऽप्युत्तमा देवताऽस्ति । येन गायत्र्यास्तद्देवताकत्वाङ्गीकारेण बृहत्याधिक्यं शक्यसमाधानं स्यादित्यत आह– **आधिक्यमिति** ।। **तत्पुत्रको** लक्ष्मी[१०५]पुत्रो वायुरेव बृहतीदेवतात्वेनाङ्गीक्रियते । न भगवान् अतो नोक्तानुपपत्तिरिति भावः । नन्वेवं सति कुतो बृहत्या एवोत्तमत्वे निर्बन्धः । अधिष्ठातृदेवतातारतम्यानुसारेण विवक्षाभेदेन गायत्रीबृहत्योरुभयोरपि छन्दसामाधिक्यस्य वक्तुं शक्यत्वादित्यत आह– **ऋचामिति** ।। सत्यम् । यद्यपि विवक्षाभेदेनोभयोरपि श्रैष्ठ्यं शक्यवचनम् । तथाप्यत्र प्रकृते **तत्** गायत्रीसहस्रस्यैवोत्तमत्वेन शंस्यत्वं नाङ्गीकार्यं, कुतः **ऋचामाधिक्ययोगार्थम्** । बृहती-सहस्रशंसने गायत्रीसहस्रात्परं पञ्चशतगायत्रीणामृचाधिक्यस्य योगो भवति । तेन च फलाधिक्यलाभः । अतस्तदर्थं बृहतीसहस्रस्यै-वोत्तमत्वं व्यवस्थाप्य तच्छंसनमेव कर्तव्यं न गायत्रीसहस्रस्येत्यर्थः । नन्वेवं सति जगत्यादिसहस्रशंसनमेव कर्तव्यं स्यात् । तच्छंसने बृहतीतोऽप्यृगाधिक्यलाभात् । बृहत्याः षट्त्रिंशदक्षरत्वात् । पंक्ति-त्रिष्टुब्जगतीनां ततोऽपि क्रमेण चतुरक्षरोत्तरत्वादित्यत आह– **प्रधानत्वादिति** ।। सत्यं, जगत्यादीनां शंसने ऋचामाधिक्यलाभो भवति । तथापि सप्तसु छन्दस्सु बृहत्या एवोक्तरीत्या प्रधानत्वात् जगत्यादीनां चाक्षराधिक्यमात्रसद्भावेऽप्यप्राधान्यात् **जगत्याद्यं** जगत्यादिसहस्रशंसनं न युज्यत इत्यर्थः ।।

---

१०५. विष्णु इति 'ख'पाठः

बृहतीसहस्रपठनफलनिरूपणम्

**भाष्यम्**

**सम्पादनाद् बृहत्यास्तु मुक्तो भवितुमीश्वरः ।।**
**स्यात् प्रसिद्धः सुकीर्तिश्च छन्दोमृत्युर्गुणाधिकः ।**

**इति प्राह स्वयं विष्णुर्महिदासाभिधः प्रभुः ।। इत्यादि च ।**

**भावप्रदीपः**

'स हेश्वरो यशस्वी' इत्यादिफवाक्यं व्याचष्टे– **संपादनादिति** ।। **बृहत्याः** बृहतीसहस्रस्य । 'भवितोः' इत्यस्यार्थो– **मुक्तो भवितुमिति** । [१०६]'भावो मुक्तिर्न चान्यथा' इत्युक्तत्वात् । अथवा मुक्त इति मूले शेषोक्तिः । **छन्दोमृत्युः** आयुस्समाप्तेः पुरैव स्वेच्छाधीनमृत्युः । नन्वनुष्टप्सहस्रशंसनस्याप्येतस्यैव फलस्य प्राक्कथितत्वात्को विशेषो बृहतीसहस्रशंसनस्येत्याशङ्क्य इदमत्रोपलक्षणम् अन्येऽपि गुणा ग्राह्या इति भावेनोक्तम्– **गुणाधिक इति** । अनुष्टुप्शंसनकर्तुर्मुक्तौ प्राप्यगुणतोऽप्यधिकगुणवान्भवतीत्यर्थः ।।

**भाष्यम्**

**इतोऽन्यत् सत्किमित्याहुर्नानाच्छन्दस्त्ववादिनः ।**
**अन्यत् [१०७]सद्रूपमित्याहुस्त्रिष्टुब्वादिन एव ते ।।**

**ऐन्द्रं प्राणं परमेश्वरसहितं वायुम् । प्राणेन मनसा च । अभि इस्यमानोऽभ्यस्यमानः । 'तृतीयोऽतिशये' इति सूत्रादकारस्येकारः । 'मथनात् मिथिलो जातः सहनात् सिंह उच्यते । हत्वी दस्यूनी' इत्यादिवच्च । अभ्यस्यमानः अभितः क्षिप्यमाणो विषयेषु बहुशः ।**

---

१०६. ऐत.भा. (३५५-पु) १०७. सद्भूयामेवेत्याहुः इति ह्.पाठः

**कृत्स्न आत्मा कृत्स्नप्रतिमा विष्णोः ।**

**एकाऽपि प्रतिमा विष्णोर्बृहती च्छन्दसां वरा ।**

**अन्यच्छन्दोभिधा[१०८] यत्स्यात् प्रतिमा मध्यमैव तत् ।। इति च ।**

**एवं ब्रह्मादिभिः श्रूयमाणानुष्टुबपि बृहत्या अङ्गमिति बृहत्या एवाधिक्यमुक्तं भवति ।।२.३.५।।**

**भावप्रदीपः**

'किमन्यत्सदन्यद् ब्रूयां' इत्येतद्वाक्यं प्रागव्याख्यातत्वात् व्याचष्टे– **इतोऽन्यदिति ।। सत्** उत्तमं **नानाछन्दस्त्ववादिनः** यस्य कस्यापि छन्दसः शंसनीयत्वमेवेति वादिनः । **त्रिष्टुप्वादिनः** त्रष्टुबेव शंसितव्येति वादिनः । त्रिष्टुबित्युपलक्षणं एवेत्यस्यान्यदेवेत्यन्वयः । **ते** प्रसिद्धाः । तथा चात्र वाक्यद्वयम् । अन्यत्सत्किमित्येकं, अन्यदेव सद्ब्रूयामित्यपरम् । तत्राद्यं नानाछन्दसां सहस्रं शंसितव्यमेव । बृहतीसहस्रसंपादनमविवक्षितमित्यनियमवादिविषयम् । द्वितीयं त्रिष्टुबाद्यन्यतमसहस्रशंसननियमवादिविषयमिति भावः ।।

'तदैन्द्रं प्राणं' इत्यत्र आ इन्द्रमिति छेदमभिप्रेत्य विष्णुविषयतया प्राग्व्याख्यातम् । इदानीमैन्द्रमित्येकमेव पदमभिप्रेत्य वायुविषयतया व्याख्याति– **ऐन्द्रं प्राणमिति** ।। इन्द्रस्य परमेश्वरस्यायमैन्द्रः परमेश्वरसहित इति यावत् । तमित्यर्थः । विष्णुसमीप एव वायुं ददृशुर्न पृथुगिति ज्ञापनायैन्द्रमिति विशेषणमिति भावः । अत एव प्रागेवं वायुं च ददृशुस्तत्रेत्युक्तम् । 'अभि हि प्राणेन मनसेस्यमानः' इत्येतद्वायुना प्राणरूपेण मनोरूपशिवेन चाभ्यस्यमान इति

१०८. युता इति ह.पाठः

प्राग्व्याख्यातम् । तदभिनयेन दर्शयति– **प्राणेनेति** ।। तर्ह्यस्यमान इत्येव मूले वक्तव्यम् । कुत इस्यमान इत्युक्तिरित्यत आह– **तृतीय इति** ।। तथा चातिशयेनास्यमान इत्यर्थोऽत्र विवक्षित इति भावः । अथावा निरुक्तत्वादेव वर्णविपर्ययोऽयमिति भावेन दृष्टान्तमुखेनोपपादयति– **मथनादिति** ।। 'तृतीयोऽतिशये' इत्येतदपि दृष्टान्तेनोपपादयति– **ह त्वीति** ।। हत्वा इत्याकारस्य तृतीय ईकार इत्यर्थः । अस्त्वेवं तथापि कोऽत्रार्थो विवक्षित इत्यत आह– **अभित इति** ।। असु क्षेपण इति धातोः । अस्यमान इत्यस्यार्थः– **क्षिप्यमाण इति** । अभित इत्यस्यौवार्थो– **विषयेष्विति** । बहुष इत्यतिशयप्रदर्शनम् । 'कृत्स्न आत्मा' इत्येतदनूद्य व्याचष्टे– **कृत्स्न आत्मेति** ।।

बृहत्या एव मुख्यविष्णुप्रतिमात्वे प्रमाणमाह– **एकापीति** ।। बृहतीछन्दसां मध्ये **एका** अन्यतमापि विष्णोर्वरा प्रतिमा । अन्यछन्दोभिधा **यत्** या प्रतिमा स्यात्तत्सा मध्यमैव नोत्तमेति यावदित्यर्थः । नन्वेतावताप्यैतरेयमुनिकृतपूर्वपक्षस्य किमुत्तरं जातमित्यतो महैतरेयस्य भगवतः समाधानवाक्यस्य तात्पर्यमाह– **एवमिति** ।।

ततश्चायं खण्डार्थः । **तद्वा**[१०९] **इदं बृहतीसहस्रं वै** उक्तप्रकारेणैव संपन्नं भवति । ननु बृहतीसहस्रसंपादनस्यैवावश्यकत्वे तत्रोक्तप्रकारेणैवेत्यवधारणं सम्भवति । तदेव कुत इत्यतोऽस्यैवावश्यकतोपपादनाय पक्षान्तराणि दूषयितुं तावदनुवदति– **तद्धेति** ।। **तत्** तत्र शंसनविषये एके **एतत्** शंसनीयं सहस्रं नानाछन्दसां संबन्ध्येव **प्रतिजानते** यत्किञ्चिच्छन्दस्कर्कसहस्रमपि शंसितव्यमेव [११०]बृहती-

---

१०९. तत् इति 'ख'पाठः 	११०. बृहतीसहसस्र इति 'ख'पाठः

संपादनमविवक्षितमित्याहुः । कुत इत्यतस्तेषामभिप्रायं व्यनक्ति– **किमन्यत्सदिति** ।। यच्छन्दःशंसितुमुपक्रमते इतोऽन्यत्**सत्** उत्तमं छन्दःकिमस्ति । सर्वेषां छन्दसां साम्येन तारतम्याभावादित्यर्थः । एके तु त्रिष्टुप्सहस्रमेव शंसितव्यमित्याहुः । एके तु जगतीसहस्रम् । एके त्वनुष्टुप्सहस्रमिति । एवं नियमवादिनामभिप्रायं व्यनक्ति– **अन्यद्ब्रूयामिति** ।। सदिति वर्तते । बृहतीसहस्रसंपादनमेव कुतः बृहतीतो**ऽन्यत्** त्रिष्टुप्छन्द एव **सत्** तदुत्तमं ब्रूयाम् । ततोऽप्यक्षराधिक्यादिति । एवं जगतीसहस्रवादिनोऽप्याहुः ।

अनुष्टुप्सहस्रवादिनस्तु तस्या बृहत्यादितोऽक्षराधिक्याभावत्तदुत्तमत्वसाधनाय तत्प्रशंसात्मिकामृचं दर्शयति– **तदुक्तमिति** ।। **ऋषिणा** मन्त्रद्रष्ट्रा **तत्** अनुष्टभ उत्तमत्वज्ञापकमुक्तमित्यर्थः । ऋगर्थस्तु प्रागुक्त एव । स्वयमेव ऋक्तात्पर्यमाह– **वाचीति** ।। वागाख्यायामनुष्टभि नृसिंहप्रतिपादकानुष्टुप्छन्दस्कऋचि **आ** समन्तात् पुनः पुनः हंसरूपेण विष्णुना ब्रह्मरुद्रादीन्प्रत्युच्चार्यमाणायां व्याख्यायमानायां च सत्यां **तदा** उच्चारणादिकाले **इन्द्रं** परमेश्वरं **प्राणं** विष्णुं मुनयो **न्यचायन्** ददृशुः । तथा वायुना **वाचि** रुद्रादीन् प्रत्युपदिश्यमानायां तदा **ऐन्द्रं** इन्द्रः परमेश्वरस्तत्सहितं प्राणं[१११] हंसरूपिणो विष्णोः समीप एव हंसरूपिणं वायुं च ददृशुरित्येतत्प्रमेयं **तत्** तया एतया ऋचोक्तं भवतीत्यर्थः । तथा च ब्रह्मादिभिरपि विष्णोः सकाशादनुष्टुबर्थस्यैव सदा श्रूयमाणत्वादनुष्टबेव परेत्युक्तं भवतीति भावः ।

---

१११. प्राणं इति पदं 'क'पाठे नास्ति

किञ्च योऽनुष्टुप्सहस्रस्य शंसिता **सः यशस्वी** सुप्रसिद्धः **कल्याणकीर्तिः** [११२]सुकीर्तिस्स्यात् । **भवितोर्भ**वितुम् । **भावो** मुक्तिः । मुक्तो निष्पत्तु**मीश्वरः** समर्थः स्यात् । **आयुषः** आयुःसमाप्तेः[११३] **पुरा तु** पुरापि **प्रैतोः** मर्तुं च **इश्वरः** शक्तः स्यात् स्वच्छन्दमृत्युः स्यादिति यवात् । उक्तफलस्य सर्वस्यापि प्रमितत्वज्ञापनाय हशब्दद्वयं, **इति ह** इत्येवं **आह स्म** ऐतरेयो नाम महिदासशिष्यः कश्चनर्षिः पूर्वपक्षं कृतवानित्यर्थः ।

तत्रोत्तरं भगवता महिदासेनाभिधीयते– **अकृत्स्नो ह्येष इत्यादिना** ।। **यत्** या **वाक्** वागाख्यानुष्टुबभिमानिनी वागिन्द्रियाभिमानिनी वोमा **एष** एषा **अकृत्स्न आत्मा**ऽपूर्णविष्णुप्रतिमा हि । विधेयानुसारेण एष इति पुल्लिङ्गनिर्देशः । कुतो वाचोऽकृत्स्नत्वमित्यत आह– **अभीति** ।। अत्र नानुभवतीति नृशब्दो नञ् च तन्त्रेणानुसन्धेयौ । तथा च **ना** पुमान् **हि** यस्मात्**प्राणेन** वायुना **मनसा** मनोभिमानिना शिवेन च **अभि** अभितः विषयेषु **इस्यमानः** अस्यमानः तृतीयोऽतिशये बहुषः क्षिप्यमाणः सन् **अनुभवति** विषयानुभववान् भवति । न तु **वाचा** वागभिमानिन्योमया । अतो जीवानां विषयानुभवप्रेरकत्वाभावात् साऽकृत्स्नेत्यर्थः । अतो न तदभिमन्यमानाया अनुष्टभो वरिष्ठत्वमिति भावः । तस्मात् **बृहतीं** बृहतीसहस्रमेवाभिसंपादयेत् । अनुष्टुभोऽ-कृत्स्नत्वमात्रेण कथं बृहत्या एव संपाद्यत्वसिद्धिरित्यत आह– **एष वा इति** ।। **यत्** या **बृहती** बृहत्यभिमानिदेवता वायुरेष हि **कृत्स्नः** पूर्ण **आत्मा** विष्णुप्रतिमा । **यत्** यस्मादेवं तस्माद्बृहतीशब्दवाच्य-पूर्णवाय्वभिमन्यमानत्वाद्बृहत्येव बृहतीछन्दसां मध्ये वरिष्ठेति

---

११२. शुभकीर्तिः इति 'ख'पाठः ११३. परिसमाप्तेः इति 'ख'पाठः

यद्बृहतीपदयोरावृत्या व्याख्येयम् । एवं **यत्** यस्मा**देषा** बृहतीतर-छन्दोभ्योऽधिकमाहात्म्या अत एव **बृहती** तन्नाम्नी तस्माद्बृहती छन्दसां मध्ये वरिष्ठेति स्वरूपाधिक्योपपादकत्वेनापि योज्यम् ।

हेत्वन्तरेणापि बृहत्या एवोत्तमत्वं सदृष्टान्तं साधयितुमाह– **सोऽयमात्मेति** ।। **स** प्रसिद्धो**ऽयमात्मा** मध्यदेहः **शरीरैः** शिरो-बह्वाद्यङ्गैः परिवृत इति तावत्सर्वानुभवसिद्धम् । तन्निदर्शनं-यथाऽयमात्मा सर्वतः शरीरैः परिवृत एवमेव बृहती छन्दोभिः षड्भिः **सर्वतः** पुरस्तादुपिष्टाच्च परिवृता । तथा चेतरछन्दसां परिवार-रूपत्वादप्राधान्यम् । तैः परिवृतत्वाद्राजादिवत् बृहत्या एव प्राधान्यमिति भावः । एतेनैव दृष्टान्तेन प्रकारान्तरेण बृहत्या एवोत्तमत्वं साधयति– **मध्यमिति** ।। **आत्मा** मध्यदेहो हि **सर्वेषामङ्गानां** शिरःकवचादीनां[११४] मध्यम् । एवं बृहत्यपि गायत्र्या-दिजगत्यन्तानां छन्दसां मध्यम् । अतो मध्यदेहस्य मध्यस्थत्वा-द्राज्ञोऽमात्यादिमध्यस्थस्य तेभ्यो यथोत्तमत्वमेवं छन्दोमध्यस्थत्वात् बृहत्यास्तेभ्य उत्तमत्वमिति भावः । उपलक्षणमेतत् । चतुर्मुखमध्य-देहजातत्वाद्बृहत्या इतरछन्दोभ्यस्तदितराङ्गजातेभ्य उत्तमत्वमित्यपि द्रष्टव्यम् । बृहतीसहस्रशंसनस्य फलमाह– **स इति** ।। पूर्ववदेवेदं व्याख्येयम् । उपलक्षणमेतत् । अनुष्टुप्सहस्रशंसनकर्तुस्सकाशादपि गुणाधिकश्च भवतीत्यपि द्रष्टव्यम् । इति ह स्माह स्वशिष्यमैतरेयं प्रति भगवान्महैतरेय उत्तरमिति शेषः । प्रकृतप्रमेयमुपसंहरति– **कृत्स्न इति** ।। **यत्** या बृहती **एष** एषा **कृत्स्न आत्मा** पूर्णा विष्णुप्रतिमा **हि** यस्मात्तस्माच्छंसिता पुरुषो बृहतीमेवाभिसंपादयेदिति ।।२.३.५।।

---

११४. करचरणादीनां इति 'ख'पाठः

बृहती गात्रेणापि बृहत्येव

उपनिषत्

**तद्वा इदं बृहतीसहस्रं सम्पन्नम् । तस्य वा एतस्य बृहतीसहस्रस्य सम्पन्नस्यैकादशानुष्टुभां शतानि भवन्ति, पञ्चविंशतिश्चानुष्टुभः । आत्तं वै भूयसा कनीयः ।**

भाष्यम्

बृहतीसम्पादनेऽनुष्टुप्शंसनमात्रात् पञ्चविंशोत्तरशतानुष्टुबाधिक्यं च भवति । अत आधिक्यात् बृहतीसम्पादनमेव वरम् । तस्यात्रैवान्तर्भावात् । जगत्यादिकं त्वधिकत्वेऽपि बृहतीवत् माहात्म्याभावादेवोपेक्ष्यते ।

भावप्रदीपः

'तद्वा इदं बृहतीसहस्रं' इत्यादिखण्डं व्याकरिष्यंस्तत्र तद्वा इदमित्यादिपरामर्शप्रयोजनं वक्ष्यमाणरीत्याऽनुसन्धेयमित्याशयेन 'तस्य वा एतस्य बृहतीसहस्रस्य' इत्यादिद्वितीयवाक्यं व्याचष्टे– **बृहतीसम्पादन इति** ।। बृहतीसहस्रसंपादन इत्यर्थः । **अनुष्टुप्शंसनमात्रात्** केनलानुष्टुप्सहस्रशंसनात् । एवमनुष्टुबाधिक्यलाभेऽपि किं प्रकृत इत्यत आह– **अत इति** ।। अस्तु बृहतीसहस्रसंपादने पञ्चविंशोत्तरशतानुष्टुबाधिक्यम् । तथापि कुतो बृहतीसहस्रसंपादनमेव वरमित्यतः प्रवृत्तं 'अत्तं वै भूयसा कनीयः' इति वाक्यं तात्पर्यतो[११५] व्याचष्टे– **तस्येति** ।। अनुष्टुप्सहस्रस्य । **अत्रैव** बृहतीसहस्र एव । नन्वेवं तर्हि बृहत्यपेक्षया जगत्यादीनामाधिक्यात्

११५. तात्पर्यतो इति पदं 'क'पाठे नास्ति

जगत्यादिसंपादनमेव कुतो न कर्तव्यमित्यत आह– **जगत्यादिकं त्विति** ।। आदिपदेन पङ्क्तित्रिष्टुभौ । **अधिकत्वेऽपि** अक्षराधिक्येऽपि । महात्म्याभावस्तु पूर्वखण्ड एवोपपादितः ।।

ऋषिसम्मतिकथनम्

**उपनिषत्**

**तदुक्तमृषिणा– 'वाचमष्टापदीमहं इति, अष्टौ हि चतुरक्षराणि भवन्ति । 'नवस्रक्तिं' इति, बृहती सम्पद्यमाना नवस्रक्ति । 'ऋतस्पृशं' इति, सत्यं वै वागृचा स्पृष्टा । 'इन्द्रात् परि तन्वं ममे' इति, तद्यदेवैतद्बृहतीसहस्रमनुष्टुप्सम्पन्नं भवति । तस्मात् तदैन्द्रात् प्राणाद् बृहत्यै वाचमनुष्टुभं तन्वं संनिर्मिमीते ।**

बृहतीसहस्रस्य विष्णुप्रतिमात्वनिरूपणम्

**भाष्यम्**

'वाचमष्टापदीमहं' इत्यनुष्टुभो बृहतीसम्पादनवचनाच्च । अष्टचतुरक्षराण्यनुष्टुप् । तस्या एव बृहतीसम्पादने नव स्रक्तयो भवन्ति । ऋचा वाक् ऋग्रूपेण वागृतं स्पृष्टा सत्यरूपं विष्णुं स्पृष्टा भवति । इन्द्रस्य परमेश्वरस्य विष्णोः सम्बन्धी नितरां प्रियत्वाद्यः प्राणदेवता वायुः तस्य प्रतिमारूपमिदं बृहतीसहस्रम् । स च वायुर्विष्णोर्मुख्यप्रतिमा । तस्माद् विष्णोरेव प्रतिमा बृहतीसहस्रम् ।

**भावप्रदीपः**

इतरापेक्षया बृहतीसहस्रस्यैव संपादन उत्तरवाक्याभिप्रेतं युक्त्यन्तरं चाह– **वाचमष्टापदीमिति** ।। अनुष्टभ इति पञ्चमी । बृहती-

**संपादनवचनात्** बृहतीसंपादनप्रकारनिरूपणात् । वाचमष्टापदीमहमित्यनूद्य मूले तत्तात्पर्यमभिधत्ते[११६]- 'अष्टौ चतुरक्षराणि भवन्ति' इति । तद्व्याचष्टे– **अष्टेति** ।। अष्टौ चतुरक्षराणि द्वात्रिंशदक्षरात्मिकानुष्टुबित्यर्थः । तथा चाष्टौ पदानि चतुरक्षरात्मकविभागाः यस्यास्साऽनुष्टुबष्टापदीति व्याख्यातं भवति । 'अथ नवस्रक्तिं' इत्यनूद्य तदर्थोऽभिधीयते– **बृहतीसंपाद्यमाना नवस्रक्तीति** । तदर्थमाह– **तस्या एवेति** ।। अष्टचतुरक्षरात्मकानुष्टुप्सकाशादेवेत्यर्थः । स्रक्तिशब्दार्थस्तु वक्ष्यते । तथा च चतुरक्षरात्मिका नवस्रक्तयो यस्यास्सा नवस्रक्तीति व्याख्यातं भवति ।

अयं भावः । द्वात्रिंशदक्षरात्मिका तावदनुष्टुप् । तदुपर्युत्तरानुष्टप्गतचतुरक्षराणि योजितानि चेत्सैव षट्त्रिंशदक्षरात्मिका बृहती संपद्यते । एवमुत्तरानुष्टुभ्युर्वरिताष्टाविंशदक्षरात्मकसप्तपदोपरि तदुत्तरगतानुष्टुप्गताष्टाक्षरात्मकपदद्वयं योजितं चेत्सापि बृहती सम्पाद्यते[११७] । एवं नवभिरनुष्टुभिरष्टौ बृहत्यस्सम्पाद्यन्ते[११८] । एवमुत्तरत्रापि ।

'ऋतस्पृशं' इति पदमनूद्य 'सत्यं वै वागृचा स्पृष्टा' इति मूले व्याख्यायते । अत्र 'सत्यं वै वाक्' इति वाचः सत्यत्वं विधाय तस्या ऋचा स्पृष्टत्वमभिधीयत इति भाति । तच्च ऋतस्पृशमिति मूलपदाननुगणमिति भावेन तद्व्याचष्टे– **ऋचा वागित्यादिना** ।। ऋचा वागित्यनुवादः ऋग्गृपेण वागिति व्याख्यानम् । ऋतस्पृष्टेत्यस्य सत्यरूपमित्यादि । तथा च **वाक्** वागाख्या अनुष्टुबुक्तरीत्या

---

११६. अभिधीयते इति 'ख'पाठः ११७. सम्पद्यते इति 'ख'पाठः

११८. सम्पद्यन्ते इति 'ख'पाठः

**नवस्रक्तीभूय** ऋचा बृहत्यृग्रूपेण बृहतीरूपं प्राप्ता सतीति यावत् । **सत्यं** सत्यस्वरूपं विष्णुं **स्पृष्टा** स्पृष्टवती विष्णुसन्निधानविशेषपात्री वै इति व्याख्यातं भवति । तेन च ऋतं सत्यरूपं विष्णुं स्पृशतीति ऋतस्पृक् तां वाचमिति मन्त्रांशोऽपि व्याख्यातो भवति । 'इन्द्रात् परितन्वं ममे' इति पादमनूद्य स व्याख्यायते मूले **इन्द्रात्परीत्यादिना** । तद्व्याख्यातुं तदुपयुक्तं प्रमेयं तावदुपोद्घातत्वेनाह– **इन्द्रस्येत्यादि** ॥ तत्रेन्द्रात्प्राणदित्यस्यार्थसूचनमिन्द्रस्येत्यादि । स्वस्वामिभावादिसंबन्धस्य सर्वसाधारण्याद्विवक्षितं संबन्धं दर्शयितुमुक्तम्– **नितरां प्रियत्वा-दिति** ॥ वायुप्रतिमाया विष्णुप्रतिमात्वमपि घटयितुमुक्तं– **स चेति** । तथा च बृहतीसहस्रं **प्रतिमा** प्रतिमात्वादमुख्यविष्णुप्रतिमेति भावः ॥

प्राणादुमायाः उत्पत्तिकथनम्

**भाष्यम्**

**तस्मात् तस्यैव बृहतीसहस्रत्वेन सम्पन्नस्य पञ्चविंशोत्तरैकादश-शतानुष्टुप्त्वेन सम्पादने बृहतीदैवतप्राणरूपाद् वायोरनुष्टुब्देवताया वाग्रूपाया उमाया उत्पत्तिः संस्मृता भवत्येवं जानतः । ततश्चोमाया अपि भगवत्प्रतिमात्वाद् विष्णुप्रतिमास्थापक एव भवत्येतत् सर्वं सम्यग्ध्यायन् ।**

**भावप्रदीपः**

एवमुपयुक्तं प्रमेयमभिधायेदानीं 'बृहत्यै वाचमनुष्टुभं तन्वं सन्निर्मिमीते' इत्येतद्वाक्यमभिहितप्रमेयसंगततया तात्पर्यतो व्याचष्टे– **तस्मात्तस्येति**[११९] ॥ सम्पन्नस्य ऋग्जातस्येति शेषः । बृहत्यै इत्यस्य तात्पर्यं **बृहतीदेवतेति** । अुष्टुबमित्यस्य **अनुष्टुब्देवताया**

११९. तस्मात्तस्यैवेति 'ख'पाठः

**इति** । वाचमित्यस्य **ऋग्रूपाया इति** । सन्निर्मिमीत इत्यस्यो**त्पत्तिरिति** । शंसितुः साक्षान्निर्मातृत्वस्यानुपपत्तेः **संस्मृता भवतीति** । यथोक्तम्–

'अविद्यमानवचनं[१२०] विद्यमानस्मृतिस्था ।
उभयं रचनं प्रोक्तं'[१२१] । इति ।

संस्मृतेरपि सर्वेष्वयोगात् **एवं जानत इत्युक्तम्** । अनुष्टुब्देवतोमाजनको वायुर्बृहतीदेवतेत्येवं जानत इत्यर्थः । बृहतीदैवतवायोरनुष्टुब्देवतोमोत्पत्तिसंस्मृत्यापि किं फलमत्राह– **ततश्चेति** ।। ऋचां बृहतीसहस्रत्वं संपाद्य बृहतीसहस्रत्वेन संपन्नस्य तस्यैव ऋग्जातस्य पुनः पञ्चविंशोत्तरैकादशशतानुष्टुप्त्वेन संपादनादित्यर्थः । न केवलं वायोः किन्तूमाया अपीत्यपिशब्दः ।।

**विष्णोः सकाशात् विष्णोरेव प्रतिमान्तरं निर्मितं भवति**

**भाष्यम्**

**विष्णुरेव बृहत्याः प्राणस्याधिष्ठातृदेवता । प्रतिमाधिष्ठितदेवतावत् । तस्माद् बृहत्याः सकाशादनुष्टुप्सम्पादने तस्यैव विष्णोः प्रतिमान्तरं तस्मादेव निर्मितं भवति । अत एवेन्द्रात् परितन्वं मम इत्युक्तम् । बृहतीस्थविष्णोर्बलादेव [१२२]तत्सम्पद्यते । स हि तस्याः षट्त्रिंशदक्षरादित्वमपि नियमयति तत्प्रसादाद् वायुश्च । वायुरेव तद्भगवन्नियतो [१२३]नियमयति तस्मादिन्द्रात् परीत्यस्यैन्द्रात् प्राणादिति व्याख्या कृता ।**

---

१२०. रचनं इति 'ख'पाठः १२१. भाग.ता. ३-१६-४२

१२२. हि इति ह्.पाठे अधिकः १२३. नियामयति इति ह्.पाठः

**भावप्रदीपः**

ननु कथं प्राणस्य विष्णुप्रतिमात्वम् । येन प्राणप्रतिमात्वेन बृहतीसहस्रस्यापि विष्णुप्रतिमात्वं स्यादित्यत आह– **विष्णुरेव हीति** ॥ तथा च प्राणस्य तावद्विष्ण्वधिष्ठितत्वेन विणुप्रतिमात्वं शिलावद्युज्यत एव । अतो बृहतीसहस्रस्यापि प्राणाधिष्ठितत्वेना-मुख्यविष्णुप्रतिमात्वं प्रतिमाकवचवदुपपद्यत इति भावः । अत एव बृहत्याः प्राणस्य चेति चशब्दाभावः । सति हि चशब्दे बृहतीप्राणयोः साम्यप्रतीतिः स्यात् सा माभूदिति । एवं तात्पर्यतो व्याख्याय 'तस्मात्तदैन्द्रात्प्राणात्' इति समग्रं वाक्यमादित एव व्याचष्टे– **तस्मादिति** ॥ उमाया अपि प्राणद्वारा विष्णुप्रतिमात्वदित्यर्थः । बृहत्याः साकाशादित्यनेन बृहत्यै इति चतुर्थीयं पञ्चम्यर्थेति सूचयति । तन्वमित्यस्यार्थः– **प्रतिमेति** । बृहतीसंपादने एका प्रतिमा निर्मिता भावतीति प्रागाभिहितत्वात् **प्रतिमान्तरमित्युक्तम्** । ऐन्द्रात्प्राणा-दित्यत्रेन्द्रादित्यप्युपसंख्येयम् । समाख्यामन्त्रे इन्द्रादिति श्रवणादिति भावेन तद्व्याख्यानं कृतम्– **तस्मादेवेति** ॥ विष्णोरवेत्यर्थः । अत्रो-पष्टम्भकमाह– **अत एवेति** ॥ उक्तं मन्त्रेति शेषः । एतदुपपादयति– **बृहतीस्थेति** ॥ बृहत्याः सकाशादनुष्टप्संपादने बृहतीस्थविणुरूपस्यै-वान्तरङ्गत्वाद्**बृहतीस्थे**त्युक्तम् । **तत्** प्रतिमान्तरमनष्टुभाख्यमुमारूम् । ननु बृहत्याः षट्त्रिंशदक्षरात्मकत्वेनाधिकत्वादनुष्टुभस्तत्रान्तर्भाव-संभवेन बृहतीबलादेवानुष्टुप्सम्पादसंभवात्कुतो बृहतीस्थविष्णुबलादेव तत्संपत्तिरित्युच्यत इत्यत आह– **स हीति** ॥ **तस्याः** बृहत्याः । आदिपदेनानुष्टुबाधिक्यसङ्ग्रहः । ननु मन्त्रे इन्द्रात्परीत्येव श्रवणात् कथमुपनिषदि ऐन्द्रात्प्राणादिति तद्व्याख्यानं कृतमित्याशङ्क्य तत्सङ्ग-मयितुमाह– **तत्प्रसादादिति** ॥ चशब्दान्नियमयतीत्याद्यनुषज्यते ।

तथा च नोक्तशङ्कावकाश इति भावेनाह– **वयुरेवेति** ।। एवशब्दस्य भगवन्नियत एवेत्यन्वयः । **यत्** यस्मात् ।।

बृहतीछन्दसां विष्णुवायुप्रतिमात्वनिरूपणम्

**भाष्यम्**

यावत्सहस्रं बृहती तावच्छंसेदनुष्टुभाम् ।
छन्दसां वा तदन्येषां बृहतीत्वं स्मरेत् ततः ।।

तेन सर्वगतो विष्णुः सर्वस्मादधिकोऽर्चितः ।
भवेदेवं जानतस्तु कृता च प्रतिमा भवेत् ।।

तथा वायोरपि कृता वायुर्हि प्रतिमा हरेः ।
तस्माद् वायुकृतं सर्वं क्रियते विष्णुनैव हि ।।

बृहतीसहस्रं सम्पन्नमेकादशशतं पुनः ।
अनुष्टुभां स्मरेत् पञ्चविंशोत्तरमुदारधीः ।।

तेन वायोरुमोत्पत्तिः सम्यग्ज्ञानात् स्मृता भवेत् ।
ततो द्वितीयप्रतिमा विष्णोरेव कृता भवेत् ।।

विष्णुनानुप्रविष्टौ यदुमा वायुश्च तद्वशौ ।। इत्यादि च ।

स्रक्तयो विभागाः ।

स्रक्तिरंशो विभागश्च विदलं[१२४] चेति कथ्यते । इति शब्दनिर्णये।

**भावप्रदीपः**

उक्तार्थे प्रमाणमाह– **यावदिति** ।। **बृहती** बृहतीनामनुष्टुभां

---

१२४. विदळं इति ह.पाठः

समुदायमिति शेषः । **तदन्येषां** अनुष्टुभः सकाशादन्येषां गायत्र्यादीनां छन्दसां वा समुदायं **शंसेत्** अर्चितो भवेदित्यन्वयः । **जानतो** जानता । प्रतिमा विष्णोरिति शेषः । वायोरपि, प्रतिमेत्यनुषज्यते । ननु का विष्णुप्रतिमेत्यत आह– **वायुर्हीति** ।। तत्कुत इत्यत आह– **तस्मादिति** ।। **तस्मादेव** वायोर्हरिप्रतिमात्वादेवेत्यर्थः । एवं बृहतीसहस्रं वायुप्रतिमेत्यपि ग्राह्यम् । तथा च ऋचां शंसनेन बृहतीसहस्रसंपादने बृहतीदेवताभूतवायुरूपविष्णुप्रतिमास्थापनं बृहती-सहस्ररूपवायुप्रतिमास्थापनं च कृतं भवतीति भावः । 'बृहत्यै वाचमनुष्टुभं तन्वं संनिर्मिमीते' इत्यस्योक्तार्थमपि प्रमाणशेषेण प्रमा-पयति– **बृहतीसहस्रमिति** ।। एवं[१२५] नानाछन्दोभिः संपन्नं बृहती-सहस्रं पुनरनुष्टुभां पञ्चविंशोत्तरमेकादशशतं **स्मरेत्** तथात्वेना-नुसंदध्यात् । तेन वायोः सकाशादुमोत्पत्तिः स्मृता भवेत् । कथं सम्यज्ज्ञानात् । अनुष्टुब्देवतोमाजनको वायुर्बृहतीदेवतेत्येवं सम्यक् जानतः पुंसस्तथा स्मृतिर्भवितुमर्हतीति भावः । वायोरुमोत्पत्तिस्मर-णेनापि किं कृतं स्यादित्यत आह– **तत इति** ।। कथमुमावाय्वोर्विष्णु-प्रतिमात्वमित्यत आह– **विष्णुनेति** ।। मुक्तैरनुप्रविष्टस्यापि विष्णो-र्मुक्तप्रतिमात्वाभावात्कथमनुप्रविष्टत्वमात्रेण तत्प्रतिमात्वमित्यत उक्तम्– **तद्वशाविति** ।। 'नवस्रक्तिं' इत्यत्र स्रक्तिशब्दार्थं सप्रमाणमाह– **स्रक्तय इति** ।।

### बृहतीसहस्रस्य अकारव्याख्यानत्वनिरूपणम्

### उपनिषत्

**स वा एष वाचः परमो विकारो यदेतन्महदुक्थम् ।**

---

१२५. एवं इति 'क'पाठे नास्ति

## अकारयोगार्थकथनम्

### भाष्यम्

स वा एष वाचः परमो विकारः अकाराख्यवाग् विकारेषूत्तमो बृहतीसहस्राख्यः ।

अकारः प्रथमं नाम विष्णोः सर्वगुणान् ब्रुवन् ।
सर्वदोषविरुद्धत्वाद् गुणनामन्यतामपि ।।

विष्णोर्वदति जीवेभ्यो जडेभ्यश्चैव सर्वदा ।
अभावं चैव दोषाणां सर्वेषां केशवे वदेत् ।।

सम्यग्वक्तृत्वतस्तस्मादकारो मुख्यनाम हि ।
तदर्थानेकदेशेन शब्दाः सर्वेऽपि चोचिरे ।।

व्याख्याव्याख्येयरूपत्वं [१२६]विकारत्वमिहोदितम् ।
विकारत्वं[१२७] च नान्यत् स्यान्नित्या वेदा यतोऽखिलाः ।।

वाचकेषु तथा विष्णोः सहस्रबृहतीमयम् ।
उक्थमुत्तममुद्दिष्टं व्याख्याकारस्य सा परा ।।

अन्येऽपि शब्दाः सर्वेऽपि ह्यकारार्थाभिधायिनः ।
एषां [१२८]परममुख्यं तत्................।।

### भावप्रदीपः

'स वा एष वाचः परमो विकारो यदेतन्महदुक्थं' इत्येतदनूद्य

१२६. विकारित्वं इति ह.पाठः १२७. विकारित्वं इति ह.पाठः

१२८. परममुक्थं इति ह.पाठः

व्याचष्टे– **स वा एष इति** ।। 'परमो विकारः' इत्यस्यार्थो– **विकारेषूत्तम इति** । 'महदुक्थ'मित्यस्यार्थो– **बृहतीसहस्राख्य इति** । समाख्याप्रमाणेनापि स्पष्टं व्याचष्टे– **अकार इति** ।। **प्रथमं** मुख्यम् । कथमकारः प्रथमं नामेत्यत आह– **सर्वगुणन्ब्रुवन्निति** ।। एतदेव स्पष्टयति– **सर्वेति** ।। तद्विरुद्धत्वतदन्यत्वतदभावाः खलु नञर्थास्तवत् । अकारस्यापि तत्समानार्थत्वात् त एवार्थाः । तत्र तद्विरुद्धत्ववाची तावदयं विष्णोर्गुणानां सर्वदोषविरुद्धत्वं वदति । दोषविरुद्धगुणाकरत्वमेव वदतीति यावत् । तथा तदन्यत्ववाची सन् विष्णोर्जीवेभ्यो जडेभ्यश्च सर्वदैवान्यतामपि वदति । अभाववाची सन् सर्वेषामेव दोषाणामभवं च केशवे वदेत् । **हि** यस्मात् एवं तस्मात् **सम्यग्वक्तृत्वतः** अर्थत्रयस्यापि अभिधायकत्वतोऽकारो विष्णोर्मुख्यतो नामेत्यर्थः । तथापि कुतो मुख्यनामत्वमकारस्येत्यत आह– **तदर्थानीति** ।। एकदेशेन केचन **शब्दाः** 'कं ब्रह्म' इत्यादय आनन्दादिगुणानेवोचिरे । केचन 'अन्यमीशं' इत्यादयोऽन्यत्वमेव । अन्ये तु 'अपहतपाप्मा' इत्यादयो दोषाभावमेव । न त्वर्थत्रयम् । अतोऽकार एवेतरेभ्य मुख्यं नामेत्यर्थः । ननु कीदृशमारविकारत्वमितरशब्दस्येत्यत आह– **व्याख्येति** ।। विकारत्वमिति विकारित्वस्याप्युपलक्षणम् । तथा चाकारस्य विकारित्वं व्याख्येयरूपत्वमितरशब्दस्य विकारत्वं व्यानरूपत्वमिति योजना । अन्यद्विकारत्वं विकारित्वं वा परिणामित्वादिरूपं विवक्षितं न स्यादित्यर्थः । कुतो नान्यदित्यत आह– **नित्या इति** ।। अजन्या इत्यर्थः । एवं वाचो विकार इति पदद्वयं व्याख्याय 'यदेतन्महदुक्थं स वा एष परमो विकारः' इत्येतद्व्याचष्टे– **वाचकेष्विति** ।। विष्णोर्वाचकेषु शब्देषु मध्ये **सहस्रबृहतीमयं**

बृहतीसहस्रात्मकं यदुक्थं तदुत्तममुद्दिष्टम् । कुतः **सा अकारस्य परा** व्याख्या तद्बृहतीसहस्रमुत्तममकारव्याख्यानं यत इत्यर्थः । एतदेव विशदयति– **अन्येऽपीति** ।। प्रथमोऽपिः समुच्चये । द्वतीयोऽभिविधौ । एषां शब्दानां मध्ये तत् बृहतीसहस्राख्यमुक्थं परमित्यर्थः ।।

मितामितादिपञ्चविधवाङ्मयनिरूपणम्

उपनिषत्

**तदेतत्पञ्चविधम् । मितममितं स्वरः सत्यानृते इति । ऋग्गाथा कुम्ब्या तन्मितम् । यजुर्निगदो वृथावाक् तदमितम् । सामाथो यः कश्च गेष्णः स स्वरः । ओमिति सत्यम् । नेत्यनृतम् । तदेतत्पुष्पं फलं वाचो यत्सत्यम् । स हेश्वरो यशस्वी कल्याणकीर्तिर्भवितोः पुष्पं हि फलं वाचः सत्यं वदति ।**

**अथैतन्मूलं वाचो यदनृतम् । तद्यथा वृक्ष आविर्मूलः शुष्यति, स उद्वर्तते, एवमेवानृतं वदन्नाविर्मूलमात्मानं करोति, स शुष्यति, स उद्वर्तते । तस्मादनृतं न वदेत् । दयेत त्वेनेन ।**

**पराग्वा एतद्रिक्तमक्षरं यदेतदोमिति । तद्यत्किञ्चोमित्याहात्रैवास्मै तद्रिच्यते । स यत्सर्वमोङ्कुर्याद्रिच्याद् आत्मानम् । स कामेभ्यो नालं स्यात् । अथैतत्पूर्णमभ्यात्मं यन्नेति ।**

**स यत्सर्वं नेति ब्रूयात् पापिकाऽस्य कीर्तिर्जायेत । सैनं**

**तत्रैव हन्यात् । तस्मात् काल एव दद्यात्, काले न दद्यात्, तत्सत्यानृते मिथुनीकरोति । तयोर्मिथुनात् प्रजायते भूयान् भवति ।**

**यो वै तां वाचं वेद यस्या एषः विकारः स सम्प्रतिवित् । अकारो वै सर्वा वाक् । सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति ।**

**तस्यै यदुपांशु, स प्राणः । अथ यदुच्चैस्तच्छरीरम् । तस्मात् तत्तिर इव । तिर इव ह्यशरीरम् । अशरीरो हि प्राणः । अथ यदुच्चैस्तच्छरीरं तस्मात् तदाविराविर्हि शरीरम् ॥२.३.६॥**

अकारस्य सर्ववागात्मकत्वकथनम्

**भाष्यम्**

...................तदेतत्पञ्चधा स्थितम् ॥
व्याख्यानमेवाकारस्य सहैवोक्थेन सर्वशः ।
मितामिते स्वरस्सत्यमनृतं चेति पञ्चधा ॥
तस्मादकार एवायं सर्ववागात्मकः श्रुतः ।
तस्यैव व्यक्तिरूपोऽयं सर्ववेदादिविस्तरः ॥
तस्मात् सर्वगुणान् विष्णोरकारो वक्ति यत्प्रभोः ।
तद्व्यक्तयोऽपि शब्दा ये सर्वे विष्णुगुणब्रुवाः ॥

## भावप्रदीपः

'तदेतत्पञ्चविधं' इत्येतद्व्याचष्टे– **तदेतदिति** ।। उक्थेन सहैव **सर्वशः** सर्वमप्यकारस्यैव व्याख्यानरूपं यदेतच्छब्दजातं तदेतत्पञ्चविधस्थितमिति योजना । पांचविध्यमेव व्यनक्ति– **मितामिते इति** ।। एतेन 'यदेतन्महदुक्थं तदेतत्पञ्चविधं' इति बृहतीसहस्रस्यैव पञ्चविधत्वमत्राभिधीयत इति प्रतीतिर्निरस्ता वेदितव्या । तस्य मितामितादिभेदेन पञ्चविधत्वायोगात् । किञ्च 'अकारो वै सर्वा वाक्' इत्युपसंहारवाक्यबलाच्च सर्वमपि शब्दजातमकारव्याख्यानरूपं न त्वेकमेव बृहतीसहस्रमिति भावेन तद्वाक्यं व्याचष्टे– **तस्मादिति** ।। तस्मादेवेति संबन्धः । सर्वस्यापि शब्दजातस्य अकारव्याख्यानरूपत्वादेवेत्यर्थः । अन्यथाऽकारस्य सर्ववागात्मकत्वं श्रुतौ नोच्येतेति भावः । एतेन 'वाचः परमो विकारः' इत्यत्र वाक्पदेनाकाराख्यैव वाग्ग्राह्या नान्येत्यत्रापि युक्तिरुक्ता भवति । अन्यथाऽकारस्याप्रस्तुतत्वेन तत्प्रशंसाऽसंभवप्रसङ्गात् । अकारस्योक्तसर्ववागात्मकत्वमुपपादयति– **तस्यैवेति** ।। **व्यक्तिरूपः** व्यज्यतेऽर्थोऽनयेति व्यक्तिर्व्याख्यानं तद्रूप इत्यर्थः । कथमनयोर्व्याख्यानव्याख्येयभावोऽपीत्यत आह– **तस्मादिति** ।। **यद्यस्मादकारः प्रभोर्विष्णोः** सर्वगुणान्वक्ति । **तद्व्यक्तयः** अकारव्याख्यानाभिमता ये सर्वे शब्दास्तेऽपि **विष्णुगुणब्रुवाः** विष्णोर्गुणान् ब्रवन्तीति तथोक्ताः । तस्मादुभयोरेकार्थत्वादुपपन्नो व्याख्यानव्यख्येयभावः इति शेषः ।।

उपांशुच्चरितस्य अकारस्य फलाधिक्यकथनम्

भाष्यम्

**अकारस्य तथोपांशोरभिमानी तु मारुतः ।**
**देहेन्द्रियान्तःकरणनाम्नोऽस्य द्विविधस्य च ।।**

**स्थूलसूक्ष्मशरीरस्य सर्वेषामभिमानिनी ।**
**भारत्युच्चोदितस्यापि ह्यकारस्याभिमानिनी ।।**

**तस्मादुच्चादुपांशुर्हि जपादिषु फलाधिकः ।**
**वायुः पतिर्हि भारत्या उपांशोर्देवता मतः ।।**

भावप्रदीपः

'तस्यैव यदुपांशु स प्राणः' इति वाक्यं व्याचष्टे– **अकारस्येति** ।। **उपांशोः** उपांशुकथितस्य । 'अथ यदुच्चैस्तच्छरीरं' इत्येतद्व्याचष्टे– **देहेन्द्रियेति** ।। शरीरपदं देहेन्द्रियान्तःकरणसंघाताभिप्रायमिति भावेनोक्तम्– **देहेन्द्रियान्तकःरणनाम्न** इति । द्विविधस्येत्यस्यैव विवरणं **स्थूलसूक्ष्मेति** । स्थूलसूक्ष्मभेदेन द्विविधस्याप्यस्य सर्वेषां शरीरस्याभिमानिनी भारती उच्चैरुदितस्याकारस्याप्यभिमानिनीत्यर्थः । एवमुच्चोपांशुभेदेनाकारस्याभिमानिभेदकथनेन किं प्रयोजनमित्यत आह– **तस्मादिति** ।। तस्मादित्युक्तमेव हेतुं व्यनक्ति– **वायुरिति** ।। उपांशोर्देवता वायुर्हि यस्माद्भरत्या उच्चाकारदेवतायाः पतिर्मतस्तस्मादिति ।।

ओङ्कारस्य अकारव्याख्यानरूपत्वम्

भाष्यम्

**अकारस्य विकारोऽयमोङ्कार इति कथ्यते ।**
**अधिकोच्चत्वमानं हि तस्यार्थः समुदीरितः ।।**

**अकारेणैव तत्सर्वमुक्तमाधिक्यवक्तृतः ।**
**अधिकोच्चस्वरूपोऽसौ माता चाधिक एव हि ।।**

**भावप्रदीपः**

मितामितादिसहपाठेन सत्यपदोदितोंकरस्यापि अकारविकारत्वे तत्साम्यमेवेति प्रतीतिनिरासाय पञ्चविकारेष्वयं श्रेष्ठो विकार इति भावेनाह– **अकास्येति** ।। **विकारो** व्याख्यानरूपः । अत्र साक्षा-दिति पूरणीयम् । तेन मितामितादयस्तद्वारा विकारा न साक्षादिति लभ्यते । कथमोङ्कारस्याकारसाक्षाद्विकारत्वमित्यत उभयोरर्थसाम्यमु-पपादयति– **अधिकेति** ।। अधिकेत्यकारार्थः । उच्चत्वमित्युकारार्थः । मानमिति मकारार्थः । **आधिक्यवक्तृतः** आधिक्यवाचित्वात् । नन्वाधिक्यमात्रवाचिनाऽकारेण कथमोंकारार्थस्याधिकोच्चत्वमानस्य लाभ इत्यत आह– **अधिकोच्चेति** ।। **माता** ज्ञाता । तथा चोच्चत्वेऽधिको ज्ञातृत्वे चाधिक इत्योंकारार्थः । अकारेण तु सामान्यत आधिक्यं कथ्यते । तथोच्चत्वादिविषयेऽपि व्याख्यातुं शक्यमेवेति युक्तमुक्तमिति भावः ।।

**नारायणशब्दोऽपि अकारव्याख्यारूपः**

**भाष्यम्**

**एकार्थत्वादकारोऽसौ नकारत्वमुपागतः ।**
**दीर्घीभूतः पुनस्तेनैवाकारेण सह स्थितः ।।**

**अभाववाच्यकारस्य ह्यर्थो रेफः क्षयं वदन् ।**
**सोऽप्यकारेण सहितो दीर्घत्वं समुपागतः ।।**

**अभाववाच्यकारः स एकार्थाद्वत्यभावयोः ।**
**यकारत्वं गतस्तस्मान्नो रेफस्योत्तरत्वतः ।।**

**णत्वं गतो ह्यकारोऽसौ नो विरुद्धार्थवाचकः ।**
**अन्यत्वात् सर्वजीवेभ्यो जडेभ्यश्च सदैव हि ।।**

**सर्वदोषोज्झितत्वाच्च सर्वतोऽप्यधिकत्वतः ।**
**निरासनाच्च दोषाणां स्वभक्तेभ्यः समन्ततः ।।**

**सर्वदोषविरुद्धोरुगुणपूर्णस्वरूपतः ।**
**नारायण इति प्रोक्तो ह्यकारार्थोऽयमेव हि ।।**

**तस्मादकारबीजेयं विष्णोर्नारायणाभिधा ।**
**प्रणवश्च ततोऽकारः प्रधानं नाम चक्रिणः ।।**

**भवप्रदीपः**

एवं प्रणवमूलत्वेनाकारस्य विष्णुनामसु प्रधाननामत्वमुपपाद्य नारायणशब्दमूलत्वेनापि तदुपपादयति– **एकार्थत्वादित्यादिना विष्णोर्नारायणाभिधेत्यन्तेन** ।। तत्र मूलत्वं द्विविधं विवक्षितम् । तद्धटकयावदवयरूपत्वं तत्प्रकाशनीयार्थत्वं चेति । तत्राद्यं तावदुपपादयति – **एकार्थत्वादित्यादिना** ।। **असौ** अकार एव **एकार्थत्वात्** अन्यत्वरूपैकार्थप्रतिपादकत्वान्नकारत्वं तावदुपागतः । नकारोऽप्यन्यत्ववाचक इति पुनस्तेनैवाकारेण सहस्थितस्सन्ना इति दीर्घीभूतः । तदुपरि श्रूयमाणो रेफोऽप्यभाववाच्यकारस्य **अर्थो** व्याख्यानरूपः । अतः सोऽप्यकारार्थत्वादकारात्मक एव । कथमेकार्थत्वं रेफस्येत्यतो रेफं विशिनष्टि– **क्षयं वदन्निति** ।। 'रीङ् क्षये' इति धातोर्डप्रत्यये निष्पन्नो रशब्दः क्षयं वदति । क्षयश्चा-

भावरूप एव । अतोऽकाररेफयोरेकार्थत्वमिति भावः । **सोऽपि** रेफोऽपि दीर्घत्वं रा इति । अभाववाची स एवाकारः पुनर्यकारत्वं **गतः** प्राप्तः । कथं 'या प्रापणे' इति धातोः कप्रत्यये निष्पन्नो यशब्दो गतिमाह । गतिश्चात्रापगतिरूपा विवक्षिता । तथ च गत्यभावयोर्यकाराकारार्थभूतयोरेकार्थत्वादेकार्थरूपत्वादुपपन्नमकारस्य यकारत्वमिति भावः । तस्माद्यकारानन्तरो **नो** नकारो णत्वं गतः । कुतः **रेफस्योत्तरत्वतः** रेफादुत्तरत्वात् । 'रषाभ्यां नो णः...'[१२९] इत्यादिसूत्रादिति भावः । एवं णत्वंगतोऽसौ **नो** नकारोऽपि **अकारो हि,** अकाररूप एवमन्तव्यः । कुतः? यतोऽयं **नो** विरुद्धार्थवाचकः । अकारोऽपि तथाभूत एवेति । तथाच नारायणशब्दस्य कोऽर्थः संपन्न इत्यत आह– **अन्यत्वादिति** ।। तत्र सर्वजीवेभ्य सदैवान्यत्वादिति नकारार्थः । जडेभ्योऽन्यत्वादित्यकारार्थः । सर्वदेषोझितत्वादिति रशब्दार्थः । राययति क्षयं प्रापयति सर्वदोषानिति । सर्वतोऽप्यधिकत्व इति रेफोत्तराकारार्थः । स्वभक्तेभ्यस्तदीयदोषाणां निरसनादिति यशब्दार्थः । यापयत्यपगमयति भक्तदोषानिति । सर्वदोषविरुद्धोरुगुणपूर्णस्वरूपत इति णशब्दार्थः । भावप्रधानोऽयं निर्देशः । नारायण इति प्रोक्तः विष्णुरित शेषः । नारायण इत्यस्यावृत्तिर्वा । एवं नारायणशब्दार्थमभिधायाकारार्थोऽप्येवमेवेत्याह– **अकारार्थ इति** ।। अन्यत्वाभावाधिक्यविरुद्धात्वानां तदर्थत्वात् । तत्र जीवजडादीनां प्रतियोगिनां योग्यतया लाभादिति भावः । एतेन तत्प्रशंसनीयार्थवत्वरूपं द्वितीयं मूलत्वमप्युपपादितं भवति । उपसंहति– **तस्मादिति** ।। **इयं** विष्णोर्नारायणाभिधा **अकारबीजा,** शब्दतोऽर्थतश्चाकारमूला । प्रणवश्चाकरबीजः । ततोऽकार एव **चक्रिणो** विष्णोः प्रधानं नामेत्यर्थः ।।

---

१२९. पा.सू. ८-४-१,सिं.कौ.सू.सं. २३५

अकारवाच्यो भगवानेक एव

**भाष्यम्**

**अकारनामा नान्योऽस्ति तमृते पुरुषोत्तमम् ।**
**ब्रह्मरुद्रादिनामानि ब्रह्मादिष्वप्यमुख्यतः ।।**
**वर्तन्ते न त्वकारोऽयं वर्तते केशवं विना ।**
**नारायणादिनामानि नृणां नामक्रियास्वपि ।।**
**विहितान्यकारो नैवायं विहितस्तमृते प्रभुम् ।**
**वायुर्ब्रह्मापि चाकारदेवते न तु नामिनौ ।।**
**यथा वेदाभिधेयोऽन्यो वेदाख्या देवता परा ।**
**एवं नामाभिमानी तु वायुर्वाच्यो जनार्दनः ।**
**तस्माद इति नामेतद्विष्णोः केवलमेव हि ।।**

**भावप्रदीपः**

प्रकारान्तरेणाप्यकारस्य प्राधान्यमुपपादयति– **अकारनामेति** ।। विष्णावेवासाधारणत्वादकारनामैवेतरनामापेक्षया प्रधानमिति भावः । ननु ब्रह्मरुद्रादिनामान्यप्यसाधारणान्येव । [१३०]'यो देवानां नामधा एक एव' इत्यादिश्रुतेः विष्णवन्येषां मुख्यतो नाम्न एवाभावात् । अतः को विशेषोऽकारस्येत्य आह– **ब्रह्मरुद्रेति** ।। अमुख्यतयाऽप्यन्यत्राप्रवृत्तेरकारस्यासाधारण्यं निर्बाधमेवेति भावः । नन्वेवमपि न नाराणादिनामभ्योऽस्य वैशेष्यम् । तेषाममुख्यतोऽप्यन्यत्र वृत्यभावात् ।

---

१३०. ऋक्.सं. १०-८२-३१३१.

'ऋते नारायणादीनि नामानि पुरोषोत्तमः ।
प्रादादन्यत्र भगवान् राजेवर्ते स्वकं पुरं'[१३१]

इत्युक्तेरित्यत आह– **नारायणदीति** ।। नारायणादिनामान्यपीति संबन्धः । अमुख्यतोऽन्यत्राविद्यमानान्यपीति तदर्थः । **नामक्रियासु** साङ्केतिकनामकरणार्थम् । ननु क्वचिद्वायुरकाराभिमानी श्रूयते । क्वचित् ब्रह्मा । अतस्तयोरपि तन्नामित्वमावश्यकमेव । अभिमानिनयन्यादित्यत आह– **वायुरिति** ।। अपिचौ मिथः समुच्चये । **देवते** अभिमानिनावेव । न तु **नामिनौ**, अकारवाच्यौ । न चैवमभिमानिनयन्यायविरोधः । तत्रापि मृदादिदेवतानां मृदादिवाच्यत्वाभावात् । अभिमन्यमानस्य मृदादेरर्थत्वेन वाचकत्वाभावात् । यत्तु वाचकं मृदादिपदं न तदभिमन्यमानम् । अतोऽभिमन्यमानस्यैव वाचकत्वाभावादकाराभिमानिनोरपि ब्रह्मवाय्वोर्न तद्वाच्यत्वमिति भावः । ननु मृदादेरर्थरूपत्वेनापदत्वान्मृदादिदेवतानां स्वाभिमन्यमानमृदादिवाच्यत्वायोगेऽपि न प्रकृते तथा । अकारस्य पदत्वात्तद्देवतयोस्तद्वाच्यत्वोपपत्तेरित्यतोऽत्रापि व्यभिचारोपपादनाय दृष्टन्तमाह– **यथेति** ।। **वेदाभिधेयो**ऽग्न्यादिः **देवता** वेदाभिमानिनी तु **परा** अग्न्यादितोऽन्यैव । न तु वेदाभिधेया । किन्तु सा **वेदाख्या** ऋगादिनाममात्रवती । न हि ऋचः श्रीर्गीरुमाद्याश्च साम्नः प्राणशिवादय इत्याद्युक्ताः ऋगादिदेवतारमादयः 'सहस्रशीर्षे'त्यादिसूक्तादिप्रतिपाद्या इत्यर्थः । उक्तमर्थं दार्ष्टान्तिके निगमयति– **एवमिति** ।। **नामाभिमानी** अकाराभिमानी, वायुरिति ब्रह्मणोऽप्युपलक्षणम् । प्रकृतमर्थमुपसंहरति– **तस्मादिति** ।।

---

१३१. सू.भा. उदाहृतप्रमाणवचनं १-३-३

### बृहतीसहस्रस्य हरेरन्नत्वकथनम्

### भाष्यम्

**विशेषतोऽस्य व्याख्यानं बृहतीनां सहस्रकम् ।**
**तस्मात् प्रीतो भवेद्विष्णुः शंसनादस्य सर्वदा ।।**

**तस्माद्यज्ञेऽपि वा शंसेदयज्ञेऽपि रहः पुमान् ।**
**ध्यात्वा नारायणं देवं विष्णोरन्नं हि तत्परम् ।। इत्यादि ब्रह्मसारे ।**

### भावप्रदीपः

'स वा एष वाचः परमो विकारो यदेतन्महुक्थं' इत्येतद्व्याख्यातमपि फलकथनाय प्रस्तावनार्थं पुनर्व्याचष्टे– **विशेषत इति** ।। **अस्य** अकारस्य । तच्छंसनफलमाह– **तस्मादिति** ।। विष्णुप्रधाननामभूताकारस्य विशेषतो व्याख्यानरूपत्वादित्यर्थः । एवमेतच्छंसनं विष्णुप्रीतिहेतुत्वादवश्यकर्तव्यमित्यभिप्रेत्य तस्य देशादिनियमं विधत्ते– **तस्माद्यज्ञ इति** ।। अपि वेति निपातसमुदायः पक्षान्तरद्योतकः । कुतस्तच्छंसनतो विष्णुप्रीतिरित्यत उक्तामेवोपपत्तिं स्मारयति– **विष्णोरिति** ।। तत् बृहतीसहस्रं विष्णोः **परमं** उत्तमं **अन्नं** अन्नरूपमित्यर्थः ।।

### मितागाथाकुम्ब्यीशब्दार्थकथनम्

### भाष्यम्

**परमविकारेण सह विकारमात्रस्यापि प्रस्तुत्वात् तदेतत्पञ्चविधमिति परामर्शः ।**

**स्वराणां नियमो यत्र ह्यृचो नामैव ताः स्मृताः ।**
**अन्या मिताक्षरा यास्तु ता गाथाः परिकीर्तिताः ।।**

**खण्डवाक्यानि कुम्ब्याः स्युरसमानि परस्परम् ।**
**यज्ञाङ्गं यजुरुद्दिष्टं निगदं वाक्यमात्रकम् ।। इत्यादि शब्दनिर्णये ।**

**भावप्रदीपः**

ननु 'यदेतन्महदुक्थं' इति बृहतीसहस्रस्यैव प्रकृतत्वात् 'तदेतत्पञ्चविधं' इति तस्यैव परामर्शो युक्तः । तद्विहाय समस्तस्यापि शब्दसमूहस्यायं परामर्श इति कथं व्याख्यातम् । अप्रस्तुतपरामर्शायोगादित्यत आह– **परमविकारेणेति** ।। तथा च 'यदेतन्महदुक्थं स एष वाचः परमो विकारः' इति बृहतीसहस्रस्याकारविकारोत्तमत्वकथनेनान्यत्सर्वमपि शब्दजातं विकारमात्रमित्युक्तप्रयमेव । अतः समस्तस्यापि शब्दजातस्य प्रस्तुतत्वात् 'तदेतदि'ति परामृश्य तस्य पाञ्चविध्यकथनमुपपन्नमेव । बृहतीसहस्रमात्रपरामर्शाङ्गीकारे तु तस्य मितामितादिपांचविध्यानुपपत्तिरति भावः । [१३२]मितामितमित्याद्युद्दिश्य तस्य प्रत्येकं विभागः कथ्यते- **ऋगित्यादिना** ।। तद्व्याचष्टे– **स्वराणामिति** ।। **यत्र** यासु स्वराणां नियमस्ता एव ऋचोनामेत्यन्वयः । यथाग्निमीळ इत्याद्याः । **अन्याः** स्वरनियमरहिताः । **मिताक्षराः** क्लृप्तवर्णा यास्ताः गाथाः परिकीर्तिताः । यथा 'अविद्धो विद्धवद्विष्णुरजातो जातवन्मृषा'[१३३] इत्याद्याः । खण्डवाक्यानि कुंब्याः स्यु कानि तानि परस्परं **असमानि** अक्लृप्ताक्षराणीति यावत् । यथा 'शं नो मित्रः शं वरुणः'[१३४] इत्यादीनि । **यज्ञाङ्गं** यज्ञे विनियुक्तवाक्यं, **वाक्यमात्रकं** यज्ञेऽविनियुक्तवाक्यम् ।।

---

१३२. मितं इति 'ख'पाठः

१३३. अनु. ३-४-१५०

१३४. तै.उ. १-१

बृहतीसहस्रस्य हरेरन्नत्वकथनम्

**भाष्यम्**

**विशेषतोऽस्य व्याख्यानं बृहतीनां सहस्रकम् ।**
**तस्मात् प्रीतो भवेद्विष्णुः शंसनादस्य सर्वदा ।।**

**तस्माद्यज्ञेऽपि वा शंसेदयज्ञेऽपि रहः पुमान् ।**
**ध्यात्वा नारायणं देवं विष्णोरन्नं हि तत्परम् ।। इत्यादि ब्रह्मसारे ।**

**भावप्रदीपः**

'स वा एष वाचः परमो विकारो यदेतन्महुक्थं' इत्येतद्व्याख्यातमपि फलकथनाय प्रस्तावनार्थं पुनर्व्याचष्टे– **विशेषत इति** ।। **अस्य** अकारस्य । तच्छंसनफलमाह– **तस्मादिति** ।। विष्णुप्रधाननामभूताकारस्य विशेषतो व्याख्यानरूपत्वादित्यर्थः । एवमेतच्छंसनं विष्णुप्रीतिहेतुत्वादवश्यकर्तव्यमित्यभिप्रेत्य तस्य देशादिनियमं विधत्ते– **तस्माद्यज्ञ इति** ।। अपि वेति निपातसमुदायः पक्षान्तरद्योतकः । कुतस्तच्छंसनतो विष्णुप्रीतिरित्यत उक्तामेवोपपत्तिं स्मारयति– **विष्णोरिति** ।। **तत्** बृहतीसहस्रं विष्णोः **परमं** उत्तमं **अन्नं** अन्नरूपमित्यर्थः ।।

मितागाथाकुम्ब्यीशब्दार्थकथनम्

**भाष्यम्**

**परमविकारेण सह विकारमात्रस्यापि प्रस्तुत्वात् तदेतत्पञ्चविधमिति परामर्शः ।**

**स्वराणां नियमो यत्र ह्यृचो नामैव ताः स्मृताः ।**
**अन्या मिताक्षरा यास्तु ता गाथाः परिकीर्तिताः ।।**

**खण्डवाक्यानि कुम्ब्याः स्युरसमानि परस्परम् ।**
**यज्ञाङ्गं यजुरुद्दिष्टं निगदं वाक्यमात्रकम् ।। इत्यादि शब्दनिर्णये ।**

**भावप्रदीपः**

ननु 'यदेतन्महदुक्थं' इति बृहतीसहस्रस्यैव प्रकृतत्वात् 'तदेतत्पञ्चविधं' इति तस्यैव परामर्शो युक्तः । तद्विहाय समस्तस्यापि शब्दसमूहस्यायं परामर्श इति कथं व्याख्यातम् । अप्रस्तुतपरामर्शायोगादित्यत आह– **परमविकारेणेति** ।। तथा च 'यदेतन्महदुक्थं स एष वाचः परमो विकारः' इति बृहतीसहस्रस्याकारविकारोत्तमत्वकथनेनान्यत्सर्वमपि शब्दजातं विकारमात्रमित्युक्तप्रयमेव । अतः समस्तस्यापि शब्दजातस्य प्रस्तुतत्वात् 'तदेतदि'ति परामृश्य तस्य पाञ्चविध्यकथनमुपपन्नमेव । बृहतीसहस्रमात्रपरामर्शाङ्गीकारे तु तस्य मितामितादिपांचविध्यानुपपत्तिरति भावः । [१३२]मितामितमित्याद्युद्दिश्य तस्य प्रत्येकं विभागः कथ्यते- **ऋगित्यादिना** ।। तद्व्याचष्टे– **स्वराणामिति** ।। **यत्र** यासु स्वराणां नियमस्ता एव ऋचोनामेत्यन्वयः । यथाग्निमीळ इत्याद्याः । **अन्याः** स्वरनियमरहिताः । **मिताक्षराः** क्लृप्तवर्णा यास्ताः गाथाः परिकीर्तिताः । यथा 'अविद्धो विद्धवद्विष्णुरजातो जातवन्मृषा'[१३३] इत्याद्याः । खण्डवाक्यानि कुंब्याः स्यु कानि तानि परस्परं **असमानि** अक्लृप्ताक्षराणीति यावत् । यथा 'शं नो मित्रः शं वरुणः'[१३४] इत्यादीनि । **यज्ञाङ्गं** यज्ञे विनियुक्तवाक्यं, **वाक्यमात्रकं** यज्ञेऽविनियुक्तवाक्यम् ।।

१३२. मितं इति 'ख'पाठः

१३३. अनु. ३-४-१५०

१३४. तै.उ. १-१

## अकारस्य अर्थवैशाल्यम् योग्यस्यैव दानयोग्यत्वनिरूपणं च

### भाष्यम्

**अकारार्थत्वान्नकारस्य किञ्चिन्मूलमिव । तस्मान्मूलत्वाद-कारार्थोऽपि ज्ञेय एव । नायोग्यानां सम्यग्वाच्य इति स्वल्प एव प्रकाशितोऽस्माभिः । वाच उद्धर्तनाशक्तेः स्वयमेवोद्धर्तते । यद्धि देवतासु करोति तदात्मन्यापतति । तस्माद् द्रव्यदानं ज्ञानदानं वा काले पात्राद्यनुसारेणैव[१३५] कुर्यात् ॥**

### भावप्रदीपः

'अथैतन्मूलं वाचो यदनृतं' इत्येतद्व्याचष्टे– **अकारार्थत्वादिति** ॥ अनृतशब्दवाच्यस्य नकारस्य **अकरार्थत्वात्** अकारसमानार्थत्वात् तद्विरुद्धत्वाद्यर्थत्रयोपेतत्वान्नकारो मूलमिव । वाक्शब्दवाच्यस्या-कारस्येति शेषः । मूलमूलिनोः समानार्थतानियमात् । यद्यप्यकार एव सर्वशब्दमूलमित्युक्तम् । तथाप्यत्र समानार्थकतामात्रेण मूलत्वोक्तिः । अत एव मूलमिवेतीवशब्दः । यद्यपि नकास्य नाकारसमानार्थता-प्यस्ति । येनोपचारेणापि तन्मूलत्वोक्तिरुपपद्येत । अकारस्य सर्व-शब्दमूलत्वेनातिबह्वर्थत्वात् । नकारस्यार्थत्रयमात्राभिधायित्वात् । तथाप्यत्रेतरार्थाविवक्षया प्रकृततद्विरुद्धत्वाद्यर्थत्रयसाम्यमात्रेणैवमुक्तिः । अत एवोक्तं किंचिन्मूलमिवेति । पूर्वटीकाकारास्तु[१३६]– नकारस्तु सर्वस्या वाचः किंचिन्मूलमिव । कुतः अकारार्थत्वात् अकारैक-देशार्थत्वादिति व्याचक्रुः । नकारस्याकारं प्रति मूलत्वेक्तेः प्रयोजनमाह– **तस्मादिति** ॥ तस्यैव विवरणं– **मूलत्वादिति** ॥

---

१३५. अनुसारणैव इति ह.पाठः  १३६. वि.ती. १२२पु

अकारं प्रति नकारस्येति योज्यम् । **अकारार्थोऽपि** अकारार्थेषु[१३७] मध्ये यावान्संभवात् तावान्सर्वोऽप्यर्थो नकारस्य वाच्यतया ज्ञेय एवेत्यर्थः । तर्हि नारायणशब्दार्थकथनावसरे 'अन्यत्वात् सर्वजीवेभ्यः'[१३८] । 'सर्वदोषविरुद्धोरुगुणपूर्णस्वरूपतः'[१३९] इति तदन्यत्वतद्विरुद्धत्वरूपमर्थद्वयमेव नकारस्य कुतः प्रदर्शित इत्यत आह– **नायोग्यानामिति** ।। **अयोग्यानां** सर्वार्थश्रवणयोग्यताविधुराणां अल्पाधिकारिणामिति यावत् । **सम्यक्** साकल्येन न वाच्य इति स्वल्प एवार्थोऽस्माभिः प्राक् प्रदर्शतो न सर्व इत्यर्थः ।

'तद्यथा वृक्ष आविर्मूलः शुष्यति स उद्वर्तते एवमेवानृतं वदन्नाविर्मूलमात्मानं करोति स शुष्यति स उद्वर्तते' इत्याविर्मूलवृक्षदृष्टान्तेनानृतवादिनोऽनर्थः कथ्यते । तदनुपपन्नम् । अनृतस्य वाचो मूलत्वेन तस्याविष्करणे वाच एवोद्वर्तनादेर्वक्तव्यत्वात् । अन्यथा वृक्षमूलाविष्करणकर्तुरेवोद्वर्तनादिप्रसङ्गादित्यतोऽस्याभिप्रायमाह– **वाच इति** ।। उद्वर्तनादिमात्रे दृष्टान्तोऽयम् । यतो नातिसाम्यं निदर्शनमिति[१४०] भावः । ननु वाचोमूलाविष्करणे आविष्कर्तुरुद्वर्तनादिकं कुतः । लोके वृक्षमूलाविष्कर्तुस्तददर्शनादित्यत आह– **यद्वीति** ।। असाधुकर्मेति शेषः । **तत्** तत्फलम् । वाचोऽचेतनत्वेनाकिंचित्करत्वात् **देवतासु** इत्युक्तम् । वाचि द्रोहाचरणे स द्रोहस्तद्देवताविषय एव भवति । वाग्देवते च वायुर्ब्रह्मापि चाकारदेवते इति ब्रह्मवायू एवेक्तौ । अन्यत्राप्येतन्न्यायातिदेश-

---

१३७. अकारस्य इति 'ख'पाठः १३८. ३८४-पु

१३९. ३८४-पु १४०. निदर्शन इति इति 'ख'पाठः

सूचनार्थं बहुवचनम् । 'तस्मात्काल एव दद्यात्' इति वाक्यं व्याचष्टे– **तस्मादिति** ।। नेति ब्रुवाणस्याकीर्त्यादिहेतुत्वादित्यर्थः । काल इति पात्रदेशयोरप्युपलक्षणमित्यभिप्रेत्य काल इत्यनूद्य पात्राद्यनुसारेणेति व्याख्यातम् ।।

### ओङ्कारस्य सत्यत्वे नकारस्यानृतत्वे च निमित्तकथनम्

### भाष्यम्

**अकारस्योङ्करता त्वकारलोपेनैव जातेति सत्यमोङ्कारः[१४१] । अकारस्यादौ स्थितत्वेन च यथार्थरूपत्वात् । उकारादिविकार-सहितत्वात् पुष्पफलात्मकश्च । अकारस्यार्थरूपः सन्नेव च भगवांस्त-मेवोङ्कारो[१४२] वक्ति । अतश्च सत्यमोङ्कारः[१४३] । यमर्थमकारो वक्ति तमेव वक्तीति।।**

**नकारस्त्वच्छिरस्कत्वात् मूलभूतस्याकारस्यान्ते स्थितिरूपत्वाद-यथास्थितेरसत्यरूपः । तथाप्यकारस्य नकारस्य चैकार्थत्वात् मूलभूतश्च । तस्मादकारस्यैतद्[१४४] वृथा वागादिकमपि व्याख्यानम् । तस्माद् विजानतः सर्वमपि भगवन्नामैव ।।२.३.६।।**

### भावप्रदीपः

ओमिति सत्यमित्योंकारस्य सत्यत्वमुक्तं तत्केन निमित्तेनेत्यत आह– **अकारस्येति** ।। 'स वा एष वाचो विकारः' इत्युक्त्वा 'सत्यानृते' इति सत्यशब्दोदितस्योंकारस्याकारविकारप्रभेदताकथ-नेनाकारस्यैव या ॐकारता भिप्रेता सा त्वोंकारस्याकारादि-

१४१. सत्यमेवोङ्कारः इति ह.पाठः

१४२. तमेव च ओङ्कारः इति ह.पाठः

१४३. सत्यमेवोङ्कारः इति ह.पाठः

१४४. अकारस्यैवैतत् इति ह.पाठः

वर्णत्रयात्मकत्वेनाकारस्यालोपेनैव जातेति हेतोरोंकारः सत्यमित्युच्यत इत्यर्थः । तथात्वेऽपि कुतोऽस्य सत्यत्वमित्यत आह– **यथार्थरूपत्वादिति** ।। यो मूलभूतोऽप्यकारस्तस्योंकाररूपतायामपि **यथावस्थित्वात्** यथावस्थितार्थस्यैव सत्वात्पूर्वरूपविलोपाभावेनाविलुप्तसत्यमूलकस्योंकारस्य सत्यत्वं युक्तमेवेति भावः । एतदेव यथार्थरूपत्वं प्रकारान्तरेणापि कथयति– **अकारस्येति** ।। न केवलमकरालोपेनैवोंकारता जातेति यथार्थरूपत्वं किन्तु अकारस्यादौ मुखत एव स्थितत्वेन चेति चार्थः । यद्यपीदमेव वाक्यं पूर्वं तथापि संगतिसौकर्याद्यथर्थरूपत्वादिति द्वितीयवाक्यमेव प्रथमं व्यख्यातम् । अथवाऽकारस्योंकारता त्वाकारालोपेनैव जातेति हेतोरकारस्यादावेव स्थितत्वेन च यथार्थरूपत्वात्सत्यमोंकार इत्येकवाक्यतया योज्यम् । 'तदेतत्पुण्यं फलं वाचो यत्सत्यं' इति सत्यशब्दोदितोंकारस्याकराख्यवाग्वृक्षं प्रति [१४५]पुण्यफलत्वमुच्यते । तत्केन निमित्तेनेत्यत आह– **उकारदीति** ।। उकारमकाराख्यौ यावकारविकारौ तत्सहितत्वादोंकारोऽकारवृक्षस्य पुष्पफलात्मकश्चोच्यत इत्यर्थः । एवमकारेणोंकारस्य शब्दत ऐक्यात्सत्यत्वमित्युक्त्वा इदानीमर्थतोऽप्यैक्यादोंकारः सत्य इत्युच्यत इत्याह– **अकारस्येति** ।। प्रथमश्चो हेत्वर्थः । यो भगवानकारस्यार्थरूपः सन् प्रमित एव न तु बलाद्योजितस्तमेवोंकारो वक्ति यतोऽतश्च ॐकारसत्यार्थभूतभगवत्प्रतिपादकत्वात्सत्यमुच्यत इत्यर्थः । एतदेव विशदयति– **यमर्थमिति** ।।

'नेत्यनृतं' इति नकारस्यासत्यरूपत्वमुच्यते । तत्कथमित्यतो घटयति– **नकास्त्विति** ।। **अच्छिरस्कत्वात्** अत् इति ह्रस्वाकारः ।

---

१४५. पुष्प इति 'ख'पाठः

तच्छिरस्करत्वादित्यर्थः । तस्यैव विवरणम्– **मूलभूतस्याकारस्यान्तेस्थितिरूपत्वादिति** । सर्वशब्दजातस्य मूलभूतो योऽकारस्तस्य **अन्तेस्थिति**रवस्थितिस्तद्रूपत्वात् । अकारस्य नारान्त एव श्रूयमाणत्वेनोंकारस्येवादावकारस्यास्थितेरिति यावत् । तथा च [१४६]अयथार्थस्थितेरसत्यरूपोऽनृतरूप इत्युच्यत इत्यर्थः । नकारस्याकारादयथावस्थितत्वे कथं तन्मूलत्वं नकारस्योच्यत इत्यतो मोक्तं विस्मार्षीरिति भवेनाकारार्थत्वान्नकारस्येत्युक्तां युक्तिमेवाह– **तथापीति** ।। मूलभूतश्च, अकारस्य नकार इति शेषः । एवं सत्यानृतयोरकारव्याख्यानत्वोपपादनेन सर्वासामपि वाचां तद्व्याख्यानत्वं सिद्ध्यतीत्याह– **तस्मादिति** ।। सर्वस्यापि शब्दस्यादावन्ते वाऽकारघटितत्वेनोक्तरीत्या सत्यासत्यरूपत्वादकारार्थाधिक्यादिवाचित्वाच्चेत्यर्थः । ननु भवेत्कथञ्चिदृग्गाथादीनां सार्थानामाकारव्याख्यानत्वम् । नदीतीरे पञ्चफलानि सन्तीत्याद्यलीकवाक्यानां त्वर्थशून्यत्वात्कथमकारव्याख्यानत्वमित्यत उक्तं– **वृथावागादिकपीति** ।। अलीकवाक्येष्वपि नद्यादिपदसमन्वयस्य भगवति कर्तुं शक्यत्वात्तदप्यकारव्याख्यानं भवत्येवेति भावः । अत एव ऋगादिकमिति वक्तव्ये वृथावागादिकमित्युक्तम् । प्रकरणतात्पर्यमुपसंहति– **तस्मादिति** ।। सर्वमूलभूताकारस्य भगवन्नामत्वात्सर्ववाचां तद्विकाररूपत्वादित्यर्थः ।।

ततश्चायं खण्डार्थः । तद्वा इदं बृहतीसहस्रं संपन्नमिति पूर्वोक्तस्यैव परामर्शः । एतत्प्रयोजनं च स्वयमेवाचार्यो वक्ष्यति । **तस्य वा एतस्य बृहतीसहस्रस्य संपन्नस्य** उक्तप्रकारेण बृहतीसहस्रसंपादने सतीति यावत् । अनुष्टुभामेकादशशतानि भवन्ति

---

१४६. अयथा इति 'ख'पाठः

तदुपरि पञ्चविंशतिरनुष्टुभश्च भवन्ति । तत्कथमित्यत आह– **आत्तमिति** ।। भूयसा पदार्थेन **कनीयो**ऽल्पं **स्वीकृतं** अन्तर्भावितं वै । तथा च बृहत्याः षट्त्रिंशदक्षरत्वादनुष्टुभो द्वात्रिंशदक्षरत्वाद-धिकसंख्याकाऽपि अनुष्टुभो बृहतीसहस्रेऽन्तर्भवन्ति । अतो बृहती-संपादनमेव वरमिति भावः ।

उक्तमर्थं प्रमाणसंमत्योपपादयति– **तदुक्तमिति** ।। 'वाचमष्टा-पदीमहं नवस्रक्तिमृतस्पृशम् । इन्द्रात्परितन्वं ममे' इति मन्त्रमंशतः क्रमेणोदाहृत्य स्वयमेव व्याचष्टे– **वाचमित्यादिना** ।। **अष्टौ चतुर-क्षराणि भवन्ति** अष्टचतुरक्षरात्मिका द्वात्रिंशदक्षररूपाऽनुष्टुबिति यावत् । नवस्रक्तिमित्यस्यार्थो– **बृहतीसंपाद्यमाना नवस्रक्तीति** । सैवानुष्टुबुत्तरानुष्टुभश्चतुरक्षराण्युपादाय यदा बृहतीसंपद्यमाना भवति तदा **नवस्रक्ति** नवस्रक्तिर्भवति । नव स्रक्तयो विभागाश्चतुरक्षररूपा यस्यास्सा तथोक्तेति । ऋतस्पृशमित्यस्यार्थः– **सत्यं वै वागृचा स्पृष्टेति** । **वाक्** वागाख्यानुष्टुप् उक्तरीत्या नवस्रक्तीभूय **ऋचा** ऋग्गृपेण बृहतीरूपतां प्राप्येति यावत् । **सत्यं** सत्यरूपं विष्णुं **स्पृष्टा** स्पृष्टवती । विष्णुसन्निधानविशेषपात्री वै इत्यर्थः । 'इन्द्रात्परितन्वं ममे' इत्यस्य तात्पर्यं वक्तुं पूर्वोक्तमर्थं तावद-नुवदति– **तद्यदेवेत्यादि** ।। यदैव तद्बृहतीसहस्रं तत् **अनुष्टुप्संपन्नं** उक्तरीत्या पञ्चविंशत्युत्तरैकादशशतसंख्याकानुष्टुभ्यः संपन्नं भवती-त्यर्थः । अस्तु किं ततः प्रकृत इत्यत आह– **तस्मात्तदैन्द्रादिति** ।। अत्रेदन्तावदादौ भाष्योक्तरीत्याऽनुसन्धेयम् । इदं बृहतीसहस्रं वायुप्रतिमारूपं तावत् । अत एव विष्णुप्रतिमारूपमपि । एतद-धिष्ठातुर्वायोर्विष्णुमुख्यप्रतिमात्वात् । तस्मात् बृहतीसहस्रसंपादने

विष्णुप्रतिमा निर्माता भवति । एवमनुष्टुब्देवतोमापि भगवत्प्रतिमा-रूपा । सा च बृहतीदैवतप्राणरूपवायोरुत्पन्नेति । तथा च तस्मादुमाया अपि भगवत्प्रतिमात्वात् यदा तस्यैव बृहतीसहस्रत्वेन संपन्नस्य ऋग्जातस्य पुनः पञ्चविंशत्युत्तरैकादशशतानुष्टुप्त्वेन संपादनं क्रियते तदा **बृहत्यै** बृहत्याः बृहतीदैवतप्राणरूपाद्वायोर्**वाचं** वाग्रूपां **अनुष्टुबं** अनुष्टुब्देवतामुमां उमात्मिकां **तन्वं** तनूं विष्णोरेव द्वितीय-प्रतिमां संनिर्मिमीते । एतत्सर्वं सम्यग्ध्यायन्निति शेषः । नन्वेवं ध्यातृशक्त्यैव बृहत्याः सकाशादनुष्टुप्संपादनादिकं भवति किं? नेत्याह– **ऐन्द्रात्प्राणादिति** ।। अत्रेन्द्रादित्यादौ ग्राह्यम् । तथा च **इन्द्रात्** परमेश्वराद्बृहतीस्थविष्णोर्बलादेवेत्यर्थः । तथा **ऐन्द्रात्** इन्द्रस्य परमेश्वरस्यायमैन्द्रस्तस्य नितरां प्रियस्तस्मात् **प्राणात्** प्राणदैवतात् वायोस्तद्बलाच्चेत्यर्थः । तथा चायं मन्त्रार्थ उक्तो भवति । अहं **अष्टापदीं** चतुरक्षराष्टविभागयुक्तां द्वात्रिंशदक्षरोपेतां **नवस्रक्तिं** उत्तरा-नुष्टुभस्सकाशाच्चतुरक्षराण्युपादाय चतुरक्षरकनवविभागोपेतां षट्त्रिंश-दक्षरात्मकबृहतीत्वेन संपन्नमिति यावत् । अत एव **ऋतस्पृशं** ऋतं सत्यरूपं शश्वदेकप्रकारं विष्णुं स्पृशतीति ऋतस्पृक् **तां** विष्णु-सन्निधानविशेषपात्रीं **वाचं** अनुष्टुभम् । बृहतीसहस्रत्वेन संपादित-मनुष्टुपृक्ग्गाजतमिति यावत् । पुनः पञ्चविंशत्युत्तरैकादशशता-नुष्टप्त्वेन **इन्द्रात्**परमेश्वरात्तद्बलादेवेति यावत् । तथा **ऐन्द्रात्** प्राणात् परमेश्वरातिप्रियप्राणदैवतवायुबलाच्च संपाद्य **तस्य** तस्यैव विष्णो-**स्तन्वं** प्रतिमां अहं **परिममे** निर्मितवानस्मि ।

एतच्च बृहतीसहस्रं विष्णोरेव वाचकमिति भावेन तस्य विष्ण्वे-कनामभूताकारव्याख्यानरूपत्वमाह– **स वा एष इति** ।।

यदेतन्महदुक्थं बृहतीसहस्रं **स एष वाचोऽकारस्य परमो विकारः** इतरसर्वशब्दापेक्षयोत्तमव्याख्यानमित्यर्थः । परम इति विशेषणादन्यत्सर्वं शब्दजातं विकारमात्रमित्यपि ग्राह्यम् । तदेतत्परमविकाररूपं बृहतीसहस्रं विकारमात्ररूपमन्यत्सर्वं शब्दजातं पञ्चविधम् । कथं? **मितममितं स्वरः सत्यानृते इति** । तत्र सत्यानृतयोः परस्परप्रतियोगिभावापन्नत्वेन द्वन्द्वनिर्देशः । तत्र मितादिकं विविच्य दर्शयति– **ऋगित्यादिना** ।। स्वरनियमवती वाक् **ऋक्** । स्वरनियमरहिता मिताक्षरा **गाथा** । परस्परमसमाक्षराणि खण्डवाक्यानि **कुंब्याः** स्युः[१४७] । तदेतत्त्रितयं मितम् । यज्ञाङ्गवाक्यं **यजुः** । यज्ञाऽनङ्गवाक्यं **निगदः** । अर्थसत्ताहीनं वाक्यं **वृथावाक्** । तदेत्त्रितयं मितामितम् । **साम** बृहदादि । **अथो** अनन्तरं **यः कश्च गेष्णो** यत्किञ्चित् गानं **स एषः** तदेतद्द्वयं स्वरः । ओमित्येतदक्षरं **सत्य**मित्युच्यते । मूलभूतस्याकारस्योंकारे आदवेव स्थितत्वादकारार्थस्यैवोंकारवाच्यत्वाच्च, शब्दतोऽर्थतश्च व्यत्यासाभावेन यथावस्थितरूपत्वात् । नेत्यक्षरं **अनृत**मित्युच्यते । मूलभूताकारस्य नकारान्ते स्थितत्वेन मुखतोऽवस्थित्यभावादयथावस्थितेः[१४८] । यत्सत्यमोंकारस्तदेतद्वाचोऽकारस्य **पुष्पं फलम्**, पुष्पफलात्मकम् । उकारमकाररूपविकारद्वयसहितत्वात् । तथा च वाचोकारस्य पुष्पं फलं पुष्पफलरूपं सत्यमोंकारं योऽर्थिने प्रतिषेधमकृत्वा वदति **स** पुमान् **यशस्वी** लोके प्रख्यातिमान् कल्याणकीर्तिश्च भवति । तथा **भवितोः** मुक्तो भवितुमीश्वरश्च भवति ।

---

१४७. स्युः इति 'ख'पाठे नास्ति

१४८. अयथास्थितेः इति 'ख'पाठः

अथ **यदनृतं** नेत्यक्षमेतत् **वाचः** अकरास्य **मूलं** किंचिन्मूलमिव । एकार्थत्वात् । ततश्च तन्निदर्शनं, यथा वृक्ष **आविर्मूल** आविष्कृतमूलश्चेत् **शुष्यति** शुष्को भवति **स** शुष्कभावं प्राप्तश्चेत् **वर्तते**[१४९] विनश्यति । एवमेव **अनृतं** निषेधबोधकं नकारमर्थिने वदन् तेन दोषेण स **आत्मानमेवाविर्मूलं** प्रकटितमूलं वृक्षमिव शोषोन्मुखं करोति । ततश्च स **शुष्यति** स शुष्कश्चोद्वर्तते । तस्मादनृततोक्तेरेवमनर्थहेतुत्वानृतं नेत्यक्षरमर्थिने न वदेत् । किन्तु **दयेत** तुरेवार्थः, सत्सु अर्थिषु दयामेव कुर्यात् । कुतः **एनेन** एतेनैव कारणेन दयामकृत्वाऽर्थिभ्यो नेति भाषणे शोषाद्यनर्थप्राप्तिसद्भावादित्यर्थः ।

एवमोंकारस्यावश्यवक्तव्यत्वं नकारस्यावक्तव्यत्वं चोक्त्वा इदानीमुभयोरप्यवक्तव्यत्वं वदिष्यन्नोंकारस्य तावदवक्तव्यत्वमाह– **पराग्वा इति** ।। यदेतदोमित्येतदक्षरं **पराक्** प्रतिकूलं वै । कुतः **रिक्तं** रिक्तताप्रदम् । एतदेवोपपादयति– **तद्यदिति** ।। **तद्यत्किंच** यत्किंचिद्धनादिकं स्वकीयमेकैकमर्थिभ्यः पुमान् **ओमित्याह** ददामीति यदि ब्रूयात् तर्हि तावन्मात्रेण अत्रैव तदैव तत् **अस्मै** अस्मात् **रिच्यते** अपगच्छति । वाचा दत्तत्वात्पुनस्तदुपभोगे प्रत्यवायः स्यात् । अतोऽभोगे तदपगतप्रायमेवेति भावः । स्थिते चैवं **स** पुमान् **यत्** यदि सर्वमपि स्वकीयं धनादिकमर्थिभ्य **ओंकुर्यात्** तदामीति प्रतिजानीयात् । दद्याच्चेत्यपि ग्राह्यम् । तर्हि स आत्मानं **रिच्यात्** रिक्तं कुर्यात् । ततश्च **स** पुमान् **कामेभ्यो नालं स्यात्** स्वाभिलषितपुरुषार्थप्राप्तये समर्थो न स्यात् ।

---

१४९. उद्वर्तते इति स्यादिति भाति

एवमोङ्कारस्यावक्तव्यत्वमुक्त्वा नकारस्यापि तद्वक्तुमारभते– **अथेति** ।। अथेत्यारंभार्थः । यन्नेत्यक्षरमेतत् । यद्यपि **अभ्यात्मं** पूर्णमात्मानमभि आत्मनः पूर्णत्वकारणमर्थिभ्यो यदि नेति वदेत् नैवकिंचिद्दद्याच्च तर्हि स्वकीयधनादेः स्वस्मिन्नेवावस्थानात् रिक्तताप्राप्तिर्न भवतीति यावत् । तथापि स **यत्** यदि यत्किंचदपि धनादिकमदित्सन्नर्थिभ्यः सर्वं नेति ब्रूयात्तर्हि **अस्य** नेति ब्रुवतः पापिका कीर्तिर्**जायेत** जायते । सा च पापिका कीर्तिः **एनं** पुरुषं **तत्रैव** तस्मिन्नेव जन्मनि **हन्यात्** हतप्रायं कुर्यात् । 'संभावितस्य चाकीर्तिर्मरणादतिरिच्यते'[१५०] इति वचनात् तस्मान्नेत्यपि न ब्रूयादिति भावः । नन्वेवमुभयोरप्यवक्तव्यत्वोपपादनं परस्परविरुद्धमित्यतोऽस्य तात्पर्यं व्यनक्ति– **तस्मादिति** ।। सर्वोंकरणस्थसर्वप्रतिषेधस्य चोकेतरीत्याऽनर्थहेतुत्वात् काल एव दद्यात्काले न दद्यात् । काल इत्युपलक्षणम् । पुण्यकाले पुण्यदेशे सत्पात्रेष्वेव द्रव्यं ज्ञानं वा फलमनभिसन्धाय श्रीविष्णुप्रीत्यर्थं दद्यात् । अपुण्यकालदेशयोरपात्रेषु च फलाभिसन्ध्यादिना न दद्यादित्यर्थः । तथा चोभयोरपि व्यवस्थयैव वक्तव्यत्वमवक्तव्यत्वं चेति भावः । एवं व्यवस्थया सत्यानृतसमाहारकर्तुः फलमाह– **तदिति** ।। यद्येवं सत्यानृते पात्राद्यनुसारेण **मिथुनीकरोति** मेलयति **तत्** तर्हि तयोर्मिथुनादोंकारनकारयोर्मिथुनीकरणात्**प्रजायते** प्रजनयति सत्पुत्रादिप्रजावान् भवति । भूयान् ज्ञानादिगुणैरुत्कृष्टश्च भवतीत्यर्थः ।

'स वा एष वाचः परमो विकारः' इत्युक्तफलं प्रमेयमुपसंहरन् तज्ज्ञानस्यावश्यकत्वमभिप्रेत्य तद्वेत्तारं प्रशंसति– **यो वै तामिति** ।। यस्या वाच एष सर्वोऽपि मितामितादि **विकारो** व्याख्यानरूपस्**तां**

---

१५०. भ.गी. २-३४

वाचमकाराख्यामुक्तरीत्या यो वेद स **संप्रतिवित्** सम्यक्ज्ञानी वै इत्यर्थः । अत्र वाक्शब्देनाकार एव विवक्षितः । एष विकार इत्येतच्छब्देन च सर्वापि वाग्विवक्षितेति भावेनाह– **अकारो वा इति ।। सर्वापि वाक्** मितामितादिपञ्चरूपाकारो **वै** अकारस्यैव विकाररूपेत्यर्थः । तदेवोपपादयति– **सैषेति ।। सैषा** अकारात्मिका वाक् । स्पर्शोष्मभिरित्युपलक्षणम् । ककारादिभिस्सर्वैर्व्यंजनाक्षरैर्व्यज्यमाना **बह्वी** बहुत्वसंख्योपेता नानारूपा विलक्षणरूपा च भवतीत्यर्थः । अथवा स्पर्शोष्मभिर्व्यज्यमाना, 'अज हरणे' इति धातोर्विहरमाणा संगतेति यावत् । **बह्वी** बहुपदरूपा **नानारूपा** नानाविधार्थनिरूपिका भवतीत्यर्थः । अथ अस्यैवाकरस्य जपादिषु फलतारतम्यमप्यस्तीति सूचनायावस्थाभेदेनाभिमानिभेदमाह– **तस्यै यदिति ।। तस्यैतस्या वाचो**ऽकाराख्याया **यदुपांशु** उच्चारणं उपांशूच्चारितोंकार इति यावत् । **स प्राणः** तदभिमानी वायुः । अथ तस्या यदुच्चैरुच्चारणामिति शेषः । उच्चैरुच्चारितोंकार इति यावत् । **तच्छरीरं** स्थूलसूक्ष्मभेदेन द्विविधस्य सर्वप्राणिशरीरस्याभिमानिनी या भारती सा तदभिमानिनीत्यर्थः । उभयत्रापि क्रमेण युक्तिमाह– **तस्मादिति ।।** प्राणाभिमन्यमानत्वादेव **तत्** उपांशूच्चारितमवर्णं **तिर इव** तिरो भूतमिव वर्तते । तदपि कुतः **तिर इव ह्यशरीरं** यदशरीरं वस्तु तत्तिर इव हि अप्रत्यक्षमिव हि, प्रकृते चाभिमानी प्राणोऽशरीरो हि शरीराभिमानशून्यत्वात् । यथोक्तं–

'ब्रह्मा निरभिमानित्वाच्छरीर्यप्यशरीरवान्'[१५१] इत्यादि ।

ततोऽशरीरप्राणाभिमन्यमानत्वादुपांशोरकारस्य तिरोभूतवत्स्थिति-

१५१. भाग.ता. ११-७-१७

र्युक्तेति भावः । अथ यदुच्चैरुच्चारितमवर्णं **तच्छरीरं** शरीराभिमानि-भारतीदैवत्यम् । तस्मादेव हेतोः **तत्** उच्चैरुच्चारितमवर्णं **आविः** आविर्भूतं श्रावणप्रत्यक्षगोचरं भवति । शरीराभिमानिभारतीदेवताकत्वेऽपि कुतेऽस्याविर्भूतत्वमित्यत्राह– **आविर्हि शरीरमिति** ।। तथा चोच्चापेक्षयोपांशोरकारस्य प्राणाभिमन्यमानस्य जपादिषु फलाधिक्यमिति भावः ।।२.३.६।।

भगवानेव मुख्यतः इन्द्रशब्दवाच्यः

**उपनिषत्**

**तद्वा इदं बृहतीसहस्रं सम्पन्नं तद्यशः । स इन्द्रः स भूतानामधिपतिः । स य एवमेतमिन्द्रं भूतानामधिपतिं वेद विस्रसा हैवास्माल्लोकात् प्रैतीति ह स्माह महिदास ऐतरेयः ।**

**भाष्यम्**

विद्यान्तरोपदेशार्थं 'तद्वा इदं बृहतीसहस्रं' इति पुनः पुनः परामर्शः । तदिदं बृहतीसहस्रं तद्यशस्तस्य नारायणस्य यशः । यस्य नारायणस्यैतद्यशः स भगवानेवेन्द्रनामा । स हि यत्प्रथमत[१५२] इन्द्रो बभूव स्वेच्छया यज्ञनामा । तस्मात् तमेव वेदा इन्द्रशब्देन वदन्ति मुख्यतः । 'इदि परमैश्वर्ये' इति धातोश्च तस्यैव हि परमैश्वर्यम् । अन्येषां तु द्वादशानां तेन दत्तमेवेन्द्रत्वं न तु[१५३] मुख्यतः ।।

---

१५२. प्रथमतः इति ह.पाठः

१५३. तु इति पदं ह.पाठे नास्ति

### भावप्रदीपः

'तद्वा इदं बृहतीसहस्रं संपन्नं' इत्युत्तरखण्डं व्याकरिष्यन्नत्र पूर्वखण्डेषु च 'तद्वा इदं' इत्यादि पुनः पुनः कथनस्य प्रयोजनं तावदाह– **विद्यान्तरेति** ।। तत्र 'तदिदं बृहतीसहस्रं' इत्येतावदनुर्त्य 'तद्यशः' इत्येतद्वाक्यं व्याचष्टे– **तदिदमिति** ।। 'स इन्द्रः' इत्येतद्विवृणोति– **यस्येति** ।। **एतत्** बृहतीसहस्रं । तस्येन्द्रत्वमुपपादयति– **स हीति** ।। हिशब्दो भागवतादिप्रसिद्धिद्योतकः । सर्वेश्वरस्येन्द्रपदप्राप्तिरत्यल्पा कथं युज्यत इत्यत उक्तम्– **स्वेच्छयेति** ।। पुरन्दरादीनामपीन्द्रत्वेन वेदेषु गीयमानत्वादत्रेन्द्रनामापि तेष्वन्यतम एव किं न स्यात्, भगवानेव कुतोऽवधार्यत इत्यत आह– **तस्मादिति** ।। भगवतः प्रथमेन्द्रत्वादित्यर्थः । अन्येषामप्यमुख्यतः प्रतिपाद्यत्वमविरोधेन निषिध्यत इति भावेनोक्तम्– **मुख्यत इति** । भगवत एवेन्द्रनामत्वे युक्त्यन्तरं चाह– **इदीति** ।। एतच्चेन्द्रशब्दप्रवृत्तिनिमित्तं परमैश्वर्यं भगवत इवान्येषामप्यस्ति चेत्पुनः स एवेन्द्रनामेत्यवधारणानुपपत्तिरिति तत्राह– **तस्यैवेति** ।। कुतस्तस्यैवेत्युच्यत इत्यत आह– **अन्येषामिति** ।।

#### श्रुतिष्वपि इन्द्रत्वेन श्रुतो विष्णुरेव

### भाष्यम्

**अतो विष्णावेवेन्द्रशब्दं प्रयुङ्क्ते श्रुतिः–**

**'मत्सि[१५४] सोमं वरुणं मत्सि मित्रं मत्सीन्द्रिमिन्दो पवमान विष्णुम्'[१५५] इति ।**

---

१५४. मध्सि इति ह.पाठः १५५. ऋक्.सं. ९-१०-५

**न चेन्द्रं विष्णुं चेति पृथगन्वयः क्रियते । तदा वरुणादिषु पृथक् पृथक् [१५६]मत्सिशब्ददर्शनादत्रापि पृथङ् [१५७]मत्सिशब्दो दृश्येत । न हि सर्वेषां पृथङ्मत्सिशब्ददर्शने एकस्यैवान्यथात्वं युज्यते । न चात्र द्वित्वगमकं चकारादिकं विद्यते । तस्मात् 'प्रातर्भगं पूषणं ब्रह्मणस्पतिं' इत्याद्यप्येकस्यैव विष्णोर्विशेषणम् ।।**

**भावप्रदीपः**

अत्रोपष्टंभकत्वेन श्रुतिं प्रमाणयति– **अत इति** ।। अन्येषां मुख्येन्द्रत्वाभावादेव विष्णुमिति विशेष्यमभिधाय तस्मिन्नेव विशेषणतया इन्द्रमितीन्द्रशब्दं श्रुतिः प्रयुंक्त इत्यर्थः । हे सोम त्वं वरुणं **मत्सि** मदं हर्षं प्रापयसि । तथा मित्रं मत्सि इष्टदानात् **इन्दो** हे **पवमान** पवित्र सोमं **इन्द्र**मिन्द्रनामानं विष्णुं च मत्सीति श्रुत्यर्थः ।

नन्वत्रापि इन्द्रमिति विष्णुविशेषणं कुतः? इन्द्रं विष्णुं चेति पृथुगेवान्वयः किं न स्यात् । तथा च विष्णोरिन्द्रशब्दवाच्यत्वे नेयं श्रुतिः निरवकाशेत्यत आह– **न चेति** ।। पृथगन्वयः क्रियत इति न च वाच्यमित्यर्थः । कुत इत्यतः पृथुगन्वयपक्षे बाधकाह– **तदेति** ।। **अत्रापि** विष्णावपि । मत्सिशब्दस्यानुषङ्गः किं न स्यादित्यत आह– **न हीति** ।। **सर्वेषां** वरुणादिपदानां **एकस्यैव** विष्णुपदस्यैव **अन्यथात्वं** अनुषक्तमत्सिपदान्वयित्वम् । [१५८]'नारायणं नमस्कृत्य नरं चैव' इत्यादौ पृथक् क्रियायोगाभावेऽपि क्रियानुषङ्गदर्शनादत्रापि तथा किं न स्यादित्यत आह– **न चात्रेति** ।। **अत्र** श्रुताविन्द्र-

---

१५६. मथ्सि इति ह.पाठः    १५७. मथ्सि इति ह.पाठः

१५८. मह.आदि. १-१

## भावप्रदीपः

'तद्वा इदं बृहतीसहस्रं संपन्नं' इत्युत्तरखण्डं व्याकरिष्यन्नत्र पूर्वखण्डेषु च 'तद्वा इदं' इत्यादि पुनः पुनः कथनस्य प्रयोजनं तावदाह– **विद्यान्तरेत्ति** ।। तत्र 'तदिदं बृहतीसहस्रं' इत्येतावदनुर्त्य 'तद्यशः' इत्येतद्वाक्यं व्याचष्टे– **तदिदमिति** ।। 'स इन्द्रः' इत्येतद्विवृणोति– **यस्येति** ।। **एतत्** बृहतीसहस्रं । तस्येन्द्रत्वमुपपादयति– **स हीति** ।। हिशब्दो भागवतादिप्रसिद्धिद्योतकः । सर्वेश्वरस्येन्द्रपदप्राप्तिरत्यल्पा कथं युज्यत इत्यत उक्तम्– **स्वेच्छयेति** ।। पुरन्दरादीनामपीन्द्रत्वेन वेदेषु गीयमानत्वादत्रेन्द्रनामापि तेष्वन्यतम एव किं न स्यात्, भगवानेव कुतोऽवधार्यत इत्यत आह– **तस्मादिति** ।। भगवतः प्रथमेन्द्रत्वादित्यर्थः । अन्येषामप्यमुख्यतः प्रतिपाद्यत्वमविरोधेन निषिध्यत इति भावेनोक्तम्– **मुख्यत इति** । भगवत एवेन्द्रनामत्वे युक्त्यन्तरं चाह– **इदीति** ।। एतच्चेन्द्रशब्दप्रवृत्तिनिमित्तं परमैश्वर्यं भगवत इवान्येषामप्यस्ति चेत्पुनः स एवेन्द्रनामेत्यवधारणानुपपत्तिरिति तत्राह– **तस्यैवेति** ।। कुतस्तस्यैवेत्युच्यत इत्यत आह– **अन्येषामिति** ।।

### श्रुतिष्वपि इन्द्रत्वेन श्रुतो विष्णुरेव

## भाष्यम्

**अतो विष्णावेवेन्द्रशब्दं प्रयुङ्क्ते श्रुतिः–**

**'मत्सि[१५४] सोमं वरुणं मत्सि मित्रं मत्सीन्द्रिमिन्दो पवमान विष्णुम्'[१५५]** इति ।

१५४. मथ्सि इति ह्.पाठः        १५५. ऋक्.सं. ९-१०-५

**न चेन्द्रं विष्णुं चेति पृथगन्वयः क्रियते । तदा वरुणादिषु पृथक् पृथक् [१५६]मत्सिशब्ददर्शनादत्रापि पृथङ् [१५७]मत्सिशब्दो दृश्येत । न हि सर्वेषां पृथङ्मत्सिशब्ददर्शने एकस्यैवान्यथात्वं युज्यते । न चात्र द्वित्वगमकं चकारादिकं विद्यते । तस्मात् 'प्रातर्भगं पूषणं ब्रह्मणस्पतिं' इत्याद्यप्येकस्यैव विष्णोर्विशेषणम् ।।**

**भावप्रदीपः**

अत्रोपष्टंभकत्वेन श्रुतिं प्रमाणयति– **अत इति** ।। अन्येषां मुख्येन्द्रत्वाभावादेव विष्णुमिति विशेष्यमभिधाय तस्मिन्नेव विशेषणतया इन्द्रमितीन्द्रशब्दं श्रुतिः प्रयुंक्त इत्यर्थः । हे सोम त्वं वरुणं **मत्सि** मदं हर्षं प्रापयसि । तथा मित्रं मत्सि इष्टदानात् **इन्दो** हे **पवमान** पवित्र सोमं **इन्द्र**मिन्द्रनामानं विष्णुं च मत्सीति श्रुत्यर्थः ।

नन्वत्रापि इन्द्रमिति विष्णुविशेषणं कुतः? इन्द्रं विष्णुं चेति पृथुगेवान्वयः किं न स्यात् । तथा च विष्णोरिन्द्रशब्दवाच्यत्वे नेयं श्रुतिः निरवकाशेत्यत आह– **न चेति** ।। पृथगन्वयः क्रियत इति न च वाच्यमित्यर्थः । कुत इत्यतः पृथुगन्वयपक्षे बाधकाह– **तदेति** ।। **अत्रापि** विष्णावपि । मत्सिशब्दस्यानुषङ्गः किं न स्यादित्यत आह– **न हीति** ।। **सर्वेषां** वरुणादिपदानां **एकस्यैव** विष्णुपदस्यैव **अन्यथात्वं** अनुषक्तमत्सिपदान्वयित्वम् । [१५८]'नारायणं नमस्कृत्य नरं चैव' इत्यादौ पृथक् क्रियायोगाभावेऽपि क्रियानुषङ्गदर्शनादत्रापि तथा किं न स्यादित्यत आह– **न चात्रेति** ।। **अत्र** श्रुताविन्द्र-

---

१५६. मथ्सि इति ह.पाठः    १५७. मथ्सि इति ह.पाठः

१५८. मह.आदि. १-१

विष्ण्वोर्द्वित्वगमकं इन्द्रं विष्णुं चेति चकारो वाऽऽदिपदेन तथादिपदं वा न विद्यते । तत्कल्पने चाश्रुतकल्पनं प्रसज्येतेति भावः । नन्वेवं तर्हि 'प्रातर्भगं पूषणं ब्रह्मणस्पतिं' इत्युत्तरवाक्ये भगादिषु पृथक् मत्सिशब्ददर्शनाच्च शब्दाद्यभावाच्च इन्द्रशब्दवद्भगादिशब्दानामपि विष्णु-विशेषणत्वापत्तिरित्यतो नेदमनिष्टमित्याह– **तस्मादिति** ।। अनेकत्व-गमकचकारादेरभावादित्यर्थः । ऐश्वर्यादिरूपत्वाद्भगं पोषणात्पुष्टत्वाद्वा **पूषणं ब्रह्मणश्च**तुर्मुखस्य पतिं विष्णुं मत्सीति वाक्यशेषार्थः । प्रातरित्यस्य मत्सीत्यनेन सर्वत्र संबन्धः ।।

## मुख्यतः विष्णोरेव इन्द्रशब्दवाच्यत्वं अन्येषां तु उपचारतः

### भाष्यम्

**यत्र चैवं भूतेष्वेकत्वे विरोधो दृश्यते तत्र तेनैव विरोधेन द्वित्वं भवति । अन्यथैकत्वमेव । 'यो देवानां नामधा एक एव'[१५९] इति चोक्तम् । बहुरूपत्वाद् बहुवचनं च [१६०]विष्णोरेव युज्यते । तस्मान्मुख्यतो विष्णावेवेन्द्रादिशब्दा अन्येषामुपचारतः । 'मत्सि महामिन्द्रमिन्दो मदाय' इत्यन्येन्द्रस्य पृथगुक्तेश्च, 'मत्सीन्द्रमिन्दो पवमान' इति पूर्वोक्त इन्द्रो विष्णुरेवेति सिद्धम् ।।**

### भावप्रदीपः

ननु चशब्दादौ सत्येव भेदोऽवगन्तव्योऽन्यथैकत्वमेवेति न नियमः । 'इहेन्द्राणीमुपह्वये वरुणानीं स्वस्तये अग्नायीं सोमपीतये' इत्यादौ चशब्दाद्यभावेऽप्यनेकत्वदर्शनादिति तत्राह– **यत्र चेति** ।। एवंभूतेषु

---

१५९. ऋक्.सं. १०-८२-३ १६०. विष्णावेव इति ह.पाठः

चशब्दादिरहितपदवाच्ये इन्द्राण्यादिष्वेकत्वे एकस्या बहुभार्यात्वादि-विरोधो दृश्यते । तत्र तेषु तेनैव विरोधेन, द्वित्वमित्युपलक्षणम् । अनेकत्वं भवति । **अन्यथा** विरोधाभावे । एकत्वमेव, यथा प्रकृत इत्यर्थः । किंच इन्द्रादिसर्वनामवत्वं विष्णोः प्राक् समर्थितमेव । अतोऽत्रेंद्रशब्दे का नाम विप्रतिपत्तिरिति भावेनाह– **यो देवानामिति** ।। ननु विष्णोः सर्वदेवनामधारकत्वेनेन्द्रशब्दवाच्यत्वाङ्गीकारे 'इन्द्रवायू इमे सुताः'[१६१] इत्यादौ द्विवचनान्तपदवाच्यत्वं मरुतो वीलुपाणिभि-रित्यादौ बहुवचनान्तपदवाच्यत्वं च कथमेकस्य युज्यत इत्यत आह– **बहुरूपत्वादिति** ।। अनेकरूपत्वोपलक्षणमेतत् । द्विवचनं चशब्दात् बहुवचनं च विष्णोरेकस्यैव युज्यत इत्यर्थः । उपसंहति– **तस्मादिति** । साधकसद्भावात् बाधकाभावाच्चेत्यर्थः । **उपचारतः** अमुख्यतः । अपि च वाक्यशेषे 'मत्सि महमिन्द्रं' इति प्रसिद्धेन्द्रः पृथुगुपात्तः । अतो 'मत्सीन्द्रं' इति पूर्ववाक्योक्त इन्द्रो विष्णुरेवेति सिद्ध्यतीत्याह– **मत्सि महामिति** ।। हे **इन्दो** सोम **महां** महान्तं **इन्द्रं** पुरंदराख्यं **मदाय** अस्मद्धर्षार्थं मत्सीति वाक्यशेषार्थः ।।

## पुरन्दरे महत्वं नास्ति

### भाष्यम्

**महत्त्वं च तस्यादितिपुत्रत्वेऽग्रजत्वमात्रं न तु सामर्थ्यतः । 'मह पूजायां' इति धातोः । पूज्यो ह्यग्रजो भवति ।**

### भावप्रदीपः

नन्विदमेकं सन्धित्सतोऽन्यच्च्यवत इत्यापन्नम् ।

---

१६१. ऋक्.भा. १-२-४

विष्णोरिन्द्रशब्दवाच्यतासाधनार्थं यततां विष्ण्वपेक्षया पुरन्दरस्यैवाधिक्यं प्रसक्तम् । यतः श्रुतौ विष्णोरिन्द्रत्वमात्रं अन्येन्द्रस्य महामिति विशेषणान्महेन्द्रत्वमुच्यत इत्यत आह– **महत्वं चेति** ।। अग्रजत्वेऽपि कथं महत्वमित्यतः तदुपपादयति– **मह पूजायामिति** ।। गुणाधिकेनाप्यवरजेनाग्रजस्य पूज्यत्वं लोकप्रसुद्धमिति हिशब्दः ।।

**अवताराग्रजत्वमेव महेन्द्रस्य महत्वम्**

**भाष्यम्**

**'आयो विवाय सचथाय दैव्य इन्द्राय विष्णुः सुकृते सुकृत्तरः ।
वेधा अजिन्वत् त्रिषधस्थ आर्यमृतस्य भागे यजमानमाभजत्'[१६२] ।।**

**इतीन्द्रस्य [१६३]परमदैवं जनको यज्ञभागादिप्रदाता विष्णुरेव हि श्रूयते । इन्द्रश्च यजमानः । तस्मात् तत्प्रसादादवताराग्रजत्वमेव तस्य महत्वम् ।।**

**भावप्रदीपः**

सामर्थ्यत एव महत्वमन्येन्द्रस्य किं न स्यादित्यत आह– **आय इति** ।। इन्द्रस्येत्यनेन इन्द्रायेत्यादिचतुर्थी षष्ट्यर्थेत्युक्तं भवति । परमं दैवमिति दैव्यशब्दार्थः । अजिन्वदित्यस्य– **जनक** इति । यद्यप्यं गतिकर्मसु पठितस्तथापि धातूनामनेकार्थत्वादत्र जन्यार्थः । अथवा वेधा इत्यस्य जनका इति व्याख्यानम् । विधत्त इति वेधा इति । 'ऋतस्य भागे आभाजदि'त्यस्यार्थो- **यज्ञभागप्रदातेति** । आदिपदेन सचथायेत्युक्तसुखसङ्ग्रहः । तथाचायं मन्त्रार्थः– **सुकृत्तरः** सुष्टु कुर्वतां मध्ये श्रेष्ठः **वेधा** विधारकः **त्रिषधस्थः**

---

१६२. ऋक्.सं. १-५६-५ . १६३. परमं दैवं इति ह.पाठः

स्वेतद्वीपादित्रिस्थानगतो यो विष्णुः **सुकृते** सुष्टु पूजादिकारिणे **इन्द्राय** इन्द्रस्य पुरन्दरस्य **दैव्यः** परमं दैवं, यश्च तस्येन्द्रस्य **सचथाय** सुखाय **आविवाय** तं संवृतवान् । यश्च **आर्यं** अग्रजत्वेन पूज्यं तमिन्द्रं **अजिन्वत्** जनयामास । अथवा इन्द्रस्य **वेधा** विधाता जनकस्तस्य **सचथाय** षच सेचने अभीष्टवर्षणाय **अजिन्वत्** जगाम । त्रीलोकीमाहर्तुं बलेरध्वरमिति शेषः । **यजमानं** महाव्रतेन यष्टारं **तं** इन्द्रं **ऋतस्य** यज्ञस्य **भागे** भागं **आभजत्** भाजयामास यज्ञभाग-भोक्तारमकरोदिति । तथा चाग्रजत्वमेव महत्वं अन्येन्द्रस्य न तु सामर्थ्यत इति भावः । नन्वत्र किञ्चिद्यजमानं प्रति यज्ञभाग-प्रदातृत्वमुच्यते । सामान्यशब्दश्रवणात् । तत्कथमिन्द्रस्य यज्ञभागादि-प्रदातेत्युच्यत इत्यत आह– **इन्द्रश्चेति** ।। पूर्वार्धे 'इन्द्राये'ति तस्यैव प्रकृतत्वात्सुकृत इति सुष्टु पूजादिकारित्वेन तस्यैव विशेषणाच्च प्रकृत इन्द्र एव यजमानो नान्य इत्यर्थः । उपसंहरति– **तस्मादिति** ।। इन्द्रापेक्षया विष्णोरेव गुणतो महत्त्वादित्यर्थः । ननु 'तत्र पूर्वतनः श्रेयान् गुणैः सर्वैः समस्तशः'[१६४] इत्यन्यत्रोक्तत्वादग्रजत्वमपि गुणतो महत्वे प्रयोजकमेवेत्यत उक्तम्– **तत्प्रसादादिति अवतारेति च** ।। प्रसन्नो हि भगवान् बलितः साम्राज्यमाहृत्येन्द्राय दातुं वामनरूपेणा-दितितोऽवततारेति भागवतादौ सुप्रसिद्धम् ।।

### इन्द्रस्य वायोरवमत्वकथनम्

#### भाष्यम्

**अन्येन्द्रो हि 'अहं प्रथमः पिबेयमहं प्रथमः पिबेयं' इति वायुना**

---

१६४. अनु.२-३-१०१

**विवदमान आजौ पराजितो वायुं प्रसादयित्वा चतुर्थे वायुना सह ग्रहमाप[१६५]। विष्णुस्तु 'क्रतुं सचन्त मारुतस्य वेधसे' इति वायोरपि विधाता श्रूयते। 'डु[१६६] धाञ् धारणपोषणयो'रिति धातोर्विशेषेण धारणपोषणकर्ता हि वेधाः। तस्माद् भगवत एवैतद्यशो बृहदुक्थादिकम्॥**

**भावप्रदीपः**

अन्येन्द्रस्य विष्णुतोऽतीवावमत्वे युक्त्यन्तरमाह– **अन्येन्द्र इति**॥ **प्रथमतः** प्रथमं, पिबेयं सोममिति शेषः। पराजितः त्रिवारमिति शेषः। चतुर्थे वारे **ग्रहं** गृण्हाति सोममिति ग्रहः सोमपात्रं तमवाप। तथा च श्रुतिः, उक्तं च श्रीमन्मध्वविजये– 'वायुना त्रिरपि पूर्वपायिना सर्वदैवतजिता तरस्विना'[१६७] इति। तथा च इन्द्रस्य वाय्वधमत्वं तावत्सिद्धम्। विष्णुस्तु 'तमस्य राजा वरुणस्तमश्विना क्रतुं सचन्त मारुतस्य वेधसे'[१६८] इति श्रुतौ वायोरपि विधाता श्रूयते। अतो विष्ण्वधमवाय्वधमस्येन्द्रस्य विष्ण्वधमत्वं कैमुत्यसिद्धमिति भावः। **अस्य** स्थावरजगतो राजा वरुणः। **अश्विना** अश्विनौ च **मारुतस्य** वायोर्**वेधसो** वेधसं विधातारं **तं** प्रसिद्धं पुनस्तं पूर्वप्रकृतं व्याप्तं वा। तनोतेर्डः, विष्णुं प्रति, **क्रतुं** यज्ञं **सचन्त** अयोजयन्नकुर्वन्निति श्रुत्यर्थः। कथं वेधःशब्दस्य विधातेत्यर्थ इत्यत आह– **डु धाञिति**॥ विशेषेण धत्त इति विधाः स एव वेधाः। विपूर्वाद्धधातोरसुन्। उपसंहरति– **तस्मादिति**॥ इन्द्रादिसर्वशब्दमुख्यवाच्यत्वादित्यर्थः। **बृहदुक्थं** बृहतीसहस्रम्। आदिपदेन सर्वमितरशब्दजातं परमविकारेण

१६५. ग्रहत्वमाप इति ह.पाठः १६६. डु इति पदं ह.पाठे नास्ति

१६७. सुम.वि. १६८. बृ.भ.उ.व. ५-९-१७ (४९४-पु)

सह विकारमात्रस्यापि प्रस्तुतत्वादिति प्रागुक्तत्वात् । अत एवोपक्रमेऽपि तदिदं बृहतीसहस्रमित्युपलक्षणाभिप्रायं ॥

पुरुन्दरस्य महत्त्वे कारणनिरूपणम्

**भाष्यम्**

**ऋक्सहस्रात्मकं[१६९] विष्णोर्यश इन्द्राभिधस्य हि ।**
**इन्द्रो हि प्रथमो विष्णुर्यज्ञनामा जगत्पतिः ॥**

**तत्प्रसादादथेन्द्रत्वं द्वादशान्ये प्रपेदिरे ।**
**पुरन्दरस्त्वेक एव वासुदेवप्रसादतः ॥**

**द्विवारमिन्द्रतामाप तस्मात् द्वादश ते परे ।**
**अग्रजत्वाददित्यां तु महेन्द्रो नाम चाभवत् ॥**

**महाव्रतं कर्म कृत्वा चैव नाम्ना महेन्द्रकः ।**
**महत्त्वं मुख्यतो विष्णोर्न ह्यन्यस्य कदाचन ॥**

**एवं यो वेद तं विष्णुं विस्रस्तो बन्धतोऽखिलात् ।**
**अस्माल्लोकाद्धरेर्लोकमेति नास्त्यत्र संशयः ।**

**इत्याह भगवान् विष्णुर्महिदासस्वरूपकः ॥**

**भावप्रदीपः**

उक्तार्थे प्रमाणमाह– **ऋक् सहस्रात्मकमिति** ॥ यज्ञनामा विष्णुर्हि प्रथम इन्द्र इत्यन्वयः । **अन्ये** वाय्वादयः । नन्विन्द्राणां चतुर्दशत्वादन्ये त्रयोदशेति वक्तव्ये कथं द्वादशेत्युक्तमित्यत आह–

---

१६९. सहस्रादिकं इति ह.पाठः

**पुरन्दर इति** ।। अस्त्वेवमिन्द्रत्वं पुरन्दरस्य । महामिन्द्रमित्यादिश्रुतौ महेन्द्रत्वं तु कथमित्यत आह– **अग्रजत्वादिति** ।। वामनापेक्षयेति शेषः । महेन्द्रश्चाभवन्नामेत्यन्वयः । महेन्द्र इति च नामास्याभवदिति वा । प्रकारान्तरेणापि महेन्द्रनाम तस्मिन् घटयति– **महाव्रतमिति** ।।

कुतोऽस्याग्रजत्वादिरूपत्वमेव महत्वं गुणतोऽपि किं न स्यादित्यत आह– **महत्वमिति** ।। एतेन 'स भूतानामधिपतिः' इत्यप्युक्तार्थम् । 'स य एव एतमिन्द्रं भूतानामधिपतिं वेद' इत्यादि वाक्यं प्रमाणशेषेण व्याचष्टे– **एवमिति** ।। प्रैतीत्यस्यार्थो– **हरेर्लोकमिति** । हरिलोकगमनमेव हि प्रकृष्टं नान्यदिति । एवशब्दार्थो– **नास्त्यत्र संशय इति** ।।

**भगवद्रतिः कीदृशीति प्रश्नः**

**उपनिषत्**

**प्रेत्येन्द्रो भूत्वैषु लोकेषु राजति । तदाहुः– 'यदनेन रूपेणामुं लोकमभिसम्भवती३, अथ केन रूपेणेमं लोकमाभवती३' ।**

**स्त्रीरूपे भगवति भगवद्रतिः**

**भाष्यम्**

**श्वेतद्वीपादिकात्**[१७०] **प्राप्य स इन्द्राख्यो हरिः स्वयम् ।**
**महिदासाभिधो भूत्वा लोकेष्वेषु विराजति ।।**

**तत्र पृच्छन्ति केचित्तु यद्येष भगवान् हरिः ।**
**महिदासादिरूपेण भूमिष्ठो रमते प्रभुः ।।**

---

१७०. द्वीपादिकान् इति ह.पाठः

**तदा यदा स्त्रिया विष्णू रमते नित्यसत्सुखः ।**
**कया स्त्रिया रतिं कुर्यान्न ह्यन्यरतिरच्युतः ।।**

**स्त्रीरूपे तत्स्वयं स्वस्मिन् रमतेऽसावितीदृशम् ।**
**वाच्यं तत्र च भूमिष्ठरूपेण तु दिवि स्थितम् ।।**

**स्त्रीरूपं किमसौ गच्छेदथ यद्येवमत्र च ।**
**स्त्रीरूपं पृथिवीसंस्थं केन रूपेण संव्रजेत् ।**
**न ह्यन्यगम्यो भगवान् स्त्रीरूपोऽपि जनार्दनः ।।**

**भावप्रदीपः**

'प्रेत्येन्द्रो भूत्वैषु लोकेषु राजति' इति व्याचष्टे– **श्वेतद्वीपादिकादिति** ।। एतेन **इन्द्रो** इन्द्रनामा महिदासो[१७१] हरिः **प्रेत्य** श्वेतद्वीपादिस्थानत इमान् लोकान्प्राप्यात्र **भूत्वा** प्रादुर्भूय मनुष्यदृष्टिगोचरतां प्राप्यैषु लोकेषु विराजतीति व्याख्यातं भवति । 'तदाहु'रित्यादि व्याचष्टे– **तत्र पृच्छन्तीति** ।। यद्येष **प्रभुः** भगवान् हरिः महिदासादिरूपेण भूमिष्ठः सन् रमते **तदा** तर्हि **सा** रतिः स्त्रियैवेति वक्तव्यम् । रतिषु स्त्रीरतेरेव मुख्यत्वात् । यदा च विष्णुः स्त्रिया रमते इत्यङ्गीक्रियते तदा कया स्त्रिया[१७२] रतिं कुर्यादिति वाच्यम् । न च यया कयाचन स्त्रयेति वक्तुं शक्यम् । कुतः **हि** यतोऽच्युतोऽ**न्यरतिः** अन्यस्मात्प्राप्यरतिर्न । तदपि कुतः । यतो **नित्यसत्सुखो** नित्यपूर्णानन्दः **तत्** तस्मात्स्त्रिरुपे स्वस्मिन्नेव स्वयं

---

१७१. महिदासः इति पदं 'ख'पाठे अधिकः

१७२. स्त्रिया इति पदं 'क'पाठे नास्ति

**असौ** विष्णू रमत इति ईदृशमुत्तरं वाच्यम् । **तत्र च** तथात्वे च किमसौ **भूमिष्ठेन** महिदासादिपुरुषरुपेण दिविस्थितं स्वकीयमेव स्त्रीरुपं **गच्छेत्** उपभुञ्जात् इति प्रष्टव्यम् । यद्येवमङ्गीक्रियते तर्हि पुनरत्र **च** अत्रापि प्रष्टव्यम् । पृथिवीसंस्थं स्त्रीरुपं केन रूपेण **संव्रजेत्** उपभुंज्यादिति । न च दिविस्थितस्त्रीरूपस्य स्वपुरुषरूपगम्यत्वेऽपि पृथिवीस्थं स्त्रीरूपमन्यगम्यं किं न स्यादिति वाच्यम् । यतो जनार्दनः स्त्रीरूपोऽप्यन्यपुरुषगम्यो न हि । अतः केन स्वीयेनैव पुरुषरूपेण संव्रजेदिति केचित्पृच्छन्तीति पूर्वेणान्वयः । एतेन 'यदनेन रूपेण अथ केन रूपेण' इति प्रश्नवाक्यद्वयं व्याख्यातं भवति ॥

भगवतः स्वरमणत्वमिति उत्तरकथनम्

**उपनिषत्**

**तद्यदेतत् स्त्रियां लोहितं भवति, अग्नेस्तद्रूपम् । तस्मात् तस्मान्न बीभत्सेत । अथ यदेतत्पुरुषे रेतो भवति, आदित्यस्य तद्रूपम् । तस्मात् तस्मान्न बीभत्सेत ।**

**सोऽयमात्मेममात्मानममुष्मा आत्मने सम्प्रयच्छति । असावात्माऽमुमात्मानमस्मा आत्मने सम्प्रयच्छति । तावन्योन्यमभिसम्भवतः । अनेनाह रूपेणामुं लोकमभिसम्भवति, अमुना रूपेणेमं लोकमा भवति ।**

रेतसो रक्ताच्च जुगुप्सा न कार्या

**भाष्यम्**

इति पृष्टः स्वशिष्यैः स महिदासोऽवदद्धरिः ।
स्त्रीषु यल्लोहितं लोके तत्राग्निस्थो जनार्दनः ॥

**स्त्रीरूपः सोऽग्निनामैव ज्वलज्ज्वालासमप्रभः ।**
**तस्माद्विष्णोः सन्निधानाद्भर्ता भार्याशरीरगात् ।।**

**न बीभत्सेतैव रक्तात् तथा पुंरेतसि स्थितः ।**
**आदित्ये संस्थितो विष्णुरादेरादित्यनामकः ।।**

**तस्मान्न रेतसो भार्या बीभत्सेत पतिस्थितात् ।**
**पुंरूपो भगवान् विष्णू रेतसिस्थो द्युमत्प्रभः ।।**

**भावप्रदीपः**

'तद्यदेतत्' इत्यादिवाक्यं प्रश्नस्योत्तररूपमिति भावेन प्रश्नोत्तरयोर्मध्येऽध्याहार्यमाह– **इति पृष्ट इति** ।। इदानीं तद्वाक्यं व्याचष्टे– **स्त्रीष्विति** ।। **लोके** भूलोके **स्त्रीषु** मानुषीषु **यल्लोहितं** रक्तं तत्राग्निस्थस्सन् स्त्रीरूपो जनार्दनो वर्तते । स चाग्निनामैवेत्यनेनाग्नेस्तद्रूपं (इति वाक्यं द्वेधा व्याख्यातं भवति । तत् लोहितं अग्नेः प्रसिद्धस्य तदन्तर्गताग्निनाम्नो हरेश्च रूपं)[१७३] प्रतिमास्थानीयमिति । 'तस्मात्तस्मान्न बीभत्सेत' इत्यस्यार्थः– **तस्मादिति** । तस्मादित्यस्यैवार्थो– **विष्णोस्सन्निधानादिति** । पुनस्तस्मादित्यस्यैवार्थो– **भार्याशरीरगाद्रक्तादिति** । भर्त्रेति कर्त्रध्याहारः । 'अथ यदेतत्पुषः' इत्यदेर्विवरणम् **तथेति** । **पुंरेतसि** मानुषपुरुषरेतसि विष्णुरादित्ये संस्थितः सन् स्थितः । स चादेरादिस्थत्वादादित्यनामक इत्यनेनादित्यस्य तद्रूपमिति वाक्यमपि पूर्ववत् द्वेधा व्याख्यातं भवति । 'तस्मान्न रेतसः' इत्येतदपि पूर्ववदेव व्याख्येयम् । **द्युमत्प्रभः** सूर्यप्रभः ।।

---

१७३. () एतच्चिह्नस्थापंक्तिः 'क'पाठे नास्ति

भगवतः स्त्रीपुंरूपाणि

**भाष्यम्**

**तस्माद्यद्भूमिगं विष्णोः स्त्रीरूपं तत्स्वयं हरिः ।**
**प्रादुर्भावगतो दद्याद्दिवि स्थितपुमात्मनः ।।**

**सूर्यगस्य तथा पुंसो रेतसिस्थस्य चात्मनः ।**
**देवीषु यल्लोहितगं स्त्रीरूपं[१७४] परमात्मनः ।।**

**तत्स सूर्यगतो विष्णुः पुरेतःस्थस्य चात्मनः ।**
**दद्याद्भूमिगतस्यैव रूपद्वयमिदं ततः ।।**

**परस्परं सम्भवति विष्णोर्नित्यसुखात्मकम् ।**
**प्रादुर्भावस्थितं रूपं यच्च भूमौ पुमात्मकम् ।।**

**विष्णोस्तदपि देवीषु स्थितस्त्रीरूपकात्मना ।**
**एवमन्योन्यतो विष्णू रतः स्वस्मिन्न चान्यतः ।।**

**भावप्रदीपः**

'सोऽयमात्मेममात्मानं' इति वाक्यं व्याचष्टे– **तस्मादिति** ।। एवं रूपद्वयेन मानुषस्त्रीलोहिते मानुषपुरुषरेतसि च स्थितत्वात् । उपलक्षणमेतत् । पृथिव्यां दिवि सूर्ये देवस्त्रीलोहिते देवरेतसि च स्थितत्वादित्यपि ग्राह्यम् । तत्र यद्भूमिगं मानुषस्त्रीलोहितगतं च विष्णोः स्त्रीरूपं तत् **प्रादुर्भावगतो** महिदासादिरूपो हरिः स्वयमेव **दिवि स्थितपुमात्मनः** दविस्थितो यः पुंरूपस्तस्यात्मनः स्वात्मनः स्वात्मनो दद्यात् । तथा सूर्यगतस्य पुंसो रेतसि स्थितस्य द्युस्थ-

---

१७४. लोहितगतस्त्रीरूपं इति ह.पाठः

पुरुषरेतस्सन्निहितस्य च पुरुषरूपस्यात्मनो दद्यादित्यर्थः । एतेन **सोऽयमात्मा** प्रादुर्भावगतो भूमिष्ठो महिदासादिरूपो भगवान् **इमात्मानं** पृथिवीस्थितं मानुषस्त्रीलोहितगतं च स्त्रीरूपं **अमुष्मै** द्युस्थिताय सूर्यगताय द्युस्थपुरेतःस्थिताय च **आत्मने** पुरुषरूपाय संप्रयच्छतीति तद्वाक्यं व्याख्यातं भवति । अनेन स्त्रीरूपं पृथिवी-संस्थं केन रूपेण संव्रजेदित्यभिप्रायेण कृतस्य 'अथ केन रूपेणेमं लोकमाभावति' इति प्रश्नस्योत्तरमभिहितं भवति ।

'असावात्माऽमुमात्मानं' इति वाक्यं व्याचष्टे– **देवीष्वति** ।। द्युस्थितदेवस्त्रीषु यत्तदीयलोहितगतं परमात्मनः स्त्रीरूपं तत् स सूर्यगतो विष्णुर्भूमिगतस्य तथा पुरेतःस्थस्य मानुषपुरुषरेतोगतस्य पुरुषस्य[१७५] **चात्मनः** स्वात्मनेः एव दद्यादित्यर्थः । एतेन **असौ आत्मा** सूर्यगतो विष्णुः **अमुं आत्मानं** द्युस्थं देवस्त्रीलोहितगतं स्त्रीरूपं **अस्मै** भूमिगताय तथा मानुषपुरुषरेतःसन्निहिताय **चात्मने** पुरुषरूपाय संप्रयच्छतीति तद्वाक्यं व्याख्यातं भवति । अनेन भूमिष्ठरूपेण दिविस्थितं स्त्रीरुपं किमसौ गच्छेदित्यभिप्रायेण कृतस्य 'यदनेन रूपेणामुं लोकमभिसंभवति' इति प्रश्नस्योत्तरमभिहितं भवति । 'तावन्योन्यमभिसंभवतः' इति वाक्यं व्याचष्टे– **रूपद्वयमिति** ।। **ततस्तस्मात्** भूमिगतस्त्रीरूस्य द्युस्थपुषरूपाय द्युस्थस्त्रीरूपस्य च भूमिष्ठपुषरूपाय प्रदत्तत्वात् **इदं** विष्णो रूपद्वयं परस्परं **संभवति** रमत इत्यर्थः । सुखार्थं रमते किं? नेत्याह– **नित्यसुखात्मकमिति** ।। नित्यसुखात्मकत्वान्न सुखार्थं रमते किन्तु लीलयैवेति भावः । 'अनेन ह रूपेणामुं लोकं' इत्यादि व्याचष्टे– **प्रादुर्भावस्थितमिति** ।। **रूपं**

---

१७५. पुंरूपस्य इति 'ख'पाठः

महिदासादिनामकम् । **स्त्रीरूपकात्मना** स्त्रीरूपो यः स्वात्मा तेन संभवतीत्यनुवृत्त्याऽन्वयः । उपलक्षणमेतत् । यच्च दिविस्थितपुमात्मकं वामनादिप्रादुर्भावगतं रूपं तदपि मानुषस्त्रीगतस्त्रीरूपकात्मना रमत इत्यपि ग्राह्यम् । तेन 'अमुना रूपेणेमं लोकमाभवति' इत्यन्तिम-वाक्यस्यापि व्याख्यानसङ्ग्रहः । इदमपि 'यदनेन रूपेण' इत्यादि-प्रश्नद्वयस्य प्रकारान्तरेणोत्तरमित्यवधेयम् । उपसंहति– **एवमिति** ।।

**भगवतो रमायां रमणमपि तत्स्थस्त्रीरूपेणैव**

**भाष्यम्**

**रमया रममाणोऽपि तत्स्थेनैव स्त्रियाऽऽत्मना ।**
**रमते नान्यतः क्वापि रतिर्विष्णोः सुखात्मनः ।।**

**रमया रमणं तस्माद्रमाया रतिपात्रता ।**
**नैवास्या रतिदातृत्वं विष्णोर्न ह्यन्यतो रतिः ।।** इत्यादि च ।

**भावप्रदीपः**

नन्वन्यतो न रतिमानिति कथम् । रमया रमणस्य सुप्रसिद्धत्वा-दित्यत आह– **रमयेति** ।। 'स्त्रियात्मना' इति यणागमः । 'त्रियंबकं' इत्यादिवत् । स्त्र्यात्मकेन स्वरूपेणैव रमत इत्यर्थः । तर्हि रमया रमणं विष्णोर्व्यर्थमेव किं? नेत्याह– **रमयेति** ।। **तस्मात्** विष्णोरनन्याधीनसुखात्मकत्वात् रमया सह रमणं यद्विष्णुना क्रियते तद्रमाया **रतिपात्रता** रतियोग्यताव्यंजकमेव । **अस्या** रमाया विष्णो रतिदातृत्वं नैव । रमा विष्णुरतिदात्री नैवेति यावत् । तथा च रमया सह रमणे न विष्णोः प्रयोजनाभावेऽपि तस्या एव विशेषेण सुखलाभार्थं रमणं क्रियत इति भावः ।।

## प्रेत्यशब्दस्य मरणवाचित्वाभावसमर्थनम्

### भाष्यम्

**स एव[१७६] महिदास इन्द्रनामा प्राप्येमं लोकमत्र भूत्वा प्रादुर्भूय मनुष्यदृष्टिगोचरतां प्राप्येषु लोकेषु राजति । नात्र प्रेत्यशब्दो मरणवाची । किन्तु 'प्रेतां यज्ञस्य शम्भुवे' इत्यादिवत् प्राप्तिवाच्येव । न हि मृतः पुनरेषु लोकेष्वेव राजति । न च यशोमात्रराजनेन स्वस्य राजनं भवति । भिन्नपदार्थत्वात् । यद्वा एति च प्रेति चेत्यादौ प्राप्त्यर्थेऽपि वेदेषु प्रसिद्धत्वाच्च । 'लक्ष्मणः प्रेत्य सुग्रीवं बभाषे रामचोदितम्'[१७७] इति स्कान्दे ।**

### भवप्रदीपः

'महिदास ऐतरेयः प्रेत्येंद्रो भूत्वा' इति वाक्यं प्रमाणेन व्याख्यातमपि स महिदासः प्रेत्य मरणं प्राप्येन्द्रो भूत्वैषु लोकेषु राजतीत्यन्यथा प्रतीतिनिराकरणार्थं प्रस्तावनाय पुनः स्वचनेनापि व्याचष्टे– **स महिदास इति** ।। प्रेत्येत्यस्यार्थः– **इमं लोकं प्राप्येति** । प्रादुर्भूयेत्यस्यैव विवरणम्– **मनुष्यदृष्टिगोचरतां प्राप्येति** । ननु [१७८]'न प्रेत्य संज्ञास्ती'त्यादौ मृत्वेत्यर्थस्य प्रसिद्धत्वात्कथमत्र तद्विहाय प्राप्त्यर्थकथनमित्यत आह– **नात्रेति** ।। अन्यत्र मरणार्थकत्वेऽपि नात्र प्रेत्यशब्दो **मरणवाची** मृत्वेत्यर्थवाची किन्तु प्राप्तिवाच्येव । अनेकार्थकत्वेऽपि शब्दस्य संभावित एवार्थो वर्णनीयः । अन्यथा 'प्रेतां यज्ञस्य शंभुवा' इत्यादावपि प्रेतां मृतिं

---

१७६. एव इति पदं ह.पाठे महिदास इत्यनन्तरं पठ्यते

१७७. चोदितः इति ह.पाठः १७८. बृह.उ. ४-४-१२

प्राप्नुतामित्येवार्थः स्यात् । अतस्तत्र यथा **शंभुवा** शंभुवौ सुखपूर्णौ युवां **यज्ञस्य प्रेतां** यज्ञं प्रत्यागच्छतमित्येवार्थः तद्वदत्रापीति भावः । ननु तत्र मरणप्रार्थनस्य बाधितत्वात्प्राप्त्यर्थकोऽस्तु । न चात्र बाधकमस्ति । येन प्रसिद्धार्थत्यागः कर्तव्यः स्यादिति तत्राह– **न हीति** ।। प्रेत्येत्यस्य मृत्यर्थकत्वे पुनरेष्वेव लोकेषु मृतस्य राजनोत्त्यनुपपत्तिरत्रापि बाधिकाऽस्त्येवेति भावः । यद्यपि महिदासस्य भगवदवतारत्वेन मरणोक्तिरनुपपन्नेति वक्तुं शक्यम् । तथापि भगवतोऽपि लीलया प्राकृतदेहङ्गीकारवादे नेदं बाधकमिति बाधकान्तरमेवोक्तम् । बहिरङ्गापेक्षयाऽन्तरङ्गिकानुपपत्तेर्बलवत्वाच्च । ननु मृतस्यापि पुनरेष्वेव लोकेषु राजनं संभत्येव । देहतो राजनाभावेऽपि यशसा राजनसंभवादित्यत आह– **न चेति** ।। **स्वस्या**त्मनः । कुतः भिन्नपदार्थत्वात् । यश आत्मनोरिति शेषः ।

ननु कथं यशोयशस्विनोर्भेदः । [१७९]'ऐश्वर्यादिवाचि भगशब्देनैव संबोधनाच्च । 'तं त्वा भग इत्यादौ' इत्यादिगीतिभाष्यादिविरोधापातात् । तत्र भगशब्दोदितस्यैश्वर्यादेरिव यशसोऽपि भगवत्स्वरूपत्वस्याभिप्रेतत्वादिति । सत्यम् । शंसनीयगुणकर्मादिकं वा गुणकर्मादिशंसनं वा यशःशब्दार्थः । 'नामान्यनन्तस्य यशोङ्कितानि'[१८०] 'तद्वा इदं बृहतीसहस्रं तद्यशः' इत्याद्युभयत्रापि प्रयोगात् । तत्राद्यं स्वरूपमेव । द्वितीयं तु भिन्नम् । अत्र तु द्वितीयमेव विवक्षितमतो न विरोध इति ।

ननु प्रपूर्वस्येणो मरणे यावती प्रसिद्धिर्न तावती प्राप्तौ । अतः

---

१७९. गी.भा. २-२४ १८०. भाग.पु.१-५-११

'प्रेतां यज्ञस्य' इत्येकत्रोक्तिमात्रेण कथं तद्दृष्टान्तेनात्र तदर्थकता-निश्चय इत्यत आह– **यद्वा इति** ।। अत्र प्रैतीत्यस्य मरणार्थकत्वे मरणस्याकर्मत्वेन यदि कर्मोक्त्यनुपपत्तेः सकर्मकोऽयं धतुः प्राप्त्यर्थक एवेति भावः । अत्रैवार्थे प्रयोगान्तरं दर्शयति– **लक्ष्मण इति** ।। अत्र मृतस्य भाषणाद्यनुपपत्या सुग्रीवं प्राप्येत्येवार्थोऽवश्यम-ङ्गीकार्यमिति भावः ।।

### यच्छब्दः किंशब्दार्थे

### भाष्यम्

**यदनेन रूपेणामुं लोकमभिसम्भवति । अनेन महिदासादिरूपेणामुं लोकं दिविष्ठं स्वरूपम् । विलोक्यत[१८१] इति स्वरूपवाची लोकशब्दः । 'आत्मानमेव लोकमुपासीत' इतिवत् । यच्छब्दः किंशब्दार्थे । अनेन रूपेण तद्रूपमभिसम्भवति किम्? उभयोरपि परिहार-दर्शनादस्यापि प्रश्नत्वमवगम्यते । 'यतश्चोदेति सूर्यः' इत्यादिवत् । रङ्गस्तु प्रश्नविषयस्य दुरवगमत्वं प्रकाशयति ।**

**'दुर्गमे प्रश्नविषये प्रश्नो रङ्ग्युतो भवेत्' इति[१८२] शब्दनिर्णये ।।**

### भावप्रदीपः

'यदनेन रूपेण' इति प्रथमप्रश्नवाक्यं 'भूमिष्ठेनरूपेण तु दिविस्थितं स्त्रीरूपं किमसौ गच्छेत्' इति प्रमाणवाक्येन व्याख्यातमपि स्पष्ट-त्वार्थं पुनरनूद्य स्ववाक्येन व्याचष्टे– **यदनेनेत्यादिना** ।। अमुमित्यस्यार्थो– **दिविष्ठमिति** । लोकमित्यस्य **स्वरूपमिति** ।

१८१. लोक्यते इति पाठान्तरम्

१८२. इति हि इति ह.पाठः

स्वस्य रूपमित्यर्थः । अत्र रूपमेव लोकशब्दार्थः, स्वेति तु संबन्धिमात्रम् । अत एवोत्तरत्र 'अनेन रूपेण तद्रूपं' इति 'स्वकीयमेव तद्रूपं' इति च वक्ष्यति । लोकशब्दस्य रूपवाचित्वं कथमत्यत आह– **विलोक्यत इति** ।। लोकृ दर्शन इति धातोर्लोक्यते विलोक्यते अवलोक्यते दृश्यत इति व्युत्पत्या लोकशब्दः स्वस्य रूपवाचीत्यर्थः । अत्र दृष्टान्तमाह– **आत्मानमेवेति** ।। आत्माख्यमेव लोकं विष्णुरूपमुपासीतेति यथा तत्र लोकशब्दः रूपवाची तथेत्यर्थः । 'आत्मानं विष्णुमेव लोकं सर्वाश्रयं उपासीत' इति बृहद्भाष्यं[१८३] तु व्याख्यानान्तरमिति न तेन विरोधः । 'यदनेने'त्यत्र यच्छब्दस्य प्रकृतोपयुक्तमर्थं दर्शयति– **यच्छब्द इति** ।। किंशब्दार्थे प्रश्ने तस्यान्वयं दर्शयति– **अनेन रूपेणेति** ।। कुतोऽयं यच्छब्दः प्रश्नार्थ इत्यत आह– **उभयोरपीति** ।। प्रश्नयोरिति शेषः । 'अथ केन रूपेणेमं लोकं' इति प्रश्नस्य 'सोऽयमात्मेमुमात्मानं' इति परिहारवत् 'यदनेन रूपेण' इत्यस्यापि 'असावात्माऽमुमात्मानं' इति परिहारदर्शनात् प्रश्नत्वमवगम्यत इत्यर्थः । यच्छब्दस्य प्रश्नार्थकत्वे प्रयोगं दर्शयति– **यतश्चेति** ।। बृहदारण्यकवाक्यमेतत् । तत्र [१८४]'प्राणाद्वा एष उदेति प्राणेऽस्तमेति' इत्युत्तरवाक्ये परिहारश्रवणात्प्रश्नार्थकत्वं सिद्धमेवेति भावः । 'अभिसंभवतीं३ आभवतीं३' इत्युभयत्रापि रङ्गस्य कृत्यमाह– **रङ्गस्त्विति** ।। तत्र प्रमाणमाह– **दुर्गम इति** ।। प्रश्नविशये **दुर्गमे** दुरवगमे सति ।।

---

१८३. बृह.भा. ३-५-९

१८४. बृह.उ. ३-६-२३

स्पष्टत्वाय पुनः प्रश्नपरिहारवाक्ययोः व्याख्यानम्

भाष्यम्

**केन रूपेणेमं लोकमाभवति । केन स्वरूपेण भूमिष्ठेनात्मन एव स्त्रीरूपेण विष्णुः सम्बध्यते । सोऽयं महिदासादिप्रादुर्भावरूप इदं भूमिष्ठस्त्रीरूपं लोहितगतं[१८५] च स्वकीयमेव रूपममुष्मै दिविष्ठाय स्वपुरुषरूपाय प्रयच्छति [१८६]देवरेतःस्थिताय च । देवी लोहितस्थितमात्मनः स्त्रीरूपं महिदासादिरूपेभ्यो मानुषरेतःस्थि[१८७]तरूपेभ्यश्च दिविष्ठैश्च विष्ण्वादिस्वरूपैः प्रयच्छति च ।।**

भावप्रदीपः

'अथ केन रूपेण' इति द्वितीयप्रश्नवाक्यमपि स्पष्टत्वार्थं पुनरनूद्य तात्पर्यतो व्याचष्टे– **केन रूपेणेति** ।। विष्णुः केन स्वरूपेण स्वकीयपुंरूपेण यदिदं भूमिष्ठमात्मन एव स्त्रीरूपं तेन संबध्यते । भूमिष्ठे स्त्रीरूपे केन रूपेण रमत इति यावदित्यर्थः । 'सोऽयमात्मेममात्मन'मिति परिहारवाक्यमपि स्पष्टत्वाय व्याचष्टे– **सोऽयमिति** ।। इममात्मानमित्यस्यार्थ– **इदं भूमिष्ठमित्यादि** । 'असावत्मा' इति वाक्यमपि व्याचष्टे– **देवी लोहितस्थितमिति** ।। अमुमात्मानमित्यस्यार्थोऽ**यम्** । 'अस्मा आत्मने' इत्यस्य **महिदासादिरूपेभ्य इत्यादि** । 'असावात्मे'त्यस्य तात्पर्यम्– **दिविष्ठैश्च इत्यादि** ।। **दिविष्ठैः** विष्ण्वादिरूपैः कर्तृभिः । आदिपदेन सूर्यगतादिरूपान्तरसङ्ग्रहः । 'तत्सूर्यगतो विष्णु'रिति प्रागुक्तत्वात् । अत एव तदपि वाक्यं विष्ण्वादिरूपोपलक्षणाभिप्रायं व्याख्येयम् ।।

---

१८५. लोहितगं इति ह.पाठः १८६. देवरेतसि इति ह.पाठः

१८७. रेतस्थ इति ह.पाठः

शुक्रशोणिते भगवतः प्रतिमे

**भाष्यम्**

**तानि भूमिष्ठत्वेन दिविष्ठत्वेन[१८४] द्विविधत्वात् तावित्युच्यन्ते[१८५] । अग्नेस्तद्रूपमग्निनाम्नो विष्णोः प्रतिमा तत्सन्निधानात् । एवमादित्यनाम्नो विष्णोः । न ह्यग्न्यादिस्वरूपमेव लोहितादि । न च लौकिकस्त्रीपुरुषसम्बन्धमात्रमत्रोच्यते । अप्रस्तुतत्वात् तस्य । भगवानेव ह्यत्र प्रस्तुतः ।।**

**भावप्रदीपः**

नन्वेवं भूमिष्ठरूपाणां दिविष्ठरूपाणां च बुहुत्वेन 'तावन्योन्यमभिसंभवतः' इति कथं द्विवचननिर्देश इत्यत आह– **तानीति** ।। **तानि** रूपाणि बहून्यपि भूमिष्ठत्वेन दिविष्ठत्वेन चावच्छेदकधर्मेण द्वित्वमुपादाय ताविति द्विवचनेन **उच्यन्ते** निर्दिशन्ते इत्यर्थः । एतेन 'रूपद्वयमिदं ततः' इति प्रमाणवचनस्याप्ययमेवाभिप्राय इत्युक्तं भवति । 'अग्नेस्तद्रूपं' इत्येतदनूद्य व्याचष्टे– **अग्नेरिति** ।। प्रतिमात्वमुपपादयति– **तत्सन्निधानादिति** ।। **तस्मिन्** लोहिते **तस्य** विष्णोः सन्निधानादित्यर्थः । आदित्यस्य तद्रूपमित्येतदपि वाक्यमेवमेव व्याख्येमिति अतिदिशति– **एवमिति** ।। यदेतत्पुरुषे रेतस्तदादित्यनाम्नो विष्णोः प्रतिमा तत्सन्निधानादित्यर्थः । नन्वग्न्यादित्यरूपशब्दानां प्रसिद्धार्थ एव किं न स्यात् । कुतस्तन्नाम्नो विष्णोः प्रतिमेत्यादिव्याख्यानमित्यतः प्रतीतार्थे बाधकमाह– **न हीति** ।। अग्न्यादेर्देवतात्वेन लोहितादेर्जडस्य तत्स्वरूपत्वायोगादिति भावः ।

---

१८४. दिविष्ठत्वेन च इति ह.पाठः १८५. उच्यते इति ह.पाठः

विष्णुग्रहणे निमित्तं त्वनुपदमेव वक्ष्यते । ननु स्त्रीपुरुषयोर्मिथःसंयोगस्य जिगुप्सितत्वशङ्कापरिहारायौपचारिकमेवेदं तदीयलोहितरेतसोरग्न्यादित्यरूपत्ववचनम् । अतो नोक्तानुपपत्तिरित्यत आह– **न चेति** ।। विष्णवीयस्त्रीपुरुषरूपसंबन्धस्यात्र विवक्षितत्वात् **लौकिकेत्युक्तम्** । विष्णुसन्निधानप्रशंसार्थं लौकिकस्त्रीपुरुषसंबन्धस्यापि विव-क्षितत्वात् **संबन्धमात्रमिति** । कुतस्तन्नोच्यत इत्यत आह– **अप्रस्तुत्वात्तस्येति** ।। तर्हि कोऽत्र प्रस्तुत इत्यत आह– **भगवानेवेति** ।। अत्र हि प्रकणे 'स इन्द्रः स भूतानामधिपतिर्महिदास ऐतरेयः' इत्यादिना भगवानेव प्रस्तुत इत्यर्थः ।।

लौकिकस्त्रीपुरुषसम्बन्धस्यात्र अप्रस्तुतत्वप्रतिपादनम्

**भाष्यम्**

**असावात्मेत्यात्मशब्दाच्च भगवानेवेति ज्ञायते ।**

**आत्मशब्दः परे विष्णौ नान्यत्र क्वचिदिष्यते ।**

**गुणपूर्त्यभिधायी स नान्यस्य गुणपूर्णता ।**

**अमुख्यात्मान एवातो ब्रह्माद्याः सर्व एव हि ।। इत्यादि च ब्रह्माण्डे ।**

**'यदक्षरं पञ्चविधं समेति' 'सत्यस्य सत्यमनु यत्र युज्यते' इत्यादिना उक्तार्थविषयोदाहृतैः[१८६] श्लोकैरपि भगवत एव स्वरूपाणां परस्परयोगस्योक्तत्वात् । गायत्र्युष्णिग्बृहतीत्यादिना भगवत एव पञ्चविधस्य स्त्रीरूपस्य महिदासादिपञ्चरूपाणां[१८७] च प्रस्तुतत्वाच्च ।।२.३.७।।**

---

१८६. विषये उदाहृतैः इति ह.पाठः १८७. पुंरूपाणां इति ह.पाठः

## भावप्रदीपः

इतश्च भगवानेवात्र प्रतिपाद्य इत्याह– **असावात्मेति** ।। अयमात्मेतीत्यस्याप्युपलक्षणमेतत् । यद्यप्ययमात्मेत्यात्मशब्दाच्चेति वक्तुं योग्यम् । तस्यैव प्रथमवाक्यत्वात् । तथापि पूर्वपक्षी अयमात्मा जीवात्मेत्यपि वक्तुमुत्सहते । अतस्तस्य मुखतोऽसङ्कीर्तनम् । ननु आत्मशब्दादपि कथं भगवानेवेति ज्ञायत इत्यत आह– **आत्मशब्द इति** ।। **गुणपूर्तिता** गुणपूर्तिमत्ता । तर्हि [१८८]'सर्व एवात्मानो व्युच्चरन्ति' इत्यादौ कथं जीवेष्वात्मशब्द इत्यत आह– **अमुख्येति** ।। किञ्च उत्तरखण्डे तत्रोक्तार्थे 'एते वक्ष्यमाणाः श्लोकाः प्रमाणं भवन्ति' इत्युक्त्वा 'यदक्षर'मित्यादिश्लोका उदाहरिष्यन्ते । तत्र च भगवत एव स्वरूपाणां परस्परयोग उच्यते । अनुक्तार्थे प्रमाणोदारणस्यासंगतत्वात्स एवार्थोऽत्रोक्तो ज्ञातव्यमित्याह– **यदक्षरमिति** ।। यद्यप्यत्र श्लोकद्वय एवैषोऽर्थोऽभिधास्यते । तथाप्युदहृतश्लोकैरिति बहुवचनं तद्गतपादचतुष्टयाभिप्रायमिति नानुपपन्नम् । अत एवाद्यश्लोकस्य 'यदक्षर'मिति प्रथमपादं 'सत्यस्य सत्य'मिति तृतीयपादं च कंठत एव संङ्कीर्त्येत्यादिनेत्यादिपदेन द्वितीयश्लोकस्य 'यदक्षरादक्षरमेति युक्तं' इति प्रथमपादं 'सत्यस्य सत्य'मिति तृतीयपादं च संजग्राह । अपि च पूर्वं 'गायत्र्युष्णिग्बृहतीत्रिष्टुप्द्विपदेति छन्दस्तः' इति भगवत एव विषये पञ्चविधस्य स्त्रीरूपस्य प्रस्तुतत्वात् 'महिदास ऐतरेयः' इत्यादना महिदासादिपुरुषरूपाणां च प्रस्तुतत्वाद्भगवत एव स्वरूपाणां परस्परयोगोऽत्राभधीयते । न तु लौकिकस्त्रीपुरुषसंबन्धमात्रमित्याह ।।

---

१८८. सू.भा उदहृता श्रुतिः २-३-१८

ततश्चायं खण्डार्थः । विद्यान्तरोपदेशार्थं 'तद्वा इदं बृहतीसहस्रं' इति पुनः परामर्शः । तदिदं बृहतीसहस्रं **तद्यशः** तस्य नारायणस्य गुणकर्मकीर्तनरूपम् । यस्य नारायणस्यैतद्यशः **स** भगवानेव **इन्द्रः** इन्द्रनामा मुख्यतः । प्रथमेन्द्रत्वात्परमैश्वर्ययोगाच्च । स एव **भूतानां** ब्रह्मादीनां जीवानामधिपतिः । य एवं **एतं** बृहतीसहस्रतिपाद्यं नारायणमिन्द्रं भूतानाधिपतिं च वेद **स** पुमान् **विस्रसा** क्विबन्तोऽयं, विस्रंसनेन युक्तः अखिलबन्धाद्विस्रस्तस्सन् **अस्माल्लोकात्प्रैति** हरेर्लोकं गच्छति ह । एवकारेण नास्त्यत्र संशय इत्याह । इति ह ऐतरेयो महिदास आह स्म ।

**स** महिदास एवेन्द्रनामा **प्रेत्य** श्वेतद्वीपादिमं लोकं प्राप्य **भूत्वात्र** प्रादुर्भूय मनुष्यदृष्टिगोचरतां प्राप्येति यावत् । येषु लोकेषु **राजति** प्रकाशते रमत इति यावत् । इदमपि भगवतो महिदासस्यैव परोक्ष-वद्वाक्यमिति बोध्यम् । अन्यथोत्तरत्र प्रश्नप्रतिवचनासंभवात् । एवं भगवतोपदिष्टाः केचित्तच्छिष्याः **तत्** तत्र विषये **आहुः** पृच्छन्तीति यावत् । यदि भगवान्महिदासादिरूपेण भुमिष्ठस्सन् रमते तर्हि रमणस्य स्त्रिया विनाऽयोगान्नित्यसुखस्वरूपस्य स्वतन्त्रस्यान्यतो रत्ययोगात्स्वकीये स्त्रीरूप एव स्वयं रमत इति वाच्ये **अनेन** भूमिगतेन पुंरूपेण**अमुं** दिविष्ठं **लोकं** लोक्यतेऽवलोक्यत इति लोकशब्दवाच्यं स्वकीयं स्त्रीरूपम**भिसंभवति यत्** अभिगच्छति किम् । यच्छब्दः किंशब्दार्थे । दिविष्ठस्त्रीरूपेण रमते किमिति यावत् । **अथ** प्रश्नान्तरं च । केन रूपेण **इमं लोकं** पृथिवीस्थं स्वस्त्रीरूपं **आभवति** संव्रजति तेन रमत इति यावत् । अत्र केन रूपेणेत्यस्य यदयं भगवान् दिविष्ठं वा भूमिष्ठं वा स्त्रीरूपं गच्छति तच्च केन रूपेण ।

## भावप्रदीपः

इतश्च भगवानेवात्र प्रतिपाद्य इत्याह– **असावात्मेति** ।। अयमात्मेतीत्यस्याप्युपलक्षणमेतत् । यद्यप्ययमात्मेत्यात्मशब्दाच्चेति वक्तुं योग्यम् । तस्यैव प्रथमवाक्यत्वात् । तथापि पूर्वपक्षी अयमात्मा जीवात्मेत्यपि वक्तुमुत्सहते । अतस्तस्य मुखतोऽसङ्कीर्तनम् । ननु आत्मशब्दादपि कथं भगवानेवेति ज्ञायत इत्यत आह– **आत्मशब्द इति** ।। **गुणपूर्तिता** गुणपूर्तिमत्ता । तर्हि [१८८]'सर्व एवात्मानो व्युच्चरन्ति' इत्यादौ कथं जीवेष्वात्मशब्द इत्यत आह– **अमुख्येति** ।। किञ्च उत्तरखण्डे तत्रोक्तार्थे 'एते वक्ष्यमाणाः श्लोकाः प्रमाणं भवन्ति' इत्युक्त्वा 'यदक्षर'मित्यादिश्लोका उदाहरिष्यन्ते । तत्र च भगवत एव स्वरूपाणां परस्परयोग उच्यते । अनुक्तार्थे प्रमाणोदारणस्यासंगतत्वात्स एवार्थोऽत्रोक्तो ज्ञातव्यमित्याह– **यदक्षरमिति** ।। यद्यप्यत्र श्लोकद्वय एवैषोऽर्थोऽभिधास्यते । तथाप्युदहृतश्लोकैरिति बहुवचनं तद्गतपादचतुष्टयाभिप्रायमिति नानुपपन्नम् । अत एवाद्यश्लोकस्य 'यदक्षर'मिति प्रथमपादं 'सत्यस्य सत्य'मिति तृतीयपादं च कंठत एव संङ्कीर्त्येत्यादिनेत्यादिपदेन द्वितीयश्लोकस्य 'यदक्षरादक्षरमेति युक्तं' इति प्रथमपादं 'सत्यस्य सत्य'मिति तृतीयपादं च संजग्राह । अपि च पूर्वं 'गायत्र्युष्णिग्बृहतीत्रिष्टुप्द्विपदेति छन्दस्तः' इति भगवत एव विषये पञ्चविधस्य स्त्रीरूपस्य प्रस्तुतत्वात् 'महिदास ऐतरेयः' इत्यादना महिदासादिपुरुषरूपाणां च प्रस्तुतत्वाद्भगवत एव स्वरूपाणां परस्परयोगोऽत्राभधीयते । न तु लौकिकस्त्रीपुरुषसंबन्धमात्रमित्याह ।।

---

१८८. सू.भा उदहृता श्रुतिः २-३-१८

ततश्चायं खण्डार्थः । विद्यान्तरोपदेशार्थं 'तद्वा इदं बृहतीसहस्रं' इति पुनः परामर्शः । तदिदं बृहतीसहस्रं **तद्यशः** तस्य नारायणस्य गुणकर्मकीर्तनरूपम् । यस्य नारायणस्यैतद्यशः **स** भगवानेव **इन्द्रः** इन्द्रनामा मुख्यतः । प्रथमेन्द्रत्वात्परमैश्वर्ययोगाच्च । स एव **भूतानां** ब्रह्मादीनां जीवानामधिपतिः । य एवं **एतं** बृहतीसहस्रप्रतिपाद्यं नारायणमिन्द्रं भूतानाधिपतिं च वेद **स** पुमान् **विस्रसा** क्विबन्तोऽयं, विस्रंसनेन युक्तः अखिलबन्धाद्विस्रस्तस्सन् **अस्माल्लोकात्प्रैति** हरेर्लोकं गच्छति ह । एवकारेण नास्त्यत्र संशय इत्याह । इति ह ऐतरेयो महिदास आह स्म ।

**स** महिदास एवेन्द्रनामा **प्रेत्य** श्वेतद्वीपादिमं लोकं प्राप्य **भूत्वात्र** प्रादुर्भूय मनुष्यदृष्टिगोचरतां प्राप्येति यावत् । येषु लोकेषु **राजति** प्रकाशते रमत इति यावत् । इदमपि भगवतो महिदासस्यैव परोक्ष-वद्वाक्यमिति बोध्यम् । अन्यथोत्तरत्र प्रश्नप्रतिवचनासंभवात् । एवं भगवतोपदिष्टाः केचित्तच्छिष्याः **तत्** तत्र विषये **आहुः** पृच्छन्तीति यावत् । यदि भगवान्महिदासादिरूपेण भुमिष्ठस्सन् रमते तर्हि रमणस्य स्त्रिया विनाऽयोगान्नित्यसुखस्वरूपस्य स्वतन्त्रस्यान्यतो रत्ययोगात्स्वकीये स्त्रीरूप एव स्वयं रमत इति वाच्ये **अनेन** भूमिगतेन पुंरूपेणा**मुं** दिविष्ठं **लोकं** लोक्यतेऽवलोक्यत इति लोकशब्दवाच्यं स्वकीयं स्त्रीरूपम**भिसंभवति यत्** अभिगच्छति किम् । यच्छब्दः किंशब्दार्थे । दिविष्ठस्त्रीरूपेण रमते किमिति यावत् । **अथ** प्रश्नान्तरं च । केन रूपेण **इमं लोकं** पृथिवीस्थं स्वस्त्रीरूपं **आभवति** संव्रजति तेन रमत इति यावत् । अत्र केन रूपेणेत्यस्य यदयं भगवान् दिविष्ठं वा भूमिष्ठं वा स्त्रीरूपं गच्छति तच्च केन रूपेण ।

उभयोर्मेलकं रूपं किमित्यभिप्रायान्तरमपि द्रष्टव्यम् । अन्यथा परिहारवाक्ये तन्निरूपणासङ्गतेः ।

इति स्वशिष्यैः पृष्टो भगवान् **तत्** तत्र । उत्तरमाहेति शेषः । **स्त्रियां** स्त्रीशरीरे यदेतल्लोहितं **भवति** वर्तते **तदग्नेरग्निनाम्नोऽग्निष्ठस्य** स्त्रीरूपस्य हरे **रूपं** सन्निधानपात्रं । **तस्मात्** हरिसन्निधान-पात्रत्वात् **तस्मात्** भार्याशरीरगतलोहितात् **न बीभत्सेत** न जुगुप्सेत, भर्त्रेति शेषः । अथ पुरुषे यदेतद्रेतो भवति **तदादित्यस्य** आदित्यनाम्नः आदित्यस्थस्य पुंरूपस्य हरे **रूपं** सन्निधानपात्रं **तस्मात्** हेतोः **तस्मात्** भर्तृशरीरगतरेतसो न बीभत्सेत । भार्येति शेषः । उपलक्षणमेतत् । देवस्त्रीलोहिते देवरेतसि पृथिव्यां दिवि च भगवान् स्त्रीरूपेण पुंरूपेण च सन्निहितो वर्तत इत्यपि ग्राह्यम् ॥

एवमुपयुक्तं प्रमेयमुपोद्धातत्वेनोक्त्वेदानीं प्रश्नद्वयं परिहरति– **सोऽय-मात्मेत्यादिना** ॥ **सोऽयं** भूमिष्ठो महिदासादिप्रादुर्भावादिरूप **इमं** भूमिष्ठं तथा मानुषस्त्रीलोहितगतं च स्त्रीरूप**मात्मानं** विष्णुं स्वकीय-मेव स्त्रीरूपमिति यावत् । **अमुष्मै** दिविष्ठाय सूर्यगाय देवरेतसि स्थिताय च पुरुषरूपाया**त्मने** विष्णवे स्वपुरुषरूपायैवेति यावत् । **संप्रयच्छति** ददातीत्यर्थः । एतच्च 'केन रूपेण इमं लोकं' इति द्वितीयप्रश्नस्योत्तरम् । अथ प्रथमप्रश्नस्योत्तरम्– **असावात्मेत्यादि** । **असौ** सूर्यगतो दिविष्ठविष्ण्वादिपृथग्रूपी चात्मा विष्णुः **अमुं** देवस्त्री-लोहितगतं स्त्रीरूपा**त्मानं** विष्णुं स्वीयमेव स्त्रीरूपमिति यावत् । **अस्मै** भूमिष्ठाय महिदासादिरूपिणे मानुषरेतसि स्थिताय चात्मने संप्रयच्छयतीति । अत्र द्वितीयप्रश्नस्य प्रथममुत्तरमुल्बणत्वात् प्रथम-प्रश्नस्य त्वनेन रूपेणेति उत्तरार्धस्यापि गर्भीकृतत्वेन परिहारे

प्रयासाभावादनन्तरमुत्तरमिति ज्ञातव्यम् । एवं **तावात्मानौ** द्युभूमिगतानि विष्णोः पुरुषस्त्रीरूपाण्यन्योन्यम**भिसंभवतो** मिथो रमन्त इत्यर्थः । प्रकारान्तरेणापि प्रश्नद्वयस्य क्रमेणोत्तरमाह– **अनेनेति** ।। **अनेन** भूमिष्ठेन महिदासादिप्रादुर्भावस्थितपुरुषरूपेणा**मुं लोकं** द्युलोकस्थदेवस्त्रीस्थितं स्वकीयमेव स्त्रीरूपमभिसंभवति ह । तथा **अमुना** दिविस्थितेन पुमात्मकवामनादिरूपेण **इमं लोकं** भूलोकस्थितमानुषस्त्रीगतं स्वकीयमेव स्त्रीरूपमाभवतीति ।।२.३.७।।

भगवतः स्त्रीपुरुषरूपनिरूपणम् तत्रैव देवादीनां विहारः

**उपनिषत्**

**तत्रैते श्लोकाः–**

**यदक्षरं पञ्चविधं समेति युजो युक्ता अभियत् संवहन्ति ।**

**सत्यस्य सत्यमनु यत्र युज्यते तत्र देवाः सर्व एकं भवन्ति ।।**

**यदक्षरादक्षरमेति युक्तं युजो युक्ता अभियत् संवहन्ति ।**

**सत्यस्य सत्यमनु यत्र युज्यते तत्र देवाः सर्व एकं भवन्ति ।।**

यदक्षरमिति श्लोकार्थनिरूपणम्

**भाष्यम्**

यन्नारायणादिरूपेण पञ्चविधमक्षरं परं ब्रह्म तत्स्वस्मिन्नेव स्त्रीपुंरूपेण समेति । स्त्रीपुंरूपेण युजो देवा अश्वरूपेण रथे युक्ताः सन्तो यन्नारायणाख्यं परं ब्रह्माभिसंवहन्ति । [१८९]तदेतत्सत्यस्य सत्यं नारायणाख्यं ब्रह्म यत्रानुयुज्यते यस्मिन् स्वरूप एव स्त्रीपुंरूपेण

१८९. तदेव इति ह.पाठः

**युज्यते । तत्र[१९०] तस्मिन् एव परे ब्रह्मणि नारायणाख्ये सर्वदेवा[१९१] एकीभवन्ति मुक्ताः सन्तो मिलिता[१९२] भवन्ति ।।**

### भावप्रदीपः

अस्मिन्खण्डे पूर्वखंडप्रतिपादितेऽर्थे प्रमाणत्वेन प्रथमं श्लोका उदह्रियन्ते । तान् प्रकृतसङ्गतत्वेन व्याचष्टे– **यन्नारायणादीति** ।। **स्त्रीपुंरूपेण** स्त्रीपुंसरूपेण । समासान्तो विधिरनित्य इति । यद्वा स्त्रिया सहितः पुमान् स्त्रीपुमान् तद्रूपेणेति मध्यमपदलोपी-कर्मधारयोऽयम् । [१९३]'अचतुरा'दिसूत्रं तु द्वन्द्वविषयम् । **'सत्यस्य सत्यं** सत्यं सत्यस्यापि सत्यताप्रदं मुख्यसत्यमिति यावत् । **यस्मिन् स्वरूप** एव मूलरूप एव ।।

### एकीभावो नाम न स्वरूपैक्यम्

### भाष्यम्

**नायमेकीभावो नाम स्वरूपैक्यम् । किन्त्वेकस्थाने वासः, अत्यनुकूलचित्तता च ।**

**'एकीभूय नृपाः सर्वे ववृषुः पाण्डवं शरैः ।**
**एकीभूता तु सा सेना पाण्डवानभ्यवर्तत' इत्यादिवत् ।**

**न चैकीभावशब्दः स्वरूपैकत्वविषये प्रयुज्यमानः कुत्रचिद् दृष्टः ।**

---

१९०. तत्र इति पदं हृ.पाठे नास्ति १९१. सर्वे देवा इति हृ.पाठः

१९२. मिळिता इति हृ.पाठः

१९३.पा.सू. ५-४-७७, सि.कौ.सू.सं. ९४५

**एकः पुरुषोऽपि यदा द्विधा भूत्वा एकीभवतीत्युच्यते तदापि स्थानैक्यमेव। स्वरूपैक्यस्य पूर्वमेव सिद्धत्वात्। न चाज्ञात एकत्वे पुनर्ज्ञाते ऐक्यं प्राप्त इति प्रयोगो दृश्यते। किन्तु ज्ञात इत्येव प्रयुज्यते। तस्माद् भावसहित एकशब्दो न स्वरूपवाची। न हि पूर्वं भिन्नस्य पश्चात् स्वरूपैक्यं भवति। किन्तु संसर्ग एव भवति। तस्मादत्रापि संसर्ग एव विवक्षितः ॥**

**भावप्रदीपः**

नन्वेकं भवन्तीत्यस्य मिलिताः भवन्तीत्यर्थः कुतः? स्वरूपैक्यमेव किं न स्यादित्यतस्तत्रानुपपत्तिं स्वोक्तार्थे साधकं च वदिष्यन्स्वाभिमतार्थं तावत्पराभिमतार्थनिषेधपूर्वकं प्रतिजानीते– **नायमिति** ॥ अत्यनुकूलचित्तता चेत्यनेन मिलिता इत्येतन्म-त्यैक्यस्याप्युपलक्षणमिति सूचयति । स्थानैक्यमत्यैक्यविवक्षयैकी-भावोक्तेः प्रयोगं दर्शयति– **एकीभूयेति** ॥ न च तत्र स्वरूपैक्यं संभवतीति भावः । स्वरूपैक्ये एकीभावप्रयोगस्तु कुत्रापि न दृष्ट इत्याह– **न चेति** ॥ ननु यत्र नृपादिषु मिथो भेद एव तत्रैकी-भावशब्दः स्वरूपैक्यपरो मास्तु । यत्राभेदस्तत्रेन्द्रार्जुनादाविव स्वरूपैक्यपर एव किं न स्यादित्यत आह– **एक इति** ॥ तदा-प्युभयोरंशयोः संश्लेषरूपस्थानैक्यमेवैकीभावशब्दार्थो न स्वरूपैक्यम् । तस्य पूर्वमेव सिद्धत्वात् । सिद्धस्य पुनर्भवनायोगादिति भावः । ननु तादृशस्थले स्वरूपैक्यस्य प्राक् सिद्धत्वेऽपि पूर्वमज्ञातस्य पश्चाद्ज्ञाने सति तद्विवक्षया पुनर्भवनव्यवहारोऽस्त्वित्यत आह– **न चेति** ॥ क्वचित् [१९४]'सत्यत्यच्चाभवत्' इत्यादौ प्राक्सिद्धस्यापि सत्यदादि-

१९४. तै.उ. २-१४

भावस्य प्रतीत्यपेक्षया पुनर्भवनव्यवहारस्तु न स्वरूपैक्यविषयः । किन्तु सत्यत्वादिगुणव्यक्तिविषयः । 'व्यक्तिरुक्तगुणानां हि'[१९५] इत्यनुव्याख्यानोक्तेः । अतो न तत्र व्यभिचारोद्भावनं सङ्गतमिति भावः । उपसंहरति– **तस्मादिति ।। स्वरूपवाची** स्वरूपैक्यवाची । किन्तु स्थानैक्यादिपर एवेति भावः । स्यादेतत्, यदीयं पूर्वमभिन्नानामेव पुनः स्वरूपैक्यप्राप्त्युक्तिः स्यात् । न चैवम् । किन्तु पूर्वं भिन्नानामेव मुक्तौ ब्रह्मणा स्वरूपैक्यभवनमभिधीयते । अतो भावसहितैकशब्दोऽपि स्वरूपैक्यवाची भवत्येवेत्यत आह– **न हीति ।।** देवा इत्यादिबहुवचनस्य प्रकृतत्वेऽपि भिन्नस्येत्येकवचनं व्याप्तिप्रदर्शनार्थम् । यद्यतः पूर्वं भिन्नं न तत्पश्चात्तेन स्वरूपैक्यवद्भवति । यथा घटः पटेनेति । संसर्ग एव । पूर्वं भिन्नानां पश्चादिति शेषः । **भवति** संभवति । तस्मात्पूर्वं भिन्नानां पश्चात्संसर्गस्यैव लोके संभावितत्वादत्रापि 'देवाः सर्वे एकं भवन्ति' इत्यत्रापि नारायणेन संसर्ग एव विवक्षितो न स्वरूपैक्यप्राप्तिरित्यर्थः ।।

**समेति युज्यते इति पदयोः न पौनरुक्त्यम्**

**भाष्यम्**

**'यदक्षरं पञ्चविधं समेति' इत्युक्तस्य 'सत्यस्य सत्यमनु यत्र युज्यते' इति परामर्शं कृत्वा तत्र 'देवाः सर्व एकं भवन्ति' इत्युच्यते । तस्मान्न पुनरुक्तिः । यस्मादक्षरान्नारायणाख्यात् स स्वयमेव भगवान् प्रादुर्भावरूपी स्त्रीपुंरूपेण युक्त आगच्छति । तात्पर्यार्थं तस्यैवार्थस्य पुनरभ्यासः ।।**

---

१९५. अनु. १-४-८१

**भावप्रदीपः**

नन्वत्र 'यदक्षरं पञ्चविधं समेति' इत्युक्तार्थस्यैव 'सत्यस्य सत्यमनु यत्र युज्यते' इत्यनेनोक्तेः पौनरुक्त्यमित्याशङ्क्य परिहरति- **यदक्षरमिति** ।। **उक्तस्य** परं ब्रह्म स्वस्मिन्नेव स्त्रीपुंरूपेण युज्यत इत्यस्यार्थस्य । यदक्षरादित्येतद्व्याचष्टे- **यस्मादिति** ।। अक्षरादित्यवधिश्रवणादेतीत्येतदागच्छतीति व्याख्यातम् । बहिरागच्छतीत्यर्थः । 'युजो युक्ताः' इत्यादिपूर्वश्लोकोक्तमेव पुनरत्राप्युच्यते । अतः पुनरुक्तिरित्यत आह- **तात्पर्यार्थमिति** ।। तात्पर्यज्ञापनार्थमभ्यासरूपत्वादस्य न पौनरुक्त्यमिति भावः ।।

विष्णोः सर्वशब्दवाच्यत्वज्ञानेन मोक्षः

**उपनिषत्**

**यद्वाच ओमिति यच्च नेति यच्चास्याः क्रूरं यदु चोल्बणिष्णु ।**
**तद्वियूया कवयोऽन्वविन्दन्नाममायत्ता समतृप्यञ्छ्रुतेऽधि ।।**

**यस्मिन् नामा समतृप्यञ्छ्रुतेधि तत्र देवाः सर्वयुजो भवन्ति ।**
**तेन पाप्मानमपहत्य ब्रह्मणा स्वर्गं लोकमप्येति विद्वान् ।।**

**भाष्यम्**

वियूय विचार्य नामायत्तान्येव नामार्थभूतान्येव विष्णोर्माहात्म्यादीन्यन्वविन्दन् । ततश्चाधिकं समतृप्यन् । श्रुते परिपक्वे सति ज्ञाने । यस्मिन् विष्णौ[१९६] नामानि ज्ञात्वा तस्मिन् ज्ञाने परिपक्वे समतृप्यन् तस्मिन्नेव देवाः सर्वयुजो भवन्तीत्यवधारणार्थं पुनर्वचनम् । सर्वयुजो भवन्ति मनोवाक्कर्मभिस्तत्रैव युक्ता भवन्ति ।

---

१९६. विष्णोः इति ह.पाठः

**‘अर्थतः कठिनं क्रूरमुल्बणं श्रवणाप्रियम्’ इति शब्दनिर्णये ।।**

**भावप्रदीपः**

‘यद्वाच ओमि’ति श्लोके दुर्गमत्वादुत्तरार्धमादौ व्याचष्टे– **वियूये-त्यादिना ।। महात्म्यं** महापरिमाणत्वं । आदिपदेनानन्दविज्ञानादि-गुणजातम् । **अन्वविन्दन्** व्यजानन् । ज्ञान इति शेषोक्तिः । ‘यस्मिन्नाम’ इत्यस्य व्याख्या– **यस्मिन्विष्णाविति ।। नामानि** नामार्थभूताति गुणकर्मादीनि च । ज्ञात्वेति शेषोक्तिः । तथा च सर्वाण्यपि शब्दजातानि विष्णोरेव नामानि तद्गुणकर्माद्यभिधायीनीति चेति ज्ञात्वेत्यर्थः । ‘नामायत्ता समतृप्यच्छृतेधि’ इत्युक्तमेव पुनर्यस्मि-न्नामेत्यनेन कुत उच्यत इत्यतस्तत्प्रयोजनमाह– **अवधारणार्थमिति ।। तत्र** तस्मिन्नेव । ‘देवाः सर्वयुजो भवन्ति’ इत्यवधारणार्थमुक्तार्थ-स्यानुदोऽयमिति भावः । ‘सर्वयुजो भवन्ती’त्यस्यार्थमाह– **सर्वयुज इति ।।** सर्वैः मनोवाक्कायकर्मभिर्युजो युक्ताः सर्वयुज इत्यर्थ इति भावः । सर्वेषामपि मनोवाक्कायकर्मभिर्युक्तत्वात् को विशेषो देवाना-मित्यतः– **पुनस्तत्रैवेत्युक्तम्** । विष्णुविषय एवेत्यर्थः । क्रूरोल्बणिष्णुशब्दयोरर्थभेदं प्रमाणेनैव दर्शयति– **अर्थत इति ।। श्रवणाप्रियं** शब्दतः कठिणमिति यावत् । यथा जर्भरीतुर्फरीत्यादि ।।

भगवतः स्त्रीत्वं वा? पुंस्त्वं वा ?

**उपनिषत्**

**नैनं वाचा स्त्रियं ब्रुवन्नैनमस्त्रीपुमान् ब्रुवन् ।**
**पुमांसं न ब्रुवन्नेनं वदन् वदति कश्चन ।।**

विभक्तिव्यत्ययः तात्पर्यद्योतकः

## भाष्यम्

**अस्त्री पुमान् ब्रुवन् अस्त्री पुमांसं ब्रुवन् ।'सप्तसु प्रथमा' इति सूत्रात् । 'स्वातन्त्र्ये विभक्तिव्यत्ययः' इति च । स्वतन्त्रो हि भगवान् तत्प्रेरित एव तं वदतीत्यभिप्रायः । वदन् वदति वदन्नेव वदति । वदन्नेव न वदति । भवत्येव हि भगवान् स्त्रीरूपः पुंरूपश्च । तस्माद् वदत्येव । अप्रसिद्धत्वान्न वदति च ।।**

## भावप्रदीपः

'नैनं वाचा' इति वाक्ये 'अस्त्रीपुमान् ब्रुवन्' इत्येतत्तावदनूद्य व्याचष्टे– **अस्त्रीति** ।। पुमानिति प्रथमायाः कथं पुमांसमिति द्वितीयार्थतेत्यतस्तत्र महाव्याकरणसूत्रं पठति– **सप्तस्विति** ।। प्रथमाविभक्तिः स्वेन सह सप्तविभक्त्यर्थेषु वर्तत इत्यर्थः । अथवा विभक्तिव्यत्यय एवायमित्यभिप्रेत्य तत्र निमित्तं वक्तुं सूत्रमेव पठति– **स्वातन्त्र्य इति** ।। चशब्दात्सूत्रादित्यनुषज्यते । स्वातंत्र्ये विवक्षिते विभिक्तिव्यत्ययो भवतीति तदर्थः । एतदेव विवृणोति– **स्वतन्त्रो हीति** ।। योऽस्त्रीपुमानित्युच्यते स भगवान् स्वतंत्रो हि । ब्रुवंस्त्व-स्वतन्त्रः । अत एवास्त्रीपुमानित्यत्रैव विभक्तिव्यत्यय इति भावः । अस्तु स्वतन्त्रः ततः किं प्रकृत इत्यतोऽभिप्रायमाह– **तत्प्रेरित एवेति** ।। 'वदन्वदती'त्येतदनूद्य व्याचष्टे– **वदन्निति** ।। य **एनं** विष्णुं वाचा स्त्रियं पुमांसं च वदन्वदति । स एनं स्त्रियं पुमांसं च वदत्येवेत्येवकारान्वयः । भगवतः स्त्रीत्ववादो वा पुंस्त्ववादो वा यथार्थ एव न मृषा भवतीति भावः । 'स्त्रियं पुमांसं चैनं वदन्न वदति' इत्येतद्व्याचष्टे– **वदन्नेव न वदतीति** ।। ब्रुवन्नित्यस्या-

र्थतोऽनुवादो– **वदन्निति** । अत एवास्त्रीपुमानिति ब्रुवन्नपीति वक्ष्यति । य एवं स्त्रियं पुमांसं च वदति स एव तथा न वदतीत्यप्युच्यत इत्यर्थः । एवकारो वक्तुरवक्तृत्वानौचित्यशङ्कासूचनार्थः । राजैव परिचरतीत्यादिवत् । उभयमपि क्रमेणोपपादयति– **भवत्येवेति** ।। तस्मात्तथा वदन्पुरुषो वदत्येव । स यथार्थवादी भवत्येवेति यावत् । **अप्रसिद्धत्वात्** प्रसिद्धलौकिकस्त्रीपुरुषवैलक्षण्यात् स्त्रियं पुमांसं वा एवं वदन्न वदतीति चोच्यत इत्यर्थः ।।

भगवान् न नपुंसकः

**भाष्यम्**

**स्त्रीरूपश्चैव पुंरूपो यस्मान्नारायणः स्थितः ।**
**पुमांस्त्री चेति वाच्योऽतो वैलक्षण्यान्न चोच्यते ।।**

**विष्णोर्नपुंसकाकारो नैवास्ति क्वचन प्रभोः ।**
**तथाप्यरागाकृष्टत्वात् तच्छब्दैरपि कथ्यते ।। इति गारुडे ।**

**भावप्रदीपः**

अत्र प्रमाणमाह– **स्त्रीरूप इति** ।। ननु भगवतः स्त्रीरूपवत् पुरुषरूपवच्च नपुंसकरूपमस्ति न वा? अस्तिचेद्दोषित्वम् । नास्ति चेत् नपुंसकशब्दवाच्यत्वानुपपत्तिरित्यतो द्वितीयपक्षमेवाङ्गीकृत्य तत्रोक्तामनुपपत्तिं परिहरति– **विष्णोरिति** ।। [१९७]स्त्रियां पुरुषे वा यथा नपुंसको रागाकृष्टो न भवति । एवं भगवानप्यरागाकृष्टत्वात् **तच्छब्दैर्नपुंसकशब्दै**रपि प्रतिपाद्यत इत्यर्थः ।।

---

१९७. स्त्रियां वा इति 'ख'पाठः

देवैः क्रियमाणो भगवद्रथोत्सवः

**भाष्यम्**

नारायणादिरूपेण पञ्चधैव[१९८] हरिः स्थितः ।
तन्नामभिश्च स्त्रीरूपैः समेति स्वैः स केशवः ।।

यत्स्यन्दनं वहन्त्येते देवा भार्यासमन्विताः ।
अधिदैवे तथाऽध्यात्मे जीवदेहात्मकं रथम् ।।

स सूर्यः सूर्यभार्या च चक्षुर्द्वयसमाश्रितौ[१९९] ।
वहतोऽश्वात्मकौ देहं नारायणरथात्मकम् ।।

सोमश्च रोहिणी चैव दक्षवामश्रुतिस्थितौ ।
उभयोः पक्षयोः स्थित्वा वहतोऽश्वात्मकौ तयोः ।।

उद्धारणार्थमेतेषामुमा वाचि समास्थिता ।
नागाकारैव रश्मित्वमगमद्वैष्णवे रथे ।।

मनःस्थितः[२००] शिवश्चात्र मनोनामा महाबलः ।
अभवत् सारथिर्विष्णोर्विष्णुर्वायुश्च तं रथम् ।।

प्रकृष्टानन्दरूपत्वात् प्राणाख्यावधितिष्ठतः ।
तावेव चाश्विनामानौ हयास्यौ जगदीश्वरौ ।। इत्यादि गारुडे ।

**भावप्रदीपः**

'यदक्षरं पञ्चविधं' इत्यादेरुक्तार्थं समाख्याप्रमाणेन द्रढयन्विशेषा-

---

१९८. पञ्चधैष इति ह.पाठः १९९. समास्थितौ इति ह.पाठः

२००. मनसि स्थितः इति ह.पाठः

र्थमपि तेनैव दर्शयति– **नारायणादीति** ।। **रूपेण** पुमात्मकेन हरिरेक एव पञ्चधा स्थित इत्यन्वः । **तन्नामभिः** नारायणादिनामयुक्तैः । 'युजो युक्ताः' इत्यस्यार्थो– **यत्स्यन्दनमिति** ।। युज इत्यस्यार्थो– **भार्यासमन्विता इति** । उपलक्षणमेतत् । स्त्रीपुंरूपेण च समन्विता इत्यपि ग्राह्यम् । अधिदैवे प्रसिद्धमेव स्यन्दनं अध्यात्मे च जीवदेहात्मकं रथं वहन्तीति योजना । अध्यात्मे भार्यासमन्विता जीवदेहाख्यरथं वहन्तीत्येतद्विशदयति– **स सूर्य इति** ।। योऽधिदैवेऽश्वो भूत्वा प्रसिद्धं रथं वहति स एव सूर्य इत्यर्थः । एवं 'स सोम' इत्यत्रापि । सूर्यभार्या संज्ञा । **अश्वात्मकाविति** ।। देहरथेऽश्वस्थानीयावित्यर्थः । [२०१]'इन्द्रियाणि हयान्याहु'रिति वचनात् । सूर्यादीनां चेन्द्रियाभिमानित्वात् । **श्रुतिस्थौ** श्रोत्रेन्द्रियस्थौ । **तयो**श्चक्षुरभिमानिनोः **उभयोः** संज्ञासूर्ययोः **पक्षयोः** पर्श्वयोः स्थित्वा वहतः । एतेन 'अथ देवरथस्तस्य' इति वक्ष्यमाणवाक्ये 'श्रोत्रे पक्षसी चक्षुषी युक्ते' इत्येतावद्व्याख्यातं भवति । 'अथ वागुद्धिः' इत्यस्यार्थमाह– **उद्धारणार्थमिति** ।। **एतेषां** चक्षुरद्यभिमानिनां **उद्धारणार्थं** तत्तत्कार्यप्रवर्तनार्थम् । एतेन **वाक्** वागभिमानिनी वक्स्थितोमा उद्धारणादुद्धिरिति व्याख्यातं भवति । एवमध्यात्मे व्याख्यायाधिदैवेऽपि व्याख्याति– **नागाकारैवेति** ।। उद्धारणार्थमित्यादिकं अत्रापि योज्यम् । एतेषामश्वरूपाणां सूर्यादीनामुद्धारणार्थमुमा वैष्णवे रथे नागाकारा सती **रश्मित्वं** रज्जुत्वमगात् । 'वाचि समास्थिता' इति तस्यां वाक्शब्दप्रवृत्तिनिमित्तकथनम् । एतेन **वाक्** वागभिमानिन्युमा **उद्धिः** अश्वोद्धारणरज्जुरिति व्याख्यातं भवति ।

---

२०१. काठ.भा. १-३-४

'मनःसंगृहीता' इत्यस्यार्थमाह– **मनःस्थित इति** ।। सारथिरिति संगृहीतृशब्दार्थः । 'तदयं प्राणोऽधितिष्ठति' इत्यस्यार्थद्वयमाह– **विष्णुर्वायुश्चेति** ।। नन्वत्र प्रणशब्देन विष्णुवायूभयविवक्षा कथं ज्ञायत इति चेत्, उक्तार्थे प्रमाणत्वेनोदाहरिष्यमाणे मन्त्रे 'आतेन यातं' इत्यादिद्विवचनश्रवणादिति ब्रूमः । न च तत्राश्विनेति श्रुतेरश्विनोरेव द्विवचनविषयत्वं प्रतीयत इति चेत्तत्राह– **तावेवेति** ।। विष्णुवायू एवेत्यर्थः । तत्राश्वशब्दप्रवृत्तिः कथमित्यत उक्तं– **हयास्याविति** ।। तथा चाश्वशब्देन तन्मुखं लक्ष्यते । तदनयोरस्तीत्यश्विनावुच्येते इत्यर्थः । एतेन 'प्राणोऽधितिष्ठती'त्युक्त्वा तत्राश्विमन्त्रोदारपणमसङ्गतमित्यपि निरस्तं वेदितव्यम् ।।

### सत्यस्य सत्यमिति भगवतः रहस्यं नाम

### भाष्यम्

**'तस्योपनिषत् सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्'**[२०२] **इति च श्रुतिः ।**

**सर्वसाधुगुणत्वात् तु वायुः सत्य इतीर्यते ।**
**तस्यापि सत्यतादाता साधुपूर्णगुणो हरिः ।।**

**सत्यस्य सत्य एतस्मात्...............।**

### भावप्रदीपः

'सत्यस्य सत्यं' इत्येतत्प्रागव्याख्यातत्वात् श्रुत्यैव तद्व्याख्याति– **तस्योपनिषदिति** ।। **तस्य** विष्णोस्**सत्यस्य** सत्यमित्युप-

२०२. बृह.उ. ४-१-२०

निषद्रहस्यन्नाम । कथं **प्राणाः** प्राणापानादिपञ्चमुख्यप्राणरूपविशेषाः सत्यमित्युच्यन्ते । तेषामपि **एषः** विष्णुः **सत्यं** सत्यतादातेत्यर्थः । श्रुत्यर्थं प्रमाणेन विशदयति– **सर्वेति ।। तस्य** वायोरपि **सत्यतादाता** सर्वसाधुगुणदाता । स्वयं च **साधुगुणपूर्णः** निरवधिकसाधुगुणः । अतः सत्यस्य सत्य उच्यत इत्यर्थः ।।

स्त्रीपुमात्मना भगवतो रमणम्

**भाष्यम्**

**...................... स्त्रीपुंरूप स केशवः ।**
**यस्मिन् स्वात्मनि युक्तः स रमते स्त्रीपुमात्मना ।।**

**मुनिगन्धर्वपित्राद्यैर्न तत्प्राप्यं कथञ्चन ।**
**आप्नुवन्ति[२०३] सुराः सर्वे तद्रूपं जाज्वलत् सदा ।।**

**अर्धनारीपुमाकारं तस्य वामस्थितानि च ।**
**स्त्रीरूपाणि तु सर्वाणि विष्णोरत्यद्भुतानि च ।।**

**विष्णोर्यानि तु पुंरूपाण्यास्थितान्यस्य दक्षिणे ।**
**तान्यस्यैव तु रूपाणि युज्यन्तेऽत्र परस्परम् ।।**

**भावप्रदीपः**

एवं 'सत्यस्य सत्य'मिति पदार्थमभिधाय वाक्यार्थमाह– **स्त्रीपुंरूप इति** ।। 'यत्रानुयुज्यते' इत्यस्यार्थो– **यस्मिन्स्वात्मनि युक्त इत्यादि** । देवा इति विशिष्योक्तेः प्रयोजनमाह– **मुनीति** ।। तत्र देवा इत्यस्यार्थ– **आप्नुवन्तीति** ।। अर्धनारीपुमाकारं

---

२०३. प्राप्नुवन्ति इति ह.पाठः

तद्रूपमित्यन्वयः । तस्यैव विवरणं– **तस्येति** । अयं भावः । अर्धनारीपुमाकारं समग्रमेकं मूलरूपं । तत्रानन्तानि रूपाणि स्थितानि । तेषु वामभागस्थितानि सर्वाणि स्त्रीरूपाणि दक्षिणस्थितानि पुरूषरूपाणीति, अयनुयुंज्यत इत्यस्यार्थः 'पस्परमनुरूपाणि न तु परिमाणादिना विषमाण्यस्य विष्णोस्तान्येव रूपाण्यत्र मूलरूपे परस्परं युंज्यते' इति ।।

मुक्तदेवानां रमणम्

**भाष्यम्**

**एष नारायणो देवो ह्यर्धनारीपुमात्मकः ।**
**सर्वे देवास्सभार्याश्च तं प्राप्य पुरुषोत्तमम् ।।**

**एकीभावं स्वभार्याभिरर्धनारीपुमात्मना[२०४] ।**
**प्राप्यैवोपासते विष्णुं मुक्ताः. संसारसागरात् ।।**

**मोदन्ते च रमन्ते च विभागं चेच्छयाप्नुयुः ।**
**बहुधा च भवन्त्येते स्त्रीपुमात्मापृथक्त्वतः ।।**

**प्रसादाद् वासुदेवस्य भागः स्त्रीपुंस्वरूपिणः ।**
**तेनैव नियता नित्यं तद्वशास्तत्परायणाः ।।**

**रमन्ते [२०५]नान्यगम्योऽसौ देशो विष्णोः परात्मनः ।।**

**भावप्रदीपः**

अर्धनारीपुमात्मकत्वमुपपादितमुपसंहति– **एष इति** ।। अर्ध-

---

२०४. नरीनरात्मना इति हृ.पाठः २०५. अन्यगम्यः इति हृ.पाठः

नारीपुमात्मको नारायणो देव एष एवंविध इत्यर्थः । तत्र 'देवाः सर्व एकं भवन्ति' इत्यस्योक्तमर्थमनूद्यार्थांतरं चाह– **सर्वे देवा इति** ।। तत्र तं प्राप्येत्युक्तार्थानुवादः । 'तत्र मिलिता भवन्ती'ति व्याख्या-तत्वात् । एकीभावमित्याद्यर्थान्तरम् । अर्धनारीपुमात्मना स्वभार्याभिः **एकीभावं** संश्लेषं प्राप्य विष्णुमुपासत इत्यन्वयः ।

इदमुक्तं भवति । स्वस्वभार्याणामर्धं नारीरूपं वामभागे कृत्वा स्वात्मनामर्धं पुरुषरूपं दक्षिणभागे विधाय तथाविधैरर्धनारीनररूपै-र्विष्णुमुपासत इति । 'एकं भवन्ती'त्येतदुपलक्षणमित्याशयेनोपासत इत्याद्युक्तम् ।

नन्वयं देवानां विष्णावेकीभावः सर्वदा चेद्बन्धरूप एव संपन्न इत्यत आह– **विभागं चेति** ।। अर्धनारीनरात्मकाद्विष्णुरूपादिति शेषः । स्वभार्याभिरर्धनारीपुमात्मनैकीभावोऽपि न सर्वदा । अत एषोऽपि न बन्धरूप इत्याह– **बहुधा चेति** ।। कथं **स्त्रीपुमात्मा पृथक्कृतः** स्त्रीपुमात्मनामर्धनारीनरत्वं प्राप्तानां सभार्याणां देवानां पृथक्कृतो विभागेनेत्यर्थः । नन्वयं विभागः स्वेच्छयैव चेन्मुक्तौ विष्ण्वनधीनत्वमेव प्राप्तमित्यत आह– **प्रसादादिति** ।। पूर्वेणैवा-न्वयः । एतदेव विशदयति– **तेनैवेति** ।। 'यत्र युज्यते तत्र' इत्यस्यार्थान्तरमिति सूचयन्नाह– **नान्यगम्य इति** ।। **यत्र** देशे भगवानर्धनारीपुमाकारेण विहरति **असौ** विष्णोर्देशोऽनान्यैर्मुनि-गन्धर्वाद्यैर्गम्यो न किन्तु देवैरेवेत्यर्थः ।।

सर्वशब्दवाच्यत्वोपासने देवानामेवाधिकारः

**भाष्यम्**

स्त्रीपुंरूपेण युक्तं [२०६]तद्विष्ण्वाख्यं परमक्षरम्[२०७] ।
अक्षरादेव परमात् पुंसो नारायणाभिधात् ।।
आगच्छन्ति तदैते[२०८] च देवा भार्यासमन्विताः ।
वहन्त्यश्वादिरूपेण रथस्थं परमं वपुः ।
तत्सर्वदेवैः प्राप्यं च नान्यैः कथमपि क्वचित् ।।
मितादिपश्नरूपं यद्वाक्यं लोकेऽथवा श्रुतौ ।
नारायणस्य नामैतदिति जानन्ति देवताः ।।
मनोवाक्कर्मभिस्तस्माद् योगमाप्स्यन्ति तत्र ते ।
सर्वशब्दान् हरौ नेतुं कस्य देवानृते बलम् ।।
वाय्वन्तास्तारतम्येन विष्णुनामार्थवेदिनः ।
सम्यग्वेत्ता मारुतोऽत्र तस्मान्मुक्तेभ्य एव च ।
सुरेभ्योऽधिकमानन्दं नित्यं भुङ्क्ते हरेरनु ।।

इत्याद्यर्धनारीनारायणतन्त्रे ।

**भावप्रदीपः**

एवं प्रथमं श्लोकं व्याख्याय 'यदक्षरात्' इति द्वितीयश्लोकस्य पूर्वार्धं व्याख्याति– **स्त्रीपुंरूपेणेति** ।। यदा पृथगागच्छंति तदा वहन्ति ।

---

२०६. यत् इति ह.पाठः २०७. पराक्षरम् इति ह.पाठः
२०८. तदेते इति ह.पाठः

अश्वादीत्यादिपदेन रश्म्यादिग्रहणम् । अत्रापि देवा इति विशाष्यक्तेः कृत्यमाह– **तदिति** ।। चशब्द एवार्थे । देवैरेवेति । **अन्यैः** मुनिगन्धर्वाद्यैः । 'यद्वाच ओमि'ति श्लोकतात्पर्यमाह– **मितादीति** ।। अत्र क्रूरोल्बणिष्णुशब्दा उपलक्षणमात्रम् । मितामितस्वरात्मकाः सर्वेऽपि शब्दा ग्राह्याः । तथा चोङ्कारनकारभ्यां सह मितामितादि-पञ्चरूपं यद्वाक्यं **लोके** पौरुषेयागमे अथवा श्रुतौ वर्तते एतत्सर्वं नारायणस्य नामेति देवा जानन्तीत्यर्थः । एतेन **कवयो** देवा-स्तत्सर्वमपि शब्दजातं विचार्य सर्वमप्येतत् नारायणनामैवेति ज्ञात्वा **नामायत्तनि** नामार्थभूतानि भगवन्महात्म्यादीनि व्यजानन्निति व्याख्यातं भवति । तत्र 'देवाः सर्वयुजो भवन्ती'त्यस्यार्थो– [२०९]**मनोवाक्कायकर्मभिरिति** । यस्माद्देवा एव सर्वमपि शब्दजातं विष्णुनामत्वेन जानन्ति तस्मात्ते देवा एव मनोवाक्कर्मभिर्विष्णौ योगमाप्स्यन्ति नान्य इत्यर्थः । तत्कुतो देवानामेवैवंभाव इत्यत आह– **सर्वशब्दानिति** ।। 'कवयोऽन्वविन्दन्' इत्यनेन प्राप्तां सर्वेषां देवानां ज्ञानसाम्यशङ्कां निराकरोति– **वाय्वन्ता इति** ।। चशब्दोऽप्यर्थे । मुक्तेभ्योऽपीति । एवशब्दस्याधिकमेवेति संबन्धः । नित्यं भुंक्ते । मुक्त्यनन्तरमिति शेषः । सुरेभ्योऽप्यधिकानन्दभगोक्त्या वायोः प्राप्तां हरिसाम्यशङ्कां वारयति– **हरेरन्विति** ।। हरिमनुसृत्यैव तत्प्रसादादिति यावत् ।।

**भगवानेव अकारवाच्यः**

**उपनिषत्**

**अः इति ब्रह्म । तत्रागतमहमिति ।**

---

२०९. मनोवाक्कर्मभिरिति 'ख'पाठः

अकारो विशेषतो नारायणवाचकः

**भाष्यम्**

**एवं सर्वे शब्दा भगवद्वाचका इत्युक्त्वा अकारो विशेषतो नारायणवाचक इत्याह– अः इति ब्रह्मेति ।।**

**इतिशब्दोऽभिधानान्ते यत्र वैशेषिकं हि तत् ।**
**नाम स्यादिति मे साक्षान्निर्णयः समुदाहृतः ।।**

**इति शब्दनिर्णये ।**

**तत्रागतमहमिति । यस्मात् 'अः' इत्ययं शब्दः प्रस्तुतस्य भावं विरोधिनमन्यं च वदति तस्मात् प्रत्यक्षत्वाज्जीवजडात्मकस्य जगत एवानुक्तावपि प्रस्तुतरूपत्वात् तदन्यस्तद्विरोधी तत्र दृश्यमानदोषवर्जितश्चाकारशब्दार्थ इति सिद्ध्यति । मनसि प्रस्तुतत्वादवचनेऽपि प्रस्तुतमेवेदं सर्वम् । दृष्टसम्बन्धित्वाददृष्टं सर्वमपि प्रस्तुतं भवति । भगवांस्तु अ इति पृथग्विवक्षितत्वादेव न प्रस्तुतसमुदाये ।।**

**भावप्रदीपः**

असङ्गतिशङ्कां पहिहर्तुं 'अः इति ब्रह्म' इति वाक्यमवतारयति– **एवमिति** ।। अत्र अः ब्रह्मेत्येतावता पूर्ताविति शब्दः किमर्थ इत्यत आह– **इतीति** ।। **यत्र** वाक्येऽ**भिधानस्य** नाम्नोऽन्ते इति शब्दः स्यात् **तत्र** वाक्ये तन्नाम **वैशेषिक**मितरनामभ्यो विशिष्टं नाम विवक्षितमिति निर्णयो **मे** मया साक्षादेव समुदाहृत इत्यर्थः । अश्रद्धेयत्वनिरासाय म इत्युक्तिः ग्रन्थकर्तुर्बादरायणस्यैव । 'इति मे निश्चिता मतिः'[२१०] इत्यादिवत् । 'तत्रागतमहं' इत्येतत् प्रकृत-

२१०. भाग. ७-१-२८

सङ्गततया व्याख्यातुं तदनूद्य तदुपयुक्तमकारार्थं तावदाह– **तत्रागतमिति** ।। यस्माद्वदति तस्मात्तदन्यस्तद्विरोधीत्यादि सिद्ध्यतीत्यन्वयः । **तदन्यो** जगदन्यः । **तद्विरोधी** जगद्विरुद्धधर्मवान् । **तत्र** जगति । **अकारशब्दवाच्यः** अकाराख्यशब्दवाच्यः । ननु घटान्यः पट इत्यादौ घटस्य घटपदेनोक्तत्वात्तत्प्रतियोगिकान्यत्वादिकं पटस्य बोद्धुं शक्यम् । प्रकृते त्वकारे जगद्वाचकपदस्याभावत्कथं तत्प्रतियोगिकान्यत्वादिबोध इत्यत उक्तम्– **जगतोऽनुक्तावपि प्रस्तुतत्वादिति** ।। ननु कथमनुक्तस्य प्रस्तुत्वमित्यतः– **प्रत्यक्षत्वज्जीवजडात्मकस्येति** । जीवा हि स्वप्रकाशत्वात्तत्तत्प्रत्यक्षसिद्धाः । जडानि तु सर्वेषां प्रत्यक्षयोग्यान्येवेति । प्रत्यक्षत्वेऽपि जीवजडात्मकस्य जगतः शब्देऽनुक्तस्य कथं प्रसक्तत्वमित्यतः प्रस्तुतत्वादिति वक्तव्ये **प्रस्तुतरूपत्वादित्युक्तम्** । प्रस्तुतप्रायत्वादित्यर्थः । ननु जगत इव भगवतोऽपि कथंचित्प्रस्तुतत्वस्य शक्यसंपादनत्वादिकमकारेण जगतोऽपि वक्तुं शक्यमित्यतो **जगत एवे**त्यवधारणोक्तिः । युक्तिं तूत्तरत्र वक्ष्यति ।।

प्राग्जगतः शब्देऽनुक्तस्यापि प्रत्यक्षप्राप्तत्वेन प्रस्तुतप्रायत्वात् प्रस्तुतत्वमित्युक्तम् । इदानीं मुख्यत एव प्रस्तुत्वमस्तीति भावेन तदुपपादयति– **मनसीति** ।। वक्तृश्रोत्रमनसि परिवर्तमानं हि साक्षात्प्रकृतमित्युच्यते । शब्दोक्तत्वं तु तल्लिङ्गतयैव तथा । इदं च जीवजडात्मकं जगत्सर्वेषां प्रत्यक्षत्वान्मनसि प्रस्तुतमेव । अतः शब्देऽवचनेऽपि मुख्यत एव प्रस्तुतमित्यर्थः । ननु प्रत्यक्षयोग्यस्य जगतः प्रस्तुत्वसंभवेऽपि न सर्वस्य । स्वर्गापूर्वादिरदृष्टस्य प्रस्तुत्वायोगादित्यत आह– **दृष्टसंबन्धित्वादिति** ।। सर्वमप्यदृष्टं दृष्टेनैव

यागादिना सिद्ध्यतीति दृष्टसंबन्धित्वत् तदपि प्रस्तुतप्रायमित्यर्थः । नन्वेवं सति भगवानपि दृष्टसंबन्ध्येव । दृष्टे सर्वत्र व्याप्तत्वात् । अतस्तस्यापि प्रस्तुतत्वप्राप्त्या तदन्यत्वादिबोधोऽप्यकारेण स्यादित्यत आह– **भगवांस्त्विति** ।। अ इत्यनेन **पृथक्** प्रस्तुतदृष्टादृष्टजगद्विलक्षणत्वेनैव 'अः इति ब्रह्मे'त्यादौ विवक्षित्वान्न प्रस्तुतसमुदाये प्रवेशमर्हति । अतोऽकारेण न भगवदन्यत्वादिबोधस्यावकाश इत्यर्थः ।।

शून्यस्य अकारवाच्यत्वनिराकरणम्

**भाष्यम्**

**न च शून्यस्याशब्दार्थता । शून्याङ्गीकारे ह्यकारस्याभावताख्य एक एवार्थ इति सिद्ध्यति । विष्णोरङ्गीकारे त्वभावताऽन्यता विरोधितेति त्रयोऽप्यर्थाः सम्यगेव सिद्ध्यन्ति । तस्मादकारस्य भगवानेव मुख्यार्थो न शून्यम् । एकदेशार्थत्वात् । तस्मादमुख्यार्थत्वादन्ययुक्तेनैवाकारेणाभाव इति[२११] तदुच्यते न तु अ इत्येव केनचित् कचित् । न च तथा प्रयोगोऽस्ति । तस्मात् पारतन्त्र्याल्पगुणत्वादिसर्ववस्तुस्वभावविरुद्धस्वभावं स्वतन्त्रं पूर्णगुणं सर्वजीवजडेभ्यो अन्यदज्ञानदुःखाल्पत्वपारतन्त्र्योत्पत्तिनाशादिसर्वदोषविवर्जितं[२१२] ब्रह्मैवाशब्दार्थः । पूर्णं हि ब्रह्मशब्दस्यार्थः । न च दोषयुक्तस्य पूर्णता । न च जीवजडाद्यपूर्णवस्त्वभिन्नस्य पूर्णत्वं भवति । तस्मादकारशब्दार्थ एव ब्रह्मशब्दार्थः । तदेतदुक्तं 'अः इति ब्रह्म' इति ।।**

---

२११. इत्येव इति ह्.पाठः

२१२. दोषवर्जितं इति ह्.पाठः

## भावप्रदीपः

ननु 'अः इति ब्रह्मे'त्येव कुतः । अत्यन्ताभावप्रतियोगिनोऽसतः शशविषाणादेर्वा अत्यन्ताभावस्यैव वाऽशब्दर्थतासंभवात् । अकारार्थभूतप्रतिषेधात्मत्वस्य तत्रापि सत्वात् । असतः प्रतिषेधप्रतियोगित्वात् । अभावस्य च स्वयं प्रतिषेधरूपत्वादित्यत आह– **न चेति** ।। **शून्यस्य** असतोऽत्यन्ताभावस्य वेत्यर्थः । कुतो नेत्यत आह– **शून्याङ्गीकार इति** ।। अकारवाच्यतया शून्यस्याङ्गीकारेऽकारस्यार्थत्रयमध्येऽभावाख्य एक एवार्थ इति **सिद्ध्यति** प्राप्नोति न त्वर्थत्रयमित्यर्थः । विष्णोरकारवाच्यतयाङ्गीकारेऽपि नेदं दूषणमित्याह– **विष्णोरिति** ।। **सम्यगेव** अकारमुख्यार्थपूर्णत्वोपपादकत्वेनैव न तु यथाकथंचित् । एतच्चोपपादयिष्यते । निगमयति– **तस्मादिति** ।। अर्थत्रयस्याप्युपन्नत्वादित्यर्थः । **शून्य**मसदभावो वा । नन्वेकदेशार्थत्वेऽपि शून्यस्याकारार्थत्वमुपपन्नमेव । भेकस्य पंकजशब्दार्थत्ववत् । पंकजशब्दस्य हि पद्मत्वं पंकजनिकर्तृत्वं चेति द्वे प्रवृत्तिनिमित्ते । तत्र तामरसे द्वयमपि । भेके तु द्वितीयमेकमेव । नैतावता भेकस्य पंकजशब्दार्थत्वं नास्तीति वक्तुं शक्यते इति चेन्न । शून्येऽकारमात्रप्रयोगस्यैवाभावात् । सति हि प्रयोगे एकदेशार्थरूपस्यापि वाच्यत्वमङ्गीकार्यम् । भेके तु पंकजशब्दस्य रूढ्यभावेऽपि योगेन प्रयोगोऽस्त्येव । न च तथा शून्येऽकारप्रयोगोऽस्ति । येन तद्वाच्यत्वं प्रतीम इत्याशयेनाह– **तस्मादिति** ।। एकदेशार्थत्वेन शून्यस्यामुख्यार्थत्वादकारमुख्यार्थाभावादेव तच्छून्यमन्य**युक्तेन** भावशब्दयुक्तेनैवाकारेणाऽभाव इत्येवोच्यते न तु अ इति केवलाकारेण **केनचित्** पुरुषेण **क्वचिदपि** काले वाक्ये वोच्यत इत्यर्थः । तत्कथं

निश्चीयत इति तत्राह– **न च तथेति** ।। अस्तु तदन्यत्वाद्यर्थ-त्रयवानेवाकारवाच्यस्तथापि किं प्रकृत इत्यत आह– **तस्मादिति** ।। अर्थत्रयोपेतत्वादित्यर्थः । तदेवार्थत्रयं विवृणोति– **पारतन्त्रेत्यादिना** ।। विरुद्धस्वभावमित्युक्त्या लब्धमर्थमाह– **स्वतन्त्रं पूर्णगुणमिति** ।। पारतन्त्र्याल्पगुणत्वविरोधित्वं स्वातन्त्र्यगुणपूर्णत्वयोरेवेति । सर्वकर्तृत्वादेरप्युपलक्षणमेतत् । अत एवाल्पगुणत्वादिति पूर्वमल्प-कर्तृत्वादिसङ्ग्रहार्थमादिपदोपादनम् । एतेन 'अः इति ब्रह्मे'त्यस्य अ इति नाम्ना वाच्यं ब्रह्मैवेत्यर्थ उक्तो भवति । ब्रह्मण एवाशब्दवाच्यत्वे ब्रह्मशब्दाशब्दयोरेकार्थत्वरूपं युक्त्यन्तरमाह– **पूर्णं हीति** ।। एतावता तद्विरुद्धस्वभावत्वरूपैकार्थलाभोऽपि कथमर्थान्तरद्वयलाभः । येनोभयोः समानार्थकता स्यादित्यतः क्रमेण तदुभयमप्युपपादयति– **न चेति** ।। तथा च ब्रह्मशब्दस्य पूर्णमात्रवाचित्वेऽपि निर्दोषित्व-जगद्भिन्नत्वयोः पूर्णत्वव्यापकत्वाद्व्याप्यसत्वे व्यापकसत्वनियमात् त्रयमपि साक्षादर्थाद्वा ब्रह्मशब्दार्थ एवेत्यकाराख्यशब्दार्थ एव ब्रह्मशब्दार्थ इत्यर्थः । तथा च ब्रह्मैवाशब्दवाच्यमित्याशयः । उभयोस्समानार्थत्वं स्वोपपादितं मूलारूढं करोति– **तदेतदिति** ।।

### सन्ध्यकरणे प्रयोजनकथनम्

### भाष्यम्

**अः इति पृथक्त्वेन वचनं तत्सममधिकं वा किमपि नास्तीति दर्शयितुम् ।**

**विवृतावपि[२१३] सर्गः स्यात् संहितायां च यत्र हि ।**

**समानोत्तमहीनत्वमुच्यते वस्तुनोऽञ्जसा ।।** इति शब्दनिर्णये ।

२१३. विवृत्तावपि इति ह.पाठः

**अः इति ब्रह्म पूर्णं वस्तूच्यते । तत्रागतमहमिति । तत्राकारस्य पूर्णवाचित्वेऽहमेव सोकारवाच्य इत्याह महिदासरूपो भगवान्नारायणः । अहमेक एव[२१४] परिपूर्णः । अन्येषां सर्वेषां मदधीनत्वादल्पत्वादिति ।।**

**भावप्रदीपः**

नन्वत्र अः इति स्थिते विसर्गस्य सकारे 'ससजुषो रुः'[२१५] इति तस्य रुत्वे 'भो भगोऽघोऽपूर्वस्य योऽशि'[२१६] इति यादेशे 'लोपः शाकल्यस्य'[२१७] इति 'यस्येति'[२१८] यस्य लोपे अ इतीति वाच्ये कथं अः इतीति सविसर्गनिर्देश इत्यत आह– **अः इतीति ।। पृथक्त्वेन** अविलुप्तविसर्गकत्वेन । **तत्समं** अकारवाच्यब्रह्मसमं ततोऽधिकं वा । अत्रार्थे प्रमाणमाह– **विवृताविति ।। यत्र** वाक्ये, न केवलं पदकाले किन्तु संहितायां च विवृतावपि **सर्गः** विसर्गः स्याच्चेत्तत्र **वस्तुनः** विसर्गपदवाच्यवस्तुनोऽञ्जसा समानोत्तमहीनत्वमुच्यत इत्यर्थः ।।

एवं 'अः इति ब्रह्मे'ति वाक्यं व्याख्याय तदर्थानुवादपूर्वकं 'तत्रागतमह'मिति वाक्यमनूद्य पूर्ववाक्यसङ्गतत्वेन व्याचष्टे– **अः इति ।।** पूर्णवाचित्वे उक्तरीत्या सिद्धेऽहमेव सोऽकारवाच्य इत्यागतं लब्धमित्यर्थ इति भावः । भगवद्वाक्यत्वादस्य अहमित्यस्मच्छब्द-

---

२१४. एव हि इति ह.पाठः

२१५. पा.सू. ८-२-६६,सि.कौ.सू.सं. १६२

२१६. पा.सू. ८-३-१७, सि.कौ.सू.सं. १६७

२१७. पा.सू. ८-३-१९,सि.कौ.सू.सं ६७

२१८. पा.सू. ६-४-१४८ सि.कौ.सू.सं. ३११

प्रयोगो युज्यत इति भावेनोक्तम्– **इत्याह महिदासरूपो भगावान्नारायण इति** ।। अकारस्य पूर्णवस्तुवाचित्वेऽपि कथं तवैवाकारवाच्यत्वलाभ इत्यतस्तदुपपादयति– **अहमेक एवेति** ।। तत्र हेतुरन्येषां **सर्वेषामल्पत्वादिति** । अल्पत्वे हेतुः **मदधीनत्वादिति** ।।

सन्ध्यकरणे निमित्तान्तरकथनम्

**भाष्यम्**

मुक्तेभ्यः प्रलये[२१९] लीनेभ्यश्च सर्ववस्तुभ्यः सदा[२२०] विभिन्न एव भगवानिति दर्शयितुं च अः इति पृथग्वचनम् । तच्चोक्तं वाक्यनिर्णये –

मुक्ता अपि न विष्णुत्वं यान्ति तत्समतामपि ।
आधिक्यं कुत एव स्यान्मुक्तानां मुक्तिदातृतः ।।

कुत एव प्रलीनानां प्रलये[२२१] तु तदात्मता ।
ब्रह्मशर्वेन्द्रपूर्वाणां मुक्तावपि न विष्णुता ।।

यदा तदा तु संसारे क्व तद्रूपत्वमिष्यते ।
अन्योऽसौ सर्वतो विष्णुः स्वातन्त्र्याद् गुणपूर्तितः ।।

सर्ववस्तुस्वभावस्य विरुद्धोरुस्वभावकः[२२२] ।
पारतन्त्र्याल्पताज्ञानजनिनाशादिवर्जितः ।।

---

२१९. प्रळये इति ह्.पाठः
२२०. प्रळये इति ह्.पाठः
२२१. सर्वदा इति ह्.पाठः
२२२. स्वभावतः इति ह्.पाठः

**अकारेण ततो विष्णुः संहितायां पदात्मना ।**
**बह्वृचोपनिषत्प्रोक्तस्तेनैव परमात्मना ।।**

**महिदासावतारेण सोऽहमेवंविधस्त्विति ।**
**मत्तोऽन्यो न हि पूर्णोऽस्ति यतोऽकारश्च पूर्णताम् ।**
**वक्ति तस्मादकारोऽयं मामेव वदति स्फुटम् ।।**

**भावप्रदीपः**

अः इति पृथुग्वचनस्य प्रयोजनान्तरमाह– **मुक्तेभ्य इति** ।। अत्र प्रमाणमाह– **तच्चोक्तमिति** ।। समतामपि न यान्ति । **मुक्तिदातृतः** मुक्तिदातुर्नारायणात् । दातृप्रतिग्रहीत्रोर्दातुरेवाधिक्यनियमात् । **तदात्मकता** विष्ण्वात्मकता त्वित्यन्वयः । अल्पचेतनानां तदात्मताऽसंभवेऽपि ब्रह्मादीनां सा किं न स्यादित्यत आह– **ब्रह्मेति** ।। अत्र ब्रह्मादीनामपि मुक्तावपि विष्णुतादात्म्याप्राप्तिकथनेन अः इति पृथग्वचनस्य भगवतः सर्ववस्तुभ्यः सदा विभिन्नत्वज्ञापनं प्रयोजनमिति यदुक्तं तत्प्रमापितं भवति । साम्याधिक्यप्रतिषेधेन तत्सममधिकं वा किमपि नास्तीति दर्शयितुमिति यत्प्रागुक्तं तदपि प्रमापितं बोध्यम् । यद्यपि इदं शब्दनिर्णयवचनेनैव प्रमापितम् । तथापि तत्सामान्यवचनमिति विशेषप्रमाणोदाहरणमिदम् । 'क्व तद्रूपत्वमिष्यते' इत्यनन्तरं मत इति शेषः । अतो विष्णुस्सर्वतोऽन्य इति संबन्धः । अकारस्यार्थत्रयेऽयमेकोऽर्थः । स्वातंत्र्यादित्यादि द्वितीयः । पारतन्त्र्येत्यादिस्तृतीयः । यतो विष्णुरेवंविधस्ततः सः विष्णुः **तेनैव** महिदासावतारेण परमात्मना, संहितायामेव **पदात्मना** सविसर्गेणेति यावत् । अः इत्यकारेण

**बह्वृचोपनषदि** ऐतरेय्यां 'अः इति ब्रह्मे'ति प्रोक्त इत्यन्वयः । इममेवार्थं 'तत्रागतमह'मिति वाक्यव्याख्यानव्याजेन विशदयति– **सोऽहमिति** ।। इतिशब्दस्योपरि संबन्धः ।।

अभावस्य अकारवच्यत्वनिराकरणम्

**भाष्यम्**

**नाभाववाच्यकारः स्यादर्थत्रययुतो यतः ।**
**एकार्थात्मा ह्यभावः स्यान्निषेधैकस्वरूपतः ।।**

**अन्यता च निषेधश्च विरुद्धत्वमिति त्रयः ।**
**अकारार्था ह्यभावस्तु निषेधैकस्वरूपतः[२२३] ।।**

**एकदेशस्वरूपत्वान्नाकारेणैव भण्यते ।**
**किन्त्वभाव इति त्वेव तेनाकारोदितो हरिः ।। इति ।**

**न च निषेधस्वरूपे[२२४] विरुद्धता चान्यता चास्तीत्येतावता पूर्णार्थता भवति । तदार्थत्रयकल्पनस्य[२२५] वैयर्थ्यात् । उक्तं हि शब्दनिर्णये–**

**विरुद्धता निषेधान्यभावयुक्ते[२२६] हि केवलः ।**
**अकारो वर्तते तेषामेकार्थात्मन्यभावके ।**
**वर्ततेऽभाव इत्येव न त्व इत्येव केवलः ।। इति ।**

**तस्मान्नारायणः एवाकारवाच्य इति सिद्धम् ।**

---

२२३. स्वरूपकः इति ह.पाठः

२२४. निषेधरूपे इति ह.पाठः

२२५. कथनस्य इति ह.पाठः  २२६. युक्तो इति ह.पाठः

**भावप्रदीपः**

'मामेव स्फुटं वदती'ति तेनैव परमात्मना विष्णुः प्रोक्त इत्यकारस्य शून्यार्थकत्वं नेत्याद्युक्तम् । तदपि प्रमाणशेषेण द्रढयति– **नाभावेति** ।। **अभाववाची** अभवनवाची अभावप्रतियोगिवाची चेत्यर्थः । (**निषेधैकस्वरूपतः** केवलप्रतिषेधस्वरूपत्वात् तत्प्रतियोगिस्वरूपत्वाच्चेत्यर्थः)[२२७] अकारोऽर्थत्रययुक्त इत्याद्युक्तमेव विशदयति– **अन्यता चेति** ।। अभावस्तु निषेधैकस्वरूपक इत्येतदपि पूर्ववदुभयपरत्वेन व्याख्येयम् । उपसंहति– **तेनेति** ।। **हरिर्हरिरेव** ।।

नन्वसदभावो वा निषेधैकस्वरूपक इति कथं युज्यते । सद्विरोधित्वतदन्यत्वयोरसति भावविरोधित्वतदन्यत्वयोरभावे च सत्वात् । तथा चाकारस्यासदाद्यर्थकत्वाङ्गीकारेऽप्यर्थत्रयाहानेः कुतो हरिरेवाकारोदित इत्यवधार्यत इत्याशङ्क्य निषेधति– **न चेति** ।।

अयं भावः । अकारस्य पूर्णता हि मुख्यार्थः । तदर्थमेवान्यताद्यर्थकल्पनम् । अन्यथा तस्य व्यर्थत्वात् । विष्णौ तु पूर्णत्वसद्भावात् त्रयोऽप्यर्था अकारस्य तदुपपादकतया सम्यगेव सिध्यंति । असदादौ तु पूर्णत्वाभावात् तत्र सदादिविरुद्धत्वान्यत्वयोः सद्भावेऽपि न तयोः पूर्णत्वोपपादनोपयोगिता । तस्मादकारवाच्यः पूर्णो हरिरेक एव नान्यदिति ।।

उक्तार्थे प्रमाणमाह– **उक्तं हीति** ।। **केवलः** पदान्तराघटिताकारो विरुद्धताद्यर्थत्रययुक्ते वस्तुन्येव वर्तते । **तेषां** अर्थानां मध्ये **एको** यो निषेधरूपोऽर्थः **तदात्मन्यभावके**ऽसदादौ अभाव इति भावपद-

---

२२७. ()चिह्नस्था पंक्तिः 'क'पाठे नास्ति

घटिततयैव वर्तते न तु **केवलस्तदघटितः** । तस्यैव शृङ्गिग्राहिकया प्रदर्शनम्– **अ इत्येवेति** ।। अतोऽर्थत्रययुक्तो हरिरेव केवलाकार-वाच्य इत्यर्थः । उपसंहृति– **तस्मादिति** ।।

**अकारव्याख्यानभूतोङ्कारस्य भगवद्वाचकत्वसमर्थनम्**

**भाष्यम्**

**यतोऽकारः सदा विष्णोर्वाचकत्वेन संस्थितः ।**
**तस्माद्वर्णत्रयात्माऽयं प्रणवोऽपि त्रयात्मकम् ।।**

**हरिमेव सदा वक्ति न वान्यं[228] कश्चन कचित् ।**
**सृष्टिकर्ता ब्रह्मनामा योऽसृजच्चतुराननम् ।।**

**अन्तर्यामी विरिञ्चस्य सोऽकारार्थो जनार्दनः ।**
**वैकुण्ठलोक आस्ते स द्वितीयवपुषा हरिः ।।**

**उकारवाच्यः स विभुर्नृसिंहो रुद्रनामकः ।**
**रौद्रत्वात् स शिवस्यापि स्रष्टा संहारकारकः ।।**

**अन्तर्यामी शिवस्यापि मकारार्थः प्रकीर्तितः ।**
**एवं त्रियात्मकं[229] विष्णुं प्रणवोऽयं त्रियात्मकः ।।**

**एवं[230] पृथगिवाचष्टे बिन्दुर्वक्त्यनिरुद्धकम् ।**
**प्रद्युम्नाद्यान्नादपूर्वाः सर्वान्नारायणात्मकान् ।।**

**पद्मनाभादिका एव मूर्तीर्नारायणोत्तराः ।**
**प्रणवोऽयं वदत्यष्टौ तस्मान्नान्याभिधायकः ।।** इति तत्त्वसारे ।

---

२२८. नैवान्यं इति ह्.पाठः  २२९. त्र्यत्मकं इति ह्.पाठः
२३०. एकं इति पाठान्तरम्

## भावप्रदीपः

भगवद्वाचकसर्वशब्देषु यथाऽकारो मुख्य एवमोङ्कारोऽपि तद्व्याख्यानरूपस्तदनन्तरमुख्यो मन्तव्यः । अत एव 'यद्वाचा ओं' इत्यत्रोङ्कारस्यैव प्रथमोपादानमभिप्रेत्य प्रसङ्गात्प्रमेयविशेषमपि दर्शयिष्यन् प्रमाणमेवोदावुदाहरति– **यतोऽकार इति** ।। तस्मादित्यनन्तरं तद्व्याख्यानरूप इति पूरणीयम् । अन्यथाऽप्रयोजकत्वापत्तेः । त्रयात्मकं हरिमित्युक्तमेव विविच्य दर्शयति– **सृष्टिकर्तेति** ।। वैकुंठलोक आस्त इत्यनेन तस्य वैकुंठनामकत्वं सूचयति । **स** वैकुंठगतो **विभुः** वैकुंठनामा हरिरुकारवाच्यः । **रौद्रत्वात्** उग्रत्वात् नृसिंहो रुद्रनामकः । **स** नृसिंहः शिवस्य स्रष्टा सर्वस्य संहारकश्च । अपिशब्दास्समुच्चये । न केवलं स्रष्टा संहारकारकश्च किन्तु शिवस्यान्तर्याम्यपि । शिवस्यैव सर्वान्तर्यामित्वमिति वादिप्रवादनिरासाय- **स शिवस्ये**त्युक्तिः । स एव मकारार्थः । उपपादितं त्रिमूर्तिप्रतिपादकत्वं निगमयति– **एवमिति** ।। एकमेव **पृथक्** भिन्नमिवाचष्टे । ओङ्कारस्याष्टवर्णात्मकत्वेनोर्वरितवर्णानां प्रतिपाद्यमूर्तीराह– **बिन्दुरिति** ।। **नादपूर्वाः** नादघोषशान्तातिशान्ताः **प्रद्युम्नाद्यान्** नारायणोत्तरान् प्रद्युम्नसङ्कर्षणवासुदेवनारायणान् । एवमष्टमूर्तिप्रदिपादकत्वमुक्तमुपसंहति– **पद्मनाभेति** ।। अन्येषां सप्तरूपाणामसाधारणनामभिर्निर्दिष्टत्वात् सृष्टिकर्तृब्रह्मजनकरूपस्याप्यसाधारणनामज्ञापनार्थं **पद्मनाभादिका** इत्युक्तम् । प्रणवस्य विश्वाद्यष्टमूर्तिप्रतिपादकत्वस्याप्यन्यत्रोक्तत्वात्कथं पद्मनाभादिका एवेत्यवधारणमित्यतोऽवधारणव्यावर्त्यं दर्शयति– **तस्मादिति** ।। भगवन्मूर्तीनामेव प्रतिपादकत्वाद्भगवदन्याभिधायको नेत्यर्थः ।।

बृहतीसहस्रस्य पुरुषायुषश्च सङ्ख्यापरिमाणनिरूपणम्

उपनिषत्

**तद्वा इदं बृहतीसहस्रं सम्पन्नम् । तस्य वा एतस्य बृहतीसहस्रस्य सम्पन्नस्य षट्त्रिंशतमक्षराणां सहस्राणि भवन्ति । तावन्ति पुरुषायुषोऽह्नां सहस्राणि भवन्ति । जीवाक्षरेणैव जीवाहराप्नोति, जीवाह्ना जीवाक्षरमित्यनकाममारः ।**

भगवतः स्त्रीपुंरूपयोः रमणलीलानिरूपणम्

भाष्यम्

षट्त्रिंशतिसहस्राणि बृहत्युक्थार्णगानि तु ।
स्त्रीरूपाणि हरेस्तावदह्नामप्यभिमानिषु ।।

सूर्यरूपेषु रूपाणि पुमाकाराणि सर्वशः ।
एतैः पुरुषगैः रूपैर्बृहत्युक्थ[२३१]व्यवस्थितैः ।।

कदाचिद् भगवान् विष्णुः पुमाकाराणि तानि च ।
कृत्वा सूर्यगतान्येव स्त्रीरूपाणि विधाय च ।।

तान्याप्नोति च पुंरूपैस्तैरेवाक्षरगानि च ।
स्त्रीरूपाणि जगन्नाथः प्राप्नोत्यात्मेच्छया प्रभुः ।।

पुंरूपप्रमदारूपस्वरूपैः रमते स्वयम् ।
एकीकृत्य च तान्येव द्विरूपो रमते तथा ।।

---

२३१. बृहदुक्थ इति ह.पाठः

**स एव रमते [२३२]मायां स्थितात्मस्त्रीतनौ हरिः ।**
**प्राणस्योत्पत्तिकामः सन्ननेच्छामारनामकः ।।**

**[२३३]इत्यर्धनारीनारायणतन्त्रे ।**

**भावप्रदीपः**

'तस्य वा एतस्य' इत्यारभ्य 'जीवाक्षरं' इत्यन्तं वाक्यं व्यचष्टे– **षट्त्रिंशतीति** ।। तावदित्यव्ययम् । **तावंति** षट्त्रिंषत्सहस्राण्येव । जीवाक्षरेणेत्यादेर्व्याख्यानमेतैः **पुरुषगै रूपैरित्यादि** । बृहत्युक्थस्य शंसितृपुरुषगतत्वाद्बृहत्युक्थव्यवस्थितैः **पुरुषगतै रूपैरित्युक्तम्** । एतै रूपैस्**तानि** सूर्यगतरूपाण्याप्नोतीति संबन्धः । ननु कथं स्त्रीरूपैः पुंरूपाभिगमनमुच्यते । लोके पुंसामेव स्त्रीगमनोक्तेः प्रसिद्धत्वादित्यतस्तद्घटयितुमुक्तम्– **कदाचिदित्यादि** ।। **तानि** बृहत्युक्थस्थितरूपाणि सूर्यगतानि पुंरूपाणि । 'अथ जीवान्हा जीवाक्षरं' इत्यस्य व्याख्यानम्– **पुंरूपैरित्यादि** । अहरभिमानिसूर्यगतपुंरूपैरित्यर्थः । किं कर्मवशादेवंभावस्तस्येत्यतो नेत्याह– **आत्मेच्छयेत्यादि** ।। एतेनेतिशब्दस्यात्मेच्छया रमत इत्यध्याहृतेनान्वयमभिप्रैति । 'षट्त्रिंशतमक्षराणां सहस्राणि भवन्ती'त्याद्युक्त्वा 'ज्जीवाक्षरेण' इत्याद्येकवचनं समुदायापेक्षमित्यभिप्रेत्यैतैः पुरुषगै रूपैरित्यादिबहुवचनान्तैः पदैः प्राग्व्याख्यातम् । इदानीमेकवचनं तेषामेव रूपाणां पुनरेकीकरणाभिप्रायेणेत्यभिप्रेत्य व्याचष्टे– **एकीकृत्येति** ।। 'अनकाममारः' इत्येत्पदं व्याचष्टे– **स एवेति** ।। अत्र मायां रमत इत्येव वक्तव्ये तत्र स्थितात्मस्त्रीतनावित्यधिकोक्तिस्तत्वरहस्यज्ञापनार्थं अतो नेच्छामारनामकोऽनकाममार इत्युच्यत इत्यर्थः ।।

---

२३२. मायास्थित इति ह्.पाठः २३३. इत्याद्यर्ध...इति ह्.पाठः

अनकाममारशब्दार्थनिरूपणम्

**भाष्यम्**

**वायोरुत्पत्तिकामो मायां रमायां रमत इत्यनकाममारः । जीवस्थितेनाक्षरगेनाक्षरनाम्ना स्वरूपेण जीवाख्यसूर्यस्थितमहराख्यं स्वरूपमाप्नोति तेन चाक्षराख्यं स्वरूपमाप्नोति । 'यदक्षरादक्षरमेति युक्तं' इत्यस्य व्याख्यानरूपत्वाच्चैतदवसीयते । पुमांसं स्त्रियं च वदन्नेव न वदतीत्युक्तत्वादुभयात्मकं रूपं प्रतीयते । अस्त्रीपुमानिति ब्रुवन्नपि न वदतीत्युक्तत्वाच्च स्त्रीत्वं पुंस्त्वं च प्रतीयते विष्णोः ।।**

**भावप्रदीपः**

इदमेव स्पष्टत्वार्थं पुनः स्ववाक्येन व्याचष्टे– **वायोरिति** ।। 'जीवाक्षरेणैव जीवाहाराप्नोती'त्येतदपि स्पष्टत्वाय पुनर्व्याचष्टे– **जीवस्थितेनेति** ।। बृहत्युक्थशंसितृपुरुषस्थितेनेत्यर्थः । अक्षरेणेत्यस्यार्थद्वयम्– **अक्षरगेणाक्षरनाम्ना चेति** । 'जीवान्हा जीवाक्षरं' इत्यस्य व्याख्या– **तेन चेति** । जीवाख्यसूर्यस्थितेनाहराख्येन स्वरूपेणेत्यर्थः । **अक्षराख्यं** जीवस्थिताक्षराख्यम् । 'जीवाक्षरेण जीवाऽहराप्नोति जीवान्हा जीवाक्षरं' इत्यत्र यदक्षशब्दवाच्यस्य परब्रह्मणः स्त्रीपुंसरूपत्वमुपेत्य स्वस्यैव पुरुषरूपेणाभिगन्तृत्वं स्त्रीरूपेणाभिगम्यत्वं चोच्यत इत्युक्तं तदेतन्न केवलमुदाहृतप्रमाणबलादवसेयं किन्त्वस्य 'यदक्षरादक्षरमेति युक्त'मिति प्रागुदाहृतमन्त्रव्याख्यानरूपत्वाच्च । तत्राप्यक्षरशब्दवाच्यस्य भगवतः स्त्रीपुंसस्वरूपेण परस्परसंयुक्तत्वोक्त्या स्वस्यैव स्वगम्यत्वस्वगन्तृत्वकथनात् । व्याख्यानव्याख्येययोरैकार्थ्यस्यावश्यकत्वादिति भावेनाह–

**यदक्षरादिति** ।। नन्वत्र भगवतः स्त्रीपुंसरूपज्ञापकपदादेरभावाज्जीवाक्षरेणेत्यादौ कुतस्तद्योज्यत इत्यतस्तज्ज्ञापकमाह– **पुमांसमिति** ।। पुमांसं स्त्रियं च वदतोऽपि वक्तृत्वनिषेध आपाततो व्याहतः । तस्मादुभयात्मकं सन्तं भगवन्तं केवलं पुमांसं स्त्रियं वा यो वदति स न वदतीत्यभिप्रायोऽवश्यं कल्पनीयः । तथात्वे चोभयात्मकं रूपं भगवतोऽत्राभिप्रेतमिति ज्ञायत इति भावः । ज्ञापकान्तरमप्याह– **अस्त्रीपुमानिति** ।। यदि विष्णोः स्त्रीत्वं पुंस्त्वं च न स्यात्तर्हि अस्त्रीपुमानिति ब्रुवतः सत्यवादित्वस्यैव प्राप्त्या न वदतीति निषेधोक्तिरनुपपन्ना स्यात् । अतः स्त्रीपुमात्मकत्वमत्राभिप्रेतमेवेति भावः ।।

भगवतः नपुंसकत्वनिषेधः

**भाष्यम्**

**न च नपुंसकरूपं भगवतः कुत्रचिदुक्तम् । प्रसिद्धमेव च रूपद्वयम् । अतो नपुंसके वदन्नपि न वदतीति न तद्वदनुषज्यते[२३४] । नपुंसकरूपे प्रमाणाभावादेव लौकिकस्त्रीपुंविलक्षणत्वादस्त्री पुमानित्यपि वदन्निति भवति ।**

**स्त्रीपुंरूपद्वयं[२३५] विष्णोर्न तृतीयं कथञ्चन ।**
**साक्षान्नपुंसकस्तस्मान्मुक्तिभागी न तु क्वचित् ।। इति ब्रह्माण्डे ।**

**न च रक्ष इति नपुंसकशब्दमात्रेण रावणादयो नपुंसका भवन्ति । भवतीति पदाभावादनकाममार इति भगवन्नामैवेति ज्ञायते ।।**

---

२३४. अनुसज्यते इति ह.पाठः

२३५. रूपद्वयी इति ह.पाठः

## भावप्रदीपः

नन्वस्त्रीपुनानिति ब्रुवन्नपि न वदतीत्यस्य कुत उक्ताभिप्रायकतानिश्चीयते । तस्य नपुंसकरूपविषयत्वेनाप्युपपत्तेः । यथा केवलं पुमांसं स्त्रियं च ब्रुवन्नवदत्येवेत्युक्ते उभयरूपलाभः । एवमस्त्रीपुमान् स्त्रीपुंसविलक्षणः केवलं नपुंसक इति ब्रुवन्नपि न वदतीत्युक्ते स्त्रीपुंसरूपद्वयवन्नपुंसकरूपस्यापि लाभसंभवादित्यत आह– **न चेति** ।। **कुत्रचित्** श्रुतिपुराणादौ । **नपुंसके** अस्त्रीपुमानित्यर्थकत्वेन[२३६] कल्पितनपुंसकरूपविषये । **तद्वत्** स्त्रियं ब्रुवन्नवदतीत्यादिवत् । ननु भगवतो नपुंसकरूपस्यं कुत्राप्यनुक्तत्वमात्रेण न तदभावो निश्चेतुं शक्यते । प्रमाणान्तरेण तत्सिद्धिसंभवादिति चेत् । किं तत्प्रमाणं प्रत्यक्षमनुमानमार्थापत्यादिकं वा । आद्येऽपि किमस्मदादीनामुत योगिनाम् । नाद्यः । तदभावात् । न द्वितीयः, तत्रापि प्रमाणाभावात् । नाप्यनुमानं तत्प्रतिबद्धलिङ्गाभावात् । न तृतीयः । अनुपपत्याद्यभावादित्यभिप्रेत्याह– **नपुंसकरूप इति** ।। ननु नपुंसकरूपसद्भावे न पृथक् प्रमाणमन्वेषणीयम् । 'अस्त्रीपुमानिति ब्रुवन्वदत्येव' इत्यनेनात्रैव तदुक्तेः । नपुंसक एव ह्यस्त्रीपुमान् । स्त्रीपुंसविलक्षणत्वादित्यत आह– **लौकिकेति** ।। **वदन्निति भवति** वदन्वदत्येवेत्युक्तमनुपपन्नं भवतीत्यर्थः । तथा चार्थान्तरस्याप्युपपत्या नानेन नपुंसकरूपसिद्धिरिति भावः ।।

अत्र प्रमाणमाह– **स्त्रीपुंरूपद्वयमिति**[२३७] ।। न तृतीयं रूपं विष्णोः । ननु विष्णोर्नपुंसकरूपाभावे लोके नपुंसक एव न स्यात् ।

---

२३६. इत्यस्य अर्थत्वेन इति 'ख'पाठः २३७. द्वयीति 'ख'पाठः

बिम्बाभावे प्रतिबिम्बानुदयादित्यत आह– **साक्षादिति** ।। स्वरूप एवेत्यर्थः । **तस्मात्** भगवतो नुपंसकरूपाभावादेव । अयं भावः । जीवस्वरूपमेव हि भगवतः प्रतिबिंबम् । न प्राकृतो देहः । नपुंसकता च बाह्यदेहस्यैव । न स्वरूपस्य । यदि कश्चित्स्वरूपतोऽपि नपुंसकः स्यात्तदा तथैव मुक्तावविस्थितः स्यान्न चैवम् । प्रमाणाभावात् । दोषरूपत्वाच्च । अतो न तत्र बिम्बरूपापेक्षेति न विष्णोर्नपुंसकरूपं कल्प्यमिति ।।

ननु च विष्णुर्नपुंसकरूपवान् नपुंसकशब्दवाच्यत्वात् व्यतिरेकेणेन्द्रादिवदित्यनुमानसद्भावात् कथं तत्र प्रमाणाभाव उक्त इत्यतो हेतोर्व्यभिचारमाह– **न चेति** ।। यद्यपि तेजोजलादवपि व्यभिचारः शक्यो वक्तुम् । तथापि स्फुटव्यभिचारप्रदर्शनाय रावणादिग्रहणम् । अनेच्छामारनामक इत्यनेनानकाममार इत्येतद्भगवतो नामेति सूचितम् । तत्र ज्ञापकमाह– **भवतीति** ।। अन्यथा 'सहस्राणि भवन्ती'त्यादिवदत्रापि भवतीति पदं श्रूयेत । अध्याहारे प्रकृतासङ्गतेः । न हि प्राणोत्पत्तिकामेन मायारमणं प्रकृतम् । अगतिकागतित्वाच्च । अत आप्नोतीति क्रियायाः कर्तृसापोक्षत्वादनकाममार इत्येतदेव तत्र कर्तृसमर्पकं भगवन्नामेति ज्ञायत इति भावः ।।

### देहस्य देवरथत्वकथनम्

### उपनिषत्

**अथ देवरथः । तस्य वागुद्धिः, श्रोत्रे पक्षसी, चक्षुषी युक्ते, मनः सङ्गृहीता । तदयं प्राणोऽधितिष्ठति ।**

**तदुक्तमृषिणा– 'आ तेन यातं मनसो जवीयसा'[२३८] 'निमिषश्चिज्जवीयसा' इति जवीयसा'[२३९] इति ।।२.३.८।।**

**।। इति द्वितीयारण्यके तृतीयोऽध्यायः ।।**

**मन्त्रद्रष्टा प्रथमो हयग्रीवः, मन्त्रब्राह्मणोपदनिषदां श्रैष्ठ्यं च**

**भाष्यम्**

**ऋष ज्ञान इति [२४०]ह्यस्माद्धातोः सर्वज्ञ एकराट् ।**
**वेदद्रष्टा [२४१]परमऋषिर्हयास्यः पुरुषोत्तमः ।।**

**मन्त्राणां प्रथमो द्रष्टा सर्वेषां [२४२]यत एव तु ।**
**ऋषिणोक्तमिति प्राहुर्मन्त्रोक्तं ब्राह्मणान्यतः ।।**

**तत्प्रसादाद्धि तपसा पश्चान्मन्त्रान् प्रपेदिरे ।**
**ब्रह्माद्या ब्राह्मणं पश्चात् तैर्दृष्टमृषिभिः पृथक् ।।**

**मन्त्राश्चोपनिषच्चैव नाकृत्वा सुमहत्तपः ।**
**प्रथमं तद्धयास्येन दृष्टं केनचिदीक्ष्यते ।।**

---

२३८. आ तेन यातं मनसो जवीयसा रथं यं वामृभवश्चक्रुरश्विना । यस्य योगे दुहिता जायते दिव उभे अहनी सुदिने विवस्वतः । ऋक्.सं. १०-३९-१२

२३९. निमिषश्चिज्जवीयसा रथेना यातमश्विना ।
अन्तिषद्भूतुमामव । ऋक्.सं. ८-७३-२

२४०. ह्यद्धा इति ह्.पाठः २४१. परमर्षिः इति ह्.पाठः

२४२. योऽत एव तु इति ह्.पाठः

**विना पृथक् तपो दृश्येत् ब्राह्मणं मुनिभिर्यतः ।**
**मन्त्राश्चोपनिषच्चैव ब्राह्मणादुत्तमास्ततः ।।**
**तत्राप्युपनिषत् श्रेष्ठा [२४३]युक्तावस्थाधिगम्यतः ।।**

**इत्यादि प्रमाणविवेके ।**

**भावप्रदीपः**

अत्र प्रथमत आरभ्य बहुशस्तत्र तत्र तदुक्तमृषिणेति प्रतिज्ञाय स्वक्तार्थे मन्त्राः प्रमाणत्वेनोदह्रीयन्ते । तेन चैतदुपनिषदपेक्षया मन्त्राणामुत्तमत्वमृषिप्रोक्तत्वं च प्रतीयते । न चापौरुषेयाणां तारतम्यमृषिप्रोक्तत्वं वा युज्यते । अस्या उपनिषदो भगवदवतारमहिदासदृष्टत्वेन तदुक्तार्थे ऋषिमात्रप्रोक्तमन्त्रोदहरणमप्यनुचितमेवेति तत्राह– **ऋष ज्ञान इति ।। धातोरिति ।।** धातुव्याख्यानात् । हयास्यः पुरुषोत्तम एव ऋषिरित्युच्यते । यतो वेदद्रष्टा न चायं वसिष्ठादिसाधारणः किन्तु परम ऋषिः । यतः सर्वज्ञ एकराट् स्वतन्त्रश्च । यतोऽयं हयास्य एव सर्वेषां मन्त्राणां प्रथमो द्रष्टा अतो मन्त्रोक्तमेव ऋषिणोक्तमिति ब्राह्मणानि प्राहुः । उपलक्षणमेतत् । उपनिषदश्चेत्यपि ग्राह्यम् । एतेन ऋषिदृष्टमन्त्रोक्तत्वस्यैव ऋषिप्रोक्तत्वरूपत्वेन विवक्षितत्वाद्भगवतो हयग्रीवस्यैव ऋषित्वेन विवक्षित्वाच्च, कथमपौरुषेयमंत्राणामृषिप्रोक्तत्वं भगवदुक्तार्थे ऋषिमात्रप्रोक्तमन्त्रोदाहरणं वेति शङ्काद्वयनिरासः ।।

अथ मन्त्राणामुपनिषदुत्तमत्वशङ्कां पराकर्तुं ब्राह्मणमन्त्रोपनिषदां क्रमेणाधिक्यं सोपपत्तिकमाह– **तत्प्रसादाद्धीति ।।** हयास्यप्रसादात्

२४३. उक्ता...इति पाठान्तरम्

ब्रह्माद्याः, **पश्चात्** हयग्रीवानन्तरं तपसा मन्त्रानीत्युपलक्षणम्, उपनिषदश्च **प्रपेदिरे** दृष्टवन्त इत्यन्वयः । **पश्चात्तदनन्तरं तैर्ब्रह्मा**-दिभिः ब्राह्मणं दृष्टम् । ततश्चैतद्दृष्टमेव ब्राह्मणम् तद्दृष्टा एव मन्त्रा उपनिषच्च **ऋषिभिर्वसिष्ठादिभिः पृथक्** भागश एव दृष्टा न सामस्त्येन । प्रथमं हयास्येन दृष्टं **तत्** मन्त्रोपनिषज्जातं सुमहत्तपस्तदर्थमकृत्वा केनापि नेक्ष्यते । किन्तु सुमहत्तपः कृत्वैव दृश्यत इत्यर्थः । ब्राह्मणं तु तदर्थं पृथक् तपो विना मन्त्रोपनिषद्दर्शनार्थं कृतेनैव तपसा यतो मुनिभिर्दृश्येत् । **ततो** हेतोर्मन्त्राश्चोपनिषच्च ब्राह्मणादुत्तमाः । एवेत्यनेन नात्र संशय इत्याह । **तत्रापि** तयोर्मन्त्रोपनिषदोर्मध्येऽप्युपनिषच्छ्रेष्ठा । कुत [२४४]**युक्तावस्थाधिगम्यतः** समाध्यवस्थायामेवाधिगम्यत्वात् । मन्त्रास्तु तदर्थं कृततपोमाहात्म्येन समाध्यवस्थाभिन्नकालोऽपि दृश्यन्ते । अतो मन्त्राणामुपनिषभ्द्योऽनुत्तमत्वेऽपि राज्ञोऽभिमतार्थे सचिवसंमतिवदुपनिषदुक्तार्थे मन्त्रोदाहरणं युक्तमेवेति भावः ।।

### द्विविधो देवरथः

### भाष्यम्

**तेन रथेनाध्यात्मशरीराख्येनाधिदैवं रथरूपेण । ऋभव इति अत्र देवानां साधारणं नाम[२४५] ।**

**आदित्या वसवो रुद्रा विश्वे ऋभव इत्यपि ।**
**सर्वदेवसमाख्या च द्वादशाष्टादिकेष्वपि ।। इति शब्दनिर्णये ।**

---

२४४. उक्तावधिगम्यतः इति 'ख'पाठः

२४५. साधारणनाम इति ह.पाठः

**निर्मितो दैवतैः सर्वैर्विष्णुना वायुना सह ।**
**अधिष्ठितो रथो दिव्यः सोऽध्यात्मं देहनामकः ।।**

**सम्यग्योगो यदा तस्य मनोवाक्कर्मभिर्भवेत् ।**
**देहाख्यस्य रथस्यैव तदा नारायणात् प्रभोः ।।**

**विविधं वासवत्वात् तु विवस्वन्नामकाच्छुभम् ।**
**संसारवारकं ज्ञानं दिवो दुहितृनामकम् ।।**

**विष्णुतत्त्वापरोक्षाख्यमहनी द्वे च शोभने ।**
**ज्ञानावस्था मुक्त्यवस्थेत्युभे एवाहनी परे ।।**

**भावप्रदीपः**

'आतेन यातं' इति मन्त्रं व्याचष्टे– **तेनेति** ।। अध्यात्माधिदैवयोरुभयोरपि प्राक् प्रसक्तत्वेन समाख्यामंन्त्रेऽपि तथैवार्थो विवक्षित इति भावः । तत्र 'रथं यं वामृभवश्चक्रुरश्विना' इति मन्त्रशेषे ऋभूणां रथकर्तृत्वमुच्यते । ते च ऋभावो न देवविशेषा विवक्षिताः, किन्तु सर्वेऽपीत्याशयेनाह– **ऋभव इति** ।। **अत्र** मन्त्रे, ऋभव इति देवानां साधारणं नामेति संबन्धः । तत्र प्रमाणमाह– **आदित्या इति** ।। इतिशब्दः सर्वत्र पृथक् संबन्ध्यते । अपिशब्दः समुच्चये । **सर्वदेवसमाख्या** सर्वेषां देवानां समं नाम । द्वादशाष्टादिकेष्वपि वर्तते । तत्रादित्या इति नाम द्वादशसु सूर्येषु । वसव इति नामाष्टस्वग्न्यादिषु । आदिपदेन रुद्रा इति नामैकादशरुद्रेषु । विश्वे इति नाम दशविश्वदेवेषु । ऋभव इति नाम केषुचिद्देवविशेषेष्विति विवेकः । इमे च ऋभवः ऋभुर्विश्वा वाज इति त्रय इति केचित् । ऋभवो विश्वक्रतेति प्रयोगात् । तथैव ऋग्भाष्यटीकायां व्याख्यातत्वात् ।

'अध्वर्युणा हूयमाने देवा उत्पेतुरोजसा ।
ऋभवो नाम तपसा सोमं प्रप्ताः सहस्रशः'[२४६] ॥

इति चतुर्थभागवतोक्ता इत्यन्ये ॥

समग्रं मन्त्रं प्रमाणेनैव व्यचष्टे– **निर्मित इति** ॥ सर्वैर्देवतैरित्यनेन ऋभुशब्दः सर्वदेवनामेत्युक्तं भवति । वायुना सह विष्णुनाधिष्ठित इत्यनेन मन्त्रेऽश्विनेत्यश्विशब्द उपनिषदि च 'तदयं प्राणोऽधितिष्ठति' इति प्राणशब्दश्च विष्णुवायुपर इति ज्ञापयति । 'सोऽध्यात्मं देहनामकः' इत्यनेनाध्यात्मं शरीराख्येनेति प्राग्व्याख्यातं प्रमापितं भवति । 'यस्य योगे दुहिता जायते दिवे उभे अहनी सुदिने विवस्वतः' इत्युत्तरार्धमध्यात्मपरतया तावद्व्याचष्टे– **सम्यगिति** ॥ **तस्य** देहाख्यरथस्य । एवशब्देनाधिदैवरथं व्यावर्तयति । मनोवाक्-र्मभिर्विष्णुविषयकैर्योगो यदा भवेत्तदा **नारायणात्** तत्प्रसादात् विष्णुतत्वापरोक्षाख्यं ज्ञानं द्वे शोभने अहनी च जायन्त इत्यन्वयः । के ते द्वे शोभने अहनी इत्यत उक्तम्– **ज्ञानावस्थेति** ॥ मुक्त्यवस्था चेति चशब्दोऽध्याहार्यः । **परे** प्रसिद्धाहर्विलक्षणे ॥

**वायुभारत्योरुभयविधरथे प्रदुर्भावः दिवादुहितृशब्दवाच्यत्वं च**

**भाष्यम्**

**जायन्ते देवतास्त्वेषां भारती वायुरेव च ।**
**जीवन्मुक्तेश्च मुक्तेश्च दाता रूपद्वयी प्रभुः**[२४७] ॥

---

२४६. भाग. ४.४.३३

२४७. विभुः इति ह.पाठः

**सर्वस्त्रीणामुत्तमत्वाद् द्यौर्नामा श्रीरुदाहृता ।**
**दुहितास्या[२४८] भारती तु नित्याहेयस्वरूपतः ।।**

**अहरित्युच्यते वायुर्ज्ञानात्मत्वात् तथैव च ।**
**[२४९]अधिदैवे रथेऽप्येते विष्णोर्लक्ष्म्यां प्रजज्ञिरे ।।**

**भावप्रदीपः**

ननु कथं ज्ञानस्य दिवो दुहितृत्वमित्यतोऽभिमानिदेवताया-स्तथात्वादभिमन्यमानस्यापि तथा व्यपदेश इति भावेन ज्ञानदेवतां वदन् प्रसङ्गादहर्द्वयदेवतामप्याह– **देवतास्त्विति** ।। **एषां** ज्ञाना-दीनाम् । वायुरेक एवावस्थाद्वयस्य देवता नान्यो मन्तव्य इत्येवशब्दः । चशब्दो भारतीवाय्वोः समुच्चये । नन्वेवं तर्हि कथं देवता इति बहुवचनमित्यत आह– **जीवन्मुक्तेरिति** ।। तथा च वायोः रूप-द्वयविवक्षया बहुवचनोपपत्तिरिति भावः । ननु भारत्या अपि दिवोदुहितृत्वं कथमित्यत आह– **सर्वेति** ।। विजिगीषार्थाद्दीव्यतेः कर्तरि क्विपि प्रत्यये निष्पन्नो द्यौरित्यं शब्द उत्तमाभिधायी । उत्तमा ह्येवाधमान् जिगीषन्ति । स्त्रिणां योग्यतया लाभः । तथा च सर्व-स्त्रीणामुत्तमत्वाच्छ्रीर्द्यौरुदाहृतेत्यर्थः । एवं दिवोदुहितृशब्दं ज्ञानाभि-मानिन्यां भारत्यां व्याख्यायाहर्द्वयाभिमानिवायावहःशब्दं निर्वक्ति– **नित्येति** ।। नञुपपदादोहाक् त्याग इत्यस्माद्धातोः कर्मणि डरिप्रत्यय इति भावः । ज्ञानात्मत्वादिति निर्वचनान्तरम् । अहःशब्दस्य ज्ञानवाचित्वात् । यथोक्तं बृहद्भाष्ये[२५०]– 'अहर्ज्ञानमस्य

---

२४८. अहरस्या इति ह.पाठः    २४९. अधिदैवरथे इति ह.पाठः

२५०. ५-९-२६

लीनमिति' इति । 'अज्ञानं तु निशा प्रोक्ता दिवा ज्ञानमुदीर्यते'[२५१] इति वचनाच्च । अधिदैवपरत्वेनाप्यस्य व्याख्यानप्रकारं संक्षेपतो निरूपयति– **अधिदैवे रथ इति** ।। एते भारतीवायो रूपद्वयं चेति त्रयो देवाः ।।

ज्ञानार्थिना कर्तव्या देवप्रार्थना

**भाष्यम्**

**रथेन तेन देवेशौ विष्णुवायू जगत्पती ।**
**आयातमिति हैवैतौ प्रार्थयेद्यज्ञकर्मणि ।।**

**[२५२]अन्यथाप्यर्थयेदेतौ ज्ञानेच्छुः पुरुषः सदा ।**
**[२५३]जपेन्मन्त्रद्वयं नित्यमातेन निमिषस्तथा ।।**

**रक्षणं वां समीपे स्यान्ममेत्यध्यात्ममेव च ।**
**[२५४]हयास्यत्वाच्चाश्विनौ तावित्याह परमा श्रुतिः ।।**

**ऐन्द्राग्नेयादिकाश्चैवं[२५५] सर्वे मन्त्रा हरिं परम् ।**
**वदन्ति मुख्यतो नान्यं सर्वनामानमच्युतम् ।।**

**अथवा वायुदेवस्थं[२५६] पृथक्संस्थं च केशवम् ।**
**मन्त्रो द्विवचनो वक्ति तथा बहुवचस्स्वपि ।।**

इत्याद्यैतरेयसंहितायाम् ।

---

२५१. भाग.ता. ३-१०-१०
२५२. अन्यदा इति ह.पाठः
२५३. जपन् इति ह.पाठः
२५४. हयास्यत्वादश्विनौ इति ह.पाठः
२५५. चैव इति ह.पाठः
२५६. वायुदेहस्थं इति ह.पाठः

## भावप्रदीपः

'तदुक्तमृषिणे'त्युक्त्वा मन्त्रद्वयस्योदाहृतत्वात् हयग्रीवस्यैवात्र ऋषित्वेन विवक्षितत्वात्तस्यैवं प्रार्थनं कथमुपपद्यत इत्यतो नेदं हयग्रीवकर्तृकप्रार्थनावाक्यं किन्तु तदीयमेव जनान्प्रति यज्ञादिकर्मणि प्रार्थनाविधायकं शिक्षावाक्यमित्याशयेनाह– **रथेनेति** ।। **एतौ** विष्णुवायू । **आतेन निमिषस्तथेति** । 'आतेन यात'मिति 'निमिषश्चिदि'ति च मन्त्रद्वयमित्यर्थः । द्वितीयमन्त्रे 'अन्तिषद्भूतु मामव' इत्यस्यार्थं कथयन्नेव प्रार्थनाप्रकारं शिक्षयति– **रक्षणमिति** ।। एतेन **वां** युवां **अवः** युष्मत्कर्तृकं रक्षणं **अन्तिषत्** मम समीपवर्ति **भूतु** भूयादिति व्याख्यातं भवति इति नित्यमेव जपन्नध्यात्मं चैतौ प्रार्थयेदिति पूर्वेणान्वयः । नन्वेतन्मन्त्रद्वये द्विवचनविषयौ विष्णुवायू चेत् कथं तत्राश्विशब्दप्रयोग इत्यत आह– **हयास्यत्वादिति** ।। नन्वेवमत्र कुतो विष्णुवायुग्रहणं । द्विवचनश्रुतेः प्रसिद्धाश्विग्रहणेऽप्युपपत्तेरिति चेन्न । प्रसिद्धपरतानुपपत्तेर्वक्ष्यमाणत्वात् । विष्णुपरत्वे तु न काप्यनुपपत्तिः । प्रत्युत मुख्यार्थत्वात्तस्यैव सर्वमन्त्रेषु प्रथमप्राप्तिः किमुतास्मिन्मन्त्र इति भावेनाह– **ऐन्द्राग्नेयादिका इति** ।। चशब्दो न केवलमयमश्विनो मन्त्रः किन्त्वैन्द्रादिकाश्चेति समुदायार्थः । अथवाप्यर्थः । सर्वेऽपि मन्त्रा इति संबन्धः । हरिमेवेत्येवकारान्वयः । कथमिन्द्रादिश्रुतेर्हरिवाचित्वमित्यत उक्तम्– **सर्वनामानमिति** ।। [२५७]'नामानि सर्वाणी'ति श्रुतेरिति भावः । तर्ह्यन्यत्र व्यवहारादि-लोपप्रसङ्ग इत्यतो **मुख्यत इति** । द्विवचनादिकं तु विष्णोरेवा-नेकरूपत्वादुपपन्नमिति हृदयम् ।।

---

२५७. सू.भा. उदाहृता भाल्लवेयश्रुतिः १-१-१

प्रकारान्तरेण द्विवचनस्योपपत्तिमाह– **अथवेति** ।। वायुदेहस्थं पृथक्संस्थं चेति द्विरूपं केशवं द्विवचनमन्त्रो वक्तीत्यर्थः । एतेन प्रकृतमन्त्रद्वयेऽप्येष एव न्यायोऽनुसन्धेय इति भावः । तथा **बहुवचस्वपी**ति बहुवचनयुक्तमन्त्रेष्वपि । बहुरूपो हरिरेव मुख्यतः प्रतिपाद्य इति शेषः ।।

## सुदिनशब्दार्थनिरूपणम्

### भाष्यम्

**सुखं ददत इति सुदिने । विवस्वतो विष्णोः सकाशाद्दिवो दुहिता अहनी च जायन्ते । अहनी इति द्विवचनेन द्वित्वे सिद्धेऽप्युभे इति वचनमध्यात्माधिदैवतयोरुभयोरपि वचनार्थम् ।।**

### भावप्रदीपः

'सुदिने' इत्यस्यार्थं निरुच्य दर्शयति– **सुखं ददत इतीति** ।। सुखवाचकसुशब्दे कर्मण्युपपदे दद दान इति धातोर्डिनच् प्रत्ययः । शोभने च ते दिने चेत्यर्थान्तरमविहाय (एवेदमिदं)[२५८] अर्थान्तरमित्यतोऽहनी द्वे च शोभने इति न पूर्वोक्तेन विरोधः ।।

सुबोधत्वाय पुनः स्ववाक्येन वाक्यं योजयति– **विवस्वत इति** ।। नन्वहनी इति द्विवचनेनैव द्वित्वे सिद्धे पुनरुभे इति वचनं व्यर्थमित्यत आह– **अहनीति** ।। **अध्यात्माधिदैवतयोः** अध्यात्माधिदैवसंबन्धिनोरुभयोरप्यन्होर्**वचनार्थं** प्रतिपादनार्थमित्यर्थः । **अध्यात्माहनी** जीवन्मुक्तिमुक्त्यवस्थे । अधिदैवे तु वायो रूपद्वयं ।।

---

२५८. () एतच्चिह्नस्था पंक्तिः 'क'पाठे नास्ति

## सूर्यरथस्य आतेन यातमिति मन्त्रप्रतिपाद्यत्वनिषेधः

### भाष्यम्

**न च सूर्यरथोऽत्र वर्ण्यते । न चाहोरात्रे अहनी इत्युच्येते । सूर्यस्याश्विनामाभावात् सप्ताश्वत्वाच्च तद्रथस्य । चतुरश्वत्वं चात्रोच्यते । 'श्रोत्रे पक्षसी चक्षुषीयुक्ते' इत्यध्यात्मसम्बन्धाच्च । न च रात्रौ सुदिनमिति प्रयोगो दृष्टः । असुदिनस्यापि तत एव जातत्वात् व्यर्थविशेषणता च ॥**

### भावप्रदीपः

नन्वत्र विवस्वच्छब्दस्य सूर्ये रूढत्वात्स एवार्थः किं न स्यात् । ततश्च विवस्वतः संबन्धिनो यस्य रथस्य योगे दिवो दुहिता उषाः अहनी च जायन्ते इति सूर्यरथवर्णनमेवात्र क्रियत इति किं न स्यादित्यत आह– **न चेति** ॥ तथा सति सूर्यरथयोगेनैकस्यैवान्हो जयमानत्वेन 'उभे अहनी जयेते' इत्यहर्द्वयजन्मोक्त्ययोगादिति भावः । नन्वत्राहनी इत्यहोरात्रयोरुभयोरपि विवक्षितत्वादहर्वद्रात्रेरपि सूर्यरथ-संचाराधीनत्वादेव तदुभयजन्मप्रसिद्धमेवेति का नामानुपपत्तिरित्यत आह– **न चेति** ॥ अहर्विरोधिन्यां रात्रावहःशब्दप्रयोगायोगादिति भावः । ननु 'यामाश्चत्वारो मर्त्यानामुभे'[२५९] इति तृतीयभागवतेऽ-होरात्रयोरहःशब्दप्रयोगदर्शनात्कथं तन्निषेध इति चेत्सत्यम् । तथाऽपि नाहःशब्दस्य रात्रिवाचकता । अहोरात्रमित्यादि सहप्रयोगा-योगात् । किं नाम साहचर्याल्लक्षणया व्यवहारमात्रम् । यथा 'ऋभवो विष्वक्रता' इत्यादावृभसाहचर्यात्तद्भ्रात्रोर्विश्वावाजयोः ऋभुशब्दप्रयोग

---

२५९. भाग. ३-१२-१०

इति भावेनोक्तम्– **नोच्येते इति** ।। वचनवृत्या न प्रतिपाद्येते इत्यर्थः । न चैवं लक्षणाव्याख्याने 'यत्रोभयोः स शब्दः स्यात्तत्र द्विवचनेऽप्युभे'[२६०] इति तृतीयभागवततात्पर्यविरोधः । तत्रोभयोः स शब्दः स्यादित्यहोरात्रयोरेकशब्दवाच्यताङ्गीकारादिति वाच्यम् । तत्रापि प्रयोगमात्राभिप्रायेण स शब्दः स्यादित्युक्तत्वात् । प्रयोगस्य चामुख्यवृत्यापि संभवादिति । ास्तां वा उभे अहनी अहोरात्रे । तथापि सूर्यरथोऽत्र वर्ण्यत इति वक्तुं न शक्यते । वाक्यार्थानुपपत्तेरिति भावेनाह– **सूर्यस्येति** ।। अत्र हि यस्य विवस्वत्संबन्धिनो रथस्य योगे दिवो दुहिता अहनी च जायन्ते तेन रथेन हे अश्विनौ युवामायातमिति वाक्यार्थो वर्णनीयः । न चायं संभवति । सूर्यरथेनाश्विनोरागमनप्रार्थनायोगात् । न चाश्विपदेनापि विवस्वान्नाम सूर्य एवोच्यत इति वाच्यम् । सूर्यस्याश्विनामाभावात् । 'पूर्वप्रसिद्धवर्जं तु शक्रान्ता देवता मताः'[२६१] इत्याद्युक्तेरित्यर्थः ।।

बाधकान्तरं चाह– **सप्ताश्वत्वाच्चेति** ।। [२६२]'सप्त युजन्ति रथमेकचक्रं' इति श्रुतेरिति भावः । अस्तु सप्ताश्वत्वं किं प्रकृत इत्यत आह– **चतुरश्वत्वमिति** ।। 'श्रोत्रे पक्षसी चक्षुषी युक्ते' इत्येतावद्वाक्यमत्रोत्तरत्र च संबध्यते । 'अथ देवरथः' इत्युक्त्वा तस्य वागुद्धिरित्यादिना रथलक्षणकथनात्प्रकरणवशाच्छ्रोत्रयोश्चक्षुषोश्चाश्वत्वं अवगम्यते । ते च चत्वार एव भवन्ति । अतश्चतुरश्वयुक्तरथाधिष्ठाताऽयं न सूर्य इति भावः ।

---

२६०. भाग.ता. ३-१२-१० २६१. ऋक्.भा. १-१-४७

२६२. सू.भा. उदाहृता श्रुतिः १-१-२०

बाधकान्तरमप्याह– **श्रोत्रे इति** ।। अत्र वागुद्धिर्मनः सङ्गृहीतेत्यप्युदाहर्तव्यम् । तथा चैतद्रथस्य वागादिलक्षणोऽध्यात्मादिमत्वोक्त्याऽध्यात्मसंबन्धोऽत्राभिधीयते । न चासौ सूर्यरथस्य युज्यते । न च सूर्यरथस्योध्यादिकं वागादिदेवतात्मकं । नापि सूर्यो देहरथमधितिष्ठति । चक्षुर्मात्राभिमानित्वेन तस्याश्विरूपत्वसंभवेऽपि रथिकरूपत्वायोगात् । विष्णुपक्षे तु सर्वमिदं संभवति । अतो नात्र सूर्यरथो वर्ण्यत इत्यर्थः ।

बाधकान्तरं चाह– **न चेति** ।। यद्यत्र सूर्यरथो विवक्षितस्तर्ह्यहःशब्देनाहोरात्रविवक्षायामवश्यकर्तव्यायां सुदिनमिति विशेषणं रात्रेरप्यङ्गीकर्तव्यम् । न च तद्युज्यते । रात्रेर्दिनत्वाभावेन तत्र तत्प्रयोगादर्शनात् । प्रायेण रात्रौ साधनानुष्ठानाभावेन सुत्वायोगाच्च ।

'पुंसो वर्षशतं ह्यायुस्तदर्धं चाजितात्मनः ।
निष्फलं यदसौ रात्र्यां शेतेऽन्धं प्रापितस्तमः'[२६३] इति वचनादित्यर्थः ।

बाधकान्तरं चाह– **असुदिनस्यापीति** ।। मेघच्छन्नादिदुर्दिनस्यापीत्यर्थः । **तत एव** सूर्यरथयोगादेव ।।

जीवन्मुक्तिमुक्ती सुदिनशब्दवाच्ये

**भाष्यम्**

**अस्मिन् पक्षे तु लौकिकाहर्व्यावृत्त्यर्थं सुदिने इति युज्यते । जीवन्मुक्तिश्च मुक्तिश्च हि मुख्ये सुदिने । 'स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयतेऽस्माद्ध्येवात्मनो यद्यत्कामयते**

२६३. भाग. ७.६.६

**तत्तत्सृजते' इति [२६४]ज्ञानावस्थायां मुक्तौ भोगबाहुल्यकारणत्वात् साऽपि मुक्तिवत् सुदिनम् । न हि मुक्तावधिक्यार्जनमस्ति । 'न हीयते यत्र गत्वा यत्र गत्वा न वर्धते' इति वचनात् । अतो ज्ञानोत्पत्तिसमनन्तरमेव मुक्तौ न पुनरार्जनमस्तीति किञ्चित् कालं ज्ञानित्वेनावस्थानमपि सुदिनमेव । ज्ञानात् पूर्वं तु पतनसंशयादेव न सुदिनम् ।।**

**भावप्रदीपः**

नन्वेवं तर्हि विष्णुरथपक्षेऽपि जीवन्मुक्तिमुक्त्यवस्थारूपाह्नोः सुदिनत्वविशेषणं व्यर्थमेव । व्यावर्त्याभावादित्यत आह– **अस्मिन्निति** ।। ननु लौकिकाहस्वपि प्रायेण सुदिनानि सन्त्येव । न हि सर्वाण्यहानि मेघच्छादितानि भवन्ति । अतः कथं तद्व्यावृत्तिरित्यत आह– **जीवन्मुक्तीति** ।। लौकिकान्हां तु मेघाच्छादनादिराहित्यमात्रेण न मुख्यसुदिनत्वमिति भावः । नन्वत्रापि मुक्त्यवस्थाया एव मुख्यसुदिनत्वं न जीवन्मुक्त्यवस्थायाः । तत्र प्रारब्धदुःखाद्यनुभवस्यापि सत्वात् । अतो नास्मिन्पक्षेऽपि निर्बाधवाक्यार्थसंभव इत्यतो जीवन्मुक्त्यवस्थाया अपि मुख्यसुदिनत्वमुपपादयति– **स य इति** ।। **सः** प्रसिद्धो योऽधिकारी **आत्मानं** विष्णुमेव **लोकं** सर्वाश्रयं **उपास्ते** जानाति अस्य कर्म न क्षीयते ह । कथं कर्माक्षयः । **स** उपासको मुक्तौ यद्यत्कामयते तत्तत् **अस्मादेवात्मनो** विष्णुप्रसादात् सृजते, तत्कृतं ज्ञानोत्तरं कर्मेति श्रुत्यर्थः । मुक्तौ भोगबाहुल्यस्य मुक्त्यवस्थायामेवानुष्ठीयमानकर्मणा संभवात्किं जीवन्मुक्त्यवस्थयेत्यत

---

२६४. ज्ञान्यवस्थायां इति ह्.पाठः

आह– **न हीति** ।। **आधिक्यवर्जनं** भोगबाहुल्यकारणकर्मानुष्ठानम् । तत्र प्रमाणमाह– **न हीयत इति** ।। **यत्र** मोक्षे । **न हीयते न वर्धते** आनन्दह्रासवृद्धी न प्राप्नोतीत्यर्थः । यदि मुक्तौ साधनानुष्ठानं स्यात्तर्हि मुक्तस्यानन्दवृद्धिः स्यादेव । न च साऽस्ति । अतो न मुक्तावाधिक्यवर्जनमस्तीति भावः । अत्र वृद्धिर्नाम प्राप्तलाभः । ह्रासश्च प्राप्तविलोपः । न तून्नाहरूपा वृद्धिरनभिव्यक्तिरूपो ह्रासश्च । तयोः प्रामाणिकत्वेन निषेधानर्हत्वादिति बोध्यम् । उक्तमर्थं विपक्षे बाधकान्तरं वदन्नुपसंहरति– **अत इति** ।। मुक्तौ भोगबाहुल्यसाधनकर्मसंपादनहेतुत्वात् किञ्चित्कालं प्रारब्धकर्मणा ज्ञानित्वेनावस्थानमपि सुदिनमेवेत्यन्वयः । विपक्षे बाधककथनाय– **ज्ञानोत्पत्तीत्यादि** । यस्य प्रारब्धकर्मशेषो नास्ति तस्य ज्ञानोत्पत्तिसमनन्तरमेव मुक्तौ जातायां तत्र पुनराधिक्यार्जनं नास्त्येवेति न तस्य मुक्तौ भोगबाहुल्यं संभवति । अतो ज्ञानित्वेन किञ्चित्कालावस्थानाभावे ज्ञानोत्तरशुभकर्मानुष्ठानाभावापत्त्या तत्साध्यमौक्तभोगबाहुल्यालाभेन मुक्तौ योग्याशेषानन्दपरिपूर्त्यभावापत्त्या ज्ञानित्वेन किञ्चित्कालावस्थानं सुदिनं भवत्येवेति भावः । यदि मुक्तौ भोगसाधनार्जनहेतुत्वाज्जीवन्मुक्त्यवस्थायाः सुदिनत्वं तर्हि ज्ञानात्पूर्वास्थाया अपि साधनानुष्ठानहेतुत्वेन सुदिनत्वं स्यात् । ततश्चोभे एवाहनी सुदिने इति कुत इत्यत आह– **ज्ञानात्पूर्वमिति** ।। यथा ज्ञानोत्पत्त्यनन्तरं मुक्तिनिश्चयेन पुनः संसारे न पतनसंशयो नैवं ज्ञानात्पूर्वम् । मुक्तिसाधनानुष्ठानवतामपि नानाकर्मवशात्पुनः पतनस्य संभावितत्वादतः पूर्वावस्था न सुदिमित्यर्थः ।।

### अश्विरथस्य आतेन यातमिति मन्त्रप्रतिपाद्यत्वनिषेधः

#### भाष्यम्

**न चाश्विरथो वर्ण्यते । न ह्यश्विरथयोगादहनी जायेते । एकरासभयुक्तो हि तद्रथः । 'तद्रासभो नासत्या सहस्रम्' इति वचनात् । न च विवस्वच्छब्दोऽश्विनोर्विद्यते । 'यो देवानां नामधा एक एव'[२६५] इति विष्णोः सर्वनामानि प्रसिद्धानि च । 'युजो युक्ता अभियत्संवहन्ति'[२६६] इत्यादिना तस्यैव प्रस्तावाच्च । अतो विष्णुरेव मुख्यतः सर्वनामोक्त इति सिद्धम् ।।२.३.८।।**

### ।। इति द्वितीयारण्यके तृतीयोऽध्यायः ।।

#### भावप्रदीपः

माऽस्तु तर्ह्यत्र सूर्यरथो वर्ण्यत इति । तथापि तेन रथेनायातमित्यश्विप्रार्थनादश्विरथो वर्ण्यत इति किं न स्यादित्यत आह– **न चेति** ।। तत्र हेतुमाह– **न हीति** ।। बाधकान्तरं चाह– **एकेति** ।। कथमिदमवगम्यत इत्यतोऽत्र श्रुतिं प्रमाणयति– **तद्रासभ इति** ।।

'आजायमस्य प्रधने जिगाय ।
तुग्रो ह भुज्यमश्विनोदमेघे रयिं न कश्चिन्ममृवां अवाहाः'[२६७]

इति श्रुतिशेषः । हे **नासत्यौ** अश्वनौ भवद्रथबद्धस्तुग्रो दीर्घो रासभ **उदमेघे** उदवन्मेघमंडलस्थाने अन्तरिक्षमार्ग इति यावत् । **प्रधने** शूराणां प्रकृष्टधनरूपे यमस्य **आजा** आजौ युद्धे **तत्** तदीयं

---

२६५. ऋक्.सं. १०-८२-३ २६६. इत्यादि इति ह.पाठः

२६७. ऋक्.सं. १०-८२-३

**भुज्यं** भोगसाधनं **रयिं** धनं जिगाय । यद्यपि धनजेतारावश्विनावेव तथापि रासभबद्धरथस्थतयैवानयोर्धनजयवत्वाद्रासभस्यैव तथात्वोक्तिरौपचारिकीयम् । तदा सर्वे प्रतिभटाः रासभरभसात् **अवाहाः** वाहनशून्या बभूवुर्न तु तेषु कश्चित् पुमान् **ममृवां** ममार **ह** आश्चर्यमिदमित्यर्थः । अत्र रासभ इत्याद्येकवचनादेकरासभयुक्तत्वमश्विरथस्यावगम्यते । प्रकृतश्च रथश्चतुरश्वयुक्तः । 'श्रोत्रे पक्षसी चक्षुषी युक्ते' इति वचनात् । अध्यात्ममिन्द्रियाणामेवाश्वत्वात् । 'इन्द्रियाणि हयानाहु'रिति श्रुतेः । अतो नायमश्विरथ इति भावः ।।

बधकान्तरमप्याह– **न चेति** ।। अयं भावः । यद्यत्राश्विरथो वर्ण्येत तर्ह्यस्य विवस्वत्संबन्धित्वोक्तिरनुपपन्ना स्यात् । न हि सति स्वरथे पररथेनाऽऽगमनप्रार्थनं युज्यते । न च विवस्वच्छब्दोऽश्विपर एव । तथा च विवस्वतः विवस्वच्छब्दवाच्ययोर्युवयोः संम्बन्धिनो यस्य योग इत्याद्यर्थोपपत्तिरिति वाच्यम् । विवस्वच्छब्दस्याश्विनोः प्रयोगादर्शनादिति । नन्वेवं तर्हि विष्णौ शब्दद्वयस्याप्यनुपपन्नत्वात् कथं विष्णुपरताप्यस्येत्यतो मोक्तं विस्मार्षीरिति भावेनोक्तमेवोत्तरमाह– **यो देवानामिति** ।। चशब्दोऽश्विनोर्विवस्वच्छब्दाभावसमुच्चये । विष्णोरेवात्र प्रतिपाद्यत्वे युक्त्यन्तरं चाह– **युज इति** ।। स्त्रीपुंरूपेण युजो देवा अश्वरूपेण रथे युक्ताः सन्तो यन्नारायणाख्यं परं ब्रह्माभिसंवहन्तीत्यनेन 'तथा सत्यस्य सत्यमनु यत्र युज्यते तत्र' इत्यादिना च तस्य नारायणाख्यपरब्रह्मण एवोपक्रमे प्रस्तुतत्वाच्च विष्णुरेवात्र प्रतिपाद्य इति भावः । उपसंहरति– **अत इति** ।। उक्तरीत्या साधकसद्भावाद्बाधकाभावात् अन्यपरत्वे बाधकभावाच्च मुख्यतः सर्वनामा विष्णुरेवात्रोक्त इति सिद्धमित्यर्थः ।

विष्णुरेवात्र सर्वैर्नामभिरश्विविवस्वदादिभिर्मुख्यत उक्त इति वा ॥

ततश्चायं खण्डार्थः । **तत्र** 'सोऽयमात्मेममात्मानममुष्मा आत्मने संप्रच्छती'त्यादिनोक्ते भगवतः स्त्रीपुंरूपैः स्वकीयैरेव रमणरूपेऽर्थे 'स वा एषः वाचः परमो विकारः' इत्यादिनोक्ते सर्वशब्दवाच्यत्वरूपे चार्थे एते श्लोका उदाह्रियन्त इति शेषः । **यत्** नायराणादिरूपेण पञ्चविधं **अक्षरं** परं ब्रह्म तत् स्वस्मिन्नेव स्त्रीपुंरूपेणार्धनारीनरात्मकेन **समेति** संयुक्तं भवति । पञ्चविधैर्नारायणादिनामकैः स्वकीयैरेव स्त्रीरूपैः समेतीति वा । **युजः** स्त्रीपुंरूपेण मिथः संयुक्ताः स्वस्वभार्याभिः सहार्धनारीनरात्मकरूपैः संयुक्ताश्च । देवा इति वक्ष्यमाणमत्रापि योज्यम् । अश्वरूपेण रथे **युक्ताः** संबद्धाः सन्तो **यत्** नारायणाख्यं परं ब्रह्म रथारूढं संवहन्ति तदेतत् **सत्यस्य** साधुगुणस्य मुख्यप्राणस्य **सत्यं** साधुगुणताप्रदं स्वयमपि निरवधिकसाधुपूर्णगुणत्वान्मुख्यसत्यं नारायणाख्यं परं ब्रह्म **यत्रानुयुज्यते** यस्मिन् स्वरूप एव वामदक्षभेदेनार्धनारीनरात्मकेन रूपेणानुरूपतया युज्यते **तत्र** तस्मिन्नेव परे ब्रह्मणि नारायणाख्ये । अथवा यस्मिन् देशेऽनुयुज्यते तत्र देशे । सर्वे देवा एव **एकं भवन्ति** एकीभवन्ति मुक्ता सन्तो मिलिता भवन्ति अत्यनुकूलचित्ताश्च भवन्ति । न तत्र मुनिगन्धर्वाद्या व्रजन्ति । यस्मादक्षरान्नाराणाख्यात्स्वयमेव प्रादुर्भावात्मकं ब्रह्मरूपमक्षरं स्त्रीपुंरूपेण युक्तं **सदेति** बहिरागच्छति । यच्च युजो युक्ता अभिसंवहन्ति तदेतत् सत्यस्य सत्यं यत्रानुसज्यते तत्र देवाः सर्व एकं भवन्तीति पूर्ववदेव व्याख्यानम् । तात्पर्यद्योतनायोक्तस्यैवार्थस्य पुनरभ्यासः ॥

एवं स्त्रीपुंसरूपिणो भगवतः स्वरमणप्रकारमुक्त्वा अथ सर्वशब्द-वाच्यत्वमप्याह– **यदिति** ॥ **वाचो** वाक्समूहस्य मध्ये **यदोमिति** पदं अङ्गीकारवाचीति यावत् । यच्च **नेति पदं** प्रतिषेधार्थं यच्च **अस्या** वाचो मध्ये **क्रूरं** अर्थतः कठिणं यच्च **उल्बणिष्णु** शब्दतः कठिणम् । उपलक्षणमेतत् । मितामितादिभेदेन पञ्चविधं यावद्वैदिक-लौकिकपदजातं **तत्** सर्वं **वियूय** विचार्य **कवयो** देवा **नामायत्ता** नामयत्तानि नामप्रकाश्यतया नामाधीनानि नामार्थभूतानीति यावत् । विष्णुमाहात्म्यादीनि **अन्वविन्दन्** विदितवन्तः । तस्मिंश्च ज्ञाने **श्रुते** परिपक्के सति अनन्तरं **अधि** अधिकं **समतृप्यन्** कृतकृत्या मुक्ता अभूवन्निति यावत् । यस्मिंश्च विष्णौ नामानि नामार्थभूतानि गुणकर्मादीनि च ज्ञात्वा तस्मिन् ज्ञानेऽ**धिश्रुते** परिपक्के **समतृप्यन्** **तत्र** तस्मिन् विष्णावेव देवाः **सर्वयुजः** सर्वैर्मनोवाक्कायकर्मभिर्युक्ता भवन्ति । तात्पर्यद्योतनाय एवं[२६८] वेत्तुः फलमाह– **तेनेति** ॥ **विद्वान्** एवं जानन् **तेन** ब्रह्मणा तत्प्रसादेन **पाप्मान**मप्रारब्ध**मपहत्य** क्षपयित्वा **स्वर्गं लोकं** वैकुंठादिस्थान**मप्येति** प्राप्नोतीत्यर्थः ॥

'यदक्षरं समेति सत्यस्य सत्यमनु यत्र युज्यते' इति यद्भगवतः स्त्रीपुंरूपद्वयमस्तीत्यभिप्रेतं तदिदानीं स्पष्टमुपपादयति– **नैनमिति** ॥ **एनं** विष्णुं **वाचा स्त्रियं** केवलं स्त्रीरूपं **ब्रुवन्** ब्रुवाणो न वदति । तथा एनं **पुमांसं** केवलं पुरुषमेव ब्रुवन्नपि न वदति । एनं **अस्त्री-पुमान् ब्रुवन्** अस्त्रीपुमांसं ब्रुवन् स्त्रीरूपः पुंरूपश्च न भवत्येवायमिति ब्रुवाणोऽपि न वदति । विष्णोरुभयरूपयोरपि सत्वादिति भावः । अत एव कश्चनैनं स्त्रियं पुमांसं वा वदन्वदति चेत्स **वदत्येव**

---

२६८. 'क'पाठे एवं इति पदं नास्ति

यथार्थवाद्येवेति यावत् । अथवैनं स्त्रियं पुमासं च ब्रुवन्न वदतीति वचनं लोकस्त्रीपुंसविलक्षणत्वाभिप्रायेण । एनमस्त्री पुमानिति ब्रुवन्नपि न वदतीत्येतदुभयरूपसद्भावाभिप्रायेणेति ज्ञेयम् ।।

एवं सर्वे शब्दा भगवद्वाचका इत्युक्त्वाऽकारो विशेषतो नारायणस्य वाचक इत्याह– **अः इति ब्रह्मेति ।। अः इति** अकारेण **ब्रह्म** पूर्णं वस्तूच्यते । तत्राकारस्य पूर्णवाचित्वे सिद्धेऽहमेव सोऽकारवाच्य **इत्यागतं** सिद्धम् । ममैकस्यैव परिपूर्णत्वात् । अन्येषां सर्वेषां मद-धीनत्वेनाल्पत्वादित्याह महिदासरूपो भगवान्नारायणः ।

एवमोङ्कारो बृहतीसहस्रं चाकारानन्तरं विष्णोरेव विशेषवाचक-मित्यप्यत्र द्रष्टव्यम् । अत एव बृहतीसहस्रविषयविद्यान्तरोपदेशार्थं पुनस्तत्परामृश्यारभ्यते– **तद्वा इति ।।** तस्य वा एतस्य बृहतीसहस्रस्य संपन्नस्य षट्त्रिंशतमक्षराणां सहस्राणि भवन्ति । पुरुषायुषोऽन्हां सहस्रण्यपि तावन्त्येव भवन्ति । अत एवाहरभि-मानिसूर्यरूपेषु स्थितानामहर्नामकाणां पुमाकाराणां भगवद्रूपाणां सहस्राण्यपि **तावन्त्येव** षट्त्रिंशदेव भवन्ति । एवं स्थिते कदाचि-ल्लीलया भगवान् तानि स्त्रीरूपाण्येव पुमाकाराणि विधाय सूर्यगता-हर्नामकपुंरूपाणि च स्त्रीरूपाणि कृत्वा **जीवाक्षरेणैव** बृहत्युक्थ-शंसिन्ता यो जीवस्तत्स्थबृहत्युक्ताक्षरगतेन षट्त्रिंसत्सहस्रसंख्याकेन स्त्रीरूपसमूहेन पुमाकारतामापादितेन **जीवाहः** जीवाख्यसूर्यगतमहः-शब्दवाच्यं तावत्संख्याकपुरुषरूपजातं संपादितस्त्र्याकारमाप्नोति । प्रायेण तु जीवान्हा सूर्यगताहर्नामकपुरुषरूपजातेन **जीवाक्षरं** शंसितृजीवगतबृहत्युक्थवर्णस्थितस्त्रीरूपसमूहमाप्नोति । न तदा स्त्रीत्वपुंस्त्वयोर्व्यत्यासः । इत्येवं **अनकाममारः** अनस्य प्राणस्यो-

एवं स्त्रीपुंसरूपिणो भगवतः स्वरमणप्रकारमुक्त्वा अथ सर्वशब्द-वाच्यत्वमप्याह– **यदिति** ॥ **वाचो** वाक्समूहस्य मध्ये **यदोमिति** पदं अङ्गीकारवाचीति यावत् । यच्च **नेति पदं** प्रतिषेधार्थं यच्च **अस्या** वाचो मध्ये **क्रूरं** अर्थतः कठिणं यच्च **उल्बणिष्णु** शब्दतः कठिणम् । उपलक्षणमेतत् । मितामितादिभेदेन पञ्चविधं यावद्वैदिक-लौकिकपदजातं **तत् सर्वं वियूय** विचार्य **कवयो** देवा **नामायत्ता** नामयत्तानि नामप्रकाश्यतया नामाधीनानि नामार्थभूतानीति यावत् । विष्णुमाहात्म्यादीनि **अन्वविन्दन्** विदितवन्तः । तस्मिंश्च ज्ञाने **श्रुते** परिपक्के सति अनन्तरं **अधि** अधिकं **समतृप्यन्** कृतकृत्या मुक्ता अभूवन्निति यावत् । यस्मिंश्च विष्णौ नामानि नामार्थभूतानि गुणकर्मादीनि च ज्ञात्वा तस्मिन् ज्ञानेऽ**धिश्रुते** परिपक्के **समतृप्यन्** **तत्र** तस्मिन् विष्णावेव देवाः **सर्वयुजः** सर्वैर्मनोवाक्कायकर्मभिर्युक्ता भवन्ति । तात्पर्यद्योतनाय एवं[२६८] वेत्तुः फलमाह– **तेनेति** ॥ **विद्वान्** एवं जानन् **तेन** ब्रह्मणा तत्प्रसादेन **पाप्मान**मप्रारब्ध**मपहत्य** क्षपयित्वा **स्वर्गं लोकं** वैकुंठादिस्थान**मप्येति** प्राप्नोतीत्यर्थः ॥

'यदक्षरं समेति सत्यस्य सत्यमनु यत्र युज्यते' इति यद्भगवतः स्त्रीपुंरूपद्वयमस्तीत्यभिप्रेतं तदिदानीं स्पष्टमुपपादयति– **नैनमिति** ॥ **एनं** विष्णुं **वाचा स्त्रियं** केवलं स्त्रीरूपं **ब्रुवन्** ब्रुवाणो न वदति । तथा एनं **पुमांसं** केवलं पुरुषमेव ब्रुवन्नपि न वदति । एनं **अस्त्री-पुमान् ब्रुवन्** अस्त्रीपुमांसं ब्रुवन् स्त्रीरूपः पुंरूपश्च न भवत्येवायमिति ब्रुवाणोऽपि न वदति । विष्णोरुभयरूपयोरपि सत्वादिति भावः । अत एव कश्चनैनं स्त्रियं पुमांसं वा वदन्वदति चेत्स **वदत्येव**

२६८. 'क'पाठे एवं इति पदं नास्ति

यथार्थवाद्येवेति यावत् । अथवैनं स्त्रियं पुमासं च ब्रुवन्न वदतीति वचनं लोकस्त्रीपुंसविलक्षणत्वाभिप्रायेण । एनमस्त्री पुमानिति ब्रुवन्नपि न वदतीत्येतदुभयरूपसद्भावाभिप्रायेणेति ज्ञेयम् ॥

एवं सर्वे शब्दा भगवद्वाचका इत्युक्त्वाऽकारो विशेषतो नारायणस्य वाचक इत्याह– **अः इति ब्रह्मेति** ॥ **अः इति** अकारेण **ब्रह्म** पूर्णं वस्तूच्यते । तत्राकारस्य पूर्णवाचित्वे सिद्धेऽहमेव सोऽकारवाच्य **इत्यागतं** सिद्धम् । ममैकस्यैव परिपूर्णत्वात् । अन्येषां सर्वेषां मद-धीनत्वेनाल्पत्वादित्याह महिदासरूपो भगवान्नारायणः ।

एवमोङ्कारो बृहतीसहस्रं चाकारानन्तरं विष्णोरेव विशेषवाचक-मित्यप्यत्र द्रष्टव्यम् । अत एव बृहतीसहस्रविषयविद्यान्तरोपदेशार्थं पुनस्तत्परामृश्यारभ्यते– **तद्वा इति** ॥ तस्य वा एतस्य बृहतीसहस्रस्य संपन्नस्य षट्त्रिंशतमक्षराणां सहस्राणि भवन्ति । पुरुषायुषोऽन्हां सहस्रण्यपि तावन्त्येव भवन्ति । अत एवाहरभि-मानिसूर्यरूपेषु स्थितानामहर्नामकाणां पुमाकाराणां भगवद्रूपाणां सहस्राण्यपि **तावन्त्येव** षट्त्रिंशदेव भवन्ति । एवं स्थिते कदाचि-ल्लीलया भगवान् तानि स्त्रीरूपाण्येव पुमाकाराणि विधाय सूर्यगता-हर्नामकपुंरूपाणि च स्त्रीरूपाणि कृत्वा **जीवाक्षरेणैव** बृहत्युक्थ-शंसिन्ता यो जीवस्तत्स्थबृहत्युक्ताक्षरगतेन षट्त्रिंसत्सहस्रसंख्याकेन स्त्रीरूपसमूहेन पुमाकारतामापादितेन **जीवाहः** जीवाख्यसूर्यगतमहः-शब्दवाच्यं तावत्संख्याकपुरुषरूपजातं संपादितस्त्र्याकारमाप्नोति । प्रायेण तु जीवान्हा सूर्यगताहर्नामकपुरुषरूपजातेन **जीवाक्षरं** शंसितृजीवगतबृहत्युक्थवर्णस्थितस्त्रीरूपसमूहमाप्नोति । न तदा स्त्रीत्वपुंस्त्वयोर्व्यत्यासः । इत्येवं **अनकाममारः** अनस्य प्राणस्यो-

त्पत्तिकामः सन् मायां लक्ष्म्यां रमत इत्यनकाममारनामा भगवान् स्वेच्छयैव स्त्रीरूपैः रमत इति शेषः । तान्येव स्त्रीरूपाणि पुंरूपाणि चैकीकृत्य द्विरूपः सन् जीवाक्षरेण जीवाहराप्नोति जीवान्हा जीवाक्षरमित्यपि व्याख्येयम् । इदनीमुभयत्रैकवचनं मुख्यमेव । प्राक्तु समुदायापेक्षमिति विशेषः ।।

'युजो युक्ता अभियत्संवहन्ती'त्युक्तमर्थं विशदयति– **अथ देवरथ इति ।। देवस्य** विष्णोर्वायोश्च रथ इत्यर्थः । देवैर्निर्मितो रथ इति वा । उच्यत इति शेषः । स चाध्यात्मं देहाख्यः । अधिदैवं रथरूप एव । तत्राध्यात्मं **तस्य** देहाख्यरथस्य **वाक्** वागभिमानिन्युमा **उद्धिः** उद्धारणरज्जुरूपा । चक्षुरादिदेवानां उद्धारणहेतुत्वात् । **श्रोत्रे** वामदक्षश्रोत्रगतचन्द्रतद्भार्ये **पक्षसी** पक्षयोः दक्षवामपार्श्वयोरश्वरूपेण स्थिते **चक्षुषी** दक्षवामचक्षुर्गतसूर्यतद्भार्ये युक्ते पुरतो योजिताश्वरूपे । **मनः** मनोभिमानी रुद्रो मनोगतः **संगृहीता** सारथिः । अथ अधिदैवेऽपि **तस्य** रथस्य वाङ्नाम्नी उमा **उद्धिः** नागाकाराऽश्वोद्धारणरज्जुः । **श्रोत्रे** चन्द्ररोहिण्यौ **चक्षुषी** सर्यसंज्ञे च **पक्षसी युक्ते** पार्श्वतः पुरतश्च योजिते अश्वरूपे **मनो** रुद्रः सारथिः इतीमा देवता बोध्याः । सा चासावयं चेति **तदयं** प्राणो विष्णुर्वायुश्चाधितिष्ठति । उभयविधं रथमिति शेषः । अथवा तदिति भिन्नं पदं द्वितीयान्तं **तत्** रथतयोक्तं शरीरमित्यध्यात्मं । लिङ्गव्यत्ययेन तं रथमित्यधिदैवम् । उभयत्रापि लिङ्गव्यत्ययेन रथस्यैव सामान्यतः परामर्शो वा । **अयं** प्राणोऽधितिष्ठतीत्यर्थः । अत्र मन्त्रौ प्रमाणत्वेनोदहरिष्यन्नाह– **तदुक्तमिति ।। तत्** विष्णुवाय्वोरुभयविधरथाधिष्ठातृत्वं **ऋषिणा** सर्वज्ञेन अत एव सकलवेदानां प्रथमद्रष्ट्रा

भगवता हयग्रीवेण मन्त्ररूपेणोक्तमित्यर्थः । मन्त्रावुदाहरति– **आतेनेति ।।** प्रतीकमात्रोपादानमिदम् । तेन समग्रौ मन्त्रौ ग्राह्यौ ।

'आ तेन यातं मनसो जवीयसा रथं यं वामृभवश्चक्रुरश्विना ।
यस्य योगे दुहिता जायते दिव उभे अहनी सुदिने विवस्वतः'[२६९] ।

'निमिषश्चिज्जवीयसा रथेनायातमश्विना ।
अन्तिषद्भूतु मामव'[२७०] इति ।

तत्राद्यमन्त्रस्यायमर्थः । हे **अश्विना** अश्विनौ अश्वमुखौ अशुगती वा विष्णुवायू **मनसो जवीयसा** पटुनेति यावत् । **तेन** शरीराख्येन रथेन **आयातम्** शरीरे सन्निहितौ भवतमिति यावत् । **यं रथं वां** युवयोर्थमेव **ऋभवो** देवाः **चक्रुः** निर्मितवन्तः **यस्य रथस्य योगे** भगवद्विषयकमनोवाक्कायकर्मभिः संबन्धे सम्यग्जाते सति **विवस्वतो** विविधं वासवतः तत्तदाकारेण सर्वत्र व्याप्तस्य भगवतः तत्प्रसादेनेति यावत् । जीवस्य **दिवो दुहिता** अर्थप्रकाशकत्वात् द्यौर्विद्या तदुत्पन्ना विष्णुतत्वापरोक्षदृशिर्जायते । सुखदातृत्वाच्छोभनदिन-रूपत्वाच्च **सुदिने उभे अहनी** जीवन्मुक्तिमुक्त्यवस्थारूपे च **जायते** साध्ये भवतः, इत्यध्यात्मम् ।

अधिदैवे तु **मनसो जीवयसा**ऽतिवेगवता **तेन** रथेनास्मद्यज्ञं प्रत्यायातम् । **यं** रथं **वां** अर्थे ऋभश्चक्रुः । **यस्य** रथस्य **योगे** भगवता संबन्धे जयमाने सति तस्मिन्नेव रथे **दिवो दुहिता** द्यौः सर्वस्त्रीणामुत्तमा महालक्ष्मीस्तत्पुत्री भारती । तथा **सुदिने उभे**

---

२६९. ऋक्.सं. १०-३१-१२ २७०. ऋक्.सं. ८-७३-२

**अहनी** जीवन्मुक्तिमुक्त्यवस्थादेवते अहेत्वाज्ज्ञानरूपत्वाच्चाहःशब्द-वाच्ये लक्ष्म्यपत्यभूते वायुरूपे च **विवस्वतो** भगवतस्सकाशा**ज्जायते** रथारूढाभ्यां लक्ष्मीनारायणाभ्यां भारतीप्राणौ जायेते इति यावदिति । अयं च सृष्टिविशेष इति बोध्यम् ।।

**निमिषश्चिज्जवीयसा** चक्षुर्निमेषादप्यतिवेगवता पटुना रथेनायातम् । **अवो**ऽवनं रक्षणं **वां** युवयोः **अंतिषत्** अन्तिके समीप एव स्थितं न तु दूरतः मम **भूतु** भवतु । यथा दासानां राजसमीप, इति द्वितीयमन्त्रार्थः । इति ऋषिणोक्तमिति पूर्वेणान्वयः । जवीयसेत्यध्यायान्ते द्विवचनप्रयोजनं तु प्रागुक्तमेवानुसन्धेयम् ।।२.३.८ ।।

**।। इति श्रीमन्महैतरेयोपनिषद्भाष्यभावप्रदीपे द्वितीयारण्यके तृतीयोऽध्यायः ।।**

# अथ द्वितीयारण्यके चतुर्थोऽध्यायः

प्रलये भगवत एकस्यैवावस्थानम्

उपनिषत्

**ॐ आत्मा वा इदमेक एवाग्र आसीत्, नान्यत् किञ्चन मिषत् ।**

श्रीब्रह्मादीनां प्रलयावस्थाननिषेधः

भाष्यम्

एको नारायणस्त्वासीत् प्रलये[१] रमया सह ।
नित्याततगुणत्वात् स आत्मेति श्रुतिषूदितः ।।

इदं सर्वमपेक्ष्याऽसौ कालतो गुणतस्तथा ।
अग्र्य एव [२]समस्तेभ्यस्तद्वशत्वाद् रमाऽपि सा ।।

विद्यमानापि नाग्रस्था गुणैरूना ततो यतः ।
न ब्रह्मा न शिवश्चासीन्नैवान्यच्च मिषत् क्वचित् ।।

सुप्तास्तत्र यतो जीवाः सर्वे ब्रह्मशिवादिकाः ।
असुप्ता श्रीश्च मुक्ताश्च स्वतन्त्रोन्मेषवर्जनात् ।।

अनुन्मेषा एव तेऽपि स्वतन्त्रोन्मेष एकराट् ।
नारायणो न चान्योऽस्ति पूर्णोन्मीलद्गुणात्मकः ।।

पराधीनेन वित्तेन भुंजन्नपि हि भिक्षुकः ।
वित्तवानिति नैवोक्तस्तथा श्रीर्मुक्तिगा अपि ।।

---

१. प्रळये इति ह्.पाठः  २. समस्तेहा इति ह्.पाठः

**मिषन्तोऽप्यन्यतन्त्रत्वान्न मिषन्तः कथञ्चन ।**
**सर्वदाप्येक एवायं स्वतन्त्रो नापरः क्वचित् ।।**
**कालाग्र्यत्वं वक्तुमस्य प्रलये स्थितिरुच्यते ।**

**भावप्रदीपः**

**पूर्णोन्मीलद्गुणात्मानं स्वतन्त्रं विश्वभावनम् ।**
**नारायणमहं वन्दे मरुद्ब्रह्मादिकामदम् ।।**

'आत्मा वा इदमेक एवाग्र आसीत्' इत्येतत्खण्डं व्याचष्टे– **एको नारायण इत्यादिना** ।। अत्र 'इदमग्रे' इत्यस्यार्थः– **प्रलय इति** । इदमिति द्वितीया षष्ठ्यर्थेति भावः । एक एवासीदित्यनेन रमाया अपि प्रलयेऽभावः प्रतीयते । अतो **रमया सहे**त्युक्तम् । एवकारविरोधस्तु परिहरिष्यते । आत्मशब्दार्थमाह– **नित्येति** ।। आङ् पूर्वत्तनोतेर्डमन् । गुणानां योग्यतया श्रुत्यन्तरबलाद्वा लाभः । अत्राङन्तरोपश्लेषोऽपि द्रष्टव्यः । आसमन्तात्सर्वकालेप्यात्मेति । तेन नित्येत्यस्यापि लाभः ।।

इदमस्याग्र इति व्याख्याने विभक्तिव्यत्ययप्राप्त्या तन्नातीव रुचिर-मिति मन्वानो द्वितीयामेव विभक्तिमङ्गीकृत्य प्रकारान्तरेण व्याचष्टे– **इदं सर्वमिति** ।। अपेक्ष्येत्यध्याहार्यप्रदर्शनम् । तत्तात्पर्यकथनं– **तत इति** । **अस्मात्** सर्वस्मादित्यर्थः । कालतो गुणतश्चाग्र्य एव । अत एव समस्तश इति योजना । एतेनाग्रे आसीदित्यस्य पुरस्सर आसीदित्यर्थ उक्तो भवति । ननु रमया सहैव प्रलये आसीदित्यु-क्तत्वात्कथं रमापेक्षया कालाग्र्यत्वमस्येत्यत आह– **तद्वशत्वादिति** ।। रमाया इतरेभ्यः श्रैष्ठ्यज्ञापनार्थं रमापीत्यपिशब्दः । विद्यमानाऽपि

प्रलये तद्वशत्वान्नाग्रस्थेत्युच्यते । तद्वशत्वमपि कुतः? यतो गुणैः **ततो** नारायणादूना । तथा च स्वातन्त्र्येणाग्रस्थितत्वमिह विवक्षितम् । तत्तु रमाया नास्तीति भावः । एतेनैक एवेत्येवकारविरोधः परिहृतो भवति ॥

'नान्यत्किंचन मिषत्' इत्येतद्व्याचष्टे– **न ब्रह्मेति** ॥ **मिषत्** उन्मेषणं कुर्वत् । ज्ञानादिगुणैः प्रकाशमानमिति यावत् । अथवा तद्वशत्वादित्यारभ्यैव नान्यदित्यस्य व्याख्यानम् । ननु प्रलये ब्रह्मादिजीवानां सत्वात्कथं 'नान्यत्किंचन' इति निषेध इत्यत आह– **सुप्ता इति** ॥ **तत्र** प्रलये । अत्र ब्रह्मपदेन वाय्वादयो ऋजवो ग्राह्याः । ब्रह्मणः परान्ते मुक्तत्वेन प्रलये सुप्त्युक्त्ययोगात् । अत एव 'मिषदि'ति विशेषणमिति भावः । ननु वाय्वादिऋजूनामपि प्रलये मनोवृत्तिलोपाभावेन प्रतिभातपरावरतया कथं सुप्तत्वेक्तिरिति चेत् सत्यम् । तथापि छत्रिन्यायेनौपचारकमिदमिति बोध्यम् । ननु एवमपि श्रियो मुक्तानां चासुप्तानां प्रलये सत्वादन्यन्मिषन्नासीदिति कथमुपपद्यत इत्यत आह– **असुप्ता इति** ॥ यद्यप्यसुप्तास्तथापि ते स्वतन्त्रोन्मेषवर्जनादनुन्मेषा एव । तस्मान्नान्यत्किंचनमिषदिति निषेध इति भावः । उक्तमर्थं बुद्ध्यारोहाय सङ्ग्रहेणाह– **स्वतन्त्रोन्मेष इति** ॥ अत्रोन्मेषणं न नेत्रोन्मीलनं विवक्षितम् । किन्तु पुर्णोन्मीलद्गुणात्मकत्वमेवेत्याह– **पूर्णेति** ॥ ननु पराधीनतयाऽप्युन्मेषणस्य सत्वात्कथमनुन्मेषो रमादीनामुच्यत इत्यत आह– **पराधीनेनेति** ॥ **भुंजन्** भुंजानः । 'चन्द्रादयस्तु मन्यन्ते सर्वस्मादुभयं पदम्'[३] इति वचनाद्भुजेः परस्मैपदता । **मुक्तिगाः** मुक्ताः । **न मिषन्तः** मिषन्त

---

३. श्रीमन्न्यायसुधायामृद्धृता कारिका- ३२८६-पु. रचनानुपपत्त्यधिकरणम्

इति नोच्यन्त इत्यर्थः । रमादीनां भगवदिच्छयोन्मेषणवत्स्वातंत्र्यस्थापि कदाचिल्लाभसंभवे स्वतन्त्रोन्मेषणस्यैवापत्या मिषत्वोक्तिर्नानुपपन्नेत्यत आह– **सर्वदेति** ।। नन्वेवं तर्हीदं सर्वमपेक्ष्य कालतो गुणतश्चाग्रेसर आसीदित्येव व्याख्यानं स्वरसम् । सर्वोत्तमत्वलाभात् । इदमस्याग्रे प्रलये आसीदिति प्रथमव्याख्यानं तु व्यर्थम् । प्रलयेऽवस्थानोक्त्या गुणविशेषालाभादित्यताह– **कालाग्र्यत्वमिति** ।। अथवा सर्वदाप्येक एवायं स्वतंत्रो न परश्चेद्विशिष्य प्रलय एवैकावस्थानोक्तिः कुतः इत्यत आह– **कालाग्र्यत्वमिति**।।

भगवतः सशकाशादादिसृष्टिः

**उपनिषत्**

**स ईक्षत, इमान् लोकान्नु सृजा इति । स इमांल्लोकानसृजत, अम्भो मरीचीर्मरमापः । अदोऽम्भः परेण दिवं द्यौः प्रतिष्ठा । अन्तरिक्षं मरीचयः । पृथिवी मरः । या अधस्तात् ता आपः । स ईक्षतेमे नु लोका लोकपालान्नु सृजा इति । सोऽद्भ्यः एव पुरुषं समुद्धृत्यामूर्च्छयत् ।**

लोकाभिमानिदेवसृष्टिकथनम्

**भाष्यम्**

स ऐच्छद्भगवान् विष्णुः स्रष्टुं लोकाभिमानिनः ।
लोकाभिधानवद्देवाञ्जडलोकांश्च शाश्वतः ।।

स लोकेभ्यः पूर्वतनानबाख्यान् महदादिकान् ।
ब्रह्मशर्वादिकान् सृष्ट्वा जडैस्सह जनार्दनः ।।

**दिवमाकाशमुर्वीं च ससृजेऽथ द्विसप्तकान् ।**
**इति सृष्ट्वा स लोकांस्तु पुनस्तानेव लोकपान् ।।**

**अण्डान्तः स्रष्टुमैच्छच्च तेषां पूज्यत्वसिद्धये ।**
**अम्नामकेभ्यस्तेभ्यः स पूर्वसृष्टेभ्य एव तु ।।**

**सर्वजीवाधिकत्वात् तु ब्रह्माणं पुरुषाभिधम् ।**
**अंशेनोद्धृत्य रुद्राद्यैः सह चैनमयोजयत् ।।**

**तथैवाचेतनानाञ्च भागानुद्धृत्य पिण्डवत् ।**
**चेतनाचेतनं राशिमेकस्थं विदधे प्रभुः ।।**

**भावप्रदीपः**

'स ईक्षत लोकान्नु सृजा' इत्येतद्विवृणोति– **स ऐच्छदिति** ।। लोकानित्यस्यार्थद्वयम्– **लोकाभिधानवद्देवान् जडलोकांश्चेति** । देवानां लोकाभिधानवत्वं कथमित्यत उक्तम्– **लोकाभिमानिन इति** ।। तदभिमानिनां तच्छब्दवाच्यत्वमभिमानिनयन्यायसिद्धमिति भावः । 'स इमाँल्लोकानसृजतांभो मरीचिर्मरमापः' इत्यस्य व्याख्या– **स लोकेभ्य इति** ।। 'या अधस्तात्ता आपः' इत्युत्तरवाक्यार्थसङ्ग्रहाय **लोकेभ्यः पूर्वतनादित्युक्तम्** । तेनाधस्तादित्यस्य पूर्वं विद्यमाना इत्यर्थ उक्तो भवति । **महदादिकान्** तदभिमानित्वेन तन्नामकान् । **जडैः** महत्तत्वादिभिस्सह ।।

'द्यौः प्रतिष्ठांऽतरिक्षं मरीचयः पृथिवी मारः' इति मूले अम्भो मरीचिर्मर इति स्वोक्तपदव्याख्यानं क्रियते । तद्विवरणायोक्तम्– **दिवमाकाशमुर्वीं चेति** ।। तत्रांभःपदार्थैकदेशो **द्यौः** । आकाश-

मरीचिपदवाच्यमन्तरिक्षम् । उर्वीमरपदवाच्या पृथिवीति बोध्यम् । त्रिलोकविवक्षयेयमुक्तिः । अत्रैव चतुर्दशलोकानामन्तर्भाव इत्याशयेनोक्तम्– **द्विसप्तकानिति** ।। लोकानिति योज्यम् । अथ दिवमाकाशमुर्वीं चेति त्रिलोकात्मकान् द्विसप्तलोकान्ससृजेति योजना ।।

'स ईक्षतेमे नु लोका लोकपालान्नु सृजा३ इति' इत्येतद्व्याचष्टे– **इति सृष्ट्वेति** ।। अत्र प्रथमं जडलोकसृष्टिरनन्तरं लोकपालसृष्टिरुच्यत इत्यन्यथाप्रतीतिनिरासायोक्तम्– **पुनस्तानेव लोकपालानिति अण्डान्तरिति च** ।। सृष्टानामेव पुनः सृष्टिः कुत इत्यत उक्तम्– **तेषां पूज्यत्वसिद्धय इति** ।। 'सोऽद्भ्य एव पुरुषं समुधृत्यामूर्च्छयत्' इत्यस्यार्थमाह– **अम्नामकेभ्य इति** ।। **तेभ्यो** ब्रह्मशर्वादिभ्यः । एवेत्यस्य तात्पर्यं– **पूर्वसृष्टेभ्य एवेति** । अत्र निरुपपदेन जीववाचकपुरुषपदेन सर्वजीवोत्तमो ब्रह्मैवोच्यत इति भावेनोक्तम्– **सर्वजीवेति** ।। **अंशेनोद्धृत्य** अंशेनैवोद्धृतैरुद्रादिभिस्सहैनमंशेनोद्धृतं ब्रह्माणमयोजयदित्यर्थः । एतेनामूर्च्छयदित्यस्य तात्पर्यार्थ उक्तो भवति । वाच्यमर्थं तु वक्ष्यति । अस्यैव तात्पर्यान्तरं वदंस्तदुभयं क्रोडीकृत्याह– **तथैवेति** ।। **अचेतनानां** प्राक् सृष्टानां महदादितत्त्वानां चेतनाचेतनात्मकं पिंडवदेकस्थमेकस्थानस्थितं राशिं विदध इत्यन्वयः ।।

ब्रह्मशरीरे तत्वाभिमानिदेवसृष्टिकथनम्

**उपनिषत्**

**तमभ्यतपत् । तस्याभितप्तस्य मुखं निरभिद्यत यथाण्डम् । मुखाद्वाक्, वाचोऽग्निः । नासिके**

**निरभिद्येताम् । नासिकाभ्यां प्राणः प्राणाद्वायुः । अक्षिणी निरभिद्येताम् । अक्षिभ्यां चक्षुश्चक्षुषः आदित्यः । कर्णौ निरभिद्येताम् । कर्णाभ्यां श्रोत्रं श्रोत्राद्दिशः । त्वङ्निरभिद्यत । त्वचो लोमानि लोमभ्य ओषधिवनस्पतयः । हृदयं निरभिद्यत । हृदयान्मनो मनसश्चन्द्रमाः । नाभिर्निरभिद्यत । नाभ्या अपानो अपानान्मृत्युः । शिश्नं निरभिद्यत । शिश्नाद्रेतो रेतसः आपः ॥२.४.१॥**

मुखाद्यभिमानिदेवोत्पत्तिकथनम्

**भाष्यम्**

पुनरैच्छज्जगन्नाथस्तस्याङ्गोत्पत्तिमच्युतः ।
अण्डवन्मुखमस्यासीत् प्रथमं तु शिरोभिधम् ॥

भिन्नमास्यं पुनस्तस्य विष्णोरेवेच्छया प्रभोः ॥
तत्र वाङ्नामकं रूपं वह्नेरसीत् पुरातनम् ।

तस्यैवाथ द्वितीयं च यदग्निरिति गीयते ॥
तथैव नासिकातोभून्मुख्यवायोः सुतो मरुत् ।

प्राणो वायुरिति द्वेधा चक्षुषोऽभूत् तथा रविः ।
द्विरूप एव कर्णाभ्यां मित्रधर्माप्यवित्तपाः[४] ॥

दिग्देवता द्विरूपेण बभूवुः सर्व एव च ।
हृदयाद्गरुडानन्तशिवचन्द्राः पृथक् पृथक् ॥

४. मित्रधर्माप्पवित्तपाः इति ह.पाठः

**मनो बुद्ध्यभिमानाश्च[५] तन्नामानश्च जज्ञिरे ।**
**त्वचश्च रोमनामानो वृक्षनामान एव च ।।**

**द्विविधाः पारिजाताद्या बभूवुर्ब्रह्मदेहतः ।**
**हस्ताभ्यां द्विविधः शक्रः पद्भ्यां तत्सूनुरेव च ।।**

**यज्ञस्त्वजनि पायोश्च यमो निर्ऋतिरेव च ।**
**रेतोम्नामा द्विरूपस्तु शिव एव च गुह्यतः ।**
**अपानो मृत्युरिति च मुख्यो नाभेस्तु[६] मारुतः ।।२.४.१।।**

**भावप्रदीपः**

'तमभ्यतपत्' इत्यादिकं व्याचष्टे– **पुनरैच्छदित्यादिना** ।। 'मुखं निरभिद्यत यथांडं' इत्यस्यार्थ– **अण्डवदिति** ।। 'भिन्नमास्यं पुनस्तस्ये'त्यनेन तस्यैव मुखमित्यस्यावृत्याऽर्थान्तरमुक्तं भवति । 'मुखाद्वाक् वाचोऽग्निः' इत्यस्यार्थः– **तत्रेति** ।। आस्य इत्यर्थः । **पुरातनं** प्रथमम् । **अथानन्तरं** द्वितीयं रूपमित्यनेन **वाचो** वाङ्-नामकवन्हिरूपोत्पत्यनन्तरं **अग्निः** अग्निनामकं द्वितीयं रूपमुत्पन्न-मित्यर्थ उक्तो भवति । एवमुत्तरत्रापि । रविश्चक्षुरादित्य इति द्विरूपः । **मित्रः** सूर्यः । **धर्मो** यमः । अपां पालकत्वात् **अप्यो** वरुणः । **वित्तपः** कुबेरः दिग्देवता । स्वरूपेणेत्युपलक्षणम् । श्रोत्राख्यरूपेण चेत्यपि द्रष्टव्यम् । हृदयाद्गरूडानन्तशिवचन्द्रा इत्यनेन मनोबुध्यभि-माना इत्यनेन च मूले मनःशब्दो बुद्धेश्चन्द्रमःशब्दो गरुडानन्तशिवानां चोपलक्षक इति सूचितं भवति । तत्र बुद्ध्यभिमानिनो गरुडानन्त-

---

५. अभिमानास्ते इति ह.पाठः

६. नाभेश्च इति ह.पाठः

शिवा अध्यात्मं बुद्धिनामानः । अधिदैवं गरुडादिनामानो द्विरूपा जज्ञिरे । मनोभिमानी च चन्द्रमा अध्यात्मं मनोनामाधिदैवं चन्द्रमो नामा द्विरूपो जज्ञ इति विवेको ज्ञातव्य इत्यभिप्रायेण **पृथक् पृथगित्युक्तम्** । 'ओषधिवनस्पतयः' इत्यस्य सङ्ग्रहो– **वृक्षनामान इति** । रोमनामानो वृक्षनामानश्चेत्येवं द्विविधाः । अधुनातनानां वृक्षाणामादिसृष्टौ ब्रह्मदेहादुत्पत्तिः कथमित्यत उक्तम्– **पारिजाताद्या इति** ।। ते च देवतारूपावेवेति भावः । अत एव सिद्धत्वेऽपि पुनर्ब्रह्मदेहत इत्युक्तिः । कर्मेन्द्रियेष्वास्य शिश्नयोर्द्वयोरेवोक्तेरन्येषा-मपीदमुपलक्षणमिति भावेनाह– **हस्ताभ्यामित्यादि** ।। **द्विविधः** पूर्ववदध्यात्माधिदैवभेदेन । **तत्सूनुः** शक्रपुत्रो यज्ञो जयन्तः । पायोश्च यमो निर्ऋतिश्चेति द्वौ देवौ । द्विविध इत्यस्य सर्वत्रानुषङ्गः । एवं जिह्वाभिमानी वरुणोऽपि द्विरूपो ज्ञानेन्द्रियप्रकरणे मूले भाष्ये चोपस्कर्तव्यः । 'शिश्नं निरभिद्यत शिश्नाद्रेतो रेतस आपः' इत्यत्र रेतोऽप्शब्दाभ्यां को नाम देवोऽभिधीयत इत्यत आह– **रेतोम्नामेति** ।। **गुह्यतः** शिश्नतः । एवं 'नाभ्या अपानोऽपानान्मृत्युः' इत्यत्रापि विवक्षितां देवतामाह– **अपान इति** ।। मुख्यो मारुत एवापानो मृत्युरिति द्विरूपो नाभेरजनीति योजना । पूर्वटीकाकारास्तु अपानात् मृत्युरित्यस्यार्थः पायोश्च यमो निर्ऋतिरेव चेतीत्याहुः ।।

देवानां अन्नाद्यदनस्थाननिरूपणम्

उपनिषत्

**ता एता देवताः सृष्टा अस्मिन्महत्यर्णवे प्रापतन् । तमशनापिपासाभ्यामन्ववार्जत् । ता एनमब्रुवन्, आयतनं नः प्रजानीहि, यस्मिन् प्रतिष्ठिता अन्नमदामेति ।**

**ताभ्यो गामानयत्, ता अब्रुवन्न वै नोऽयमलमिति । ताभ्योऽश्वमानयत्, ता अब्रुवन् न वै नोऽयमलमिति । ताभ्यः पुरुषमानयत्, ता अब्रुवन् सुकृतं बतेति । पुरुषो वाव सुकृतम् ।**

इन्द्रियाभिमानिनां निरूपणम्

**ता अब्रवीत् यथायतनं प्रविशतेति । अग्निः वाग्भूत्वा मुखं प्राविशत् । वायुः प्राणो भूत्वा नासिके प्राविशत् । आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत् । दिशः श्रोत्रं भूत्वा कर्णौ प्राविशत् । ओषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशन् । चन्द्रमा मनो भूत्वा हृदयं प्राविशत् । मृत्युरपानो भूत्वा नाभिं प्राविशत् । आपो रेतो भूत्वा शिश्नं प्राविशत् ।**

**भाष्यम्**

एवं रूपद्वयेनापि स्तुवन्तो विष्णुमव्ययम्[७] ।
दिव्याम्बराः कुण्डलिनः प्राविशन्नुदकार्णवम् ।।

तदाऽशनापिपासाख्यं द्विरूपं मारुतं पुनः ।
तस्मिन् देवसमूहे तु विष्णुः प्रावेशयत् प्रभुः ।।

तेऽब्रुवन् देहि नो वासं यत्र चान्नमदामहे ।
गोरूपमेभ्यो ब्रह्माणं ददौ नारायणः प्रभुः ।।

---

७. अच्युतं इति ह.पाठः

**तत्र प्रविश्य ते देवा नालमित्यब्रुवन् पुनः ।**
**अश्वरूपं विरिञ्चं च पुनरेवाददात् प्रभुः ॥**

**तद्रूपेऽपि प्रविश्यैव नालमित्यब्रुवन् पुनः ।**
**पूर्वसृष्टं पुमाकारं ब्रह्मणोऽदात् पुनर्हरिः ॥**

**तद्दृष्ट्वैवालमित्यूचुर्विशतेति स चाब्रवीत् ।**
**विविशुश्च यथोत्पन्नाः सर्वे देवाश्चतुर्मुखम् ॥**

### भावप्रदीपः

'ता वा एता सृष्टाः' इत्येतत्खण्डं व्याचष्टे– **एवमिति** ॥ 'ता वा एताः' इति तदेतच्छब्दद्वयतात्पर्यं– **रूपद्वयेनापीति** । 'देवता' इत्यस्यैव **स्तुवन्त** इति **दिव्यांबरा कुंडलिन** इति चार्थान्तरम् । दिव्यतेस्तुत्यर्थत्वात् द्युत्यर्थत्वाच्च । 'तमशनापिपासाभ्यामन्ववार्जत्' इत्यस्यार्थमाह– **तदेति** ॥ देवसमूह इत्यनेन 'ता वा एता देवताः' इति बहुवचनेन प्रस्तुतानामेव तमित्येकवचनेन परामर्शः समुदायापेक्ष इति सूचयति । विष्णुरित्यनेनात्मेति कर्तृपदमनुवर्तनीयमिति सूचयति । 'ता एनमब्रुवन्' इत्यादिव्याचष्टे– **ते ब्रुवन्निति** ॥ 'प्रजानीही'त्यस्य तात्पर्यं– **देहीति** ॥ 'ताभ्यो गामानयत्' इत्यस्यार्थो– **गोरूपमिति** । **नालं** भोगाय न पर्याप्तम् । 'ताभ्योऽश्वमानयत्' इत्यस्यार्थः– **अश्वरूपमिति** । 'ताभ्यः पुरुषमानयत्' इत्यस्यार्थः– **पूर्वसृष्टमिति** । ब्रह्मणः **पुमाकारं** पुरुषाकृतिरूपम् । 'ता अब्रुवन् सुकृतं बते'त्यस्य तात्पर्यं– **तद्दृष्ट्वैवालमित्यूचुरिति** ॥ 'ता अब्रवीत्' इत्यादेरर्थो– **विशतेत्यादि** । 'अग्निर्वाक् भूत्वा मुखं प्राविशत्' इत्यारभ्य 'आपो रेतो भूत्वा शिश्नं प्राविशन्' इत्यन्तस्य व्याख्या– **विविशुश्च यथोत्पन्ना इति** ॥

अशनापिपासाभिमानी मारुतः

## उपनिषत्

**तमशनापिपासे अब्रूतां 'आवाभ्यामभि प्रजानीहि' इति । ते अब्रवीत्, 'एतास्वेव वां देवतास्वाभजाम्येतासु भागिन्यौ करोमि' इति । तस्माद्यस्यै कस्यै च देवतायै हविर्गृह्यते भागिन्यावेवास्यामशनापिपासे भवतः ।।२.४.२।।**

## भाष्यम्

अशनापिपासामानी तु द्विरूपो मारुतोऽवदत् ।
कुर्वाज्ञामावयोश्चैव यथा त्वच्छासनानुगौ ।।

नित्यं भवावेति हरिः सर्वत्र प्रविशेत्यमुम् ।
आह तस्माद् देवतानां सर्वासां भागभुङ् मरुत् ।।

एक एव प्राणनामा नाभिस्थोऽपि स एव तु[८] ।
अशनापिपासापानश्च मृत्युश्चेति चतुर्विधः ।।
एक एव महान् वायुः सर्वदेवेषु संस्थितः ।।२.४.२।।

## भावप्रदीपः

'तमशनापिपासे अब्रूतां' इत्यस्यार्थोऽ**शनापिपासामानीत्विति** । 'ते अब्रवीदि'त्यादेस्तात्पर्यम्– **हरिरित्यादि** ।। 'तस्माद्यस्यैकस्यै च' इत्यादेस्तात्पर्यं– **तस्माद्देवतानामिति** । 'मृत्युरपानो भूत्वा नाभिं प्राविशदि'त्युक्त्वा 'एतास्वेव वां देवतास्वभजामि' इत्याद्युक्त्याऽशनापिपासयोरग्न्यादिभ्य इव मृत्युअपानाभ्यामपि भेदः प्रती-

८. हि इति ह.पाठः

यतेऽतस्तन्निरासायाह– **नाभिस्थोऽपीति** ।। तर्ह्येतासु भागिन्यौ करोमीत्याद्युक्तिः कथम् । एतास्वित्यत्र मृत्व्यपानयोरपि सङ्ग्रहात् । न हि स्वस्मिन्नेव स्वस्य भागित्वं संभवतीत्यत आह– **अशना-पिपासेति** ।। तथा चैतास्वित्यत्रापानमृत्युव्यतिरिक्तानामेव देवतानां परामर्श इति नोक्तानुपपत्तरिति भावः ।।

**अन्नसृष्टिः**

**उपनिषत्**

**स ईक्षेत, इमे नु लोकाश्च लोकपालाश्चान्नमेभ्यः सृजा इति । सोऽपोऽभ्यतपत् । ताभ्योऽभितप्ताभ्यो मूर्तिर-जायत । या वै सा मूर्तिरजायत अन्नं वै तत् । तदेतत्सृष्टं पराङ्त्यजिघांसत् ।**

**भाष्यम्**

पुनरैच्छत् केशवोऽसावन्नमेभ्यः सृजा इति ।
अबाख्याः देवताः पूर्वं सृष्ट्वा[९] ब्रह्मादिकाः पुनः ।।

ददर्शऽशु विशालाभ्यां नेत्राभ्यां पुष्करेक्षणः ।
तद्दर्शनात् तदिच्छातस्तासां देहोऽभवत् पृथक् ।।

सर्वासामपि देहैकदेशेभ्यो मिलितं[१०] शुभम् ।
सर्वैरधिष्ठितं चैव विरिञ्चेन विशेषतः ।।

दिव्यावयवसम्पन्नमेकमेव सुलोचनम् ।
भोग्यभोक्त्रात्मना नास्ति तस्य दुःखं कथञ्चन ।।

---

९. पूर्वसृष्टा इति ह.पाठः १०. मिळितं इति ह.पाठः

**ते हि देवाः स्वयं भोग्याः स्वयं भोक्तार एव च ।**
**क्रीडन्ते मोदिनो नित्यं तथाप्यन्नात्मकस्त्वसौ ।।**

**क्रीडयापाक्रमत् किञ्चित्.................।।**

**भावप्रदीपः**

'स ईक्षत' इत्यादिखंडं व्याचष्टे– **पुनरैच्छदित्यादिना** ।। 'सोऽभ्यतपत्' इत्यस्यार्थः– **अबाख्यदेवता इति** ।। ददर्शेत्यनेन दर्शनमेवाभितपनमित्युक्तं भवति । 'ताभ्योऽभितप्ताभ्यो मूर्तिरजायत' इत्यस्यार्थः– **तद्दर्शनादिति** । 'पृथग्देहोऽभवत्' इत्युक्तमेव विशदयति– **सर्वासामिति** ।। शरीरमिति वा रूपमिति वा विशेष्यमध्याहार्यम् । तेन मिलितमित्यादिनपुंसकोपपत्तिः । 'या वै सा मूर्तिरजायतान्नं वै तत्' इति तद्रूपस्यान्नत्वमुच्यते । तेन देवानां पूर्वोत्पन्नानां भोक्तृत्वमस्यामूर्तेर्भोग्यत्वं प्राप्तम् । न चैतद्युज्यते । मूर्तेरपि सकलदेवताधिष्ठितत्त्वेन भोक्तृणामेव भोग्यात्मकत्वप्राप्त्या खादनादिना दुःखस्यापि प्रसङ्गादित्यत आह– **भोग्येति** ।। भोग्यभोक्त्रात्मनास्थितस्य **तस्य** देवसमुदायस्य । कुतो दुःखं नास्तीत्यत आह– **ते हीति** ।। स्वयमेव भोग्याः स्वयमेव भोक्तारश्च सन्तो नित्यं मोदिन एव क्रीडन्त इत्यन्वयः । तर्हि 'तदेतत्सृष्टं पराङ् अत्यजिघांसत्' इति तस्या अन्नमूर्तेरात्मादनभिया पलायनोक्तिः कथमित्यतस्तदपि क्रीडयैवेत्याह– **तथापीति** ।। **असौ** देहः । देवतासमुदायो वा । ब्रह्मा वा ।

**अन्नदाता मुख्यवायुः**

**उपनिषत्**

**तद्वाचाऽजिघृक्षत् । तन्नाशक्नोद् वाचा ग्रहीतुम् । स**

**यद्धैनद्वाचाऽग्रहैष्यदभिव्याहृत्य हैवान्नमत्रप्स्यत् । तत्प्राणेनाजिघृक्षत्, तन्नाशक्नोत् प्राणेन ग्रहीतुम् । स यद्धैनत् प्राणेनाग्रहैष्यत् अभिप्राण्य हैवान्नमत्रप्स्यत् । तच्चक्षुषाऽजिघृक्षत्, तन्नाशक्नोच्चक्षुषा ग्रहीतुम् । स यद्धैनच्चक्षुषाऽग्रहैष्यत् दृष्ट्वा हैवान्नमत्रप्स्यत् । तच्छ्रोत्रेणाजिघृक्षत्, तन्नाशक्नोच्छ्रोत्रेण ग्रहीतुम् । स यद्धैनच्छ्रोत्रेणाग्रहैष्यत् श्रुत्वा हैवान्नमत्रप्स्यत् । तत् त्वचाऽजिघृक्षत्, तन्नाशक्नोत् त्वचा ग्रहीतुम् । स यद्धैनत् त्वचाऽग्रहैष्यत् स्पृष्ट्वा है वान्नमत्रप्स्यत् । तन्मनसाऽजिघृक्षत् तन्नाशक्नोत् मनसा ग्रहीतुम् । स यद्धैतन्मनसा ग्रहैष्यत् ध्यात्वा हैवान्नमत्रप्स्यत् । तच्छिश्नेनाजिघृक्षत्, तन्नाशक्नोच्छिश्नेन ग्रहीतुम् । स यद्धैनच्छिश्नेनाग्रहैष्यद्विसृज्य हैवान्नमत्रप्स्यत् । तदपानेनाजिघृक्षत्, तदावयत् । सैषोऽन्नस्य ग्रहो यद्वायुः । अन्नायुर्वा एष यद्वायुः ।**

देवादीनां अन्नदातृत्वनिरूपणपुरःसरं ब्रह्मवाय्वोः समानत्वकथनम्

भाष्यम्

.....................तं तदासौ चतुर्मुखः ।
अत्तुं वागादिभिः सर्वैरच्छन्नाप्यशकत् तदा ॥

जानन्नपि क्रीडयैव तारतम्यं प्रकाशयन् ।
एवं चकार ब्रह्मा स काङ्क्षानं लोककर्तरि ॥

क्षुत्पिपासादयश्चैव देवानां भोगसाधकाः ।
न तु पीडाकरास्तेषामैश्वर्यादिगुणोन्नतेः ।।

अन्नमूर्तिं ततो ब्रह्मा प्रधानेनैव वायुना ।
अपानाख्येनात्तुमैच्छत् तदैवाशकदाशु सः ।।

तस्माद् भोक्तैक एवासौ सर्वस्यान्नस्य मारुतः ।
तत्प्रसादात् परेऽश्नन्ति किञ्चित् किञ्चिन्न चाखिलम् ।।

आयुरूपोऽखिलानां च देवानां वायुरेव हि ।
अन्नदेवस्य चायुः स तस्माद्देवोत्तमो मरुत् ।।

आयुःशब्दो ज्ञानवाची गतिवाची च यत्ततः ।
चेष्टामोक्षज्ञानदाता सुराणां मारुतस्ततः ।।

अन्योन्यगुणदातृत्वात् समानौ ब्रह्ममारुतौ ।
तस्मान्मोक्षे सुखे ज्ञाने विष्णुभक्त्यादिकेष्वपि ।।

सर्वेभ्यश्चाधिकौ तौ हि तयोर्विष्णुः परस्सदा ।

**भावप्रदीपः**

'तद्वाचाऽजिघृक्षत्तन्नाशक्नोत् वाचा ग्रहीतुं' इत्यादेः सङ्ग्रहेण व्याख्यानम्– **तं तदाऽसावित्यादि** । वागादिभिः सर्वैः करणैः । **तदापि** तथापि । ननु ब्रह्मणः कथमेवं विधमज्ञानादिकमित्यत आह– **जानन्निपीति** ।। अपानाख्येन प्रधानवायुनैवान्नग्रहो न वागदिभिर्भविष्यतीति जानन्नपीत्यर्थः । **तारतम्यं** वागाद्यपानान्तानाम् । **एवं चकार** वागादिभिर्जिघृक्षुवदशक्तवच्चात्मानं दर्शयामास । अज्ञानादेवैवं प्रवृत्तिः किं न स्यादिति तत्राह– **काज्ञानमिति** ।।

ब्रह्मणः प्रसक्ताज्ञानदोषनिरासप्रसङ्गेन 'तमशनापिपासाभ्यामन्ववार्जत्' इत्यनेन प्रसक्तां देवानां क्षुत्पिपासादिदोषशङ्कामपराकरोति– **क्षुत्पिपासादय इति** ।। इयांस्तु विशेषः । ब्रह्मणोऽज्ञानं सर्वथा नास्ति । क्षुत्पिपासादयस्तु देवानां सर्वेषां स्वरूपतः सन्त्येव । किं नाम भोगसाधकत्वान्न दोषरूपा इति । 'तदपानेनाजिघृक्षत् तदावयत्' इति वाक्यं व्याचष्टे– **अन्नमूर्तिमिति** ।।

'सैषोऽन्नस्य ग्रहो यद्वायुः' इत्येतद्व्याचष्टे– **तस्मादिति** ।। एवमन्वयव्यतिरेकाभ्यां प्राणस्यैव भोगशक्त्यवगमादित्यर्थः । 'अन्नायुर्वा एष यद्वायुः' इत्येतद्व्याचष्टे– **आयूरूप इति** ।। आयुप्रदातेत्यर्थः । **अन्नदेवस्य** च अन्नाभिमानिनो ब्रह्मणोऽप्यायुःप्रदाता किम्वितरेषां देवादीनामित्यर्थः । आयुःशब्दस्यार्थान्तरमप्याह– **आयुःशब्द इति** ।। अय पय गताविति धातोर्गत्यर्थस्तावदायुःशब्दः । यद्यतो गत्यर्थस्तत एव ज्ञानवाची च । गत्यर्थानां ज्ञानार्थत्वात् । जीवनरूपायुर्वाचित्वं तु प्रसिद्धमेव । **ततः** कारणादायुःशब्दस्य चेष्टाजीवनज्ञानरूपार्थत्रयवत्वात् मारुतः सुराणामायुश्चेष्टानित्यजीवनरूपमोक्षज्ञानदातेत्यर्थः । नन्वन्नदेवस्य चायुः स इति कथमुपपद्यते । तयोस्समानत्वादित्यत आह– **अन्योन्य इति** ।। तथा च न तयोस्साम्यानुपपत्तिरिति भावः । ततश्च प्रकृते वायोरेकस्यैव सर्वदेवोत्तमत्वकथनेऽपि ब्रह्मवाय्वोरुभयोरपि तल्लभ्यत इति भावेनाह– **तस्मादिति** ।। तयोर्विष्णुः पर इति 'स ईक्षत' इत्याद्युत्तरप्रकरणतात्पर्यथनम् ।।

सर्वेषां भगवत्प्रेरितत्वकथनम्

उपनिषत्

**स ईक्षत कथं न्विदं मदृते स्यादिति । स ईक्षत कतरेण प्रपद्या इति । स ईक्षत यदि वाचाऽभिव्याहृतं, यदि प्राणेनाभिप्राणितं, यदि चक्षुषा दृष्टं, यदि श्रोत्रेण श्रुतं, यदि त्वचा स्पृष्टं, यदि मनसा ध्यातं, यद्यपानेनाभ्यपानितं, यदि शिश्नेन विसृष्टमथ कोऽहमिति ।**

भाष्यम्

देवतानां प्रवेशात् तु पूर्वमेव जनार्दनः ॥
इत्थमैक्षत देवेशो ब्रह्माद्या यदि मां विना ।

क्रियादिषु समर्थाः स्युर्न मे विष्ण्वभिधा भवेत् ॥
सर्वचेष्टयितृत्वाच्च विशिष्टबलतस्तथा ।

विष्णुरित्यभिधा मह्यं सा न युक्ता दिवौकसाम् ॥
स्वतन्त्रत्वे ततः सर्वे मद्वशा एव नान्यथा ।

तस्मादेषां प्रवृत्त्यर्थं प्रवेक्ष्ये सह वायुना ॥

भावप्रदीपः

एतदेवोत्तरप्रकरणं व्याचष्टे– **देवतानामिति** ॥ प्रवेशात् पूर्वसृष्टपुमाकारब्रह्मशरीर इति शेषः । देवताप्रवेशानंन्तरं 'कथं न्विदं मदृते स्यात्' इत्यालोचनस्य व्यर्थत्वात् **प्रवेशात्पूर्वमेव** इत्युक्तम् । 'अथ कोऽहं' इत्यस्य तात्पर्यं– **न मे विष्ण्वभिधा भवेदिति** ॥ उपपन्नेति शेषः । कुतो न भवेदिति तत्राह– **सर्वेति** ॥ 'णकारो

बलं षकारः प्राण आत्मा'[११] इति वक्ष्यमाणत्वाद्विष्णुनाम्नि षकारणकारयोश्चेष्टाबलार्थत्वात्[१२] वीत्युपसर्गस्य विशेषविशिष्टोभयार्थकत्वाद्विशेषेण सर्वचेष्टयितृत्वविशिष्टबलवत्त्वाभ्यां **मह्यं** मम विष्ण्वभिधा । सा च दिवौकसां स्वतन्त्रत्वे मां विनैव स्वस्वक्रियादिसमर्थे[१३] मम न युक्ता स्यादित्यर्थः । 'कथं न्विदं मद्वृते स्यात्' इत्यस्यार्थः– **ततः सर्वे मद्वशा इति** ।। 'स ईक्षत कतरेण प्रपद्यै' इत्यस्य तात्पर्य– **तस्मादिति** । सुराणां स्वातन्त्र्येण प्रवृत्तौ सामर्थ्याभावदित्यर्थः । वायुनेत्युपलक्षणम् । ब्रह्मणेत्यपि द्रष्टव्यम् ।।

जीवशरीरे भगवतः प्रवेशनिरूपणम्

**उपनिषत्**

**स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत । सैषा विदृतिर्नाम द्वाः । तदेतन्नान्दनम् । तस्य त्रय आवसथाः । त्रयः स्वप्नाः । अयमावसथोऽयमावसथोऽयमावसथ इति ।**

अवयवस्थितभगवद्रूपाभिधानम्

**भाष्यम्**

इति मत्वा विरिञ्चस्य शरीरं प्रविवेश सः ।
मूर्धन्यनाड्या प्रथमं ब्रह्मवायुसमन्वितः ।।

अग्न्यादयस्ततः पश्चात् प्रविष्टास्तन्नियोजिताः ।
प्रपदाभ्यां तथाऽन्येन रूपेण प्रविवेश सः ।।

---

११. ऐत.उ. पु- ७४६ १२. चेष्टाबलार्थकत्वात् इति 'ख'पाठः

१३. समर्थत्वे इति 'ख'पाठः

**बिभर्ति देहं तेनैव मूर्धाविष्टेन[१४] चेष्टयन् ।**
**नारायणो वासुदेव इति द्वेधा व्यवस्थितः ।।**

**मूर्धाविष्टो[१५] वासुदेवस्तस्य चावसथास्त्रयः ।**
**अक्षि कण्ठो हृदित्यैव त एव स्वप्ननामकाः ।।**

अवस्थात्रयप्रवर्तकत्वं भगवतः

**आप्नोत्यत्र स्वयं विष्णुरतः स्वप्नाः प्रकीर्तिताः ।**
**अनिरुद्धादिरूपेण त्रिधा तेषु व्यवस्थितः ।।**

**दाताऽवस्थात्रयस्यास्य जीवस्य क्रमशो विभुः ।**
**सुषुम्नायां वासुदेवो मूर्धन्येव व्यवस्थितः ।।**
**तस्यामेव ब्रह्मनाड्यां स्थितो नारायणः प्रभुः ।**

**भावप्रदीपः**

'स एतमेव सीमानं' इत्यादि व्याचष्टे– **इति मत्वेति** ।। **मूर्धन्यनाड्या** ब्रह्मनाडीद्वारेण । नन्वेवमालोचनपूर्वकं विष्णोर्विरिञ्चशरीरप्रवेशो व्यर्थ एव । तत्पूर्वमेव देवानां 'अग्निर्वाक् भूत्वा मुखं प्राविशत्' इत्यादिना प्रवेशप्रवृत्त्युक्तेरित्यतोऽत्र वस्तुस्थितिमाह– **अग्न्यादय इति** ।। तथा च विष्णुप्रवेशानन्तरमेव देवानां प्रवेशादथ तत्प्रेरणयैव स्वस्वव्यापारे प्रवृत्तेर्न विष्णुप्रवेशवैय्यर्थ्यमिति भावः । अत एवोपक्रमेऽपि 'देवानां प्रवेशात्तु पूर्वमेव' इत्युक्तमिति बोध्यम् । ननु पूर्वं 'तं प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं' इत्यादिना प्रपदादिक्रमेण ब्रह्मदेहे भगवत्प्रवेशस्योक्तत्वादिदानीं मूर्धन्यनाडीद्वारा

---

१४. मूर्ध्नाविष्टेन इति ह.पाठः १५. मूर्ध्नाविष्टो इति ह.पाठः

प्रवेशोक्तौ तद्विरोध इति चेन्न । रूपद्वयेनोभयथाप्रवेशसत्वादिति भावेनाह– **प्रपदाभ्यामिति** ।। उभयो रूपयोर्व्यापारं नाम चाह– **बिभर्तीति** ।। **तेनैव** प्रपदप्रविष्टरूपेणैव । तत्र कस्य रूपस्य किं नामेत्यत आह– **मूर्धाविष्ट इति** ।। एतेन प्रपदाविष्टो नारायण इति परिषेशन्यायेन सिद्धम् । 'अथ तस्य त्रय आवसथाः' इत्यादिकं व्याचष्टे– **तस्य चेति** ।। **तस्य** भगवतोऽन्येऽप्यावसथास्त्रयस्सन्ति अक्षि कंठो हृदित्येव । एतेनायमावसथ इति त्रिरुक्तेर्विषयभेदो दर्शितो भवति । त्रयः स्वप्ना इति पृथगुक्त्या आवसथातिरिक्ता इम इति प्रतीतिनिरासायाह– **त एवेति** ।। अक्ष्यादीनां स्वप्नशब्दप्रवृत्तौ निमित्तमाह– **आप्नोतीति** ।। जीवरूपमिति शेषः । स्वयं शब्दपर्यायस्वशब्दोपपदात् आप्लृ व्याप्ताविति धातोरधिकारणे नक्प्रत्ययः । धातोरादिलोपश्च । 'तस्य त्रय आवसथाः' इत्यनेन मूर्धाविष्टवासुदेव-रूपस्यैवावसथात्रयमुच्यत इति भाति । अतोऽत्र वस्तुस्थिमाह– **अनिरुद्धादीति** ।। आदिपदेन प्रद्युम्नसंर्षणौ । रूपत्रयकार्यमाह– **दातेति** ।। चतुर्मुखस्य स्वप्नसुषुप्त्योरभावात्कथं तस्यावस्थात्रय-दातृत्वमित्यत उक्तम्– **अस्य जीवस्येति** ।। अवस्थात्रययोग्य-चतुर्मुखेतरजीवसमुदायस्येत्यर्थः । मांडूकाद्युक्तं विश्वादिरूपत्रयमप्य-वस्थात्रयस्य पृथङ्नियामकमित्यङ्गीकारन्न तेन विरोधः । मूर्धाविष्टो वासुदेवः प्रपदाविष्टो नारायणश्च कुत्र तिष्ठत इत्यत आह– **सुषुम्ना-यामिति** ।। **तस्यामेव** ब्रह्मनाड्यां मूर्धन्येव स्थित इत्यर्थः ।

'तत ऊर्ध्वं गतो विष्णुर्वायुना सह देवतैः । स्थितो मूर्धनि देवेशः'[१६] इत्युक्तत्वात्[१७] ।।

---

१६. ऐत.भा. ४०-पु

१७. प्रगुक्तत्वात् इति 'ख'पाठः

भगवतोऽवताराण्यपि पूर्णानि

उपनिषत्

**स जातो भूतान्यभिव्यैख्यत् । किमिहान्यं वावदिषदिति । स एतमेव पुरुषं ब्रह्म ततममपश्यत् । इदमदर्शमिती३ तस्मादिन्द्रो नामेदन्द्रो ह वै नाम । तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः परोक्षप्रिया इव हि देवाः ॥२.४.३॥**

भाष्यम्

स एव भगवान् विष्णुः प्रादुर्भावात्मना पुनः ।
जातो मत्स्यादिरूपेण सर्वभूतेषु चाविशत् ॥

असुराणां निहन्तारं ज्ञानादिगुणदं तथा ।
चेष्टाप्रदं च भूतेषु[१८] न मदन्यं वदत्यपि ॥

इति मत्वा जगन्नाथो दैत्यनिग्रहणेच्छया ।
ज्ञानदानार्थमपि तु प्रादुर्भूतो भुवि प्रभुः ॥

तथा जीवेषु सर्वेषु प्रविष्टः प्रेरणेच्छया ।
को ह्यन्यस्तमृते विष्णुमेतत्कर्म करिष्यति ॥

स सर्वगुणसम्पूर्णं सर्वगं नित्यमव्ययम् ।
एतदेवस्वरूपं स त्वपश्यदवतारगम् ॥

---

१८. देहेषु इति ह.पाठः

**तस्मात् सर्वावताराश्च सर्वजीवेषु संस्थिताः[१९] ।**
**प्रादुर्भावाः सर्वगुणैः पूर्णा एव सदा स्थिताः ।**
**पश्यन्ति च तथा [२०]नित्यं निर्दोषोरुस्वसंविदा ॥**

**भावप्रदीपः**

'स जातो भूतान्यभ्यैख्यत्' इति वाक्यं व्याचष्टे– **स एवेति ॥** प्रादुर्भावात्मनेति जातशब्दप्रकृत्यर्थकथनम् । जनी प्रादुर्भाव इति धातोः प्रादुर्भावात्मकजनिं प्राप्त इत्यर्थः । न केवलं बहिर्मत्स्यादिरूपेण जातः किन्तु सर्वभूतेष्वाविशच्चेत्यन्वयः । 'किमिहान्यं वा वदिषदिति' इति वाक्यं व्याचष्टे– **असुराणामिति ॥** भूतेषु चेष्टाप्रदं चेति संबन्धः । अपिशब्दो ज्ञानादिगुणदं चेति चार्थः । असुराणां निहन्तारं ज्ञानादिगुणदं च मदन्यं विद्वज्जनो न वदति । अतोऽहमेक एव तादृश इति मत्वा हयग्रीवादिदैत्यनिग्रहणेच्छया सत्यव्रतादीनां ज्ञानदानार्थमपि मत्स्यादिरूपेण भुवि प्रादुर्भूतः। तथ भूतेषु चेष्टाप्रदं च मदन्यं न वदतीति मत्वा सर्वेषु जीवेषु प्रेरणेच्छया प्रविष्ट इति विवेकः । 'न मदन्यं वदन्ती'त्युक्तमेवोपपादयति– **को हीति ॥** **एतत्** दैत्यनिग्रहणादिकं कर्म । 'स एतमेव पुरुषं ब्रह्म ततममपश्यत्' इत्येतद्व्याचष्टे– **स सर्वेति ॥** सर्वगुणसंपूर्णमिति ब्रह्मशब्दार्थः । सर्वगं नित्यमिति ततममित्यस्यार्थद्वयम् । देशतः कालतश्च व्याप्तमित्यर्थः । 'एतमेव पुरुषं' इत्यस्यार्थः– **एतदेवावतारगं स्वरूपमिति** । अवतारगमिति मत्स्यादिबहिष्ठप्रादुर्भावरूपाणां भूतप्रविष्टरूपाणां च ग्रहणम् । इदं च दर्शनं प्रमारूपमेव न भ्रान्तिरूप-

---

१९. च स्थिताः इति ह.पाठः २०. नित्यनिर्दोष...इति ह.पाठः

मतो न शुक्तिरजतादिज्ञानवद्विषयासत्वं मन्तव्यमित्याशयेनाह– **तस्मादिति** ।। विष्णुना सर्वगुणसंपूर्णत्वादिना दृष्टत्वादित्यर्थः । **सर्वेऽवताराः** मत्स्याद्याः सर्वजीवेषु संस्थिताः प्रादुर्भावाश्च । ननु कथमस्य दर्शनस्य प्रमात्वमवगम्यते । येन विषयसत्यताऽवधर्यत इत्यतः सर्वेषां रूपाणामपि तथैव दर्शनसद्भावेन संवादबाहुल्यात् प्रमात्वमवगम्यत इत्याह– **पश्यन्ति चेति** ।। सर्वावताराः प्रादुर्भावश्चेति वर्तते । संवादिज्ञानानामपि कथं प्रामाण्यनिश्चय इत्यतो निर्दोषकरणोद्भवत्वादित्याह– **निर्दोषेति** ।। **स्वसंविदा** साक्षिप्रत्यक्षेण ।।

विष्णोः इदन्द्रइन्द्रशब्दवाच्यत्वे हेतुनिरूपणम्

**भाष्यम्**

**गुणपूर्णस्वरूपस्य त्वापरोक्ष्येण दर्शनात् ।**
**सर्वदैव ह्यसौ विष्णुरिदन्द्रो नामतो मतः ।।**

**ब्रह्मादीनां हि सर्वेषां तत्प्रसादेन जायते ।**
**जानन्ति न स्वतस्तेन नेदन्द्रास्ते प्रकीर्तिताः ।।**

**रमापि तत्प्रसादेन जानाति किमुतापरे ।**
**अल्पज्ञाना अल्पगुणा अल्पानन्दाश्च तेऽखिलाः ।।**

**रमाजशङ्करेन्द्राद्या[२१]स्तेनानिन्द्राः क्रमेण ते ।**
**पापैरज्ञाततां देवा मानयन्ति सदात्मनः ।।**

**हर्षेण तेन विष्णुः स इन्द्र इत्यभिशब्यते ।**
**नेदन्द्रतासुरादीनां ज्ञायेतेति श्रुतिर्हरिम् ।।**
इन्द्र इत्येव वदति पारोक्ष्येणोरुसद्गुणम् ।। इत्याद्यैतरेयसंहितायाम् ।

---

२१. शर्वशक्राद्या इति ह्.पाठः

**भावप्रदीपः**

'इदमदर्शमितीं३ तस्मादिदन्द्रो नाम' इत्येतद्व्याचष्टे– **गुणपूर्णेति** ।। गुणपूर्णं यत्स्वस्य रूपं तस्य सर्वदैव दर्शनात् **इदं** गुणपूर्णत्वेन प्रमितं स्वरूपं पश्यतीति इदंद्रो नाम मतो इत्यर्थः । नन्वेवं तर्हि ब्रह्मादीनामप्युक्तव्युत्पत्त्येदंद्रनामसंभवात्को विशेषो विष्णोरित्यत आह– **ब्रह्मादीनामिति** ।। जायते भगवदपरोक्षदर्शनम् । अत्र कैमुत्यमाह– **रमापीति** ।। एवं रमादीनां दर्शनस्य पराधीनत्वादि-दंद्रत्वाभावमुपपाद्येदानीं विद्यमानस्याल्पत्वाच्च तदभावव्यवहारो यथा-ल्पस्वे निस्वत्वव्यवहार इत्याह– **अल्पज्ञाना इति** ।। **गुणाः** ज्ञानानन्दातिरिक्ता वीर्यश्रियादयः । ज्ञानमात्रस्य प्रकृतत्वेऽपि तदितर-गुणग्रहणं दृष्टान्तत्वेन । **अनिन्द्राः** अनिदंन्द्राः । एतेन 'इदंद्रो ह वै नामे'ति पुनर्वचनमितरनिषेधाभिप्रायकमित्युक्तं भवति । **ह वा** इत्य-नेन इदंद्रनाम्नः सुप्रसिद्धतोच्यते । न चास्य वेदादिषु प्रसिद्धिरस्ति । क्वाचित्कत्वादित्यतोऽस्त्येव महती प्रसिद्धिरस्य प्रकारान्तरेणेत्या-होपनिषत् 'तमिदंद्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण' इति । कुत एवं परोक्षेणाख्यानं स्पष्टमेवेदंद्र इति कुतो नाचक्षत इत्यत उक्तम्– **परोक्षप्रिया इव हि देवा इति** । तद्व्यचष्टे– **पापैरिति** ।। **देवा** विष्ण्वाद्याः, यदि वेदादयः स्पष्टमप्रकाश्यात्**मनः** स्वस्य पापिभिर-ज्ञाततां संपादयेयुस्तर्हि तामज्ञाततां हर्षेणैव सदा मानयन्ति । तेन कारणेन स विष्णुरिदंद्रः सन्नपि इदंशब्दस्य इंभावमाश्रित्येन्द्र इत्येव शब्द्यते । न तु इदंन्द्र इति स्पष्टम् । एतदेव विशदयति– **नेदंद्र इति** ।।

## आत्म-कर्मशब्दवाच्यो मुख्यतो हरिरेक एव

### भाष्यम्

**आततगुणत्वादात्मा नारायणः । 'ब्रह्म पन्थाः सत्यं कर्म' इति तस्यैव पञ्चरात्रप्रसिद्धैरेव नामभिरारब्धत्वाच्च ।**

**मुख्यतः कर्मनामा तु प्रादुर्भावात्मको हरिः ।**
**अनिरुद्धतनुश्चैव तत्र ह्यमितचेष्टितः(ता)[२२अ] ॥**

**कर्माभासा जीवसङ्घाः सत्यं प्रद्युम्ननामकः ।**
**सङ्कर्षणो हरिः पन्थाः ब्रह्मोक्तो वासुदेवकः ॥**

**[२२]इत्यादिनामनिर्णये ।**

### भावप्रदीपः

एवं प्रमाणेन खण्डत्रयं व्याख्यायापि स्वष्टत्वार्थं पुनः स्ववचनेन प्रमाणान्तरेण च व्याचष्टे– **आततगुणत्वादिति** ॥ यद्यपीदं 'नित्याततगुणत्वात्स आत्मेति श्रुतिषूदितः'[२३] इति प्रागेवोक्तम् । तथाप्यात्मशब्दस्य जीवादिसाधारण्यादत्र नारायण एवात्मशब्दवाच्य इति कथमवगम्यत इत्यत उपक्रमादिलिङ्गैः स एवात्र विवक्षितो न जीवादिरिति वक्तुं प्रस्तावनार्थं पुनः प्रतिज्ञेयम् । कुतोऽयमात्मा नारायण इत्यत आह– **ब्रह्म पन्था इति** ॥ 'एष पन्था एतत्कर्मै-तद्ब्रह्मैतत्सत्यं'[२४] इत्युपक्रमे ब्रह्मादिचतुःशब्दाः श्रूयन्ते । ते च पञ्चरात्रे विष्णोरेव प्रसिद्धाः । अत उपक्रमस्तावद्विष्णुविषयोऽतो

---

२२. इत्यादि हि इति ह.पाठः २२अ. ह्यमितचेष्टतः इति ह.पाठः
२३. ऐत.भा.२.३.१ ४८३-पु
२४. ऐत.उ. २-१-१ पु.१

मध्येऽपि स एव प्रतिपाद्य इत्यङ्गीकर्तव्यम् । न ह्यन्यदुपक्रम्यान्यन्मध्ये गीयत इति संभवति । अतोऽयमात्मशब्दोदितो नारायण एवेति भावः । पूर्वोदाहृतसमाख्याप्रमाणसमुच्चयार्थश्चशब्दः । वासुदेवादिप्रतिपाद्यमूर्तिक्रमप्रदर्शनाय श्रौतक्रमोल्लङ्घनेन ब्रह्मपन्था इत्यादिनिर्देशः । अत एवैतन्नामचतुष्टयवाच्यं मूर्तिचतुष्टयं विविच्य दर्शयति– **मुख्यत इति** ।। प्रादुर्भावात्मकमत्स्यादिरूपोऽनिरुद्धतनुश्च हरिरेवेति संबन्धः । तत्र प्रादुर्भावरूपेऽनिरुद्धतनौ च **हि** यस्मादमितचेष्टिता तस्मात्कर्मनामा तदुभयरूपो हिरिरेवति पूर्वेणान्वयः । ननु 'करोऽस्मिन्मीयत इति कर्म जीव उदाहृतः'[२५] इति जीवस्यापि कर्मनामदर्शनात्कथं हरिरेव कर्मनामेत्यत आह– **कर्माभासा जीवसंघा इति** ।। अत एव मुख्यतः कर्मनामा त्वित्युक्तमिति भावः । सत्यादिशब्दार्थास्तु प्रथमाध्यायोक्ता एव बोध्या इति न तन्निर्वचनमत्र कृतम् ।।

**भाष्यम्**

**[२६]'मत्सीन्द्रमिन्दो पवमान विष्णुम्' इत्यादिश्रुतौ तस्मिन्नेव प्रसिद्धस्येन्द्रशब्दस्य बहुशोऽभ्यासाच्च । अकारस्य च विष्णावेव प्रसिद्धस्यात्राप्यभ्यासात् । 'तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी'[२७] इति सूर्यमण्डले पुण्डरीकाक्षत्वेन निर्दिष्टस्यात्रापि [२८]'य एष तपती'त्यादिना बहुशोऽभ्यासाच्च[२९] । सूर्यो हि विरूपाक्षः । सविता देव आगादिति पिङ्गलाक्षः[३०] प्रसिद्धः ।**

---

२५. गी.ता. ४-१९तः२३
२६. मथ्सी.. इति ह्.पाठः
२७. छा.उ. १-६-७
२८. बृह.उ. ४-३-२
२९. अनुसन्धानाच्च इति ह्.पाठः
३०. पिङ्गाक्षः इति ह्.पाठः

**विरूपाक्षः शिवः सूर्यः सुराचार्यो विनायकः ।**
**पुण्डरीकेक्षणो विष्णुः सहस्राक्षः सुराधिपः ।। इति च स्कान्दे ।**

**भावप्रदीपः**

युक्त्यन्तरमाह– **मत्सीति** ।। अत्र उपनिषदि 'इन्द्रात्परितन्वं' 'स इन्द्रः' 'स एवमेतमिद्रं' 'प्रेत्येन्द्रो भूत्वा' 'इन्द्र इत्याचक्षते' इत्यादि-वाक्येषु इन्द्रशब्दस्य बहुशोऽभ्यासात्तस्य च 'मत्सीन्द्रमिन्दो पवमान विष्णुं' इत्यादिश्रुतौ विष्णावेव प्रसिद्धत्वादात्मशब्दोदितो नारायण एव नान्यदित्यर्थः ।

युक्त्यन्तरं चाह– **अकारस्य चेति** ।। अकारस्य विष्णुमात्रपरत्वं निपुणतरं प्रागुपपादितम् । स चाकारः 'स वा एषः वाचः परमो विकारः'[३१] 'यो वै तां वाचं वेद'[३२] 'अकारो वै सर्वा वाक्'[३३] 'अः इति ब्रह्म'[३४] इत्यादिनात्रभ्यस्यते । 'वाचो वाच'मिति वाक्शब्द-स्यापि तत्परत्वात् । अतोऽप्यात्मा नारायण एवेत्यर्थः ।

लिङ्गान्तरमप्याह– **तस्येति** ।। अत्र हि 'एष इमं लोकमभ्यार्चत् पुरुषरूपेण य एष तपति'[३५] 'एष तपन्नेवास्मि'[३६] इत्यादिना सूर्य-मण्डलान्तःस्थत्वं बहुशोऽभ्यस्यते । स च सूर्यमंडलान्तःस्थः पुरुषः च्छान्दोग्ये पुण्डरीकाक्षत्वेन निर्दिष्टः । 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते'[३७] इत्याद्युक्त्वा [३८]'तस्य यथा कप्यासं पुंडरीकमेव-

३१. ऐत.उ. ३७६-पु
३२. ऐत.उ. ३८०-पु
३३. ऐत.उ. ३८०-पु
३४. ऐत.उ. ४४२-पु
३५. ऐत.उ. १४०-पु
३६. ऐत.उ. १८३-पु
३७. छान्द.उ. १-६-६
३८. छा.उ. १-६-६

मक्षिणी'त्युक्तत्वात् । पुंडरीकाक्ष्यश्च विष्णुरेव । अतोऽस्यामुपनिषदि स एव प्रतिपाद्य इत्यात्मशब्देनापि स एवोच्यत इति भावः । ननु सूर्यमंडलस्थः सूर्य एव किं न स्यात् । पुंडरीकाक्षत्वस्यापि तस्यैवोपपत्तेरित्यत आह– **सूर्यो हीति** ।। ननु शिवोऽपि सूर्यमंडलस्थ एव । अष्टमूर्तित्वात्तस्य । योथोक्तं विष्णुपुराणे–

'सूर्यो जलं मही वह्निर्वायुराकाश एव च ।
दीक्षितो ब्राह्मणः सोम इत्येतास्तनवः क्रमात्' । इति ।

पुंडरीकाक्षत्वमपि तस्य संभवत्येव । अतः कथमेतेन लिङ्गेन विष्णुत्वनिर्णय इत्याशङ्कां प्रमाणेनैव परिहरति– **विरूपाक्ष इति** ।। शिवादयश्चत्वारोऽपि विरूपाक्षाः विष्णुः पुंडरीकेक्षणः, सुराधिपः शक्रः सहस्राक्ष इत्यर्थः । विरूपाक्ष इत्यस्य प्रत्येकमन्वयः। तथा शिवस्य विरूपाक्षत्वात्पुंडरीकाक्षत्वस्य विष्ण्वेकलिङ्गत्वात्स एव सूर्यमण्डलस्थः छान्दोग्यभिप्रेतः । तत्समाख्यानाच्चात्रापि स एवोच्यत इति भावः । एतेनात्र सूर्यमंडलस्थत्वेन सूर्यग्रहणे बाधकान्तरमपि सूचितं भवति । तस्यापि शिववद्विरूपाक्षत्वात् । पिङ्गाक्षस्यापि विरूपाक्षत्वविरोधाभावादिति ।।

### भगवतः सर्वशब्दवाच्यत्वे प्रमाणोदाहरणम्

### भाष्यम्

**'यो देवानां नामधा एक एव'[३९] । 'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति'[४०] । 'यमिन्द्रमाहुर्वरुणं यमाहुः' ।**

---

३९. ऋक्.सं. १०-८२-३

४०. सू.भा. उदाहृता भाल्लवेयश्रुतिः १-१-१

[४१]चन्द्रसूर्यादयः शब्दा विष्णावेव हि मुख्यतः ।
उपचारात् तदन्येषां विष्णुनैव कृताः पुरा ॥

इत्यादिना तस्यैव सर्वनामवत्वाच्च ।

[४२]'णकारो बलं षकारः प्राण आत्मा' त्यादिनाऽन्तेऽपि[४३] विष्णुशब्दव्याख्यानेनोपसंहाराच्च ।

आत्मब्रह्मादयः शब्दास्तमृते विष्णुमव्ययम् ।
न वर्तन्ते तदन्यत्र शृङ्गिबेरेऽग्निशब्दवत् ॥ इति च पाद्मे ।

'एको नारायण आसीन्न ब्रह्मा न च शङ्करः' ।
'एको नारायण आसीन्न ब्रह्मा नेशानः' ।
'वासुदेवो वा इदमग्र आसीन्न ब्रह्मा न च शङ्करः' ॥
इत्यादि श्रुतिभ्यश्च ॥

### भावप्रदीपः

किंचात्रात्मशब्दस्य विष्णुपरत्वे न लिङ्गन्तरन्वेशणीयम् । यवता सर्वशब्दवाच्यत्वं मुख्यतो विष्णोरेवेति भावेनाह– **यो देवानामिति** ॥ उपसंहारबलाच्च विष्णुरेवास्यामुपनिषदि प्रतिपाद्यो नान्य इति गम्यते । अत आत्मशब्दोऽत्र विष्णुपर एवेति भावेनाह– **णकार इति** ॥ इतश्च आत्मशब्दोऽत्र विष्णुवाचक इत्याह– **आत्मेति** ॥ **शृङ्गिबेरे** नागरे (आर्द्रके वा)[४४] यथाऽग्निशब्दोऽमुख्य एवं **तदन्यत्र** विष्णोरन्यस्मिन्नात्मादिशब्दा अमुख्यवृत्यैव वर्तन्त इत्यर्थः । अपि चात्रा-

---

४१. इन्द्र इति ह.पाठः
४२. ऐत.उ. ७४६-पु
४३. अपि पदं ह.पाठे नास्ति
४४. ()चिह्नस्थं पदं 'क'पाठे नास्ति

त्मनोऽग्रेऽवस्थानमुच्यते । तच्च समाख्याश्रुतिषु विष्णोरेव श्रूयते । अतोऽयमात्मा विष्णुरेवेति भावेन समाख्याश्रुतीरुदाहरति– **एको नारायण इति ।।**

भगवानेव स्वतन्त्रो गुणपूर्णश्च

**भाष्यम्**

**अग्रशब्दो गुणाधिक्यवाची । इदं रमाब्रह्मशिवादिकं सर्वं जगदपेक्ष्यात्मैवाग्रे विष्णुरेवाग्र्यः सर्वगुणैरित्यर्थः । तत्र हेतुस्तदन्यत् किञ्चिन्न मिषदासीत् । सर्वस्याप्युन्मेषणं नासीदित्यर्थः । स्वत उन्मेषणं कस्यापि नास्ति । अस्तिशब्दवदासीच्छब्दोऽपि सर्वकालसाधारणः । भगवत्प्रसादादेव सर्वदा सर्वं किञ्चिदुन्मिषति । स्वातन्त्र्येण पूर्णोन्मेषो विष्णुरेव ।**

**उन्मेषो गुणसम्पूर्तेः उद्रिक्तानुभवः स्मृतः ।**
**तदेव मिषणं नाम सद्रूपं मिनुते यतः ।।**

**मिषच्च नान्यद्विष्णोर्हि किमुतोन्मिषदिष्यते ।**
**उच्चैर्मिषन् हि भगवान् सर्वदैव जनार्दनः ।। इति च सत्तत्त्वे ।**

**नास्ति नारायणसमं न भूतं न भविष्यति । इति च भारते ।**

**भावप्रदीपः**

पूर्वमग्र आसीदित्येतत्कालतो गुणतश्चाग्र्य एवेति कालाग्र्यतागुणाग्र्यतोभयपरत्वेन व्याख्यातम् । तत्र रमादीनां प्रलयेऽपि सत्वात्कथं भगवतस्तदपेक्षया कालाग्र्यत्वमित्याशङ्क्य तद्वशत्वाद्रमापि सा विद्यमानाऽपि नाग्रस्थेत्युक्तम्[४५] । इदानीमुक्तशङ्काया एवानवकाशाय

४५. इत्याद्युक्तं इति 'ख'पाठः

गुणाग्र्यतामात्रपरत्वेन व्याख्यातुमुपक्रमते – **अग्रशब्द इति** ।। कथं गुणाधिक्यवाचीत्यतो वाक्यं योजयति– **इदमिति** ।। तत्र 'नान्यत्किञ्चन मिषत्' इति वाक्यं हेतुपरत्वेनावतार्य व्याचष्टे– **तत्र हेतुरिति** ।। 'न जीर्णमलवद्वासाः स्नातकः स्यात्' इत्यादिवद्विशिष्टविषयो निषेधो विशेषणमात्रपर्यवसायीति भावेन नान्यत्किञ्चन मिषदित्यस्य सर्वस्याप्युन्मेषणं नासीदित्यर्थ इति तात्पर्यमुक्तम् । रमादीनां तदा विद्यमानत्वाद्विशेष्यनिषेधायोगात् । ननु रमाया मुक्तानां च सर्वदोन्मेषणस्यापि भावात्कथं विशेषणभूतोन्मेषणनिषेधोऽपि घटत इत्यत आह– **स्वत इति** ।। स्वातन्त्र्येणेत्यर्थः । नन्वेवं तर्हि विष्णोस्सर्वापेक्षया गुणाग्र्यतया सर्वदा विद्यमानस्य कथमग्र आसीदित्यतीतकालमात्रावस्थानमुच्यत इत्यत आह– **अस्तिशब्दवदिति** ।। [46]'अस्ति ब्रह्मेति चेद्वेद' इत्यादावस्तीति वर्तमानार्थकलट्प्रयोगेऽपि यथा न तन्मात्रकालवृत्तित्वं किन्तु सर्वकालवृत्तित्वमेव तदर्थः । एवमासीदिति लङपि नातीतमात्रर्थकः[47] । किन्तु सर्वकालसाधरण एवेति भावः । स्वत उन्मेषणं कस्यापि नास्तीत्युक्तमर्थमुपपादयति– **भगवदिति** ।। ननु किमेतदुन्मेषणं नाम यद्विष्णोरेव स्वातन्त्र्येण नान्यस्येत्युच्यत इत्यत आह– **उन्मेष इति** ।। उद्रिक्तो मेषोऽनुभव उन्मेषः । मिषतिर्दर्शनार्थः । गुणसम्पूर्तेर्योग्यतया लाभः । ननु मूले मिषदित्येव श्रवणात् कथमुन्मिषदिति व्याख्यायत इत्यत आह– **तदेवेति** ।। गुणसंपूर्तेरुद्रिक्तानुभव एव **मिषणं** मिषच्छब्दप्रवृत्तिनिमित्तमित्यर्थः । विधेयानुसारेण तदिति नपुंसकप्रयोगः । अथवा **तदेव** उन्मेषणमेवेत्यर्थः । उपसर्गा हि धातुलीनमेवार्थं व्यञ्जयन्ति । अतो युक्तमिदं व्याख्यानमिति भावः ।।

---

४६. तै.उ. २-१२ ४७. अतीतमात्राकालार्थकः इति 'ख'पाठः

प्रकारान्तरेण मिषदित्यस्योन्मिषदित्यर्थकतामुपपादयति– **सद्रूपमिति** ।। साधुगुणपूर्णत्वात्सत् **यद्रूपं** स्वरूपं तत् **मिनुते**ऽनुभवति यतोऽतो मिषदित्युच्यत इति शेषः । तथा च गुणसंपूर्तेरुद्रिक्तानुभवरूपमुन्मेषणं मिषच्छब्दप्रवृत्तिनिमित्तं भवितुमर्हतीति भावः । किञ्च भगवतोऽन्यत्स्वातंत्र्येण मिषदेव नास्ति किमुतोन्मिषदित्यभिप्रायेण मूले मिषदित्येवोक्तमित्यभिप्रेत्याह– **मिषच्चेति** ।। विष्णोरेव सर्वोत्कर्षे प्रमाणमुदहरति– **नास्तीति** ।।

भगवतः न केवलं कालज्येष्ठत्वं गुणतोऽपि ज्येष्ठत्वं

**भाष्यम्**

**सर्वजीवानां रमायाश्च [४८]प्रलयेऽपि विद्यमानत्वादेव नाग्र इति कालापेक्षया तदधीनमिषत्वादन्येषामग्र्यः स एवेत्याशयः । तदधीनत्वमेव तेषां सृष्ट्यादिना दर्शयति । स्थूलशरीरस्य पूर्वाभावस्तत एवार्थतः सिद्ध्यति ।**

**[४९]प्रलयेऽप्यखिलं देवी रमा विष्णुप्रसादतः ।**
**जानाति नित्यज्ञानेन मुक्ता ध्यानस्थिता लये ।।**
**इति च सत्तत्त्वे ।**

**ब्रह्मादीनां शरीरान्तरस्यापि [५०]प्रलयेऽनुक्तेरेवाभावः सिद्ध्यति ।**
**आत्मा ब्रह्माग्र इत्यादि गुणाग्र्यत्वं हरेर्वदेत् ।**
**कालज्यैष्ठ्यं न यस्मात् तत्सृष्ट्युक्तेरेव सिध्यति ।। इति वाक्यनिर्णये ।**
**गुणाग्र्यतायामेव कालज्यैष्ठ्यस्याप्यन्तर्भावाच्च ।।**

---

४८,४९,५०, प्रळये इति ह.पाठः

### भावप्रदीपः

नन्वग्र आसीदित्यस्य गुणाग्र्यत्वमिव कालाग्र्यत्वमपि कुतो नार्थ इत्यत आह– **सर्वेति** ।। 'इदं सर्वमपेक्ष्यासौ कालतो गणतस्ततः । अग्र्य एव'[५१] इति 'प्रचीनव्याख्यानं तु वैवक्षिकमेव । अत एव तद्वशत्वाद्रमापि सा विद्यमानापि नाग्रस्थेत्यादिना भगवतः कालाग्र्यत्वोक्तेर्विवक्षाविशेषस्तत्र प्रदर्शितः । इदं तु व्याख्यानं निष्कृष्टमेव । अतो न पूर्वोत्तरविरोधः इति ध्येयम् । नन्वेवं गुणाग्र्यत्वमेवार्थश्चेत्तर्हि 'नान्यत्किञ्चन मिषदि'ति हेतूक्तिः कथं संभवति । न ह्यन्यस्याभावो गणाग्र्यत्वोपपादक प्रत्युत कालाग्र्यत्वस्यैवेत्यतः प्रकृतसङ्गततया हेतुवाक्यतात्पर्माह– **तदधीनमिषत्वादिति** ।। भगवदधीनमिषत्वकत्वादित्यर्थः । तर्हि 'स ईक्षते'त्यादिना सृष्ट्युक्तिरसङ्गता स्यात् । न हि गुणाग्र्यत्वस्योपपादकं तद्भवति । प्रत्युत कालाग्र्यत्वस्यैव । प्रलयकाले कस्याप्यभाव एव हि पुनरादिकाले सृष्टिः संभवतीत्यत आह– **तदधीनत्वमिति** ।। **एतेषां** ब्रह्मादीनाम् । ननु सर्वजीवानां प्रलये विद्यमानत्वेऽपि परमात्मनः सर्वापेक्षया कालाग्र्यत्वोक्तिः संभवत्येव । स्वरूपेण सतामपि तदा स्थूलशरीरयोगेनाभावात् । सृष्टिकाल एव हि तेषां स्थूलशरीरसंयोगः । अतः प्रलये तेषां स्थूलशरीराभावज्ञापनार्थमेव भगवतः कालाग्र्यत्वकथनमित्यत आह– **स्थूलशरीरस्येति** ।। न चैवमपि कालाग्र्यत्वं परमात्मनो वक्तव्यम् । जीवसृष्टेः स्थूलशरीरसंयोजनरूपत्वेन सृष्ट्युक्त्यैव तेषां प्रलये स्थूलशरीराभावसिद्धेः । अन्याथा तेषां सृष्टिकाले सृष्टेरेवानुपपत्तेरित्यर्थः ।।

भगवत्प्रसादादेव सर्वदा सर्वं किंचिदुन्मिषतीत्युक्तमर्थं प्रमाण-

---

५१. ऐत.भा. ४८३-पु

संमत्या द्रढयति– **प्रलयेऽपीति** ।। अथवा 'असुप्ताः श्रीश्च मुक्ताश्च स्वतन्त्रोन्मेषवर्जनात् । अनुन्मेषा एव तेऽपि'[५२] इति (यत्)[५३] प्रागुक्तं तत्रोभयोः साधारण्येन स्वतन्त्रोन्मेषवर्जितत्वोक्त्या पराधीन-मिषत्वे सिद्धे प्रलयकाले तयोर्मिषणे विशेषोऽप्यस्तीति प्रमाणेनैवाह– **प्रलय इति** ।। **ध्यानस्थिताः** ध्यानमात्रस्थिताः । विष्णुप्रसादत इत्येतदत्रापि संबध्यते । विरिंचातिरिक्तविषयमेतत् । 'एवं प्रलय-कालेऽपि प्रतिभातपरावरः । मुख्यवायुर्नित्यसमः'[५४] इत्यादिवचनात् । ननु सृष्टिकथनेनास्त्वन्येषां प्राक् स्थूलशरीराभावसिद्धिः । न ब्रह्मादीनाम् । तेषामुत्तमत्वेन प्रलये स्थूलशरीरेणैव सत्वसंभवादित्यत आह– **ब्रह्मादीनामिति** ।। ब्रह्मादीनामपीति संबन्धः । **शरीरान्तरस्य** लिङ्गदेहातिरिक्तस्थूलशरीस्य(देहस्य) । अनुक्तेरेव प्रमाणेष्विति शेषः । अत एव 'न ब्रह्मा न च शङ्करः' इति तेषां प्रलयेऽभावोक्तिरिति भावः । उक्तार्थे प्रमाणमाह– **आत्मेति** ।। 'आत्मा वा इदमेक एवाग्र आसीत्' 'ब्रह्मैवेदमग्र आसीत्' 'वासुदेवा वा इदमग्र आसीत्' इत्यादिवाक्यजातमित्यर्थः । इतश्च कालाग्र्यत्वं न पृथग्व-क्तव्यमित्याह– **गुणेति** ।। अनादित्वस्यापि जन्माभावरूपत्वेन गुणरूपत्वादिति भावः ।।

### अम्भ-मर-मरीच्यादिशब्दनिर्वचनम्

### भाष्यम्

**अं विष्णुं बिभर्तीत्यम्भो विष्णुलोको दिवःपरः[५५] । महरादयश्च ।**

---

५२. ऐत.भा. ४८३-पु ५३. ()एतच्चिह्नस्थं पदं 'क'पाठे नास्ति

५४. अनु. २-३-२० ५५. दिवःपरे इति ह.पाठः

दिव्यपि भगवान् प्रतितिष्ठतीति प्रतिष्ठा । तेषु सर्वेषु प्रत्यक्षतश्चरति विष्णुस्तस्मादम्भ इत्युच्यते । दिवः परे द्यौश्चाम्भोनामका इत्यर्थः । सूर्यमरीचीनां तत्र विशेषेण विततत्त्वादन्तरिक्षं मरीचयः । मरीचीनामयनात् । पृथिव्यां क्षिप्रं मरन्तीति पृथिवी मरः ।

भूतेभ्योऽनन्तरं त्वण्डं सृष्ट्वा विष्णुः पुरा प्रभुः ।
लोकभेदांश्च चक्रेऽत्र पश्चाद् ब्रह्मा विशेषतः ॥
सम्यक्चकार लोकांस्तांल्लोककर्ता ततः स च ॥

इति ब्रह्मवैवर्ते ।

**भावप्रदीपः**

'अंभः परेण दिवं द्यौः प्रतिष्ठा' इत्येतावद्व्यचष्टे– **अं विष्णुमिति** ॥ अमिति द्वतीयान्ते कर्मण्युपपदे भृञ् (भरणे)[५६] इत्यस्मात् असुन्, डिच्च । **विष्णुलोको** वैकुण्ठादिः । 'परेण दिव'मित्यस्य विभक्तिव्यत्ययेनार्थो– **दिवःपर इति** । महरादिलोका अप्युक्तनिर्वचनेन अंभःशब्दार्थत्वेन ग्राह्या इत्याह– **महरादयश्चेति** ॥ न केवलं विष्णुलोकोऽभः किं नाम महरादयश्चेत्यर्थः । 'द्यौः प्रतिष्ठा 'इत्यस्यार्थो– **दिव्यपीति** । न केवलं दिवः परेषु किन्तु दिव्यपीत्यपिशब्दार्थः । प्रतिष्ठा द्यौरिति शेषः । दिवोऽप्यंभःशब्दवाच्यत्वमभिप्रेत्याह– **तेषु हीति** ॥ **सर्वेषु** वैकुंठादिलोकेषु महर्जनतपःसत्यलोकेषु द्युलोके चेत्यर्थः । ननु विष्णोर्व्याप्तत्वेन सर्वलोकानामपि विष्णुधारकतोपपत्यांभोनामकतासंभवे वैकुंठादीनामेव तन्नाम कुत इत्याशंकानिरासायोक्तम्– **प्रत्यक्षत इति** ॥ समग्रवाक्यार्थमाह– **दिवःपर इति** ॥ 'अन्तरिक्षं मरीचयः'

---

५६. ()एतच्चिह्नस्थं पदं 'क'पाठे नास्ति

इत्येतद्व्याचष्टे– **सूर्येति** ।। भूलोकेऽपि सूर्यमरीचीनां विततत्त्वात् विशिष्योक्तेः कारणं वक्तुमुक्तम्– **विशेषेणेति** ।। सूर्यमण्डलस्य तत्रैव संचारदिति भावः । मरीचय इत्यस्य बहुवचनान्तत्वेऽन्तरिक्षं मरीचय इति सामानाधिकण्यायोगादुक्तकारणालाभाच्चैकवचनान्तत्वमभिप्रेत्य तच्छब्दं निर्वक्ति– **मरीचीनामयनादिति** ।। मरीचयोऽयन्ते प्रवर्तन्तेऽस्मिन्निति मरीचय इत्यधिकरणसाधनोऽयं शब्द इति भावः । तर्हि मरीच्य इति स्यादिति न वाच्यम् निरुक्तत्वेनेकारलोपाङ्गीकाराद्यणादेशाभावोपपत्तेः । न चान्तरिक्षशब्दस्य नपुंसकत्वात् तद्विशेषणस्यास्य पुल्लिङ्गता कथमिति वाच्यम् । मरीचिशब्दोपपदादयतेरसुन् प्रत्यये निष्पन्नस्यास्य नपुंसकत्वाङ्गीकारात् । 'वयांसि व्ययनाच्चैव वीत्याकाशस्तथोच्यते । तत्रायनाद्वयः प्रोक्तः'[५७] इतिवदिति ।।

'पृथिवी मरः' इत्येतद्व्याचष्टे– **पृथिव्यामिति** ।। मरणस्य द्व्यादिलोकसाधारण्यात्को विशेषः पृथिव्या इत्यत उक्तम्– **क्षिप्रमिति** ।। **मरन्ति** म्रियन्ते । प्रकृत्यन्तरस्येदं रूपम् । 'जीव वा मर वा साधो व्यध मा जीव मामर'[५८] इत्यादिवत् । ननु क्वचिच्चतुर्मुखस्य लोककर्तृत्वमुच्यते । अत्र च परमात्मन एव तदुक्तम् । अतः कथमुभयोरपि लोककर्तृत्वमित्याशङ्कां प्रमाणेनैव परिहरति– **भूतेभ्य इति** ।।

देवानां अप्शब्दवाच्यत्वकथनम्

**भाष्यम्**

**या अधस्तात् पूर्वमेव सृष्टा देवतास्ता आप इत्युच्यन्ते । 'आपा इत्याप इति' इति पूर्वं भगवदङ्गसृष्टानामेवाप्शब्देनोक्तेः । अयं पितैते पुत्रा इति च । 'आहं मां देवेभ्यो वेद ओमद्देवान् वेद' इति च ।**

५७. छान्दो.भा.२-१४-१(१६४-पु) ५८.

**भावप्रदीपः**

'या अधस्तात्ता आपः' इत्येतद्व्याचष्टे– **या इति** ।। अधस्तादित्यनुवादः पूर्वमेवेति व्याख्यानम् । ब्रह्माण्डसृष्ट्यपेक्षयेति शेषः । पूर्वसृष्टदेवतानामेवापृशब्देन ग्रहणे ज्ञापकमाह– **आपाः इतीति** ।। **पूर्वं** प्रथमाध्याये । तत्रापि भगवदङ्गसृष्टानामेवेदं नामेति कथं निश्चीयत इत्यतस्तदुत्तरवाक्यबलादिति भावेनोत्तरवाक्यमुदाहरति– **अयं पितेति** ।। 'यत्र वा पितुस्तद्वा पुत्रस्ये'ति तूत्तरवक्यमप्यत्र पठितव्यम् । अयं भगवान्पिता एते ब्रह्मादयस्तु पुत्राः[५९] । भगवतश्चाप इति नाम । तस्मात्तत्पुत्राणां देवानामपि तदेव नाम । लोके पुत्राणां पितृनाम्ना यदवो, रघवः, कुरव, इत्यादिव्यवहारदर्शनादिति तद्वाक्याभिप्रायः । तथा चैतद्वाक्यबलेन भगवदङ्गजातानामेव [६०]देवतानामाप इति नामेति निश्चीयत इति भावः । नन्वेतावतापि भगवदङ्गजातानामेव [६१]देवतानामाप इति नामेति निश्चेतुं न शक्यते । अत्र भगवद्देवप्रत्यायकपदस्यैवाश्रवणादित्यतस्तदुत्तरवाक्ये तच्छ्रवणाद्युज्यत एवायं निश्चय इति भावेनोत्तरवाक्यमुदाहरति– **आहं मां देवेभ्य इति** ।। इदं तावद्भगवद्वाक्यम् । 'एतद्ध स्म वै तद्विद्वानाह महिदास ऐतरेयः' इत्युक्त्वा 'अहं मा'मित्याद्युक्तेः । अत्र चाहमिति मदिति च निर्देशेन पितुर्भगवत्वावगमात् । देवेभ्यो देवानिति च निर्देशेन पुत्राणां देवत्वावगमादाप इति भगवन्नामैव तत्पुत्राणां देवानां प्राप्तमिति निश्चेतुं शक्यत इति भावः ।।

पूर्वटीकाकारास्तु[६२]– 'आहं मां देवेभ्यो वेदे'त्यम्नाम्ना हरिणा व्याप्तत्वाच्च तेषामम्नामकत्वमिति भाव इत्याहुः ।।

---

५९. तत्पुत्रा इति 'ख'पाठः  ६०. देवानां इति 'ख'पाठः

६१. देवानां इति 'ख'पाठः  ६२. वि.ती. १७२-पु

चेतनतारतम्यनिरूपणम्

भाष्यम्

ब्रह्मवायू च तद्भार्ये वीन्द्रशेषौ च तत्स्त्रियौ ।
शिवस्तद्दयिता शक्रकामौ तद्दयितादयः ।।

सर्वे सुराः क्रमेणैव विष्णोर्जाता अबाख्यकाः ।
ज्ञानानन्दबलाद्येषु विष्णुभक्तौ च सर्वशः ।।

हीनाः शतगुणेनैव क्रमेणानेन ते मताः ।
तेभ्यश्च ऋषयो मर्त्या हीना एव क्रमेण च ।।

विशेषतस्तु मुक्तानां सर्वसंसारबन्धनात् ।
क्रमोऽयं सम्यगुद्दिष्टो नित्यानन्दैकभोगिनाम् ।।

न विशेषो ब्रह्मवाय्वोरधिकाराविभेदतः ।
न शेषशिवयोश्चैव तत्पत्नीनां च सर्वशः ।।

सुपर्णशेषयोश्चैव साम्यं सर्वगुणेष्वपि ।
साम्यमेवैतयोः पत्न्योः साम्यं शक्रमनोजयोः ।।

भावप्रदीपः

'या अधस्तात्ता आपः' इति सर्वासां देवतानां पूर्वसृष्टत्वोक्त्यां प्राप्तां साम्यशङ्कां प्रमाणेनैव तारतम्यं वदन्नपाकरोति– **ब्रह्मवायू इति** ।। **तद्भार्ये** सरस्वतीभारत्यौ । **तत् स्त्रियौ** सौपर्णीवारुण्यौ । **तद्दयिता** पार्वती । **तद्दयितादयः** शचीरत्यादयः । आदिपदेन मनुगुरुदक्षा-निरुद्धाः । **सर्वे सुराः** प्रवाहाद्याः । **सर्वशः** सर्वेऽपि । शतगुणेने-त्युपलक्षणम् । केचिद्दशगुणेन । अपरे पञ्चगुणेनेत्याद्यपि द्रष्टव्यम् ।

तत्र ब्रह्मवायुभ्यां तद्भार्ये, ततो वीन्द्रशेषशिवाः शतगुणतो हीनाः, तत्स्त्रियश्च तेभ्यो दशगुणतो हीनाः । ताभ्यः शक्रकामावपि तथा । तद्दयितादयश्च शक्रकामाभ्यां शतावराः । ततः प्रवहः पञ्चगुणावरः । ततः सूर्याद्या द्विगुणाधमा इत्यादिछान्दोग्यभाष्याद्यनुसारेण तारतम्यविवेकोऽवगन्तव्यः ।

तेभ्य ऋषयः ऋषिभ्यो मर्त्या हीना इत्यन्वयः । नन्वश्वत्थामादीनां रुद्राद्यंशानामिन्द्राद्यंशार्जुनादिभ्यः पराजयदर्शनात्तत्रोक्ततारतम्यं भग्नमिति चेन्न । तादृशव्यत्यासस्य शापादिनिमित्तत्वेनाल्पकालीनत्वात् । अत एव मुक्तौ नैवं विधो व्यत्यासोऽस्तीति भावेनाह– **विशेषत इति** ।। तस्यैव विवरणम्– **सम्यगिति** ।। सर्वसंसारबन्धनात् मुक्तानामिति संबन्धः । अत्र द्वन्द्वनिर्दिष्टानां साम्यमेव । ततोऽन्यत्रैव शतगुणावरत्वादिक्रमो ज्ञातव्य इत्यभिप्रेत्याह– **न विशेष इति** ।। **अधिकाराविभेदतः** एकस्यैव पदद्वयप्रप्त्याऽधिकारे योग्यतायां भेदाभावादित्यर्थः । सुपर्णशेषादीनां तु साम्यमात्रं न त्वधिकाराविभेद इति भावेनाह– **सुपर्णेति** ।। **मनोजः** कामः ।।

**देवादीनां बिम्बप्रतिबिम्बभावः**

**भाष्यम्**

**एते तु महादादीनां सर्वेऽपि ह्यभिमानिनः ।**
**पूर्वस्य प्रतिबिम्बश्च चरमस्तत्सुतस्तथा ।।**

**तद्वशाश्चाखिला विष्णोर्न विष्णुः कस्यचिद्वशे ।**
**महदादिमानिनश्चैते जातास्तैः सह सर्वशः ।।**

**एते लोका इति प्रोक्ता लोकानामभिमानिनः[६३] ।**
**त एव लोकपालाश्च यदा पश्चाद् प्रजाज्ञिरे ।।**

**पश्चाज्जातैर्हि [६४]रूपैस्तैर्लोकस्थान् पालयन्त्यलम् ।। इत्यादि तत्त्वसारे ।**

**भावप्रदीपः**

पूर्वमबाख्यान्महदादिकान्ब्रह्मशर्वादिकान्सृष्ट्वेति सामानाधिकरण्योक्त्या प्राप्तां महदादितत्त्वाभेदशङ्कामपाकर्तुमाह– **एते त्विति** ।। अभिमन्यमानशब्दोऽभिमानिषु मुख्ययैव वृत्या वर्तते । अतो नानुपपत्तिरिति भावः । नन्वत्र कथितानां देवानां क्रमेण हीनत्वं कुत इत्यतोऽत्र निमित्तं वक्तुमाह– **पूर्वस्येति** ।। पूर्वोत्पन्नस्य ब्रह्मादेः । **चरमो**ऽनन्तरोत्पन्नो वीन्द्रादिः । **तत्सुतः** पूर्वस्य सुतः । ततश्च प्रतिबिंबत्वात्सुतत्वाच्च चरमे तद्वशाः पूर्वेषामधीना एवेत्यतो युक्तं तेषां ततो हीनत्वमिति भावः । उक्ततारतम्यक्रमस्य विष्णौ विश्रान्तेर्नानवस्थितिरित्याह– **अखिला इति** ।। विष्णोर्वशा इति योज्यम् । ननु तत्वानामनुत्पन्नत्वे कथं तदभिमानित्वमेषाम् । येन सामानाधिकरण्योक्तेर्गतिचिन्तेत्यत आह– **महदादिमानिन इति** ।। **तैः** महदादितत्त्वैः सहैव जाता इत्यर्थः । नन्वंभआदीनां लोकत्वेऽपि कथमपां लोकत्वम् । अप्शब्दस्य देवतापरत्वेन व्याख्यातत्वात् । ततश्च 'स इमाँल्लोकानसृजत' इत्युक्त्वा तत्रापामुक्तिरनुपपन्नेत्यत आह– **एत इति** ।। लोकाभिमानित्वेनैव लोकशब्दप्रयोगोऽयं तेष्विति भावः । नन्वेवं तर्हि लोकाभिमानिनामेव लोकपालत्वात्तेषां च प्रागेव जातत्वात्पुन'र्लोकपालान्नु सृजा' इति 'स ईक्षते'त्याद्युक्तिः

६३. अभिमानतः इति ह्.पाठः ६४. रूपैस्ते इति ह्.पाठः

कथमुपपद्यत इत्यत आह– **त एवेति** ।। ये महदादितत्त्वाभिमानित्वेन पूर्वं जातास्त एव यदा पश्चाद्ब्रह्मांडोत्पत्यनन्तरं तदन्तः प्रजज्ञिरे तदैव लोकपाला बभूवुर्न पूर्वमित्यर्थः । एतदेवोपपादयति– **पश्चादिति** ।। तथा च प्रागुत्पन्नानामपि रूपान्तरविवक्षया पुनः सृष्ट्युक्तिरियमिति भावः ।।

**अमूर्च्छयत् इत्यादिपदानां अर्थकथनम्**

**भाष्यम्**

**अमूर्च्छयत् मूर्तमकरोत् । अग्निर्वाग् भूत्वेत्यादिना पश्चादैक्यप्रतीतेरेकस्यैव रूपद्वयं तदिति प्रतीयते ।**

**प्रजानीहि प्रकर्षेणानुजानीहि । अन्नदेवता च सर्वदेवतायुक्तो विरिञ्च एव । ग्रसनं चैतस्मिन् प्रवेश एव । न तु पीडा तस्य । एक एव हि ब्रह्मा भोक्तृभोज्यत्वेन स्थितो भोज्यरूपेणैकीभूयातितरां मुमोदेत्यर्थः । देवानामुपद्रवाभावाद् भोक्तृतत्त्वशक्तियोजनमेवाशनापिपासाभ्यामन्ववार्जनम् । वायुरेव च भोक्तृत्वशक्तिरूपः ।।**

**भावप्रदीपः**

'पुरुषं समुधृत्यामूर्छयत्' इत्यत्रामूर्छयदित्यस्यार्थमाह– **अमर्छयदिति** ।। 'मुखाद्वाक् वाचोऽग्निः' इत्यादौ मुखादिभ्यो वागादीनां वागादिभ्यो वन्ह्यादीनामुद्भावः प्रतीयते । तत्कथं 'तत्र वाङ्नामकं रूपं वन्हेरासीत्पुरातनम् । तस्यैव अथ द्वितीयं च यदग्निरिति गीयते' इत्यादिनैकैकस्यैव वन्ह्यादेरध्यात्माधिदैवभेदेन रूपद्वयं ब्रह्मणो मखाद्यवयवादेव जातमिति प्राग्व्याख्यातत्वादित्याशङ्क्य बाधकसद्भावादापातप्रतीतिरनादर्तव्यैवेत्याशयेन तदेव बाधकं स्वोक्तार्थसाधक-

मित्याह– **अग्निरिति** ।। 'अग्निर्वाग्भूत्वा वायुः प्राणो भूत्वे'त्यादिना **पश्चात्** उत्पत्यनन्तरं मुखाद्यायतनप्रवेशकाले उत्तरखंडेऽग्न्यादेरेव वागादिभावोक्त्या ऐक्यप्रतीतेरेकस्याग्न्यादेरेव तद्वागाद्याख्यमग्न्याद्याख्यं च रूपद्वयमिति प्रतीयते । अतो **मुखाद्वाक्** वाङ्नामकं रूपं प्रथमत उत्पन्नम् । **वाचो** वाङ्नामकरूपोत्पत्यनन्तरं **अग्निस्तदाख्यं** रूपं जातमित्याद्येवार्थो वर्णनीयो न त्वापातप्रतीत्यनुरोधेन । तथात्वे पश्चादैक्यानुपपत्तेः । न हि पुत्रः पितुरुत्पद्य पुनः पितैव भवतीति भावः ।।

'ता अब्रुवन्नायतनं नः प्रजानीही'त्येतत् 'तेऽब्रुवन् देहि नो वासं' इति प्राक् विवृतम् । तत्र कथं प्रजानीहीत्यस्य देहीत्यर्थ इत्यतो नायं वाच्यार्थः किन्तु तात्पर्यार्थ एवेत्यभिप्रेत्य वाच्यार्थमाह– **प्रजानीहीति** ।। 'या वै सा मूर्तिरजायतान्नं वै तत्' इति वाक्यं

'तद्दर्शनात्तदिच्छातस्तासां देहोऽभवत्पृथक् ।
सर्वासामपि देहैकदेशेभ्यो मिलितं शुभम् ।
सर्वैरधिष्ठितं चैव विरिञ्चेन विशेषतः'[६५] इति प्राग्व्याख्यातम् ।

तत्र कथमेकस्यैवात्तृत्वमन्नत्वं चेत्यसंभावनाशङ्कानिरासार्थं लीलारूपत्वात्काऽत्र कथन्तेति वक्तुं व्याख्यातमेवार्थं पुनः सावधारणं प्रतिजानीते– **अन्नदेवता चेति** ।। ननु कथमन्नत्वं विरिंचस्यैव वक्तुं शक्यते । 'अजिघृक्षदि'ति विरिंचस्यान्नमूर्तिग्रसनेच्छाया अभिधानात् । न हि स्वयमेव स्वात्मानं ग्रसितुमिच्छतीत्यत आह– **ग्रसनं चेति** ।। ग्रसनरूपं ग्रहणं चेत्यर्थः । एतस्मिन् अत्तृरूपे विरिंचे प्रवेश एव ।

---

६५. ऐत.भा. ४९५-पु

अन्नमूर्तेरिति शेषः । न हि विरिंचस्य स्वरूपे स्वस्य रूपान्तरेण प्रवेशो संभावित इति भावः । एवशब्दव्यावर्त्यमाह– **न त्विति** ।। पीडा पीडनम् । 'तदपानेनाजिघृक्षत् तदावयत्' इत्यस्य तात्पर्यमाह– **एक एव हीति** ।। भोज्यरूपेणैकीभूय संश्लेषं प्राप्य । भोज्यरूपं स्वकीये भोक्तृरूपे प्रवेश्येति यावत् । 'तमशनापिपासाभ्यामन्ववार्जत्' इत्येतत्

'तदाऽशनापिपासाख्यं द्विरूपं मारुतं पुनः ।
तस्मिन्देवसमूहे तु विष्णुः प्रावेशयत्प्रभुः'[६६] इति प्राग्व्यातम् ।

तत्तु न प्रकृतोपयोगि । 'यस्मिन्प्रतिष्ठिता अन्नमदामे'त्यन्नादनस्य प्रकृतत्वात् । न हि तत्र द्विरूपमारुतप्रवेशनमुपयुज्यते । प्रत्युत प्रसिद्धाशनापिपासान्ववार्जनमेवोपयुक्तम् । अतः कुतः प्रसिद्धार्थपरित्याग इत्यतस्तद्वाक्यतात्पर्यं प्रकृतोपयोगितयाऽऽह– **देवानामिति** ।। उपद्रवाभावादित्यनेन प्रतीतार्थपरतैवास्य किं न स्यादित्यपास्तम् । तथा चाशनापिपासापदाभ्यां भोक्तृत्वशक्तिरुपलक्ष्यत इति भावः । ननु तर्ह्येवमेव प्राग्व्याख्यातव्ये कुत एवं द्विरूपवायुना संयोजयामासेत्युक्तमित्यत आह– **वयुरेव चेति** ।। भोक्तृत्वशक्त्यभिमानी तत्प्रदस्तदात्मकश्चेत्यर्थः । तथा चाशनापिपासापदोपलक्षितभोक्तृत्वशक्त्या संयोजयामासेत्युक्ते वा द्विरूपवायुना संयोजयामासेत्युक्ते वाऽर्थसाम्यमेवेति भावः ।।

---

६६. ऐत.भा. ४९२-पु

भगवत्प्रेरणयैव वागादीनामभिव्याहरणादिशक्तिः विष्णुशब्दार्थश्च

**भाष्यम्**

**यदि वागादीनामेवाभिव्याहरणादिशक्तिः स्यान्मां विना तर्हि विष्णुत्वं न[६७] मम स्यात् तस्मात् कोऽहं भवानीत्याक्षेपः । विशेषेण प्राणयति सर्वान् सर्वेभ्यो [६८]विशिष्टश्चेति हि विष्णुः । 'णकारो बलं षकारः प्राण आत्मे'ति व्याख्यानात् । तस्मान्मत्प्रेरिता एवैते अभिव्याहारादिशक्ता इत्यभिप्रायः ।।**

**भावप्रदीपः**

'यदि वाचाऽभिव्याहृतं' इत्यारभ्या 'अथ कोऽहं' इत्यन्तवाक्यस्य तात्पर्यमाह– **यदीति** ।। **मां विना** मत्प्रेरणामन्तरेण । 'कोऽहं भवानि' इत्याक्षेपस्यासाङ्गत्यवारणाय विष्णुत्वं न मम स्यादति मध्येऽवान्तरमापाद्यान्तरमध्याहृतम् । नन्वेवमध्याहारेऽप्यसङ्गतिरेव । वगादीनां स्वातन्त्र्येण व्याहरणादिशक्तौ स्वस्य विष्णुत्वाभावापादनस्य निमित्तनिमित्तिभावादेरदर्शनादित्यतस्तत्प्रदर्शनाय विष्णुशब्दार्थमाह– **विशेषेणेति** ।। प्राणयतीति षकारार्थः । विशिष्टबल इति णकारार्थः । तत्कुत इत्यत आह– **णकार इति** ।। अस्यामेवोपनिषद्युप-संहारवाक्य इति शेषः । आक्षेपलब्धार्थमाह– **तस्मादिति** ।।

भगवतः अज्ञानदुःखादिदोषनिरासः

**भाष्यम्**

**पूर्णानन्दस्वरूपत्वान्नन्दनो भगवान् । प्रादुर्भावरूपेण जातोऽपि**

---

६७. न विष्णुत्वं इति ह्.पाठः ६८. विशिष्टबलश्चेति इति ह्.पाठः

**भगवान् सर्वभूतान्यभितः सर्वकालेषु विशेषेण पश्यत्येव । इह भूतेषु मत्तोऽन्यं प्रवर्तकं वदेत् किमित्याक्षेपः । अहमेव स्वतन्त्रः परिपूर्णगुण इति कृष्णराघवादिसर्वावताररूपेऽपि सर्वदाऽनुभवत्येव ।**

**नायं दशरथाज्जातो न चापि वसुदेवजः[६९] ।**
**क्वास्याज्ञानं कुतो दुःखं प्रादुर्भावेष्वपि प्रभोः ॥**

**प्रादुर्भूतश्चिदानन्दशरीरो राघवः स्वयम् ।**
**स्तम्भाद्वा नरदेहाद्वा नैवास्य प्राकृती[७०] तनुः ॥**

**दैत्यानां मोहनार्थाय सोऽज्ञानाद्यं प्रकाशयेत् ।**
**पूर्णचित्सुखरूपोऽपि सदा सर्वावतारगः ॥ इत्यादि स्कान्दे ।**

**भावप्रदीपः**

'तदेतन्नान्दनं' इत्यत्र नन्दनशब्दार्थमाह– **पूर्णेति** ॥ 'स जातो भूतान्यभिव्यैख्यत्' इत्येतद्व्याचष्टे– **प्रादुर्भावरूपेणेति** ॥ [७१]इन्द्रार्जुनादिवदवताररूपेष्वपि भगवतः सार्वज्ञ्यस्य किञ्चिदपि तिरोधानं नास्तीति ज्ञापनाय जातोऽपीत्यपिशब्दः । ऐख्यत इति लङोऽपि सार्वकालिकदर्शनपरत्वमेवेति भावेन पश्यत्येवेति लडर्थकतया व्याख्यानम् । 'किमिहान्यं वावदिषत्' इति वाक्यं–

'असुराणां निहन्तारं ज्ञानादिगुणदं तथा ।
चेष्टाप्रदं च भूतेषु न मदन्यं वदन्त्यपि'[७२] इति प्राग्व्याख्यातम् ।

तत्कथमिदं लभ्यते । निषेधबोधकनञादेरभावादित्यत आक्षेपार्थ-

---

६९. वासुदेवतः इति ह.पाठः  ७०. प्राकृता इति ह.पाठः
७१. इन्द्र इति पदं 'ख'पाठे नास्ति  ७२. ऐत.भा. ५०४-पु

कर्किंशब्दबलादेव एषोऽर्थो लभ्यत इति भावेन तद्वाक्यार्थमाह– **इहेति** ।। उपलक्षणमेतत् । **इह** जगति, असुराणां निहन्तारं ज्ञानादिगुणदं च मत्तोऽन्यं वदेत्किमित्याक्षेप इति द्रष्टव्यम् । प्राक्तथोक्तत्वात् । 'स एतमेव पुरुष'मिति वाक्यतात्पर्यमाह– **अहमेवेति** ।। ननु रामकृष्णादिरूपाणां जन्मादिदोषदर्शनात्कथं परिपूर्णगुणत्वादिकमित्यत आह– **नायमिति** ।। राघव इति कृष्णादेरप्युपलक्षणम् । **स्तंभाद्वा नरदेहाद्वेति** ।। यथास्तंभात्प्रादुर्भूतस्यास्य नृसिंहरूपस्य विष्णोः प्राकृती तनुर्नास्त्येव । एवं नरदेहात्प्रादुर्भूतस्य राघवादेरपि नैव प्राकृती तनुरित्यर्थः । एवं तर्हि सीतादिविषये कुतोऽस्याऽज्ञानादिकमित्यत आह– **दैत्यानामिति** ।।

भगवान् सर्वदा स्वात्मानं पश्यति

**भाष्यम्**

**एतमेव पुरुषं व्यासकृष्णकपिलराघवादिरूपं [७३]ततममपश्यत् । ततमं परिपूर्णतमं ब्रह्मापश्यत् । इदं मे स्वरूपमदर्शमेवाहमिति । रङ्गस्त्ववधारणे । 'रङ्गोवधारणे चैव संवादे च प्रयुज्यते' इति पदविवेके । अपश्यदित्यत्र नातीतकालत्वं विवक्षितम् । अभिव्यैख्यदित्यभिशब्दस्यानुषङ्गात् । अपश्यत् पश्यतीति चैककालसम्बन्धं विना वक्तुमशक्यत्वात् तथा प्रयोगः ।**

**प्रयोग एककालीनः सर्वकालेऽनुषज्यते ।**
**ददर्श विष्णुरित्यादौ नित्यचिद्रूपतो हरेः ।। इत्यादि सत्तत्त्वे ।**

---

७३. तततमं इति ह.पाठः

**परोक्षप्रिया इवेत्यसुराणां सम्यगदर्शनेन पतनं देवानां प्रियं तथाप्यपरोक्षदर्शिन्येव प्रीतिं कुर्वन्तीतीवशब्दः ।।२.४.३।।**

**भावप्रदीपः**

एतमेवेति वाक्यं तात्पर्यतो व्याख्यातमपि पुनः स्पष्टत्वार्थमनुवादपूर्वकं व्याचष्टे– **एतमेवेति** ।। सर्वावताररूपस्यापि परिपूर्णत्वादिकं स्पष्टमेव मूलोक्तं न बलाद्योजितमिति भावेन ततममपश्यदित्युक्त्वापि पुनस्ततममित्यनुवादः । तनु विस्तार इत्यतो डः । अतिशयेन तं ततमम् । अतिशयार्थे तमप् । ततशब्दादतिशयार्थे मप्रत्ययो वेति भावः । इन्द्रशब्दनिर्वचनार्थं प्रवृत्तमिदमदर्शमितीति वाक्यं व्याचष्टे– **इदं मे स्वरूपमिति** ।। मूलेऽदर्शमित्येव श्रवणाददर्शमेवेति कथं व्याख्येत्यत आह– **रङ्गस्त्विति** ।। इर्ती३ इत्यत्र यो रङ्ग इत्यर्थः । अत्र प्रमाणमाह– **रङ्ग इति** ।। ततममपश्यदित्यत्र लङा दर्शनस्यातीतत्वोक्त्याऽनित्यताशङ्कां वारयति– **अपश्यदित्यत्रेति** ।। **अतीतकालत्वं** अतीतकालमात्रसंबन्धित्वम् । तत्कथमित्यत आह– **अभीति** ।। अभीत्यस्य चाभितस्सर्वकालेष्विति प्राग्व्याख्यातत्वादिति भावः । तर्ह्यपश्यदिति लङ्प्रयोगः कुत इत्यत आह– **अपश्यदिति** ।। पश्यतीति चेति लटो दृष्टान्तत्वेनोपादनम् । अत्र प्रमाणमाह– **प्रयोग इति** ।। सर्वकालेत्यनुषज्यत इति । ददर्श पश्यति द्रक्षति चेति तदर्थ इत्यर्थः । तत्र हेतुः– **नित्यचिद्रूपत इति** ।। भावप्रधानोऽयम् ।

'परोक्षप्रिया इव हि देवाः' इत्यत्रेवशब्देन वस्तुतस्तु परोक्षप्रिया न भवन्तीति तात्पर्यं प्रतीयते । तथात्वे च कथं परोक्षप्रियसादृश्यमित्यतोऽत्राभिप्रायमाह– **परोक्षेति** ।। परोक्षप्रिया इवेति इवशब्दोऽ-

सुराणां सम्यगदर्शनेन तमसि पतनं यद्यपि देवानां प्रियं तथापि **अपरोक्षदर्शिनि** तत्त्वज्ञानिन्येव देवाः प्रीतिं कुर्वन्तीति ज्ञापनायेति योजना । अत्र परोक्षपदेन प्रत्यक्षभिन्नज्ञानवाचिनाऽस्पष्टज्ञानपरेण सम्यगदर्शनं लक्ष्यते । तस्य च देवप्रियत्वमसुरपतनहेतुत्वेनैवेति भावेन परोक्षप्रिया इत्यनुवादेनासुराणां सम्यगदर्शनेन पतनं देवानां प्रियमिति व्याख्यातम् ।

अयं भावः । नायमिवशब्दः सादृश्यार्थकः किन्तु [७४]'य इह नानेव पश्यती'त्यादाविव स्वसमभिव्याहृतपदार्थविरुद्धार्थकः । यथोक्त-मनुव्याख्याने[७५]– 'इवोभये च सादृश्य इति वाक्शब्दनिर्णये' इति । व्याख्यातं च सुधायाम्– 'उभये यदुक्तं पूर्वपदेन तत्प्रतियोगिनि द्वितीये वर्तत इत्यर्थः' इति । प्रकृते च परोक्षप्रिया इत्युक्त्वा प्रयुक्त इवशब्दोऽपरोक्षप्रिया इति संगृह्णाति । तथा चासुरापेक्षया परोक्ष-प्रियत्वं [७६]ज्ञानिन्यपेक्षयाऽपरोक्षप्रियत्वं चात्र विवक्षतमिति न कश्चिद्दोष इति ।।

ततश्चायं खण्डार्थः । **आत्मा** नित्याततगुणत्वादात्मशब्दवाच्यो विष्णुरेक एव एव **इदं** अस्य जगतो **अग्रे** प्रलयकाले आसीत् । रमायास्तदानीं सत्वेन ब्रह्माद्यपेक्षयैवेयमुक्तिः । अथवा **इदं** रमाब्रह्मादिकं सर्वमपेक्ष्य **आत्मा** विष्णुरेक एव कालतो गुणतश्च **अग्रे** पुरःसरः श्रेष्ठ आसीदित्यर्थः । अत्र रमायाः प्रलये सत्वेऽपि भगवदधीनतयैव सत्वात्स्वातन्त्र्येण स्थित्यभावादेवमुक्तिः । गुणाग्र्यत्वं त्वव्याहतमेव । यद्वा **इदं** रमाब्राह्मादिकं सर्वमपेक्ष्य **आत्मैवाग्रे** विष्णुरेव सर्वगुणैरग्र्य

---

७४. काठ.उ. १-१-११ ७५. १-३-८१

७६. तत्वज्ञानि इति 'ख'पाठः

आसीदित्येवार्थः । तत्र हेतुः **नान्यदिति** । ततोऽन्यत्किंचन **मिषत्** स्वातन्त्र्येण ज्ञानादिगुणैर्भासमानं नासीदित्यर्थः । मिषतां रमादीनां सत्वेऽपि स्वातन्त्र्येण मिषणाभावादेवमुक्तिः ।

**स** आत्मा भगवान् **ईक्षत** ऐक्षत ऐच्छत् । किमिति? **लोकान्नु सृजा इति** लोकाभिमानित्वेन लोकशब्दवाच्यान् ब्रह्मादिदेवान् तदभिमन्यमानान् सत्यादिजडलोकांश्च अहं **सृजै** स्रक्ष्ये इति । इत्थमीक्षन् **स** भगवान् **इमान्** वक्ष्यमाणान् लोकान् असृजत । के ते लोकाः **अंभो मरीचीर्मरमाप इति** । एतानेव लोकान्विविच्य दर्शयति– **अदोऽभ इत्यादिना** ।। अं विष्णुं बिभर्ति इति **अंभः** । प्रत्यक्षत एव विष्णुसंचारस्थानमिति यावत् । **अदः** प्रथमोद्दिष्टमंभो द्विविधम् । **परेण दिवं** दिवः परतो विद्यमानं द्यौश्चेति । दिवःपरतो विद्यमानं च वैकुंठादिस्थानत्रयं महरादिलोकचतुष्टयं चेति सप्तकं बोध्यम् । ननु कथं दिवो विष्णुलोकत्वं येनांभोनामिका सा स्यादित्यत उक्तम्– **प्रतिष्ठेति** ।। प्रतितिष्ठत्यत्र इति भगवानिति । तथा च दिवोऽप्यंभस्त्वं यक्तमिति भावः । ततश्च दिवःपरो वैकुंठादिर्दिवःपरे महरादयो द्यौः स्वर्गश्चांभोनामका इत्यर्थः । अत्र वैकुंठादिलोकसृष्टिकथनं भूदुर्गाभागविवक्षया व्यक्तिविवक्षया वाऽवगन्तव्यम् । मरीचीमरीचयशब्दयोः पर्यायत्वमभिप्रेत्याह– **अन्तरिक्षं मरीचय इति** ।। मरीचयोऽयन्ते प्रवर्तन्ते विशेषेणात्रेति । सकारान्तोऽयम् । मरीचिशब्दस्याप्ययमेवार्थः । मरीचयोऽस्मिन्वर्तन्त इति मरीचीरिति । मत्वर्थीयं तद्धितमुत्पाद्य तस्य लोपो वाच्यः । लक्ष्म्यादिशब्दवदयं शब्दो ज्ञातव्यः । मरंति क्षिप्रमत्रेति **मरः** पृथिवी । **या अधस्तात्** ब्रह्मांडोत्पत्तेः पूर्वं सृष्टा देवतास्ता आप इत्युच्यन्ते । एतासां च

लोकाभिमानित्वेन लोकशब्दवाच्यत्वम् । एतदपि भाविभावेन । लोकापेक्षया पूर्वमेव सृष्टत्वादसामिति बोध्यम् । **स** परमात्मा पुनरेवं **ईक्षत** ऐक्षत । किमिति? **इमे नु लोकाः** य इमे मया सृष्टा एते लोका **हि** अथ इतःपरं **लोकपालान्नु सृजा इति** । यद्यपि प्राक् सृष्टा अप्शब्दवाच्या देवा एव लोकपाला न ततोऽतिरिक्ताः । तथापि ब्रह्मांडान्तःपुनः प्रजातरूपान्तरविवक्षयेयमुक्तिः । **स** एवमीक्षन् भगवान् **अद्भ्यः एव** याः पूर्वं सृष्टा अप्शब्दावाच्या महदादि-तत्त्वाभिमानिन्यो ब्रह्मादिदेवतास्ताभ्य एव **पुरुषं** पुरुषनामानं ब्रह्माणं **सुमुद्धृत्य** रुद्राद्यंशैः सहांशतः पृथक्कृत्य तथा महदादितत्त्वात्मक-तत्तदचेतनभागानप्युद्धृत्य **अमूर्च्छयत्** मूर्तमकरोत् । चेतनाचेतना-त्मकमेकस्थं राशिं विदधे, ब्रह्मांडमुत्पादयामसेति यावत् ।

**तं** च ब्रह्मांडरूपं ब्रह्माण**मभ्यतपत्** मुखाद्यंगानि यथा निरभिद्येरन् तथा परिणतं चकार । एवं भगवताऽभितप्तस्य ब्रह्मणः प्रथमं मुखं निरभिद्यत । अत्र मुखशब्देनांडाकारं निरवयवं शिरोभिधमङ्गं ग्राह्य-मिति भावेनाह– **यथांडमिति** ।। ततश्च तस्मिन् **मुख**मास्यं निरभि-द्यतेत्यावृत्या योज्यम् । तस्माच्च मुखात् **वाक्** वाङ्नामा वह्निरभूत् । **वाचो** वागुत्पत्यनन्तरं **अग्नि**रग्निनामकं तस्यैव रूपान्तरमुत्पन्नम् । अत्र प्रथममध्यात्मरूपं द्वितीयमधिदैवमिति बोध्यम् । एवमुत्तरत्रापि । 'प्राणो वायु'रिति प्रधानवायुसुतो मरुदुच्यते । **दिशो** दिग्देवताः मित्रधर्मवरुणकुबेराः । लोमानि ओषधिवनस्पतयश्चेति द्विविधाः पारिजातादिदेवताः ब्रह्मणस्त्वगुद्भवाः । हृदयान्**मनः** मनोभिमानी तन्नामा चन्द्रः । उपलक्षणमेतत् । बुद्ध्यभिमानिनो बुद्धिनामानो

गरुडशेषशिवाश्चेत्यपि ग्राह्यम् । एवं हस्तौ निरभिद्येतां हस्ताभ्यां द्विविधः शक्रः, पादौ निरभिद्येतां पादाभ्यां द्विविधः शक्रसूनुर्यज्ञः । पायुर्निरभिद्यत पायोर्यमो निर्ऋतिश्च जातावित्युपलक्षणीयम् । एवमेव जिह्वा निरभिद्यत जिह्वाया रसनं, रसनाद्वरुण इति द्विविधो वरुणोप्युपलक्षणीयः । 'अपानो मृत्यु'रिति द्विविधः प्रधानवायुरेव । 'रेत आपः' इति द्विरूपः शिव एवेति बोध्यम् ।।२.४.१।।

**ता एता देवता** वह्न्याद्याः ब्रह्मदेहतः सृष्टाः सर्वा अपि रूपद्वयेन देवता इत्यावर्तनीयम् । दीव्यतिरत्र स्तुत्यर्थः । परमात्मानं स्तुवन्त्यः । पुनर्देवता इत्यावर्तनीयम् । दीव्यतिरत्र द्युत्यर्थः । दिव्याम्बरकुंडलादिभिर्द्योतमाना एव **अस्मिन्महत्यर्णवे** गर्भोदके शुद्धोदसमुद्रे वा **प्रापतन्** प्राविशन् । तदा स विष्णुस्तेषां अन्नसर्जनाय अन्नाकांक्षा जननार्थं **तं** देवसमूहं **अशनापिपासाभ्यां** तदभिमानित्वादिना तन्नामकाभ्यां वायुरूपाभ्यां **अन्ववार्जत्** संयोजयामास । ततश्च तदभिमन्यमानभोक्तृत्वशक्त्या योजयामास । एवं भगवताऽशनापिपासाभ्यां संयोजिता**स्ता** देवता **एनं** विष्णुमब्रुवन् । किमिति? वयं यस्मिन्प्रतिष्ठिता अन्नमदाम तादृशं **आयतनं** भोगोपयोगि शरीरं **नो**ऽस्माकं **प्रजानीहि** प्रकर्षेणानुजानीहि देहीति यावत् इति । सर्वशरीरेष्वपि पुरुषाकारशरीरस्यैव विशेषतो भोगायतनत्वज्ञापनाय प्रथमत**स्ताभ्यो** देवताभ्यो **गामानयत्** गोरूपं ब्रह्माणं ददौ । तदा तत्र देवताः प्रविश्य **नो**ऽस्माकं **अयं** गवाकारो ब्रह्मदेहो **नालं** भोगानुभवाय पर्याप्तं नेत्यब्रुवन् । ततस्ताभ्यो**ऽश्वं** अश्वाकारं ब्रह्माणमानयत् । तदा ता अब्रुवन् न वै नोऽयमलमिति । ततस्ताभ्यः **पुरुषं** पूर्वसृष्टं ब्रह्मणः पुरुषाकारशरीरमानयत् । तदा ता अब्रुवन् ।

इदं शरीरं **सुकृतं सुष्ठु अलं** अस्माकं भोगानुभवाय सम्यगेव पर्याप्तं बतेति । बत हर्षे । अत इदानीमपि जीवानां सर्वशरीरापेक्षया **पुरुषः** पुरुषाकारशरीरमेव हि **सुकृतं** सुष्ठु भोगाय पर्याप्तं भवति ।

अथ भगवान् ता देवता अब्रवीत् । **इमं** ब्रह्मदेहं **यथायतनं** युष्मदुत्पत्तिस्थानानुसारेण प्रविशतेति । एवं भगवदाज्ञानन्तरमधिदैवं **अग्निः** अग्निनामा वह्निरध्यात्मं वाङ्नामको भूत्वा **मुखमास्यं** प्राविशत् । एवमुत्तरत्रापि । एवं सर्वदेवताप्रवेशानन्तरं **तं** विष्णुं **अशनापिपासे अब्रूतां** अशनापिपासाभिमानी द्विरूपो वायुरब्रवीत् । **आवाभ्यामभिजानीहीति** अवां यथा नित्यं त्वच्छासानानुगौ भवाव तथा सम्यगेवाज्ञापयेति । **ते** अशनापिपासाभिमानिनी वायुरूपे प्रति विष्णुरब्रवीत् । किमिति? **एतास्वेव** वह्न्यादिदेवतासु **वां** युवां **आभजामि** समन्ताद्भाजयामि प्रवेशयामि । ततश्चैतास्वेव तत्तद्देवताभागभुजौ करोमीति । तस्मादेवं भगवता संकल्पितत्वाद्यस्यैकस्यै-च देवतायै यज्ञादिषु हविर्गृह्यते दीयते चेत्तर्हि **अस्यां** देवतायां **अशनापिपासे भागिन्यौ भवतः** द्विरूपो वायुः सर्वदेवताभागभुगिति यावत् ।।२.४.२।।

अथ स भगवान् **ईक्षत** ऐच्छत् । एतावत्पर्यन्तं मया सृष्टा इम एव, के ते लोकाश्च लोकपालाश्चेति । इदानीं **एभ्यो** लोकपालेभ्यो देवभ्योऽन्नं सृजा इति । एवमीक्षन् **अपः** अबाख्याः पूर्वसृष्टाः महदादितत्त्वाभिमानिनीर्ब्रह्मादिदेवता **अभ्यतपत्** अभ्यपश्यत् सुविशालाभ्यां नेत्राभ्यां ददर्शेत्यर्थः । एवं भगवता **अभितप्ताभ्यो** दृष्टाभ्यस्ताभ्यो देवताभ्यो **मूर्तिरजायत** तासां सर्वासामपि देहैकदेशेभ्यो मिलितं विरिंचादिसर्वदेवताधिष्ठितमेकं शरीरं पृथग्जातमित्यर्थः । नन्वन्नं सृजा इति संकल्प्य मूर्तिसृष्टिरनुपपन्नेति तत्राह–

**या वा इति ।। सा** प्रसिद्धा या वै मूर्तिरजायत **तत् अन्नं वै** साऽन्नरूपैवेत्यर्थः । [77]**तदेतत्तदेतत्** **सृष्टमन्नरूपं** शरीरं अन्नमूर्त्यात्मको ब्रह्मेति यावत् । **पाराङ्त्यजिघांसत्** भोक्तृदेवतागणं दृष्ट्वा मामिमा अदन्तीति भयादिव क्रीडयैव ता अतिक्रम्य किंचदपाक्रामत् । हन हिंसागत्योरिति धातोः स्वार्थे सन्नान्ताल्लङि रूपमेतत् ।

एवमन्नात्मके रूपेऽपक्रान्ते सति भोक्तृरूपी चतुर्मुखः सर्वे देवा वायुप्रसादमन्तराऽन्नभोजनेऽशक्ता एव वायुरेक एव शक्त इति जानन्नपि तारतम्यप्रकाशनाय लीलयैव तदन्नाख्यं रूपं **वाचा** वागभिमानिवह्निदेवतारूपकरणेन **अजिघृक्षत्** ग्रहीतुमत्तुमैच्छत् जिघृक्षावानिव प्रयत्नवानभूत् इति यावत् । **तत्** अन्नरूपं वाचा **ग्रीहीतुं** अत्तुं **नाशक्नोत्** अशक्त इवाभूत्[78] । कथमशक्तिरस्य ज्ञायत इत्यत आह– **स यदिति ।। स** ब्रह्मा **यत्** यदि एतत् अन्नरूपं **वाचा अग्रहैष्यत्** अत्तुं शक्तिमानभविष्यत्तर्हि **अन्नमभिव्याहृत्यैव** अन्नशब्दव्याहरणरूपवाग्व्यापरं कृत्वैव **अत्रप्स्यत्** तृप्तिमानभविष्यत् । न च तथा तृप्तिमानभूत् । तेन ज्ञायते वाचा ग्रहीतुं नाशक्नोदिति । वाचोभिव्याहरणातिरिक्तव्यापाराभावात् अन्नग्रहणस्य च तृप्तिफलकत्वाद्वाग्व्यापारे कृतेऽपि तृप्तेरजननाद्वाचाऽन्नग्रहणं न संभवतीति भावः । एवमुत्तरत्रापि द्रष्टव्यम् । **अभिप्राण्य** आघ्राय **अन्नं श्रुत्वा**ऽन्नवाचकशब्दं श्रुत्वा **अन्नं विसृज्य** रेतोरूपेण शिश्नान्निस्सार्य, अथ तत् अन्नरूपं ब्रह्मा **अपानेन** अपानाख्यप्रधानवायुना**ऽजिघृक्षत्** अत्तुमैच्छत् । तदा **आवयत्** अशक्नोत् । धातूना-

७७. तदेनत् इति 'ख'पाठः

७८. अभवत् इति 'ख'पाठः

मनेकार्थत्वाद्वयतिरत्र शकनार्थः । तस्माद्यद्वायुः यो वायुरपानाख्यः स एषोऽन्नस्य ग्रहः सर्वस्यान्नस्य भोक्ता यत् यो वायुः एषोऽन्नायुर्वै अन्नस्यान्नाभिमानिदेवस्य ब्रह्मणोऽप्यायुर्जीवनहेतुः । अत्रायुरिति बुद्ध्या विविच्यान्येषां सुराणां वायुरेव आयुः चेष्टाप्रदः अयतेर्गत्यर्थत्वाज्ज्ञानप्रदश्च । गत्यर्थस्य ज्ञानार्थत्वान्नित्यायुरूपमोक्षप्रदश्चेति व्याख्येयम् ।

स भगवान्ब्रह्मशरीरे देवतानां प्रवेशात्पूर्वमेव ईक्षत ऐक्षत । किमिति? इदं ब्रह्मादिदेवजातं मदृते कथं नु स्वस्वकार्यं कर्तुं समर्थं स्यात् । न कथमपि अतोऽस्य प्रवृत्यर्थं ब्रह्मशरीरे मया प्रवेष्टव्यमेवेति पुनः स ईक्षत । कतरेण मार्गेण इदं शरीरं प्रपद्यै प्राप्नुयामिति । पुनः स ईक्षत, मदृत इत्यत्राप्यनुवर्तनीयम् । यदि वागादीन्द्रियदैवतैर्मां विना स्वातन्त्र्येणैवाभिव्याहरणादिकं स्वस्वकर्म कृतं स्यात् । अथ तर्हि कोऽहमिति । अहं विष्णुशब्दवाच्यः कः कथं भवेयं विशेषेण सर्वचेष्टकत्वादिविशिष्टबलवत्वाच्च मम विष्ण्वभिधा सा मम न स्यादिति भावः । इत्यैक्षतेति पूर्वेणान्वयः ।

एवमालोच्य स भगवान्वासुदेवादिरूपेण एतमेव मस्तकं सीमानं विदार्य एतया द्वारा सुषुम्नाख्यमूर्धन्यनाडीद्वारा प्रापद्यत प्रविवेश । अत एव सैषा द्वाः द्वारं विदृतिर्नाम विदारितत्वाद्विदृतिनामकमित्यर्थः । तस्य नामान्तरमप्याह– तदेतन्नांदनमिति ।। पूर्णानन्दस्वरूपत्वान्नंदनो भगवान् तत्संबन्धित्वात्तदेतन्नाडीद्वारं नान्दनमित्युच्यते । तस्य भगवत एव पुनस्त्रय आवसथाः स्थानानि अयमक्षिरूप आवसथ एकः, अयं कंठरूप आवसथ एकः अयं हृदयरूप आवसथ एक इत्येवं त्रय इत्यर्थः । एत एव त्रय आवसथाः स्वप्ना इत्युच्यन्ते । स्वयं विष्णुराप्नोति जीवरूपं जाग्रदाद्यवस्थाप्रेरणायात्रेति । अनिरुद्धप्रद्युम्नसंकर्षणाख्यारूपत्रयं क्रमेण

स्थानत्रये स्थितमिति बोध्यम् ।

**स** भगवान् **जातो** मत्स्यादिरूपेण प्रादुर्भूतः सन्नपि **भूतानि** सर्वप्राणिनोऽ**भिव्यैख्यत्** अभितः सर्वकालेषु विशेषेण पश्यत्येव । मूलावतारयोर्ज्ञानादिसर्वगुणैर्निर्विशेषत्वात् । अत्राभिव्यैख्यदित्यनन्तरं प्राविशदित्यपि ग्राह्यम् । तत्र चैवमन्वयः । **स** विष्णु**र्जातो** मत्स्यादिरूपेण भुवि प्रादुर्भूतस्तथा रूपान्तरेण **भूतानि** समस्तप्राणिजातानि प्राविशच्चेति । कुत इत्यत आह– **किमिहेति** ।। **इह** जगति मत्तोऽन्यमसुरनिहन्तारं ज्ञानादिगुणप्रदं च **वावदिषत् किं** वदेत्किं न वदत्येव । विद्वज्जन इति शेषः । तथ **इह** भूतेषु मत्तोऽन्यं चेष्टाप्रदं वदेत्किं न वदत्येवेति मत्वा दैत्यनिग्रहणेच्छया ज्ञानदानार्थं च मत्स्यादिरूपेण जातः । भूतानि च प्रेरणेच्छया प्राविशच्चेति पूर्वेणान्वयः । **स** एष भगवान् **एतमेव पुरुषं** व्यासकृष्णकपिलराघवादिरूपं **ततमं** परिपूर्णतमं ब्रह्म अपश्यत् । अत्राभिव्यैख्यदित्यतोऽभिशब्दोऽनुषज्यते । तथा चाहमेव स्वतन्त्रः पूर्णगुण इति कृष्णराघवादिसर्वावतारूपोऽपि सर्वदाऽनुभवत्येवेत्यर्थः । अत एव भगवत इदन्द्र इति नामेति भावेन निरुच्य[७०] दर्शयति– **इदमिति** ।। **इदं** मे स्वरूपं अहं गुणपरिपूर्णत्वादिना सर्वदाऽदर्शमेवेति यतस्तस्मादहमिदन्द्रो नामेति भगवतो महिदासस्य वाक्यमिदम् । रङ्गस्त्ववधारणे । यस्मादिदं दर्शनादिदंद्रो ह वै नाम भगवांस्तस्मादुक्तनिर्वचनेनेदन्द्रं सन्तं **तं** विष्णुं इदंद्र इत्यनुक्त्वा इन्द्र इत्येव **परोक्षेण** अस्पष्टतयाऽऽचक्षते वैदिकाः । कुतः **देवा** विष्ण्वाद्या **हि**

---

७०. तन्निरूप्य इति 'ख'पाठः

यतः **परोक्षप्रियाः** दैत्यानां परोक्षं सम्यगदर्शनमेव प्रियं देवानाम् । तेन दैत्यानामधःपतनात् । इन्द्र इत्युक्तौ प्रसिद्धेन्द्र एवायमिति मिथ्याज्ञानं तेषां जायते न त्विदंद्र इत्युक्तौ अत इदन्द्रस्येन्द्रत्वेन कथनं श्रुत्यादिषु युक्तमिति भावः । **अपरोक्षदर्शिनि** तत्वज्ञानिनि देवाः प्रीतिमेव कुर्वन्ति इत्यपरोक्षप्रियत्वमपि तेषामस्तीति ज्ञापनायेवशब्दः । अध्यायान्ते द्विरुक्तिकृत्यं तु प्रागुक्तमेवानुसन्धेयम् ॥२.४.३॥

**॥ इति श्रीमन्महैतरेयोपनिषद्भाष्यभावप्रदीपे द्वितीयारण्यके चतुर्थोऽध्यायः ॥**

# अथ द्वतीयारण्यके पञ्चमोऽध्यायः

## भगवतः प्रादुर्भावः

### उपनिषत्

**(अपक्रामन्तु गर्भिण्यः) ॐ पुरुषे ह वा अयमादितो गर्भो भवति । यदेतद्रेतस्तदेतत् सर्वेभ्योऽङ्गेभ्यस्तेजस्सम्भूतम् । आत्मन्येवात्मानं बिभर्ति । तद्यदा स्त्रियां सिञ्चति अथैनज्जनयति । तदस्य प्रथमं जन्म ।**

**तत्स्त्रिया आत्मभूयं गच्छति यथा स्वमङ्गं तथा । तस्मादेनां न हिनस्ति । साऽस्यैतमात्मानमत्र गतं भावयति । सा भावयित्री भावयितव्या भवति । तं स्त्री गर्भं बिभर्ति । सोऽग्र एव कुमारं जन्मनोऽग्रेऽधिभावयति । स यत्कुमारं जन्मनोऽग्रेऽधिभावयति, आत्मानमेव तद्भावयति, एषां लोकानां सन्तत्यै । एवं सन्तता हीमे लोकाः । तदस्य द्वितीयं जन्म ।**

### भाष्यम्

अयं नारायणो देवः पुरुषे प्रथमं विशेत् ।
अन्नस्थोऽन्नेन सहितस्तस्मिन् रेतस्त्वमागते ।।

तस्मिन् स्थितं स्वरूपं स पुरुषस्थो बिभर्त्यजः ।
तद्रूपं रेतसा साकं स्वयं पुंसि स्थितो हरिः ।।

स्त्रियां सिञ्चति तस्यैव स्थानान्तरगतेः प्रभोः ।
प्रथमं जन्म विष्णोस्तु[१] स तस्या अङ्गवत् प्रभुः ।।

नैनां हिनस्त्यानुकूल्यात् सा पुत्रं भावयत्यथ ।
पुत्रस्य भावना सैव तद्गत्वाद् हरिभावना ।।

सम्भावितव्या सा चैव भर्त्रा पुत्रश्च सादरम् ।
सम्भावनं कुमारस्य जानतः केशवे भवेत् ।।

तस्येत्यर्पणमात्रेण पूजितो हि भवेद्धरिः ।
पुत्रस्थस्य हरेः पूजां कुर्वतः पृथिवीस्थितिः ।।

स्वर्गस्थस्यापि भवति पुत्रपुण्यं यतोऽखिलम् ।
अत्यल्पपुण्यभाक् स स्यान्नार्चयेत् केशवं यदि ।।

पृथिव्यां जन्म पुत्रस्य द्वितीयं विष्णुजन्म हि ।

**भावप्रदीपः**

रेतसा वनितागर्भे शिशुना गर्भतो बहिः ।
तत्पित्रा सह चान्यत्र स[२] उदैत्सोऽवताद्धरिः ।।

'पुरुषे ह वा अयं' इत्येतत्खंडं व्याचष्टे– **अयं नारायण इत्यादिना** ।। तत्र 'पुरुषे अयमादितो गर्भो भवती'त्यस्य विवरणम्– **अन्नस्थोऽयं नारायणोऽन्नेन सहितस्सन्प्रथमं पुरुषे विशेदिति** । 'यदेतद्रेतः' इत्यादेरर्थः– **तस्मिन्नित्यादि** । **तस्मिन्** भुक्तान्ने । पुनस्**तस्मिन्** रेतसि । 'तद्यदा स्त्रियां सिञ्चति अथैनज्जनयति तदस्य

१. तत् इति ह.पाठः २. य इति 'ख'पाठः

प्रथमं जन्म' इत्यस्यार्थः– **तद्रूपं रेतसा साकमित्यादि** । 'तत्स्त्रिया आत्मभूयं गच्छति यथा स्वमङ्गं' इत्यस्यार्थो– **स तस्या इति** ।। **स** प्रभुस्तस्या अङ्गवत् तिष्ठतीति शेषः । 'तस्मादेनां न हिनस्ति' इत्यस्यार्थो– **नैनामिति** । हिनस्ति पतिरिति शेषः । तस्मादित्य-स्यार्थः– **आनुकूल्यादिति** । गर्भधारणेन स्वस्य स्वर्गादिपुरुषार्थहेतु-पुत्रप्रसवसंभावनाविषयतयाऽनुकूलत्वादित्यर्थः । 'साऽस्यैतमात्मान-मत्रगतं भावयति' त्यस्यार्थः– **सा पुत्रं भावयतीति** । मानयती-त्यर्थः । कुतः स्त्रिया स्वगर्भतः पुत्रो माननीय इत्यत आह– **पुत्रस्येति** ।। या भावना क्रियते सैव हरिभावना भवति । कुतः? **तद्गत्वात्** हरेर्गर्भस्थपुत्रगतत्वात् इत्यर्थः । एतेन 'साऽस्ये'ति वाक्यं द्वेधा व्याख्यातं भवति । **सा** स्त्री **अस्य** पत्युः सकाशाल्लब्धं **अत्र** गर्भे[३] गतं **एतमात्मानं** पुत्रं **भावयति** संभावयतीति । तथाऽ**स्य** पत्युः संबन्धिन्य**त्र** स्वगर्भगतपुत्रे **गतं** स्थितं **एतमात्मानं** हरिमेव भावयतीति । 'सा भावयित्री भावयितव्या भवती'त्यस्यार्थः– **संभाव-यितव्येति** । पुत्रश्चेत्यनेन कुमारं जन्मनोऽग्रेऽधिभावयतीत्यस्य व्याख्यानसङ्ग्रहः । 'स यत्कुमारं जन्मनोऽग्रेऽधिभावयत्यात्मानमेव तद्भावयति' इत्येतद्व्याचष्टे– **संभावनमिति** ।। कुमारसंभावनस्य सर्वसाधारण्यात् किं तत्संभावनं सर्वेषां हरिपूजात्मकं भवतीत्यत उक्तम्– **जानत इति** ।। जानतोऽपि कथं कुमारसंभावनं केशवे भवतीत्यतस्तदेव विशदयति– **तस्येति** ।। अयं पुत्रस्तदधीनसत्ता-दिक एव न मदीयः । किं नाम मम शुभार्थं तेनैव दत्त इत्याद्य-नुसन्धानरूपार्पणमात्रेण कुमारसंभावनेनापि हरिः पूजितो भवेदित्यर्थः ।

---

३. स्वगर्भे इति 'ख'पाठः

पुत्रसंभावनां हरिपूजात्वेनानुसंदधतः फलमाह– **पुत्रस्थस्येति** ।। **स्वर्गस्थस्यापि पृथिवीस्थितिरिव भवति** । पृथिव्यामेव जीवान् साधनसंपत्तिं कुर्वाणो यथा तथा स पुमान् भवतीति यावत् । कुतः? यतस्तस्य पुत्रपुण्यमखिलं भवतीत्यर्थः । पूजामकुर्वतः फलह्रासोऽपि भवतीत्याह– **अत्यल्पेति** ।। केशवं पुत्रस्थमिति शेषः । एतेन 'एषां लोकानां सन्तत्यै' इत्यादिकं व्याख्यातं भवति । 'तदस्य द्वितीयं जन्मे'ति वाक्यं व्याचष्टे– **पृथव्यामिति** ।।

भगवतः जन्मत्रयनिरूपणम्

उपनिषत्

**सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते । तथास्यायमितर आत्मा कृतकृत्यो वयोगतः प्रैति । स इतः प्रयन्नेव पुनर्जायते । तदस्य तृतीयं जन्म ।**

**तदुक्तमृषिणा–**

**गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा ।**
**शतं मा पुर आयसीररक्षन्नधः श्येनो जवसा निरदीयम् ।। इति**

**गर्भ एवैतच्छयानो वामदेव एवमुवाच । स एवं विद्वानस्माच्छरीरभेदादूर्ध्व उत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वाऽमृतः समभवत् समभवत् (यथास्थानं गर्भिण्यः) ।।२.५.१।।**

।। इति द्वितीयारण्यके पञ्चमोऽध्यायः ।।

भगवतः सर्वोत्तमत्वज्ञानफलनिरूपणम्

**भाष्यम्**

**एतद्रूपं निधायैव जीवार्थे धर्मकर्तवे ॥**
**पितृस्थेन तु रूपेण गच्छत्यन्यत्र केशवः ।**

**पितुरन्यत्र जननं तृतीयं जन्म तद्धरेः ॥**
**अन्तर्यामितयैवं हि सर्वजीवेषु संस्थितम् ।**

**सर्वदोषोज्झितं विष्णुं कर्तारं सर्वकर्मणाम् ॥**
**नित्यानन्दं स्वतन्त्रं च सर्वज्ञं सर्वतोऽधिकम् ।**

**यो वेद देहबन्धात् स विमुक्तो नित्यमुत्तमान् ॥**
**भोगान् भुङ्क्ते [४]यथायोग्यमिति वेदानुशासनम् ॥**

इत्यैतरेयसंहितायाम् ।

**भावप्रदीपः**

'सोऽस्यायमात्मे'ति वाक्यं व्याचष्टे– **एतद्रूपमिति** ॥ पुत्रगतं रूपं **जीवार्थे** पितृजीवार्थे स्वात्मार्थे वा **धर्मकर्तवे** पुण्यकर्मणां करणाय पुत्रदेह एव निधाय पितृस्थेन रूपेणान्यत्र गच्छतीत्यर्थः । एतेन 'अथास्यायमितर आत्मा प्रैती'त्युक्तार्थं । 'स इतः प्रयन्नेव पुनर्जायते तदस्य तृतीयं जन्म' इत्येतद्व्याचष्टे– **पितुरिति** ॥ 'स एवं विद्वानस्माच्छरीरभेदात्' इत्यादिफलवाक्यं व्याचष्टे– **अन्तर्यामीति** ॥ एवमित्यनुवादः अन्तर्यामितयेति व्याख्यानम् ॥

---

४. यथायोगं इति ह.पाठः

जीवदेहेन सह देवानामपि जननम् तथापि देवानां दुःखाभोगः

## भाष्यम्

**नात्र जीवोत्पत्तिमात्रमुच्यते । न हि जीवोत्पत्तिमात्रपरिज्ञानादमृतत्वं भवति । ज्ञानमेव सर्वैः पितापुत्रसम्बन्धमात्रं [५]पश्वादिभिरपि । 'गर्भे नु सन्नन्वेषामवेदमङ्गं देवानां जनिमानि विश्वा' इत्युक्तार्थ उदाहृतमन्त्रे[६] देवजन्मकथनाच्च । विष्णुर्हि परमो देवः । तेनैव सह सर्वेऽपि देवा जीवदेहजनने जायन्त इव । शरीरप्राप्तिरेव हि जन्मान्येषामपि । अयमेव विशेषो देवानां दुःखाभोगः । स्वातन्त्र्यं च विष्णोः ।।**

## भावप्रदीपः

एवं प्रमाणसमाख्यया खंडं व्याख्याय तत्स्थेम्ने प्रतीतार्थपरं परेषामपव्याख्यानं प्रत्याख्याति– **नात्रेति** ।। **अत्र** खंडे । कुत इत्यतस्तत्रार्थे बाधकं प्रदर्शयति– **न हीति** ।। 'एवं विद्वानमृतस्समभवत्' इत्युपसंहारवाक्ये उक्तार्थपरिज्ञानात् **अमृतत्वं** मुक्तत्वं कथ्यते । न हि जीवोत्पत्तिमात्रपरिज्ञानात्तत्संभवतीत्यर्थः । कुतो न संभवतीत्यत आह– **ज्ञानमेवेति** ।। सर्वैरित्यस्यैव विवरणं– **पश्वादिभिरिति** । तथा च पश्वादीनामपि मुक्तिप्रसङ्ग इति भावः । इतश्चात्र न जीवोत्पत्तिमात्रमुच्यत इत्याह– **गर्भे न्विति** ।। अत्र हि मन्त्रे अहं देवानां जनिमा जन्मान्यवेदमिति देवानां जन्म कथ्यते । न हि जीवजन्ममात्रस्य प्राग्विवक्षितत्वे देवजन्मप्रतिपादकमन्त्रोदाहरणमुक्तार्थे सङ्गच्छते । अतो न तन्मात्रमिह विवक्षितमिति भावः । नन्वेवं तर्हि विष्णुपरतायामप्यस्यासङ्गतिरेव । न हि विष्णोर्जन्म-

---

५. श्वादिभिरपि इति ह.पाठः ६. उदाहृते मन्त्रे इति ह.पाठः

त्रयवर्णने देवजन्मप्रतिपादकमन्त्रोदाहरणं सङ्गच्छत इत्यत आह– **विष्णुर्हीति** ।। विष्णुपरत्वे नेदं मन्त्रोदाहरणमसङ्गतम् । देवशब्देन विष्णोरपि विवक्षितत्वात् । विष्णुर्हि परमो देव इति । न चेतर-देवजन्मकथनानुपपत्तिः । मानुषादिजीवदेहजनने विष्णुना सह सर्वेषामपि तत्त्वाभिमानिदेवानां जन्मसद्भावात् । न च विष्णोर्देवानां वा जन्मानुपपत्तिः । प्रादुर्भावरूपामुख्यजन्मोपपत्तेरिति भावः । तदिदमुक्तम्– **जायन्त इवेति** ।। अथवा मुख्यमेव जन्मास्तु विवक्षितं तथापि नानुपपत्तिरित्याह– **शरीरप्राप्तिरिति** ।। न केवलं मानुषादिजीवानां किन्तु ततो**ऽन्येषां** विष्ण्वादीनामपि यदा शरीरप्राप्तिर्भवति तदा सैव जन्म भवतीत्यर्थः । तर्हि जीवसाम्य-स्यैवापातेन को विशेष एषामित्यत आह– **अयमेवेति** ।। देवानां गर्भवासादिप्रयुक्तदुःखाभोगः । विष्णोस्तु दुःखाभोगः स्वातन्त्र्यं चेति द्वयम् । जीवानां तु तदुभयमपि नास्तीत्यर्थः ।।

भगवतो जीवशरीरप्रवेशनिर्गमननिरूपणम्

**भाष्यम्**

**'आत्मन्येवात्मानं बिभर्ति आत्मानमेव तद्भावयति' इत्याद्यात्म-शब्दश्च मुख्यतो विष्णावेव युज्यते । 'णकारो बलं षकारः प्राण आत्मा'[७] इति विष्णुशब्दार्थैकदेशवाचित्वाच्च आत्मशब्दस्य । 'एतया द्वारा प्रापद्यत'[८] इति तस्यैव शरीरप्रवेशस्य प्रस्तुतत्वाच्च । जीवशरीरं परित्यज्यान्यत्रगमनमात्रं विष्णोरप्यस्तीति प्रैतीत्युक्तेऽप्यविरोधः । कृष्णराघवादिस्वरूपमेव ह्यसौ न परित्यजति ।**

---

७. ऐत.उ. ३-२-६ ८. ऐत.आ. २-४-३

**भावप्रदीपः**

इतोऽप्ययं खंडो न जीवोत्पत्तिमात्रपरः किन्तु तदन्तर्यामिविष्णुपर एवेत्याह– **आत्मन्येवेति** ।। जीवादावपि आत्मशब्दवृत्तेः कथं विष्णावेवेत्यवधारणमित्यत उक्तम्– **मुख्यत इति** ।। नन्वस्त्वात्मशब्दो विष्णावेव मुख्यस्तथापि प्रकृते कथं तत्परत्वनिश्चयः । न हि गङ्गाशब्दः प्रवाहे मुख्य इत्येतावता गङ्गायां घोष इत्यत्रापि तत्पर इति संभवतीत्यत आह– **णकार इति** ।। नायमात्मशब्दोऽन्यपरः किन्तु विष्णुपर एव । उपसंहरे विष्णुनामघटकषकारस्य यदर्थद्वयमभिहितं 'प्राण आत्मे'ति तत्रात्मशब्दस्य षकारार्थैकदेशात्मवाचित्वात् । न हि तत्प्रकारणे पठितस्य तन्नामभूतस्यान्यपरत्वमतत्परत्वं वा संभावनार्हमिति भावः ।।

किञ्च अत्राव्यवहितपूर्वखंडे 'स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत'[९] इति भगवत एव शरीरे प्रवेशस्य प्रस्तुतत्वादत्रापि खंडे जीवेन सह शरीरप्राप्त्यदिकं भगवत एव प्रदिपाद्यमङ्गीकार्यं, न जीवमात्रस्य । तस्याप्रस्तुत्वादित्याह– **एतयेति** ।। नन्वथापि नेदं विष्णुपरमिति शक्यं वक्तुम् । 'वयोगतः प्रैती'ति मरणश्रवणात् । न हि विष्णोर्नित्यामृतस्य मरणं संभवतीत्यत आह– **जीवशरीरमिति** ।। भगवद्विषये प्रैतीत्युक्तिरपि न विरुद्ध्यते । शरीरं परित्यज्यान्यत्र गमनमेव हि प्रैतिर्नाम । तन्मात्रं च जीवस्येव विष्णोरप्यस्ति । जीवस्य शरीरपरित्यागकाले जीवेन सह भगवतोऽपि तच्छरीरं परित्यज्यान्यत्र गमनसद्भावस्य प्रमितत्वादित्यर्थः । तर्हि 'न मरिष्यते नैधतेऽसौ'[१०] इत्याद्युक्तेः का गतिरित्यत आह– **कृष्णेति** ।। **स्वरूपं** स्वीयरूपम् । अतो न मरिष्यतीत्याद्युक्तिस्तद्विषयेति भावः ।।

---

९. ऐत.आ. २-४-३ १०. भाग. ११-३-३९

## कृष्णावतारस्याद्यापि स्थितिकथनम्

### भाष्यम्

कृष्णो ह्यत्यक्तदेहोऽपि त्यक्तदेहवदेव च ।
लोकानां दर्शयामास स्वरूपसदृशाकृतिम् ।।

येन रूपेण कंसादीन् जघ्ने तद्रूपमेव[११] हि ।
पूज्यतेऽद्यापि शर्वाद्यैर्निर्मितान्या शवाकृतिः ।।

स्वर्गारोहणकाले तु[१२] जनास्तेनैव मोहिताः ।
यत्तद्रूपं निजं विष्णोर्दृष्टं [१३]सर्वजनैर्भुवि ।।

अद्यापि तद्देवलोके पूज्यते सर्वदैवतैः ।। इत्यादि स्कान्दे ।

प्रदर्श्यातप्ततपसामवितृप्तदृशां नृणाम् ।
आदायान्तरधाद्यस्तु स्वबिम्बं लोकलोचनम् ।।

इति च भागवते । (३.२.११)

'प्रेतां यज्ञस्य शम्भुवा' इत्यादिवत् प्रकृष्टगतिवाच्येवायं शब्दः । प्रकृष्टगतित्वादेव च[१४] मरणेऽपि प्रयुज्यते ।।

### भावप्रदीपः

ननु भारतादौ कृष्णस्य स्वदेहपरित्यागादेरेव श्रवणात् कथं तन्न परित्यजतीत्युच्यत इत्यतः प्रमाणेनैव तथोक्तेर्गतिमाह– **कृष्णो हीति** ।। स्वरूपसदृशाकृतिमन्यां दर्शयामास । सा सदृशाकृतिः किं कृष्णस्य सर्वकालभाविनी? नेत्याह– **निर्मितेति** ।। **तेन** शवाकृतिदर्शनेन ।

---

११. तद्रूप एव हि इति ह.पाठः १२. हि इति ह.पाठः
१३. सर्वनरैः इति ह.पाठः १४. च इति पदं ह.पाठे नास्ति

नन्वस्त्वियमन्या शवाकृतिः येन रूपेण कंसादीन् जघ्ने तदपि प्राकृतमेव किं न स्यात् । तथा च 'यदुषु रम्यमबिभ्रदंगं' 'मानुषदेहमाश्रित्य' । 'स कथं तनुमत्यजत्'[१५] इत्यादि भागवतादौ शतश उक्तयोऽप्यनुकूलिताः स्युरित्यत आह– **यत्तद्रूपमिति** ।। **निजं** स्वाभाविकम् । न त्वागन्तुकम् । तर्हि भागवताद्युक्तिविरोध इत्यत आह– **प्रदर्श्येति** ।। यत्र भागवते भगवतः कृष्णस्य देहस्वीकार-परित्यागादिकमभिधीयत इत्युच्यते तत्रैव लोकानां लोचनं यस्मिन्निति लोकलोचनं लोकप्रकाशकं वा **स्वबिंबं** निजरूपं नृणां प्रदर्श्या-तप्ततपस्त्वात्तदक्लृप्तेः पूर्वमेव तं स्वबिंबमादायैवान्तरधान्न तु परित्यज्येति सर्वजनदृष्टरूपस्यैव परित्यागोक्तेः तदविरोधेनैव वचनान्तराणां तात्पर्यं कल्पनीयमिति भवः ।।

किञ्च प्रैतीत्येतत्प्रपूर्वादिणो गत्यर्थाल्लटि रूपम् । तथायं शब्दः प्रकृष्टगतिमात्रवाची न मरणस्यैव साक्षात्प्रत्यायकः । अन्यथा 'प्रेतां यज्ञस्ये'त्यादावपि मरणस्यैव प्रत्यायकः स्यादिति भावेनाह– **प्रेतामिति** ।। तर्हि 'येयं प्रेते विचिकित्सा मनुष्ये'[१६] 'न प्रेत्य संज्ञाऽस्ति'[१७] इत्यादौ मरणबोधनं स्यादित्यत आह– **प्रकृष्टेति** ।। नाखंडवृत्या मरणबोधकोऽयं शब्दः किन्तु प्रकृष्टगतित्वरूपावयवार्थ-मपेक्ष्यैव । स च प्रकृतेऽपि समान इति भावः ।।

---

१५. भाग. १.१६.३६, ११-३०-२

१६. काठ.उ. १-३-१

१७. बृ.उ. ४-४-१२, ६-५-१२

## कृष्णावतारस्याद्यापि स्थितिकथनम्

### भाष्यम्

कृष्णो ह्यत्यक्तदेहोऽपि त्यक्तदेहवदेव च ।
लोकानां दर्शयामास स्वरूपसदृशाकृतिम् ।।

येन रूपेण कंसादीन् जघ्ने तद्रूपमेव[११] हि ।
पूज्यतेऽद्यापि शर्वाद्यैर्निर्मितान्या शवाकृतिः ।।

स्वर्गारोहणकाले तु[१२] जनास्तेनैव मोहिताः ।
यत्तद्रूपं निजं विष्णोर्दृष्टं [१३]सर्वजनैर्भुवि ।।

अद्यापि तद्देवलोके पूज्यते सर्वदैवतैः ।। इत्यादि स्कान्दे ।

प्रदर्श्यातप्ततपसामवितृप्तदृशां नृणाम् ।
आदायान्तरधाद्यस्तु स्वबिम्बं लोकलोचनम् ।।

इति च भागवते । (३.२.११)

'प्रेतां यज्ञस्य शम्भुवा' इत्यादिवत् प्रकृष्टगतिवाच्येवायं शब्दः । प्रकृष्टगतित्वादेव च[१४] मरणेऽपि प्रयुज्यते ।।

### भावप्रदीपः

ननु भारतादौ कृष्णस्य स्वदेहपरित्यागादेरेव श्रवणात् कथं तन्न परित्यजतीत्युच्यत इत्यतः प्रमाणेनैव तथोक्तेर्गतिमाह– **कृष्णो हीति** ।। स्वरूपसदृशाकृतिमन्यां दर्शयामास । सा सदृशाकृतिः किं कृष्णस्य सर्वकालभाविनी? नेत्याह– **निर्मितेति** ।। **तेन** शवाकृतिदर्शनेन ।

---

११. तद्रूप एव हि इति ह.पाठः १२. हि इति ह.पाठः
१३. सर्वनरैः इति ह.पाठः १४. च इति पदं ह.पाठे नास्ति

नन्वस्त्वियमन्या शवाकृतिः येन रूपेण कंसादीन् जघ्ने तदपि प्राकृतमेव किं न स्यात् । तथा च 'यदुषु रम्यमबिभ्रदंगं' 'मानुषदेहमाश्रित्य' । 'स कथं तनुमत्यजत्'[१५] इत्यादि भागवतादौ शतश उक्तयोऽप्यनुकूलिताः स्युरित्यत आह– **यत्तद्रूपमिति** ।। **निजं** स्वाभाविकम् । न त्वागन्तुकम् । तर्हि भागवताद्युक्तिविरोध इत्यत आह– **प्रदर्श्येति** ।। यत्र भागवते भगवतः कृष्णस्य देहस्वीकारपरित्यागादिकमभिधीयत इत्युच्यते तत्रैव लोकानां लोचनं यस्मिन्निति लोकलोचनं लोकप्रकाशकं वा **स्वबिंबं** निजरूपं नृणां प्रदर्श्यातप्ततपस्त्वात्तदक्लृप्तेः पूर्वमेव तं स्वबिंबमादायैवान्तरधान्न तु परित्यज्येति सर्वजनदृष्टरूपस्यैव परित्यागोक्तेः तदविरोधेनैव वचनान्तराणां तात्पर्यं कल्पनीयमिति भवः ।।

किञ्च प्रैतीत्येतत्प्रपूर्वादिणो गत्यर्थाल्लटि रूपम् । तथायं शब्दः प्रकृष्टगतिमात्रवाची न मरणस्यैव साक्षात्प्रत्यायकः । अन्यथा 'प्रेतां यज्ञस्ये'त्यादावपि मरणस्यैव प्रत्यायकः स्यादिति भावेनाह– **प्रेतामिति** ।। तर्हि 'येयं प्रेते विचिकित्सा मनुष्ये'[१६] 'न प्रेत्य संज्ञाऽस्ति'[१७] इत्यादौ मरणबोधनं स्यादित्यत आह– **प्रकृष्टेति** ।। नाखंडवृत्या मरणबोधकोऽयं शब्दः किन्तु प्रकृष्टगतित्वरूपावयवार्थमपेक्ष्यैव । स च प्रकृतेऽपि समान इति भावः ।।

---

१५. भाग. १.१६.३६, ११-३०-२

१६. काठ.उ. १-३-१

१७. बृ.उ. ४-४-१२, ६-५-१२

## एषामवेदमहं इत्यत्र जीवभेदकथनम्

### भाष्यम्

**'एषामवेदमह'मित्यत्रापि जीवभेद एवोक्तः । अन्यथा मम जनिमानीत्येवोच्येत । व्यर्थता चैषामित्यादि विशेषणानाम् । अवेदमित्यनेनैव स्वस्य सिद्धत्वादहमित्यप्यहेयत्वेनेति क्रियाविशेषणम् । जन्म जानन्नपि देवानां दुःखादिहेयरहितत्वेन व्यजानामीत्यर्थः । तस्मात् 'अहं मनु'रित्यादावत्यहेयगुणं[१८] भगवन्तमेवाहंशब्दो वक्ति । सर्वान्तरत्वात् तस्मिन्नेवाभवमित्युत्तमपुरुषशब्दोऽपि सर्वो[१९] वर्तते ।**

**अहेयत्वादहं विष्णुः स तु सर्वान्तरत्वतः ।**
**अस्यस्मीत्यादिभिः शब्दैरुच्यतेऽन्योऽपि जीवतः ।। इति ब्रह्मवैवर्ते ।**

### भावप्रदीपः

ननु जीवपरमात्मनोरभेदान्नैतत्प्रकरणं जीवविषयं किन्तु परमात्मविषयकमेवेति निर्बन्धो निर्निबन्धन एवेति चेन्न । जीवभेस्य बहुप्रमाणैः प्राक् समर्थितत्वात् । अत्रापि जीवेशयोर्भेदस्यैवाभिप्रेतत्वेन तदभेदविवक्षाभावादित्याह– **एषामिति** ।। अत्र 'एषां जनिमानि' इति देवानां वेद्यकोटौ निर्देशेनावेदमहमिति जीवात्मनो वेत्तृतया ततः पृथङ्निर्देशेन जीवस्य विष्ण्वादिदेवेभ्यो भेद एवोक्त इत्यर्थः । प्रागुदाहृतप्रमाणसूचायकोऽपिशब्दः । अस्मिन्वाक्ये जीवेशादिभेदस्याविवक्षितत्वे बाधकमाह– **अन्यथेति** ।। एतद्वाक्यस्य जीवेशभेदकथने तात्पर्याभावे जीवमात्रविषयकत्वे च मम जनिमानीत्येवोच्येतेत्यर्थः । अनुक्तावप्यभ्यर्हितत्वादेव भिक्षां देहीत्यादाविव ममेति सिद्ध्यती-

---

१८. अहेयगुणं इति ह.पाठः १९. सर्वोऽपि इति पाठान्तरम्

त्याह– **व्यर्थता चेति** ।। आदिपदेन 'देवानां पुर आयसीः' इति विशेषणानां ग्रहणम् । तत्रैषां देवानामित्यनयोर्जनिमानिति व्यधिकरणविशेषणत्वं भूतले घट इतिवत् । पुर आयसीरित्यनयोः समानाधिकरणत्वम् । नीलमुत्पलमितिवत् । किञ्चाहमित्यप्यस्मिन्पक्षे व्यर्थमेव । अवेदमित्युत्तमपुरुषप्रयोगादेव कर्तुः स्वस्य सिद्धत्वात् । न चास्मत्पक्षेऽपि वैय्यर्थ्यसाम्यम् । अहमित्यस्याहेयत्वेनावेदमिति वेदनक्रियाविशेषणतया अव्ययत्वाङ्गीकारेणास्मच्छब्दरूपत्वाभावादित्याशयेनाह– **अवेदमितीति** ।। अस्मच्छब्दरूपत्वेन प्रतीयमानमपीत्यपिशब्दार्थः । देवानां जन्मवेदनैव हेयतावेदनात् कथमहेयत्वेनावेदमिति क्रियाविशेषणतापीत्यतोऽविरोधेनाहेयतामुपपादयति– **जन्मेति** ।। नन्ववेदमित्युत्तमपुरुषप्रयोगबलादेवाहमिति कर्तृलाभात् पुनरहमिति व्यर्थमिति क्रियाविशेषणत्वाङ्गीकारे 'अहं मनुरभवं'[२०] इत्यादावप्यहमित्येतदस्मच्छब्दरूपं न स्यात् । उभयोरेकप्रकरणस्थत्वात् । अन्यथा प्रायपाठविरोधादित्याशङ्क्येष्टापत्तिमुत्तरमाह– **तस्मादिति** ।। उत्तमपुरुषप्रयोगबलादेवाहमित्यस्य सिद्धत्वादित्यर्थः । नन्विदमेकं संधित्सतोऽन्यच्चवते । वैय्यर्थ्यपरिहारायाहंशब्दस्य अहेयगुणभगवद्वाचकत्वाङ्गीकारेऽभवमित्युत्तमपुरुषप्रयोगानुपपत्तिः । अहमहेयगुणो भगवान् मनुरभवदिति वक्तव्यत्वादिति तत्राह– **सर्वान्तरत्वादिति** ।। अन्तर्याम्यपेक्षयोत्तमपुरुषप्रयोगोपपत्तिरिति भावः । अभवमित्युपलक्षणम् । 'अहं कक्षीवानृषिरस्मि' इत्यादिकं सर्वं लडादिकमपि ग्राह्यमिति भावेनोक्तम्– **सर्वोऽपीति** ।। उक्तार्थे प्रमाणमाह– **अहेत्वादिति** ।।

---

२०. ऋक्.सं. १-२३-१

## अनुभवादीनां वेदार्थनिर्णायकत्वं वेदेषु व्यर्थपदाभावनिरूपणं च

### भाष्यम्

**न च मूढव्यवहार एव वेदनिर्णयाय भवति । किन्तु सर्वेषामनुभवो युक्तयश्च वाक्यान्तरं च निर्णयकारणम् । तस्मात् सर्वजीवादिभ्योऽन्यः सर्वोत्तमो विष्णुरेवात्रोक्तः ।**

**न वेदेषु पदं किञ्चिद्वर्णो वा व्यर्थ इष्यते ।**
**यथायोग्यं[२१] चार्थभेद ऊह्यः सर्वत्र वेदिभिः ।। इति शब्दनिर्णये ।**

**शब्दा रेतोऽन्नमित्याद्या अपि तत्र गतं हरिम् ।**
**वदन्त्यविष्णुवाची हि न शब्दः क्वचिदिष्यते ।। इति च ।**

### भावप्रदीपः

अहमस्म्यादिवैदिकशब्दानां लोकप्रसिद्धार्थ एव किं न स्यात्किमप्रसिद्धार्थकल्पनयेति तत्राह– **न चेति** ।। **वेदनिर्णयाय** वेदार्थनिर्णयाय । **सर्वेषां** वामदेवादीनामनुभवः । न हि वामदेवो मनुसूर्यादित्वेनात्मानमनुभवति । किन्तु स्वान्तर्यामिणं भगवन्तमेवावबोधसूरिनियमनादिनिमित्तैर्मनुसूर्यादिशब्दवाच्यं जानाति । व्यर्थता [२२]चैतेषामित्यादिविशेषणानामित्याद्युक्ता युक्तयश्च । अहेत्वादहमित्यादिवाक्यान्तरं च । तथा च प्रमाणत्रयसिद्ध एव वेदार्थो वर्णनीयो न तु तद्विरुद्धो मूढव्यवहारोऽनुसरणीय इति भावः । नात्र जीवोत्पत्तिमात्रमुच्यत इत्याद्युक्तमर्थमुपसंहरति– **तस्मादिति** ।। जीवोत्पत्तिमात्रपरत्वपक्षे उक्तरीत्या बहुबाधकसद्भावाद्विष्णुपरत्वे बहुसाधकसद्भावाद्बाधकानां परिहृतत्वाच्चेत्यर्थः ।।

---

२१. यथायोगं इति ह्.पाठः २२. चैषां इति 'ख'पाठः

अवेदमभवमित्याद्युत्तमपुरुषप्रयोगादेवाहमिति कर्तुर्लब्धत्वात् पुनरहमिति परपक्षे व्यर्थमेव स्यादत उक्तरीत्या तस्य पृथगर्थो वाच्य इत्युक्तमसत् । एतादृशवैय्यर्थ्यस्यादोषत्वात् । अन्यथा सर्वलोकव्यवहारोच्छेदप्रसङ्गादित्यत आह– **न वेदेष्विति** ।। **वेदिभिः** वेदतात्पर्यविचाराभिज्ञैः ।।

'यदेतद्रेतः' इत्यत्र रेतःशब्देन रेतसिस्थो भगवेनेवोच्यत इत्युक्तम् । कचिदन्नादिशब्दा अपि भगवत एव वाचका इत्यभिहितम् । तत्कुत इत्यत आह– **शब्दा इति** ।।

**भाष्यम्**

**भावयति सम्भावयति । सोऽग्र एव [२३]सोऽग्र्यो विष्णुरेव । पुत्रसम्भावनमपि तत्रस्थं विष्णुं सम्भावयामीति तत्तस्यैव भवति । एवं भावयतामेव 'एष पन्था उरुगाय' इत्याद्यपि । 'तं पश्यन्ति पशवः' इत्याद्यपि दिव्यपश्वादीनामेव । अन्येषां स्वभावप्रवृत्तिः ।।**

**भावप्रदीपः**

'तस्यैतमात्मानमत्र गतं भावयती'त्यत्र भावयतीत्यस्य 'सा पुत्रं भावत्यथ' इति प्रमाणभाष्येण भावयतीत्येव व्याख्याततत्वादस्पष्टतया तदिदानीमनूद्य व्याचष्टे– **भावयतीति** ।। 'सोऽग्र एव कुमारं जन्मनोऽग्रे' इत्येकवाक्यतायामग्र इति पुनरुक्तं स्यादित्यालोच्य भिन्नवाक्यत्वमभिप्रेत्य तदनूद्य व्याचष्टे– **सोऽग्र इति** ।। तथा च **स्त्रीः** स्त्र्यन्तर्गतो विष्णुर्यं गर्भं बिभर्ति **स** तद्गर्भस्थजीवान्तर्यामी **अग्रः** अग्र्यः सर्वोत्तमो विष्णुरेवेति तद्वाक्यं विवृतं भवति ।।

---

२३. स इति पदं ह.पाठे नास्ति

'स यत्कुमारं' इति वाक्यं 'संभावनं कुमारस्य जानतः केशवे भवेत्' इति प्राग्व्याख्यातमेव स्पष्टत्वाय पुनर्व्याचष्टे– **पुत्रसंभावनमिति** ।। **तत्रस्थं** पुत्रस्थं विष्णुं संभावयामीति बुद्ध्या कृतं चेत्तत्संभावनं **तस्य** विष्णोरेव भवतीत्यर्थः । ननु 'एष पन्था उरुगायः सुशेवोऽयं पुत्रिण आक्रमन्ते विशोकाः' इति ब्राह्मणे पुत्रवतां फलमुच्यते । **सुशेवः** सुखात्मको य **उरुगायो** भगवान् एष एव **पन्था** मार्गः स्वप्राप्तिहेतुत्वात् । **यं** मार्गरूपं विष्णुं **पुत्रिणः** पुत्रवन्तो जना एव विशोकाः सन्तः **आक्रमन्ते** प्राप्नुवन्तीति । तथा च पुत्रवता[२४] मात्रेण भगवत्प्राप्तिश्रवणात्पुत्रसंभावनमात्रमावश्यकम् । न पुत्रस्थविष्णुसंभावनमित्यत आह– **एवमिति** ।। **इत्याद्यपि** इत्यादि ब्राह्मणोक्तं फलमप्येवं भावयतामेव न पुत्रमात्रसंभावनवतामित्यर्थः । नन्वेवं सति 'तं पश्यन्ति पशवो वयांसी'त्यादि ब्राह्मणोक्तं यत्पश्वादीनामपत्यवतां भगवद्दर्शनं तदनुपपन्नं स्यात् । न हि पश्वादीनां शास्त्रार्थानुसन्धानविधुराणामेवंविधसंभावनमुपपद्यते । येन भगवद्दर्शनं तेषां भवेदित्यत आह– **तं पश्यन्तीति** ।। **इत्याद्यपि** इत्यादिनोक्तं भगवद्दर्शनमपि **दिव्यपश्वादीनामेव** कामधेनुजरितर्यादीनामेव न लौकिकानाम् । तेषां चोक्तविधसंभावनमुपपद्यत एवेति भावः । [२५](नन्वेवं तर्हि 'तस्मात् ते मात्रापि मिथुनी भवन्ति' इत्युत्तरवाक्यं विरुद्ध्यते । तत्र लौकिकपश्वादीनामेवाभिप्रेतत्वावगमात् । अन्यथा पुत्रार्थं मात्रापि मिथुनीभावोक्त्ययोगात् । अतः पुत्रवतामात्रेण भगवद्दर्शनं लौकिकपश्वादीनामप्यङ्गीकार्यमित्यत आह– **अन्येषामिति** ।। लौकिकपश्वादीनामित्यर्थः ।

२४. पुत्रवत्ता इति 'ख'पाठः २५. ()चिह्नस्थः ग्रन्थसन्दर्भः 'ख'पाठे न नास्ति । किन्तु 'अत्र शोधः' इति मातृकायां लिखितम् ।

अयं भावः । 'तं पश्यन्ति पशवो वायांसि च' इत्यत्र दिव्यपश्वादिविवक्षायामपि नोत्तरवाक्यविरोधः । तत्र लौकिकपश्वादीनामेव स्वभावप्रवृत्तेरुदाहरणात् । न चैवं तस्मात्त इति परामर्शाद्यनुपपत्तिः । 'एष पन्था' इति पूर्ववाक्यात्पुत्रिण इति पदमनुवर्त्य यस्माद्दिव्यपश्वादयः पुत्रिणो भूत्वा पुत्रगतभगवदनुसन्धनपूर्वकपुत्रसंभावनादिकं कुर्वाणास्सन्तो भगवन्तं अपश्यन् । तस्मात्ते तज्जातीयाः लौकिकपश्वादयोऽपि स्वभावत एव मात्रापि मिथुनीभावयन्तीति तद्व्याख्यानोपपत्तेरिति ।)

ननु लौकिकपश्वादीनामपि पुत्रसंभावनादिकं तावदनुभूयते । तद्वत्पुत्रस्थविष्णुसंभावनमपि किं न संभावनीयम् । ततश्च विष्णुसंदर्शनमपि तेषां युज्यतामित्यत आह– **अन्येषामिति** ।। स्वभावदेव प्रवृत्तिरपत्यसंभावनादौ न तु विधिप्राप्ता । अतो न तद्वद्विष्णुसंभावनमनुमातुं शक्यमिति भावः ।।

### शरीरस्य जीवरक्षकत्वनिषेधः श्येनशब्दार्थकथनं च

### भाष्यम्

**ता एव देवताः शतं पुर आयासीर्ज्ञानिन्यो विशेषतः । अय पय गताविति धातोः । मानुषानपेक्ष्य पूर्णत्वात् पुरः । विष्णुर्मुख्यत एव पूर्णः ।**

**न च शरीरैर्जीवो रक्षितः । मुख्ये युज्यमाने च नामुख्यार्थः कल्प्यः । शं अस्य विद्यते इति शी विष्णुः पूर्णानन्दत्वात् । स एव ज्ञानत्वाद्यश्चेति श्यः । सोऽस्य जीवस्येन इति श्येनः । विष्णुं स्वामिनं ज्ञात्वेत्यर्थः । निरदीयं निष्क्रम्यातीतोऽस्मि गर्भवासं ।।**

## भावप्रदीपः

'शतं मा पुर आयसीः' इत्येतद्विवृणोति– **ता एवेति** ।। [२६]ज्ञानत्वस्य चेतनमात्रसाधारण्याद्विशेषत इत्युक्तम् । कथमायसीरित्यस्य ज्ञानिन्य इत्यर्थ इत्यत आह– **अय पयेति** ।। **धातोरिति** धातुव्याख्यानात् । गत्यर्थानां ज्ञानार्थत्वादयतेर्भावेऽसुन् । अयःशब्दात् संबन्धार्थेऽण् ङीप् चेति भावः । पूःशब्दं देवतासु निर्वक्ति– **पूर्णत्वादिति** ।। पॄ पालनपूरणयोरिति धातोः क्विपि रूपमेतत् । देवतानां कथं पूर्णत्वं तस्य विष्णुमात्रनिष्ठत्वादित्यत उक्तम्– **मानुषानपेक्ष्येति** ।। देवशब्देन परमदेवस्य विष्णोरपि विवक्षितत्वात्तस्मिंस्तु पूर्णत्वं निर्बाधमेवेत्याह– **विष्णुरिति** ।। एतेनायसीरयोमय्यः शतं पुरः पुर्यो मा मामरक्षन्नित्यापातप्रतीतार्थोऽपि निरस्तः । पुरीणामप्रस्तुत्वात् ।।

अस्तु तर्हि शतमायसीरायसवद्दृढाः पुरः शरीराणि प्राक्काले प्राप्तानि मामरक्षन्नित्यर्थः । गर्भगतज्ञानिजीवस्यातीतबहुजन्मज्ञानसंभवेन वामदेवस्यापि तत्स्मृत्युपपत्तेरित्यत आह– **न चेति** ।। शरीराणामचेतनत्वेन जीवरक्षकत्वायोगात् । प्रत्युत तेनैव रक्ष्यत्वान्न पुर इत्यनेन शरीरपुराण्यत्र ग्राह्याणीति भावः । ननु शरीराणां जीवरक्षकत्वाभावेऽपि जीवरक्षणस्य शरीरसापेक्षताया 'येन जातानि जीवन्ति'[२७] इत्यादौ प्रमितत्वाच्छरीराणां जीवरक्षकत्वं कथंचिद्युज्यत एवेत्यत आह– **मुख्य इति** ।। अरक्षन्नित्युच्यमानं रक्षणकर्तृत्वं देवेषु मुख्यं निर्बाधं च । शरीरेषु त्वमुख्यम् । अतो मुख्यार्थे युज्यमाने नामुख्यार्थः कल्प्य इत्यर्थः । श्येनशब्दार्थमाह– **शमिति** ।।

---

२६. ज्ञानित्वस्य इति 'ख'पाठः २७. तै.उ. ३-१

शशब्दोदितसुखवत्तायाः सर्वजीवसाधारण्यात् कथं शी विष्णुरित्यत-स्तदुपपादयति– **पूर्णानन्दत्वादिति** ।। निरुपपदशब्देन पूर्णसुखमेवोच्यते । मुख्यामुख्ययोर्मुख्यस्यैव प्रथमप्राप्तेरिति भावः । या प्रापण इति धातोर्गत्यर्थानां ज्ञानार्थत्वात्, यं ज्ञानं तद्रूपत्वात् यः । अथवा ज्ञत्वादनत्वाच्चेष्टकत्वाच्चेति ज्ञानत्वात् य इत्यर्थः । यातेर्गत्यर्थादवगत्यर्थाच्च कर्तरि कप्रत्ययः । शी चासौ यश्चेति शियः स एव श्यः । निर्वचनत्वाच्छिशब्दे इकारलोपः । श्यो विष्णुरिनः स्वामी यस्यासौ श्येनो विष्णुस्वामिक इत्यर्थः । विष्णुस्वमिकत्वस्य सर्वसाधारण्यात्किं विशिष्योच्यत इत्यतो निरदीयमिति वक्ष्यमाणक्रियोपयोगितया तात्पर्यमाह– **विष्णुमिति** ।। निरदीयमित्येतदनूद्यास्यार्थमाह– **निरदीयमिति** ।। तत्र निरित्यस्य– **निष्क्रम्येति** । अदीयमित्यस्य– **अतीतोऽस्मीति** । दीङ् क्षय इत्यस्य लङि रूपमेतत् । धातूनामनेकार्थत्वादयमत्रात्ययार्थः । गर्भवासमिति योग्यतया लब्धा कर्मोक्तिः[२८] ।।

### सर्वाभीष्टप्राप्तिः मोक्षे एव

### भाष्यम्

**स्वरानन्दो विष्णुरत्रग इति स्वर्गलोको विष्णुलोकः । अमृतः सन् सर्वान् कामानाप्त्वा तानेव सर्वान् कामान् समभवदनुभवति । अपेक्षितवस्तुस्वीकारः आप्तिः । सम्भवो भोगः, 'तान् समभवत् ततो मनुष्या अजायन्त' इत्यादिवत् । मुक्त्यनन्तरमेव ह्यनुपचरितसर्वकामावाप्तिः । मुख्य एव चार्थः स्वीकार्यः । अमुक्तानां विष्णुलोकगानामपि न सर्वकामावाप्तिः ।** जयविजयादीनामप्रियदर्शनात् । **अतोऽमृतः सन् [२९]सर्वान् कामानाप्त्वेत्यर्थः ।**

---

२८. लब्धकर्मोक्तिः इति 'ख'पाठः २९. सर्वकामानाप्त्वा इति ह्.पाठः

**मुक्तः कामानवाप्नोति भुङ्क्ते चैव यथेष्टतः ।**
**सर्वानपि निरातङ्कः सर्वदा च हरेर्वशः ।।इति[३०]।।२.५.१।।**

**भावप्रदीपः**

'स्वर्गे लोके सर्वान्कामानाप्त्वाऽमृतः समभवदि'त्यत्र स्वर्गलोक एव सर्वकामावाप्तिस्तदनन्तरममृतभावः उच्यते । एतदनुपपन्नम् । अल्पास्थिरस्वर्गलोके सर्वकामावाप्त्याद्ययोगादित्यतो यथावद्व्याख्या-स्यन्स्वर्गशब्दं तावद्व्याचष्टे– **स्वरिति** ।। तर्ह्यमृतो भूत्वा सर्वका-मानाप्नोतीति वक्तव्ये किमिति व्यत्यास इत्यतो यथायोग्यमन्वयं दर्शयति– **अमृत इति** ।। तर्हि समभवदित्यस्यानन्वय इत्यत उक्तम्– **तानेव सर्वान्कामानिति** ।। भवनक्रियाया अकर्मकत्वात् कथं तानेव सर्वान्कामानिति कर्मानुवृत्तिरित्यत 'उपसर्गेण धात्वर्थो बलादन्यत्र नीयते'[३१] इति वचनात्समित्युपसर्गमहिम्नाऽयं सकर्मकोऽपि भवतीति भावेनानूद्य व्याचष्टे– **समभवदिति** ।। नन्वाप्त्यतिरिक्ता-नुभवाभावात्कथमाप्त्वा समभवदित्युक्तिरित्यतस्तयोर्भेदं दर्शयति– **अपेक्षितेति** ।। **स्वीकार** उपादानम् । अत्र स्वीकारमात्रमाप्ति-शब्दार्थः । अपेक्षितवस्त्विति कामशब्दार्थकथनम् । समुपसर्गयुक्तस्य भूधातोर्भोगार्थकत्वे बृहदारण्यसंमतिमाह– **तानिति** ।। तत्रापि समभवदित्यस्य बुभुज इत्यर्थः कुत इत्यतो वाक्यशेषोदाहरणम् । ननु सर्वान्कामानाप्त्वाऽमृतः समभवदिति यथाश्रुतमेवान्वयः किं न स्यात्किं व्यत्यासेनेत्यत आह– **मुक्त्यनन्तरमेवेति** ।। मुक्तेः पूर्वं तु प्रारब्धकर्मवशान्नापेक्षितसर्वकामावाप्तिरतस्तदा सर्वकामावाप्त्युक्ति-

---

३०. इति सत्तत्वे इति पा.

३१. सि.कौमुद्यां उदाहृता कारिका सू.सं. २२३३

रौपचारिक्येवेति भावेनोक्तम्– **अनुपचरितसर्वेति** । अत्राप्यौपचारिकसर्वकामाप्तिरेवार्थः किं न स्यादित्यत आह– **मुख्य एवेति** ।। चो हेत्वर्थे । मुख्यामुख्ययोर्मुख्य एवार्थो यतः स्वीकार्यस्तस्मादित्यर्थः । ननु प्राङ्मुक्तेरन्यत्र सर्वकामावाप्त्ययोगेऽपि स्वर्गशब्दोदितविष्णुलोकगतानां सा मुख्यैव किं न स्यादित्यत आह– **अमुक्तानामिति** ।। कुतः जयविजयादीनां शापादिनाऽसुरयोन्यादिप्राप्तिरूपाप्रियस्य पुराणादिषु दर्शनादित्यर्थः । उपसंहरति– **अत इति** ।। उक्तार्थे दाढ्र्याय प्रमाणमुदाहरति– **मुक्त इति** ।। सर्वानपि कामानिति संबन्धः ।।

ततश्चायं खण्डार्थः । **अयं** नाराणो देव **आदितः** प्रथमं **पुरुषे गर्भो भवति** अन्नस्थस्सन्पुरुषेणान्ने भुक्तेऽन्नेन सह तं प्रविशतीति यावत् । तस्मिंश्च भुक्तान्ने परिणते सति यदेतद्रेतो जायते तदेतत् पुरुषस्य सर्वाङ्गेभ्यस्संभूतं **तेजः** साररूपं तथा तद्रेतःस्थितं यदेतद्रेतोनामकं भगवद्रूपं तदेतत्पुरुषस्य सर्वाङ्गेभ्यः **संभूतं** आविर्भूतं तेज एव । तदेतद्रेतसि स्थित**मात्मानं** स्वरूपं स पुरुषस्थो भगवान् **आत्मन्येव** स्वरूप एव बिभर्ति । **तत्** च रेतःस्थितं रूपं रेतसा सह स्त्रियां यदा पुरुषस्थितो हरिः स्वयमेव सिंचति, **अथ** तदा **एनत्** एतद्रेतोगतं रूपं **जनयति** मातृशरीरे प्रादुर्भावयति । तत्स्थानान्तरगमनमेव **अस्य** पुंरेतःस्थस्य भगवद्रूपस्य प्रथमं जन्म । **तत्** स्वयोनिप्रविष्टं पौरुषं रेतः स्त्रिया **आत्मभूयं** आत्मभावं **गच्छति** प्राप्नोति । कथं? यथा **स्वमङ्गं** करचरणादिकं तथा । एवं **तत्** रेतोगतं भगवद्रूपं च स्त्रियः आत्मभावं(भूयं) स्त्रीलोहितगतस्वरूपेणैकीभावं संश्लेषविशेषरूपं गच्छति यथा स्वमङ्गं तथा । **तस्मात्** एवं रेतोधारणानन्तरं स्वस्य स्वर्गादिपुरुषार्थहेतुभूतपुत्रप्रसवसंभावना-

विषयत्वात् **एनां** भार्यां **न हिनस्ति** न हिंस्यात् ताडनादिकं न कुर्यात् । पतिरिति शेषः । अथ **सा** स्त्री **अस्य** पत्युः सकाशाल्लब्धं **अत्र गतं** स्वगर्भे स्थितं **एतमात्मानं** पुत्रं **भावयति** संभावयेत् । तथा कृते च **अस्य** पत्युः संबन्धिनि **अत्र** स्वगर्भगतपुत्रे **गतं** स्थितं **एतमात्मानं** परमात्मानमेव सा भावयति । ततश्च सा पुत्रं पुत्रगतं हरिं च **भावयित्री** स्त्री **भावयितव्या** संभावयितव्या भवति । भर्त्रेति शेषः । एवं नवमासपर्यन्तं स्त्री तं गर्भं बिभर्ति । तत्रस्थः स्त्रीरूपो हरिश्च तं गर्भं बिभर्ति । यमिमं गर्भं स्त्रीरूपेण विष्णुर्बिभर्ति **सोऽग्र एव** स तद्गर्भस्थजीवान्तर्याम्यप्यग्रः अग्र्यः सर्वोत्तमो विष्णुरेव नान्यः । एवं गर्भस्थं कुमारं **जन्मनोऽग्रे** भुवि जननात् पूर्वं **अधिभावयति** अधिकं भावयेत्[३२] । पितेति शेषः । स पिता कुमारं जन्मनोऽग्रेऽधिभावयतीति यावत् । **तत्** पुत्त्रगतं **आत्मानं** परमात्मानमेव भावयति । पुत्रसंभावनमपि पुत्रस्थं विष्णुं संभावयामीति बुद्ध्या कृतं चेत्तद्विष्णुसंभावनमेव भवतीति यावत् । एतच्च पुत्रस्थविष्णुसंभावनं **एषां** लोकानां **सन्तत्यै** व्याप्त्यै भवति । भावयितुः स्वर्गगतस्यापि पृथिवीलोकेष्वेवावस्थानमिव भवति । स पुरुषो मृत्वा स्वर्गगतोऽपि निखिलपुत्रकृतपुण्यभाक्त्वात्पृथिव्यामेव जीवन्साधनानुष्ठाता यथा तथा मन्तव्य इति यावत् । पृथिवीलोकस्यैकत्वेऽपि प्रदेशबाहुल्यविवक्षया एषां लोकानामिति बहुवचनम् । एतच्च नौपचारिकमित्यह– **एवमिति** ।। **एवं** विष्णुबुद्ध्या पुत्रसंभावने कृते **इमे लोकाः** पृथिवीप्रदेशविशेषा एतेन पुंसा **सन्तताः** व्याप्ता ह्येव भवन्तीत्यर्थः ।

---

३२. संभावयेत् इति 'ख'पाठः

तदस्य द्वितीयं जन्म । **अस्य** परमात्मनः **तत्** मातृशरीरात् पृथिव्यां पुत्रगतेन रुपेण प्रादुर्भवनमेव द्वितीयं जन्म । **अथ अस्येति** तृतीयार्थे, अनेन परमात्मना **सोऽयमात्मा** पुत्रगतो रूपविशेषः **अस्य** पितृजीवस्य स्वस्य वाऽर्थे **पुण्येभ्यः कर्मभ्यः** पुण्यकर्माणि कर्तुं **प्रतिविधीयते** भूलोके कतिपयकालं निधीयते । **अथ** अनन्तरं **अस्य** भगवतो**ऽयमितर आत्मा** पितृगतो रूपविशेषः **कृतकृत्यो वयोगतः** पितृजीवनिष्ठकृतकृत्यत्वादिनियामकस्सन्पितृ-जीवेन सह **प्रैति** प्रकर्षेण गच्छति । लोकान्तरमाप्नोति । जीवशरीरं परित्यज्यान्यत्र गच्छतीति वा । **स** भगवान् **इतो** [३३]लोकात् **प्रयन्नेव** पुनः पितृजीवेन सहान्यत्र जायते । **तदस्य तृतीयं जन्म** पितृजीव-स्यान्यत्र यदा पुनर्जन्म तदा तच्छरीरे तेन जीवेन सह प्रादुर्भवनमेव भगवद्रूपस्य तृतीयं जन्मेत्यर्थः ।

उक्तार्थे मन्त्रसंमतिमाह– **तदुक्तमिति** ।। **तत्** जीवस्य जनने तदन्तर्गतस्य भगवतोऽपि जननं भवतीत्येतत् **ऋषिणा** मन्त्रद्रष्ट्रा हयग्रीवरूपेण भगवतोक्तं मन्त्रे प्रतिपादितमित्यर्थः । तमेव मन्त्रमु-दाहरति– **गर्भ इति** ।। **गर्भे** अनुगर्भ एव वर्तमानोऽह**मेषां** देवानां विष्ण्वादीनां **विश्वा** विश्वानि समस्तानि **जनिमानि** जन्मानि । अहमति क्रियाविशेषणम् । दुःखादिहेयरहितत्वेनै**वान्ववेदं** व्यजानम् । **पुरः** पूर्णाः **आयसीः** अयस्यः विशेषतो ज्ञानिन्यः **शतं** शतसंख्याकास्ता एव विष्ण्वाद्या देवता **मा** मां अरक्षन् । **अधः** अथ देवै रक्षितत्वादेव अहं **श्येनः** आनंदज्ञानादिपूर्णत्वात् श्यो विष्णुः स

३३. भूलोकात् इति 'ख'पाठः

एव इनः स्वामी यस्यासौ तथोक्तः सन् विष्णुं स्वामिनं ज्ञात्वेत्यर्थः । **जवसा** वेगेन **निरदीयं** मातुरुदरान्निर्गत्य गर्भवासमतीतोऽस्मि इत्यर्थः । न पुनर्गर्भवासं प्राप्स्यामीति निश्चित्येत्थमुक्तिः । 'भविष्यत्तु[३४] निश्चितं यत्तदतीतत्वेन भण्यते'[३५] इति वचनात् इत्युक्तमिति पूर्वेणान्वयः ।

एतद्वक्यं कस्येत्याकांक्षायामाह– **गर्भ इति** ।। गर्भ एव शयानो वामदेवो नाम ऋषिरेतदेवमुवाच । एतद्विद्यावेत्तुः फलमाह– **स इति** ।। एवं विद्वान् यः **सो**ऽधिकारी **अस्माच्छरीरभेदात्** शरीरविशेषात् चरमदेहादिति यावत् । **ऊर्ध्वस्सन् उत्क्रम्य** ब्रह्मनाड्योत्क्रान्तो भूत्वेति यावत् । **अमुष्मिन्स्वर्गे लोके** आनन्दरूपविष्णुस्थानभूते वैकुंठादाव**मृतो** मुक्तः सन् योग्यान्सर्वान्कामाना**प्त्वा** स्वीकृत्य तान् **समभवत्** नित्यमनुभुंक्ते इत्यर्थः । द्विरुक्तिरुक्तसर्वावधारणार्था[३६] ।।२.५.१।।

**।। इति श्रीमन्महैतरेयोपनिषद्भाष्यभावप्रदीपे द्वितीयारण्यके पञ्चमोऽध्यायः ।।**

---

३४. एष्यत्तु इति 'ख'पाठः

३५. भाग.ता. ३-३-२८

३६. सर्वार्थावधारणार्था इति 'ख'पाठः

# अथ द्वतीयारण्यके षष्ठोऽध्यायः

भगवतल्लक्षणनिरूपणम्

उपनिषत्

**ॐ कोऽयमात्मेति वयमुपास्महे । कतरः स आत्मा । येन वा पश्यति । येन वा शृणोति । येन वा गन्धानाजिघ्रति । येन वा वाचं व्याकरोति । येन वा स्वादु चास्वादु च विजानाति ।**

रमामहिदाससंवादः

भाष्यम्

अयं विष्णुर्हि किंरूप उपास्योऽस्माभिरच्युतः ।
इत्यपृच्छद् रमा देवी महिदासं जनार्दनम् ।।

आह तां महिदासोऽथ पूर्णानन्दतमस्त्विति ।
उपास्यस्तादृशो ह्यस्य स्वभावः परमात्मनः ।।

येन जीवो दर्शनादीन् प्रेरितः कुरुते सदा ।

भावप्रदीपः

पूर्णानन्दतमं सर्वप्रेरकं सर्वनायकम् ।
मोक्षदं भोगदं चैव मुकुन्दं भज मे मनः ।।

'कोऽयमात्मा' इति खण्डं व्याचष्टे– **अयं विष्णुरिति** ।। अत्र 'कोऽयमात्मे'ति प्रश्नः कस्येति न ज्ञायते । आत्मशब्देन पूर्वं विष्णोरेव प्रस्तुतत्वात् पुनः 'कोऽयमात्मा' इति प्रश्नोऽप्यनुपपन्न

एव इनः स्वामी यस्यासौ तथोक्तः सन् विष्णुं स्वामिनं ज्ञात्वेत्यर्थः । **जवसा** वेगेन **निरदीयं** मातुरुदरान्निर्गत्य गर्भवासमतीतोऽस्मि इत्यर्थः । न पुनर्गर्भवासं प्राप्स्यामीति निश्चित्येत्थमुक्तिः । 'भविष्यत्तु[३४] निश्चितं यत्तदतीतत्वेन भण्यते'[३५] इति वचनात् इत्युक्तमिति पूर्वेणान्वयः ।

एतद्वाक्यं कस्येत्याकांक्षायामाह– **गर्भ इति** ।। गर्भ एव शयानो वामदेवो नाम ऋषिरेतदेवमुवाच । एतद्विद्यावेत्तुः फलमाह– **स इति** ।। एवं विद्वान् यः **सो**ऽधिकारी **अस्माच्छरीरभेदात्** शरीरविशेषात् चरमदेहादिति यावत् । **ऊर्ध्वस्सन् उत्क्रम्य** ब्रह्मनाड्योत्क्रान्तो भूत्वेति यावत् । **अमुष्मिन्स्वर्गे लोके** आनन्दरूपविष्णुस्थानभूते वैकुंठादाव**मृतो** मुक्तः सन् योग्यान्सर्वान्कामाना**प्त्वा** स्वीकृत्य तान् **समभवत्** नित्यमनुभुंक्ते इत्यर्थः । द्विरुक्तिरुक्तसर्वावधारणार्था[३६] ।।२.५.१।।

**।। इति श्रीमन्महैतरेयोपनिषद्भाष्यभावप्रदीपे द्वितीयारण्यके पञ्चमोऽध्यायः ।।**

---

३४. एष्यत्तु इति 'ख'पाठः

३५. भाग.ता. ३-३-२८

३६. सर्वार्थावधारणार्था इति 'ख'पाठः

# अथ द्वतीयारण्यके षष्ठोऽध्यायः

भगवतल्लक्षणनिरूपणम्

## उपनिषत्

**ॐ कोऽयमात्मेति वयमुपास्महे । कतरः स आत्मा । येन वा पश्यति । येन वा शृणोति । येन वा गन्धानाजिघ्रति । येन वा वाचं व्याकरोति । येन वा स्वादु चास्वादु च विजानाति ।**

रमामहिदाससंवादः

## भाष्यम्

अयं विष्णुर्हि किंरूप उपास्योऽस्माभिरच्युतः ।
इत्यपृच्छद् रमा देवी महिदासं जनार्दनम् ।।

आह तां महिदासोऽथ पूर्णानन्दतमस्त्विति ।
उपास्यस्तादृशो ह्यस्य स्वभावः परमात्मनः ।।

येन जीवो दर्शनादीन् प्रेरितः कुरुते सदा ।

## भावप्रदीपः

पूर्णानन्दतमं सर्वप्रेरकं सर्वनायकम् ।
मोक्षदं भोगदं चैव मुकुन्दं भज मे मनः ।।

'कोऽयमात्मा' इति खण्डं व्याचष्टे– **अयं विष्णुरिति** ।। अत्र 'कोऽयमात्मे'ति प्रश्नः कस्येति न ज्ञायते । आत्मशब्देन पूर्वं विष्णोरेव प्रस्तुतत्वात् पुनः 'कोऽयमात्मा' इति प्रश्नोऽप्यनुपपन्न

एव । 'कोऽयमात्मे'तिवत् 'कतरः स आत्मे'त्यपि प्रश्नान्तर्भूतमिति भाति । तथात्वे च तस्योत्तरमुत्तरत्र न प्रतीयते । अतः प्रश्नोत्तर-वाक्ये सम्यग्व्याचष्टे– **अयमित्यादिना** ।। तत्रात्मशब्दार्थो– **विष्णुरिति** । क इत्यस्य– **किं रूप इति** । रमादेवीति प्रश्न-कर्तृनिर्देशः । कतर इत्यस्य व्याख्यानं– **पूर्णानन्दतमस्त्विति** । इत्युपास्य इत्यन्वयः । 'स आत्मा' इत्यस्यार्थस्**तादृशो ह्यस्य स्वभावः परमात्मन इति** । पूर्णानन्दतमत्वं नागन्तुको धर्मः किन्तु स्वभाव एवासावित्यर्थः । 'येन वा पश्यती'त्यादिकं सर्वेन्द्रिय-व्यापरोपलक्षकमित्यभिप्रेत्य सङ्ग्रहेण व्याचष्टे– **येनेति** ।। येन प्रेरित इत्यन्वयः ।।

भगवतः त्रयोविंशति नामानि

**उपनिषत्**

**यत्, एतत्, हृदयं, मनः, च, आ, इतत्, संज्ञानं, आज्ञानं, विज्ञानं, प्रज्ञानं, मेधा, दृष्टिः, धृतिः, मतिः, मनीषा, जूतिः, स्मृतिः, सङ्कल्पः, क्रतुः, असुः, कामः, अवशः इति सर्वाण्येतानि प्रज्ञानस्य नामधेयानि भवन्ति ।**

त्रयोविंशतिनाम्नां निर्वचनपूर्वकं भगवद्वाचित्वसमर्थनम्

**भाष्यम्**

यो विष्णुर्हृदयमिति हृद्गतत्वात् प्रकीर्तितः ।
मन्तृत्वान्मन इत्येव यच्च [१]ज्ञातृस्वरूपतः ।।

एतत्सन्निहितत्वाच्च पूर्णत्वादेति कीर्तितम् ।
इतत्वाच्च ततत्वाच्च स इतन्नाम केशवः ।।

---

१. ज्ञानस्वरूपतः इति पा.

**गुणानामुच्चयो यस्मात् स च इत्येवशब्दितः ।**
**सम्यग्ज्ञानस्वरूपत्वात् संज्ञानमिति कीर्तितः ।।**

**आततज्ञानरूपत्वादाज्ञानं भगवान् हरिः ।**
**विविधज्ञानरूपत्वाद्विज्ञानमिति कीर्तितः ।।**
**प्रकृष्टात्मगुणज्ञानरूपः प्रज्ञानमुच्यते ।।**

**भावप्रदीपः**

'यदेतत्' इत्यादि व्यचष्टे– **यो विष्णुरिति** ।। **ज्ञातृस्वरूपतः** ज्ञातृस्वरूपत्वात् यत् । एति गच्छत्यवगच्छतीति । इणो लडादेश शत्रन्तस्येदं रूपम् । [२](यातेः कर्तरि शतृप्रत्यः धातोः ह्रस्वता ।) सन्निहितत्वात् **एतत्,** पूर्णत्वात् **आ,** इतत्वाद्भक्तैः प्राप्तत्वात् इः इणः कर्मणि विच् । **ततत्वात्** व्याप्तत्वात् । तनोतेर्डत् । इश्चासौ तच्चेति इतत् । **यस्मात्** यत्प्रसादाद्गुणाना**मुच्चयः** मसुदायो भक्तानां भवति स **चः,** चिनोतेर्डः । तथा च चैतदित्यत्र चः आ इतदिति पदविभागः । च इत्यत्र विसर्गलोपश्च छान्दस इति भावः । आ समन्ताद्विद्यमानं सर्वविषयकं ज्ञानमाज्ञानमित्यभिप्रेत्योक्तम्– **आतत-ज्ञानरूपत्वादिति** ।। नैकमखंडमेव ज्ञानं सर्वविषयकं किन्तु स्वाभाविकानन्तविशेषोपेतमित्यभिप्रेत्योक्तं मूले– **विज्ञानमिति** । तस्यार्थो– **विविधज्ञानरूपत्वादिति** । यथोक्तमनुव्याख्याने–

यद्यनन्तविशेषाश्च तज्ज्ञानादेर्निवारिताः ।
कथं तत्तद्विषयता सार्वज्ञ्यार्थं विधीयते[३] ।। इति ।

प्रकृष्टा ये आत्मगुणा आनन्दादयस्तज्ज्ञानरूपत्वात्प्रज्ञानमुच्यते ।।

---

२. ()एतच्चिह्नस्था पंक्तिः 'क'पाठे नास्ति ३. अनु. २-२-१५३

भाष्यम्

अविस्मृतित्वान्मेधा स दृष्टिर्दर्शनरूपतः ।
धृतिर्धारणरूपत्वात् मतिर्मासु ततत्वतः ।।

मनुनाम्नामजादीनां मनीषेशो यतो हरिः ।
सर्वप्रेरकरूपत्वाज्जूतिरित्यभिधीयते ।।

सर्वदेशेषु कालेषु स्वरूपेषु च सर्वशः ।
समं रमत इत्येव स्मृतिर्नाम जनार्दनः ।।

सर्वस्य क्लृप्तिकर्तृत्वात् सङ्कल्प इति गीयते ।
क्रतुः स सर्वकर्तृत्वादसुरप्यसनाद्धरिः ।।

अमेयानन्दरूपत्वात् काम इत्यभिधीयते ।
अवशः स स्वतन्त्रत्वात् त्रयोविंशतिनामकम् ।।

यो वेदेवं हरिं सम्यङ् मुच्यतेऽखिलसंसृतेः ।

भावप्रदीपः

**मासु** प्रमाणेषु केवलेष्वनुप्रमाणेषु च ततत्वान्**मतिः** । मोपपदात्तनोतेर्डिः । उपपदह्रस्वता निर्वचनत्वात् । विशिष्टावबोधरूपत्वान्मनुनाम्नामजादीनां ईशो यतस्तस्मान्**मनीषा** । मनु शब्दस्यान्तलोपः शस्य षः । शब्दस्वाभाव्यात्स्त्रीलिङ्गता । भगवतः स्त्रीरूपत्वाद्वा । समं रमति इति **स्मृतिः** । समशब्दे वर्णद्वयेऽप्यन्तलोपः । रमेः[4] कर्तरि क्तिन् । रतिशब्दे रेफस्य संप्रसारणमिति भावः । सर्वस्य क्लृप्तिरूपत्वात्संकल्प इत्यत्र संशब्दार्थः– **सर्वस्येति** । [5]'तत्तु

४. रमतेः इति 'ख'पाठः ५. ब्र.सू. १-१-३

समन्वयात्’ इतिवत् । कल्पशब्दश्च भावप्रधानः[६] । अत एव क्लृप्तिरूपत्वादित्युक्तम् । सर्वकर्तृत्वात् **क्रतुः** । करोतेः कर्तर्यतुः । असनाद्दोषनिरसनात् **असुः** । अस निरसन इत्यतः कुः । अमं अमेयं अपरिच्छिन्नं कं सुखं यस्यासौ **कामः** । विशेषणस्य परनिपातः । त्रयोविंशतिनामकं हरिमित्यनेन ‘सर्वाण्येवैतानि प्रज्ञानस्यैव नामधेयानि भवन्ति’ इत्येतद्विवृतम् । ‘स एतेन प्रज्ञेन आत्मना’ इत्यादेर्वक्ष्यमाणस्यात्रापि संबन्धमभिप्रेत्य तत्तात्पर्यकथनम्– **यो वेदैवं हरिं सम्यङ् मुच्यतेऽखिलसंसृतेरिति ॥**

मुक्तामुक्तसकलप्रपञ्चस्य भगवद्वशत्वनिरूपणम्

उपनिषत्

**एष ब्रह्मा, एष इन्द्रः, एष प्रजापतिः, एते सर्वे देवाः, इमानि च पञ्चमहाभूतानि पृथिवी वायुराकाश आपो ज्योतींषीत्येतानि, इमानि च क्षुद्रमिश्राणीव बीजानीतराणि, चैतराणि च, अण्डजानि च, जारुजानि च, स्वेदजानि च, उद्भिजानि च, अश्वा गावः पुरुषा हस्तिनो यत्किञ्चेदं प्राणि, जङ्गमं च, पतत्रि च, यच्च स्थावरं सर्वं तत्प्रज्ञाननेत्रम् । प्रज्ञाने प्रतिष्ठितम् । प्रज्ञानेत्रोऽलोकः । प्रज्ञा प्रतिष्ठा । प्रज्ञानं ब्रह्म ।**

भाष्यम्

ब्रह्मा शिवश्च शक्रश्च देवाश्चान्ये समस्तशः ।
तथैव पञ्चभूतानि पुण्यपापविमिश्रिताः ॥

---

६. भावसाधनः इति ‘ख’पाठः

क्षुद्रात्मानस्तु ये मर्त्या इतरे असुरा अपि ।
सर्वं जगदिदं विष्णोर्वशे तिष्ठति सर्वदा ।।

तेनैव नीयते नित्यं तस्मिन्नेव प्रतिष्ठितम् ।
मुक्ता येऽलोकनामानो नीयन्ते तेऽपि विष्णुना ।।

स्वयं चानन्यनिष्ठत्वात् प्रतिष्ठेत्यभिधीयते ।
देशतः कालतश्चैव गुणतश्चातिपूर्तितः ।।

विष्णोर्ब्रह्मेति नामैतन्मुख्यतोऽन्यत्र न क्वचित् ।।

**भावप्रदीपः**

'एष ब्रह्म' इत्यादेर्वाख्या– **ब्रह्मा शिवश्चेत्यादि** ।। प्रजापति-शब्दार्थः– **शिव इति** ।। 'क्षुद्रमिश्राणी'त्यस्यार्थः– **पुण्यपापविमिश्रिताः क्षुद्रात्मानस्तु ये मर्त्या इति** ।। तेन च क्षुद्राण्यल्पानि च तानि मिश्राणि पुण्यपापमिश्रितानि चेति विग्रहं सूचयति । 'इतराणी'त्यस्यार्थः– **इतरे असुरा अपीति** ।। संध्यभावश्छान्दसः । 'अण्डजानि जारुजानि च' इत्यादेः सङ्ग्रहाय– **सर्वं जगदिदमिति** । प्रज्ञानेत्रमित्यस्यार्थस्**तेनैव नीयत इति** । 'प्रज्ञाने प्रतिष्ठितं' इत्यस्यार्थः– **तस्मिन्नेव प्रतिष्ठितमिति** । 'प्रज्ञानेत्रोऽलोकः' इत्यस्य- **मुक्ता येऽलोकनामान इति** । 'प्रज्ञा प्रतिष्ठे'त्यस्यार्थः– **स्वयं चेति** ।। प्रतितिष्ठत्यात्मन्येवेति प्रतिष्ठेत्यर्थः । प्रज्ञानं ब्रह्मेत्यस्यार्थो– **देशतः कालतश्चेत्यादि** ।।

भगवदुपासनाफलनिरूपणम्

उपनिषत्

**स एतेन प्रज्ञेनात्मनाऽस्माल्लोकादुत्क्रम्य आमुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वाऽमृतः समभवत् समभवत् ॥२.६.१॥**

**॥ इति श्रीमन्महैतरेयोपनिषदि द्वितीयारण्याके षष्ठोऽध्यायः ॥**

भाष्यम्

सोऽलोकनामा मुक्तास्तु चितिमात्रस्वरूपतः ।
प्रकृष्टज्ञानरूपस्य प्रसादात् परमात्मनः ॥

अस्माद्देहात् समुत्क्रम्य गत्वोर्ध्वं लोकमुत्तमम् ।
अमृतः सन् विष्णुलोके भोगान् सम्प्राप्य पुष्कलान्[७] ॥
भुङ्क्ते यथेष्टतो नित्यमिति वेदानुशासनम् ॥

इत्याद्यैतरेयसंहितायाम् ।

भावप्रदीपः

'स एतेन प्रज्ञाने'त्यादेरर्थः– **सोऽलोकनामेत्यादि** ॥ कुतोऽलोकशब्देन मुक्त उच्यत इत्यत उक्तम्– **चितिमात्रस्वरूपत इति** ॥ तथा च न विद्यते लोकः प्राकृतदेहो यस्यासावलोकश्चिन्मात्रस्वरूपो मुक्त इत्यर्थ इति भावः । 'एतेन प्रज्ञेने'त्यादेरर्थः– **प्रकृष्टज्ञानरूपस्येत्यादि** । ऊर्ध्वं लोकं विष्णुलोकं गत्वेति मध्येऽध्याहार्यप्रदर्शनम् । अन्यथाऽमुष्मिन्स्वर्गे लोक इत्यनुवादायोगात् ॥

---

७. पुष्कळान् इति ह्.पाठः

## कतरशब्दार्थनिरूपणम्

### भाष्यम्

[8]'जानन्त्याऽपि देव्या लोकानुग्रहार्थं विशेषज्ञानार्थं च कोऽयमात्मेति पृष्टः [9]स भगवानाह । कतरः स आत्मेति । कतरः आनन्दतमः

'यत्रोभयोः प्रयोगो न तत्रैकार्थौ तरप्तमौ' । इति शब्दनिर्णये ।

### भावप्रदीपः

एवं समाख्याप्रमाणेन खंडं व्याख्यायापि विप्रतिपत्तिपरिहाराय पुनः स्ववचनेन व्याख्याति– **जानन्त्याऽपीति** ।। यद्यपि रमाया नित्यज्ञानत्वात् 'कोऽयमात्मा' इति प्रश्नोऽनुपपन्नस्तथापि लोकाना-मज्ञजनानां ज्ञानसंपादनेनानुग्रहार्थं सिद्धज्ञानानां च ब्रह्मादीनां विशेष-ज्ञानार्थं च कोऽयमात्मेति देव्या पृष्टस्स भगवानाहेत्यर्थः । अथवा विशेषज्ञानपदेन स्वस्या एवानालोचनकालेऽप्रतिभातभगवद्गुणज्ञानमु-च्यते तदर्थं चेत्यर्थः । अत एव [१०]'नवनवसुविशेषोपलंभेन' इत्याद्याः प्राचां वाचोऽपि सङ्गच्छन्ते । कतर इत्यस्य पूर्णानन्दतम इति व्याख्यानमयुक्तम् । तरपस्तमबपेक्षयाऽल्पातिशयवाचित्वादित्याशङ्क्य तयोः प्रकृते ऐकार्थ्यमुपपादयितुं प्रस्तावनाय पुनरनूद्य तमेवार्थ-मभिधत्ते– **कतर आनन्दतम इति** ।। तरप्तमपोरत्रैकार्थ्ये प्रमाणमाह– **यत्रेति** ।। **यत्र** वाक्ये **उभयोस्तरप्तमपोः** प्रयोगो वर्तते तत्र तौ भिन्नार्थाविव । यथा 'अयमाढ्यतरोऽयं त्वाढ्यतमः' इत्यादौ । यत्र तूभयोः प्रयोगो नास्ति किन्त्वेकस्यैव, यथा 'हरिः

---

८. जानत्या इति ह.पाठः        ९. सन् इति ह.पाठः

१०. त्रिविक्रमपण्डिताचार्यकृता विष्णुस्तुतिः- ४श्लो

परतरः' इत्यादौ । तत्र तरपूतमपावेकार्थौ यस्तमपार्थः स एव तरपोऽर्थ इत्यर्थः । तथा चात्मा कतरोऽन्यस्तु कतम इत्येवमुभयोः प्रयोगाभावात्तरबेव तमपर्थतया व्याख्यात इति भावः ।।

### वाशब्दानुषङ्गनिमित्तनिरूपणम्

#### भाष्यम्

**यत्प्रेरणादयं जीवो दर्शनादीन् करोति च । रमाब्रह्मादीनामपि तत्प्रेरितत्वात् । सर्वेषां दर्शनादिकारणत्वमेकैकमपि तस्य लक्षणं भवतीति वाशब्दः सर्वत्रानुषज्यते ।।**

#### भावप्रदीपः

'येन वा पश्यती'त्यादौ दर्शनादिकर्ताऽमुक इति न प्रतीयते । येनेति तृतीयया च दर्शनादिकरणत्वं परमात्मनः प्रतीयते । अतो व्याचष्टे– **यत्प्रेरणादिति** ।। 'स आत्मे'ति पूर्वेणैवान्वय इति भावः । तथा च परमात्मनः कतरत्ववज्जीवप्रेरकत्वमपि लक्षणतयोच्यत इत्याशयः । ननु कथमिदं जीवप्रेरकत्वं विष्णुलक्षणम् । रमाब्रह्मादीनामपि जीवप्रेरकत्वादित्यत आह– **रमेति** ।। तथा च जीव इति चेतनमात्रोपलक्षणाभिप्रायेणोक्तम् । अतो न तत्रातिव्याप्तमिदमिति भावः । ननु 'येन वा पश्यति' इत्यादौ सर्वत्र वाशब्दप्रयोगः कुत इत्यत आह– **सर्वेषामिति** ।। रमाब्रह्मादीनां सर्वेषां यद्दर्शनादि तत्कारणत्वं **एकैकमपि** दर्शनकारणत्वं श्रवणकारणत्वमाघ्राण-कारणत्वमित्यादिकं प्रत्येकमपि **तस्य** भगवतो **लक्षण**मसाधारणधर्मो भवतीति ज्ञापनाय वाशब्दः **सर्वत्र** तत्र तत्र**ानुषज्यते** संबध्यते । पृथक् पृथुक् प्रयुज्यत इत्यर्थः ।।

लिङ्गाभिमानित्वात् प्रजापतिशब्दवाच्यो शिवः

## भाष्यम्

**प्रजापतिः शिवः, लिङ्गाभिमानित्वात् ।**

**प्रजापतिः शिवः शेफो[१२] लिङ्गमित्यभिधीयते ।**

**लिङ्गाभिमानी लोकस्य स्रष्टा गिरिश एव हि ।। इति शब्दनिर्णये ।**

**सममस्त्वनयोर्युद्धमिति प्राह प्रजापतिः ।**

**वाक्यं शिवस्य तत् श्रुत्वा शक्रो नेत्याह सत्वरः ।। [१३]इति भारते ।**

## भावप्रदीपः

प्रजापतिर्दक्ष इति प्रतीतिवारणाय[१४] प्रागुदाहृतप्रमाणानुसारेण तदर्थमाह– **प्रजापतिः शिव इति** ।। कथं प्रजापतित्वं शिवस्येत्यत आह– **लिङ्गेति** ।। लिङ्गाभिमानित्वेऽपि प्रजापतित्वं कुत इत्यत प्रमाणेनैव तदुपपादयति– **प्रजापतिरिति** ।। शिवः प्रजापतिरि-त्यभिधीयते । कुतः? यतः शेफो लिङ्गमित्यभिधीयते । ततोऽपि किं गिरिश एव हि लिङ्गाभिमानी । अत एव लोकस्य स्रष्टाऽतः प्रजापतिरित्यर्थः । अत्र भारतवाक्यमपि प्रमाणयति– **सममिति** ।। **अनयोः** कर्णार्जुनयोः । प्राह ब्रह्माणं प्रतीति शेषः । **नेत्याह** न सममस्तु किन्त्वर्जुनस्यैव जयोऽस्त्वित्याहेत्यर्थः । अत्र शिवस्य तद्वाक्यमित्यनुवादेन प्रजापतिशब्दः शिवपर एवेति सिद्ध्यतीति भावः ।

---

१२. शेषो इति ह.पाठः

१३. इति च इति ह.पाठः

१४. निरासाय इति 'ख'पाठः

यथोक्तं भारततात्पर्यनिर्णये[१५]–

........................तदा गिरीशोऽवददब्जयोनिम् ।
सुरासुराणां भीमसुयोधनौ द्वौ समाश्रयौ तत्प्रियौ कर्णपार्थौ ।
प्राणोपमौ तेन चैतत्कृते ते सुरासुराः कर्तुमिच्छन्ति युद्धम् ।
तदा विनाशो जगतो महत्स्यात्तेनानयोस्सममेवास्तु युद्धम् ।
इतीरिते वासवः पद्मयोनिं जगद............. । इत्यादि ॥

ब्रह्मादिसर्वजीवानां भिन्नस्वरूपत्वनिरूपणम्

**भाष्यम्**

**क्षुद्रमिश्राणीव बीजानि शाल्यादिबीजवत् । भिन्नस्वभावा ब्रह्मादयः सर्वजीवाः ।**

**ब्रह्माद्याः सर्व एवैते जीवा भिन्नस्वरूपकाः ।**
**यथा शाल्यादिबीजानि भिन्नवीर्यानि सर्वशः ॥ इति सत्तत्त्वे ।**

**प्रथमेतराणीतिशब्दो मानुषाणां, द्वितीयोऽसुरादीनाम् ।**

**भावप्रदीपः**

'क्षुद्रमिश्राणीव बीजानि' त्येतदनूद्य बीजानीवेत्यन्वयमभिप्रेत्य क्षुद्रमिश्राणीत्येतत्सर्वजीवोपलक्षणमिति भावेन व्याचष्टे– **क्षुद्रमिश्राणीति** ॥ अत्र प्रमाणमाह– **ब्रह्माद्या इति** ॥ 'इतराणीतराणि च' इति द्विरुक्तेर्विषयभेदमाह– **प्रथमेति** ॥ **मानुषाणां** क्षुद्रमिश्राणीत्युक्तानां वाचकः । **द्वितीयः** इतराणीति शब्दोऽसुरादीनां वाचक इत्यर्थः ॥

---

१५. २७-१६६,१६७

अलोकशब्देन मुक्तसमुदायो ग्राह्यः, अश्वादीनां पृथग्ग्रहणे कारणं च

**भाष्यम्**

**प्रज्ञानेत्रोऽलोक इति । अलोकशब्देन मुक्तसमुदाय उच्यते । ब्रह्मादिस्थावरान्तस्य लोकस्य सर्वं तत्प्रज्ञाननेत्रमिति विष्णवधीनत्वस्य पूर्वमेवोक्तत्वात् पुनः प्रज्ञाननोत्रोऽलोक इति मुक्तविषयमेव । मुक्तो [१६]ह्यलोक्यत्वादलोकः ।**

**अण्डजानि चेत्याद्युक्त्वा पुनरश्वा गाव इत्यादि देवादीनां मन आदेरेव जातानामपि स्वीकारार्थम् । अण्डजत्वाद्युत्पत्तिप्रकारोऽपि विष्णवधीन इति ज्ञापयितुं तत्कथनम् ।**

**'तथाश्मानस्तृणकाष्ठाश्च सर्वे दृष्टक्षये स्वां प्रकृतिं भजन्ते'[१७] इति भारतवचनादश्मादीनामपि प्राणित्वात् तत्स्वीकारार्थं प्राणीति । गमनपतनस्थिरत्वादयोऽपि भावा विष्णवधीना इति ज्ञापयितुं जङ्गममित्यादिवचनम् ।**

**भावप्रदीपः**

'प्रज्ञानेत्रोऽलोकः' इत्यत्र विवक्षितं पदविभागमर्थं च दर्शयति– **प्रज्ञानेत्र इति** ।। समुदायापेक्षमेकवचनमिति ज्ञापनाय मुक्तसमुदाय इत्युक्तम् । अस्य वाक्यस्य मुक्तविषयत्वेऽलोक इत्यकारप्रश्लेषेणैव पदच्छेदे च युक्तिमाह– **ब्रह्मादीति** ।। मुक्तविषयमेवैतद्वाक्यम् । 'सर्वं तत्प्रज्ञानेत्रं' इति सर्वस्याप्यमुक्तप्राणिजातस्य विष्णवधीनतायाः पूर्वमेवोक्तत्वात् । न च सर्वशब्दार्थस्य संकोचेनामुक्तसमुदाय एव

१६. ह्यलौक्यत्वात् इति ह्.पाठः १७. म.भा.आदि. ८४-१०

कस्यचिदमुक्तवर्गस्यात्र परिग्रहः । [१८]'एष ब्रह्मे'त्यारभ्य [१९]'यच्च स्थावरमि'त्यन्तेन सर्वस्यापि ब्रह्मादिस्थावरान्तस्यामुक्तप्राणिजातस्य गृहीतत्वात् । पदच्छेदोऽप्यलोक इत्येवात्र विवक्षितो न तु लोक इति । लोकस्य सर्वस्यापि प्रागेवोक्तत्वात् । अमुक्तवर्गस्यैव लोक-शब्दवाच्यत्वात् । अमुक्ता एव हि सर्वैरवलोक्यन्ते । पुनस्तत्र लोकशब्देनामुक्तग्रहणे पौनरुक्त्यप्रसङ्गादिति भावः । अलोकशब्देनापि कथं मुक्तपरिग्रहः इति तत्राह– **मुक्तो हीति ।। अलोक्यत्वात्** अमुक्तैरनवलोक्यत्वात् । यथोक्तम्– 'संज्ञा नास्तीत्यपि ह्यस्य नामुक्तज्ञेयतेति हि'[२०] इति । 'सोऽलोकनामा मुक्तस्तु चितिमात्रस्व-रूपतः'[२१] इति प्रागुक्तं त्वलोकशब्दस्यार्थान्तरमिति न तेनास्य विसंवादः ।।

ननु 'अंडजानि च जारुजानि च' इत्याद्युक्त्याऽश्वगवादीनामपि सङ्ग्रहात्पुनः 'अश्वा गावः पुरुषा हस्तिन' इति व्यर्थमित्यत आह– **अंडजानीति** ।। देवानां[२२] मनआदितो ये जाता अश्वादयस्तेषा-मंडादिजातत्वाभावात्तेषामपि विष्ण्वधीनवस्तुवर्गे स्वीकारार्थं पुनरश्वा गाव इत्यादिवचनमित्यर्थः । तर्हि 'अश्वा गावः पुरुषा हस्तिनो यत्किंचेदं प्राणि' इत्याद्देवालम् । तत्र मनआदितो जातानामंडादि-जातानां चोभयेषां सङ्ग्रहात् । व्यर्थमेवांडजानीत्यादिकमित्यत आह– **अंडजत्वादिति** ।।

ननु 'अंडजानी'त्याद्युक्तप्राणिषु सर्वप्राणिसङ्ग्रहात्पुनः 'यत्किंचेदं

---

१८. ऐत.उ २-१-१ पु-५६७

१९. ५६७-पु

२०. अनु. ४-२-८३

२१. ५६९-पु

२२. देवादीनां इति 'ख'पाठः

प्राणी'ति व्यर्थमित्यत आह– **तथेति** ।। अश्मतृणकाष्ठादिप्राणिनामंडजत्वाद्यन्यतमप्रकारस्याप्यभावान्न तेन तत्सङ्ग्रहः शक्य इति तेषामश्मादीनां स्वीकारार्थं प्राणीति पृथगुपादानम् । न च तेषां प्राणित्वमेव कुत इति वाच्यम् । **दिष्टस्य** तच्छरीरारंभकस्यादृष्टस्य क्षये **स्वां प्रकृतिं भजन्ते** स्वस्वभावं शरीरद्वारा तदुपादानभावं वा भजन्त इति भारतवचनादश्मादीनामपि प्राणित्वावगमात् । अन्यथा दिष्टक्षयाद्युक्त्ययोगादिति भावः । एवं तर्हि प्राणीत्यनेनैव जङ्गमादिसर्वप्राणिसङ्ग्रहात्पुनर्जङ्गममित्यादिवचनं व्यर्थमित्यात आह– **गमनेति** ।। गच्छतीति **जङ्गमम्** । पततीति **पतत्रि** । तिष्ठतीति **स्थावर**मिति जङ्गमादिशब्दत्रयप्रवृत्तिनिमित्तकथनमिदम् । आदिपदेनाशुगमनादीनामश्वादिशब्दप्रवृत्तिनिमित्तानामपि सङ्ग्रहः । **भावाः** धर्माः ।।

मुक्ताः भगवदधीनाः

**भाष्यम्**

**'स एतेने'त्यलोकशब्दोक्तो मुक्तः परामृश्यते । सकलकर्मबन्धमुक्त्यनन्तरं हि शरीरादुत्क्रामति । प्रकृष्टज्ञानरूपेण विष्णुना प्रेरितः ।**
**[२३]प्रज्ञेनात्मनैवोत्क्रम्य तेनैव सर्वान् कामानाप्त्वा तेनैव सर्वान् कामान् [२४]स भुङ्क्ते इति सर्वत्रानुषज्यते । 'प्रज्ञानेत्रोऽलोकः' इत्युक्ते कथं प्रज्ञानेत्रो मुक्त इत्याकाङ्क्षायां तस्यैव व्याख्यानं 'स एतेन प्रज्ञेनात्मना' इत्यादि । अनुक्तविशेषणानामपि[२५] भगवदधीनत्वज्ञापनार्थं 'प्रज्ञानेत्रोऽलोकः' इति सामान्यवचनम् ।**

---

२३. प्राज्ञेन इति ह्.पाठः २४. संभुक्ते इति ह्.पाठः

२५. विशेषाणामपि इति ह्.पाठः

## भावप्रदीपः

'स एतेन प्रज्ञेने'त्यत्र स इति कस्य परामर्शः । 'एष ब्रह्म' इत्यादिना बहूनां प्राक् प्रकृतत्वादित्यत आह– **स एतेनेति** ।। प्रगनेकेषां प्रकृतत्वेऽपि स इति पुल्लिङ्गैकवचनेनान्यस्य निष्कृष्टस्यैकस्यैव परामर्शाऽसंभवात् 'प्रज्ञानेत्रोऽलोकः' इत्यत्रालोकशब्दोक्तो मुक्त एव परामृश्यत इत्यर्थः । नन्विदमप्यनुपपन्नमेव । 'अस्माल्लोकादुत्क्रम्य' इति वक्ष्यमाणशरीरोत्क्रान्त्ययोगात् । न हि मुक्तस्य पुनः शरीरादुत्क्रान्तिः संभवतीत्यतस्तद्घटयति– **सकलेति** ।। अप्रारब्धप्रारब्धरूपसकलेत्यर्थः । हिशब्दः प्रमाणप्रसिद्धौ । मुक्तेः कर्मक्षयोत्क्रान्तिमार्गभोगभेदेन चतुर्विधत्वात्प्रागलोकशब्देन चतुर्विधमुक्तिमतः प्रकृतत्वेऽपि तत्र कर्मक्षयरूपमात्रमुक्तिमन्तं परामृश्य तस्य शरीरादुत्क्रान्तेरभिधीयमानत्वान्नोक्तानुपपत्तिः । न च क्षीणकर्मणोऽपि शरीरादुत्क्रान्तिरनुपपन्ना । सकलकर्मबन्धमुक्त्यनन्तरं शरीरादुत्क्रान्तेः प्रमितत्वादिति भावः । 'प्रज्ञेनात्मने'त्यस्यार्थमाह– **प्रकृष्टेति** ।। धर्मधर्मिणोरभेद एव । तद्वत्वव्यवहारस्तु विशेषबलादेवेति ज्ञापनाय प्रज्ञेनेत्यस्य प्रकृष्टज्ञानरूपेणेति व्याख्यानम् । आत्मनेत्यस्य– **विष्णुनेति** । प्रेरित इति तात्पर्यलब्धार्थः । एतस्य प्रज्ञेनात्मनेत्यस्यास्माल्लोकादुत्क्रम्येति सन्निहितमात्रेण नान्वयः किन्तु सर्वत्रापि । अन्यथा मुक्तस्य सर्वथा भगवद्वशत्वानवगमप्रसङ्गादिति भावेन सर्वत्रान्वयप्रकारं दर्शयति– **प्रज्ञात्मनैवेति** ।। अत्रोत्क्रम्येत्यनन्तरं तेनैव विष्णुलोकं प्राप्येत्यध्याहार्यम् । सर्वत्रानुषज्यते, प्रज्ञेनात्मनेति पदद्वयमिति शेषः । ननु 'प्रज्ञानेत्रोऽलोकः' इत्यनेनैवास्य सर्वस्याप्यर्थस्य लब्धत्वादेतद्वाक्यं व्यर्थमेवेत्याशङ्क्य पूर्वोक्तव्याख्यान-

रूपत्वान्न वैय्यर्थ्यमित्याशयेनाह– **प्रज्ञानेत्र इति** ।। तथा च भगवत्प्रसादात्क्षीणकर्मणः शरीरादुत्क्रान्तिर्विष्णुलोकप्राप्तिस्तत्र सर्व-कामावाप्तिस्तद्भोगश्चेत्येत्सर्वं भगवदधीनमेवेति 'प्रज्ञानेत्रोऽलोकः' इत्यस्य व्याख्यानं कृतं भवतीति भावः । तर्ह्यनेनैवालं किं 'प्रज्ञा-नेत्रोऽलोकः' इति सामान्यवचनेनेत्यत आह– **अनुक्तेति** ।। विष्णुदेहे प्रवेशनं, ततो बहिर्निर्गमनं, नियमेन भगवदुपासनं, छन्दतः कर्मानुष्ठानं स्वोत्तमानुवृत्तिर्वेदाध्ययनादिकमित्यादीनामत्रानुक्तानामपि विशेषाणामित्यर्थः ।।

## मुक्तिशब्दार्थकथनम्

### भाष्यम्

**अनारब्धफलानां च प्रारब्धानां च सर्वशः ।**
**कर्माणां दाह एवायं मुक्तिरित्यभिधीयते ।।**

**स तु मुक्तस्ततो देहादुद्गच्छति परात्मना ।**
**प्रेरितो विष्णुलोकं च प्राप्य भोगानवाप्य च ।।**

**भुङ्क्ते विष्णुप्रसादेन न विष्णोरवशः क्वचित् ।**
**विष्णुतन्त्रा इमे सर्वे मुक्ता अपि यतोऽखिलाः ।। इति ब्रह्माण्डे ।**

**ब्रह्मेन्द्रादिशब्दा विष्णावेव मुख्यत इति तद्व्यावृत्त्या जीवानां स्वीकारार्थमेष इत्यादिशब्दः । स हि भगवान् स्वनेत्रकोऽपि नानुग्राह्यः । अनुग्राह्यत्वं हि ब्रह्मादीनामत्र विवक्षितम् ।**

**'नेयताऽनुग्राह्यतापि न सा विष्णोः स्वतोऽपि तु' ।**

**इति शब्दतत्त्वे ।।२.६.१।।**

**भावप्रदीपः**

उक्तं सर्वमप्यर्थं प्रमाणेन द्रढयति– **अनारब्धेति** ।। मुक्तिरित्यभिधीयते । तद्वांश्च मुक्त इत्यभिधीयत इत्यपि ग्राह्यम् । **ततः** सकलकर्मदाहानन्तरम् । परमात्मना प्रेरित इत्यस्योत्तरत्राप्यनुषङ्गः । **क्वचित्** कस्यामप्यवस्थायां विष्णोर**वशो**ऽनधीनो नास्त्येव किन्तु **इमे सर्वे** ब्रह्माद्या विष्णुतन्त्रा एव । यतो मुक्ता अप्यखिला विष्णुतन्त्रा इति योजना ।

'एष ब्रह्मे'त्यादौ ब्रह्मेन्द्रः प्रजापतिरित्येतावता पूर्तौ किमेष इत्यादिशब्दैर्विशेषणेनेत्यत आह– **ब्रह्मेन्द्रादिशब्दा इति** ।। विष्णावेव **मुख्यतो** मुख्यया वृत्त्या विद्यन्त इति हेतोर्विष्णुव्यावृत्या चतुर्मुखादिजीवानां स्वीकारार्थमेष एते इमानीत्यादिशब्द इत्यर्थः । ननु ब्रह्मादीनां यथा भगवन्नेतृत्वं[२६] एवं भगवतोऽपि भगवन्नेतृत्वं[२७] अस्त्येवेति वाच्यम् । अन्यथा भगवति स्वातन्त्र्यस्यैव दुर्वचत्वापत्तेः । स्वेच्छाधीनप्रवृत्तेरेव स्वातन्त्र्यशब्दार्थत्वात् । ततश्च 'सर्वं तत्प्रज्ञानेत्रं प्रज्ञानेत्रोऽलोकः' इति किं विशिष्योच्यत इत्यत आह– **स इति** ।। स्वतोऽशक्तस्य शक्तिसंपादनशक्तिरनुग्रहस्तद्विषयोऽनुग्राह्यः । न चेदृशमनुग्राह्यत्वं विष्णोः स्वविषयेऽस्ति । प्रज्ञानेत्रमित्यादौ च ब्रह्मादीनां यद्भगवन्नेतृत्वमुक्तं तन्निरुक्ततदनुग्राह्यत्वरूपमेव विवक्षितम् । अतो विशिष्य प्रज्ञानेत्रत्ववचनमुचितमेवेति भावः ।

अत्र प्रमाणमाह– **नेयतेति** ।। न केवलं तदधीनप्रवृत्तत्वमेव नेयता किन्तु तदनुग्राह्यताऽपि । तत्र विष्णोर्यद्यपि नेयता परतो नास्ति । स्वतो नेयता त्वस्त्येव । स्वाधीनप्रवृत्तितायास्तस्मिन् प्रमितत्वात् अबाधितत्वाच्च । अनुग्राह्यतारूपा तु सा नेयता विष्णोः स्वतोऽपि नास्ति किमुत परत इत्यर्थः ।।

---

२६. नेतृकत्वं इति 'ख'पाठः २७. नेतृकत्वं इति 'ख'पाठः

ततश्चायं खंडार्थः । **अयमात्मा** विष्णुः **कः** किं लक्षणक इति वयमुपास्महे इति रमादेवी महिदासमपृच्छदिति शेषः । इति देव्या पृष्टः स भगवान्प्राहेति च । किमिति? **कतरः स आत्मेति । स आत्मा** विष्णुः **कतर** आनन्दतमः । स च पूर्णानन्दोऽस्य आत्मा स्वभाव एव न त्वागन्तुको धर्म इत्यर्थः । लक्षणान्तराण्याह– **येन वेत्यादिना ।।** अयं रमाब्रह्मादिचेतनसमुदायो **येन** यत्प्रेरणया पश्यति रूपादिकम् । येन श्रुणोति शब्दान् येन गन्धानाजिघ्रति येन **वाचं** लौकिकवैदिकशब्दरूपां **व्याकरेति** व्याहरति । येन स्वादु चास्वादु च विजानाति । उपलक्षणमेतत् । सर्वेन्द्रियव्यापारांश्च करोति इति ग्राह्यम् । स आत्मेति पूर्वेणान्वयः । सर्वदर्शनादि-कारणत्वस्य प्रत्येकं लक्षणत्वज्ञापनाय सर्वत्र वाशब्दः ।

एवं विष्णोर्लक्षणान्युक्त्वोपासनार्थं नामान्याह– **यदित्यादिना ।।** ज्ञातृत्वात् **यत्** । सन्निहितत्वात् **एतत्** । हृद्ययनात् **हृदयम्** । मन्त्रत्वात् **मनः** । गुणोच्चयदातृत्वात् **चः** । पूर्णत्वात् **आ** । भक्तै-रितत्वात् तत्वाच्च **एतत्** । सम्यज्ञानस्वरूपत्वात् **संज्ञानम्** । आ समन्तात्सर्वविषयज्ञानस्वरूपत्वात् **आज्ञानम्** । विविधज्ञानरूप-त्वात् **विज्ञानम्** । प्रकृष्टस्वगुणज्ञानरूपत्वात् **प्रज्ञानम्** । अविस्मृ-तित्वात् **मेधा** । दर्शनरूपत्वात् **दृष्टिः** । धारणरूपत्वात् **धृतिः** । मासु प्रमाणेषु तत्वात् **मतिः** । मनुनाम्नां ब्रह्मादीनामीशो **मनीषा** । सर्वप्रेरक्तवात् **जूतिः** । सर्वदा सर्वत्र सर्वरूपेषु समं रमत इति **स्मृतिः** । सं सर्वस्य क्लृप्तिरूपत्वात् **संकल्पः** । सर्वकर्तृत्वात् **क्रतुः** । दोषाणामसनात् **असुः** । अमितानन्दत्वात् **कामः** । स्वतन्त्रत्वात् **अवशः** । **इत्येतानि सर्वाणि एव** त्रयोविंशति नामानि **प्रज्ञानस्य**

ज्ञानरूपस्य भगवतो नामधेयानि भवन्ति । एवं त्रयोविंशितिनामक-भगवदुपासकस्य किं फलमित्यतोऽन्ते वक्ष्यमाणं 'स एतेन प्रज्ञेनात्मना' इति फलवाक्यमत्रापि योजनीयम् ।

पुनर्लक्षणान्तरं वक्तुं आह– **एष ब्रह्मेत्यादिना** ।। एष ब्रह्मा एष इन्द्र एष **प्रजापतिः** शिव **एते सर्वे देवा** दक्षादयः इमानि च पञ्चमहाभूतानि, कानि तानि पृथिवीवायुराकाशापोज्योतींषीत्येतानि । **इमानि च क्षुद्रमिश्राणि** क्षुद्राण्यल्पानि च तानि मिश्राणि पुण्यपाप-मिश्रितानि चेति तथोक्तानि । **इतराणि** देवेभ्योऽन्यानि च मानुष-प्राणिजातानि । **इतराणि** च देवमनुष्यभिन्नान्यसुरादिप्राणिजातानि । तथा **अण्डजानि** पक्षिजातानि **जारुजानि** जरायुजानि मानुषादीनि **श्वेदजानि** मत्कुणादीनि । **उद्भिज्जानि** वृक्षादीनि । तथा देवादीनां मनआदिजाता अश्वा गावः पुरुषा हस्तिनः **यत्किंचेदं प्राणि** शिलाकाष्ठादिकं तथा **जङ्गमं** गमनकर्तृ **पतत्रि** पतनकर्तृ **यच्च स्थावरं** स्थिरं प्राणिजातं सर्वेषामप्येषां विशेषणं **बीजानि वेति** शाल्यादिबीजवद्भिन्नस्वभावानीत्यर्थः । तदेत्सर्वं **प्रज्ञानेत्रं** प्रज्ञात्मकं ब्रह्म नेत्रं नेतृ यस्य तत्तथोक्तम् । 'नाम्नी'[२८] इति सूत्रान्नयतेः ष्ट्रन्[२९] । **प्रज्ञाने** प्रज्ञारूपे ब्रह्मण्येव प्रतिष्ठितम् । **अलोकः** प्राकृतदेहशून्यः अमुक्तैरनवलोक्यो वा योऽयं मुक्तसमुदायः सोऽपि **प्रज्ञानेत्रः** ब्रह्मनेतृक एव । **प्रज्ञा** प्रज्ञारूपं ब्रह्म स्वयं चानन्याश्रयत्वात्प्रतिष्ठाशब्दवाच्यम् । **प्रज्ञानं** प्रज्ञात्मको विष्णुरेव **ब्रह्म** देशतः कालतो गुणतश्चापरिच्छिन्नम् ।

---

२८. पा.सू. ६-४-१३

२९. ष्ट्रन् इति 'ख'पाठः

'प्रज्ञानेत्रोऽलोक' इत्यस्यैव [३०]व्याख्यानम्– **स एतेनेति** । **स** सकलकर्मबन्धान्मुक्तोऽलोकशब्दोक्तः पुरुष **एतेन प्रज्ञेन** प्रकृष्टज्ञानेन **आत्मना** विष्णुना प्रेरितस्सन्नेव **अस्माल्लोकात्** चरमदेहादुत्क्रम्य विष्णुलोकं गत्वाऽ**मुष्मिन् स्वर्गे लोके** वैकुंठादौ तेनैव प्रज्ञात्मनाऽ-मृतस्सन् सर्वान् कामान् आप्त्वा तेनैव सर्वान्कामान् **समभवत्** भुंक्त इति ॥२.६.१॥

**॥ श्रीमन्महैतरेयोपनिषद्भाष्यभावप्रदीपे**

**द्वितीयारण्यके षष्ठोऽध्यायः ॥**

३०. विवरणम् इति 'ख'पाठः

# अथ द्वितीयारण्यके सप्तमोऽध्यायः

शास्त्राभ्यासिना कर्तव्या विष्णुप्रार्थना

उपनिषत्

**ॐ वाङ्मे मनसि प्रतिष्ठिता मनो वाचि प्रतिष्ठितमाविरावीर्म एधि वेदस्य म आणीस्थः श्रुतं मे मा प्रहासीरनेनाधीतेनाहोरात्रान् सन्दधाम्यृतं वदिष्यामि सत्यं वदिष्यामि तन्मामवतु तद्वक्तारमवतु अवतु मां अवतु वक्तारम् ॥२.७.१॥**

**॥ इति सप्तमोऽध्यायः, इति द्वितीयारण्यकं समाप्तम् ॥**

आणीशब्दार्थकथनपूर्वकं प्रार्थनामन्त्रव्याख्यानम्

**भाष्यम्**

वाङ्मे मनसि प्रतिष्ठिता । अवबोधरूपे विष्णौ प्रतिष्ठिता स च विष्णुर्मे वाचि स्थितः । 'यदेतद्धृदयं मनश्चे'ति विष्णुनामधेयेषूक्तत्वात् । आविराविर्म एधि हे विष्णो ममाविराविर्भव । आणीस्थित आण्यां स्थित विष्णविति सम्बोधनम् ।

आधारः सर्ववेदानां वेदाणी प्राण उच्यते ।
तस्मिन् स्थितो हरिर्नित्यमाणीस्थ इति गीयते ॥ इति शब्दतत्त्वे ।

आविरावीरिति दैर्घ्यमतिशयार्थे । 'आधिक्येऽधिकं' इति सूत्रात् । अणशब्दस्य गतिवाचित्वाच्चलमाणमुच्यते । तस्य धारणेन तद्वानाणी । स्थापक इत्यर्थः । मे श्रुतं मा प्रहासीः । मम विद्यागोचर एव सर्वदा भव । विस्मृतो मा भव ॥

**भावप्रदीपः**

**वेदाधारमरुत्संस्थं वागाधारमृतं हरिम् ।**
**भक्तानुग्राहकं वन्दे नित्यं साधुगुणैस्ततम् ।।**

'वाङ् मे मनसी'ति खण्डं व्याचष्टे– **वाङ् मे मनसीति** ।। 'मनसी'त्यस्यार्थो– **अवबोधरूपे विष्णाविति** । मनु अवबोधन इति धातोरिति भावः । 'मनो मे वाचि प्रतिष्ठितं' इत्यस्यार्थः– **स चेति** । मनःशब्दस्य प्रसिद्धार्थं परित्यज्य विष्णुपरत्वेन कुतो व्याख्यानमित्यतः प्रकृतत्वादित्याह– **यदेतदिति** ।। आविरावीर्म एधीत्येतदनूद्य व्याचष्टे– **आविरिति** ।। एधीति मध्यमपुरुषबलात् प्रकृतत्वाच्च हे विष्णो इति संबोधनमध्याहृतम् । 'आविरावीर्म एधि' इत्यस्यार्थो– **भवेति** । अस् भुवीत्यस्य लोटि रूपमेतत् । अस्य एत्वं, हेर्धिः । भवनार्थस्येणो वा रूपमेतत् । आणीस्थशब्दे विग्रहं [1]प्रदर्शयति– **आणीस्थेति** ।। अध्याहृतस्य विष्णावित्यस्यैवेदं विशेषणमिति भावेनोक्तम्– **विष्णवितीति** ।।

सामर्थ्याद्वेदस्येति पदं आणीपदेनान्वेतीति भावेन प्रमाणेनैव तदर्थमाह– **आधार इति** ।। सर्ववेदानामित्यनेन वेदस्येत्येकवचनं समुदायापेक्षमित्युक्तं भवति । **आणीस्थ इति** ।। वेदाणीस्थ इत्यर्थः । आवीरिति दैर्घ्यकृत्यमाह– **आविरिति** ।। आविरावीरित्यत्रावीरिति पददैर्घ्यमित्यर्थः । तत्र ज्ञापकमाह– **आधिक्य इति** ।। आणीशब्द-स्याधारार्थकत्वं कथमित्यत आह– **अणशब्दस्येति** ।। अण गताविति धातोर्गतिवाचित्वादणशब्दस्य अणस्येदमिति व्युत्पत्त्या

---

१. दर्शयति इति 'ख'पाठः

चलनसंबन्धित्वाच्चलमाणमुच्यते । पुनराणस्येयमाणीति व्युत्पत्त्या चलनसंबन्धित्वात्तद्धारकं वस्त्वाणीत्युच्यते । संबन्धश्च धार्यधारकभाव एवेति भावः । अत्राणशब्दात्तस्येदमित्यर्थे एकोऽण्, पुनराणशब्दात्तस्मिन्नेवार्थे द्वितीयोऽण् । ततः स्त्रीत्वविवक्षायां 'टिड्ढाणञ्'[२] इत्यादिना ङीप् । शब्दस्वाभाव्यात् स्त्रीलिङ्गता । न च तस्य धारणेन तद्वानाणीति वचनस्वारस्यानुरोधेनायमिन्नन्तः पुल्लिङ्ग एवेति वाच्यम् । आणीस्थ आण्यां स्थित आणीस्थ इति स्त्रीलिङ्गनिर्देशानुपपत्तेः । तद्वानिति पुल्लिङ्गनिर्देशस्तु प्रकृतप्राणशब्दव्यपेक्षया । तद्वानिति मतुबपि नेनिप्रत्ययार्थकथनार्थं किन्तु संबन्धमात्रप्रदर्शनार्थमिति बोध्यम् । एवमाणीशब्दस्य चलधारकत्वमर्थ इत्युक्त्वा पर्यवसितमर्थमाह– **स्थापक इत्यर्थ इति** ।। चलतो धारकत्वं च स्थापकत्वरूपमेव । तथा च वेदानामपपाठापार्थादिनिरासपूर्वकं यथावस्थितपाठार्थादिव्यवस्थापकत्वात् प्राणो वेदाणीत्युच्यत इति भावः । 'श्रुतं मे प्रहासीः' इत्येतदन्वयप्रदर्शनपूर्वकमनूद्य तत्तात्पर्यमाह– **मे श्रुतमिति** ।। **विद्यागोचरः** अधीतशास्त्रजनितयथार्थज्ञानविषयः । तस्यापि फलितमर्थमाह– **विस्मृत इति** ।।

**वाङ्मे इति मन्त्रस्यार्थकथनपुरस्सरं महिदासदृष्टत्वकथनम्**

**भाष्यम्**

**हे विष्णो अनेन त्वद्विषयेणैवाधीतेनाहोरात्रान् सन्दधामि । सर्वाहोरात्रेष्वपि त्वद्विषयाध्ययनमेव करोमीत्यर्थः । ऋतं यथावदवगतं त्वां वदिष्यामि । सत्यं साधुगुणैस्ततं सर्वनियन्तारं च । तद्विष्ण्वाख्यं ब्रह्म मामवत्विति तस्यैव विष्णोः परोक्षत्वेनैव प्रार्थनम् ।**

**वाङ्म इत्यादिकं खण्डं विष्णुप्रार्थनरूपकम् ।**
**अविघ्नत्वमभीप्सूनां शिष्याणां दृष्टवान् हरिः ।। इति च ।।**

**भावप्रदीपः**

'अनेनाधीतेने'त्यादिकमपि विष्णुप्रार्थनरूपमेव ज्ञेयमिति भावेनानूद्य व्याचष्टे– **हे विष्णविति** ।। 'ऋतं वदिष्यामी'त्यादेर्थः– **ऋतमिति** ।। **यथावगतं** पूर्वावगतवदेव सदास्थितम् । यथोक्तम्–

ऋ गताविति धातोस्तु पूर्वावगतवत्सदा ।
स्थितेर्ब्रर्तमित्युक्तमिति[3] ।।

**वदिष्यामि** शिष्येषु वदेयम् । सद्भिस्साधुभिर्गुणैस्ततत्वात् सत् । सर्वनियन्तृत्वात् यं चेति सत्यमित्यर्थः । चशब्दाद्वदिष्यामी-त्यस्यानुकर्षः । तन्मामवत्वित्यस्यार्थः– **तद्विष्ण्वाख्यमिति** । अत्र विष्णुसंबोधनाद्यभावेन कं प्रतीदं प्रार्थनमित्यत उक्तम्– **तस्यैवेति** ।। एतेन तद्वक्तारमवत्वित्यादिकं व्याख्यातप्रायं ज्ञातव्यम् । नन्विदमपि महिदासवाक्यमेव ।। तत्कथं तस्यैवं विष्णुप्रार्थनं संभवतीत्याशङ्कां प्रमाणेनैव परिहरति– **वाङ् म इतीति** ।। शष्याणामर्थे शिष्यवाक्यत्वेन दृष्टवानित्यर्थः ।।

ततश्चायं खंडार्थः । **मे** मम **वाक्** वागिन्द्रियं वाणी वा **मनसि** अवबोधनरूपे विष्णौ **प्रतिष्ठिता** [4]तद्विषयाण्येव भवतु । **मनश्च** मनोनामा भगवान् **मे** मम वाचि **प्रतिष्ठितमस्तु** वाग्विषयो भवतु ।

---

२. पा.सू. ४-१-१५ सि.कौ.सू.सं. ४७०    ३. तत्वोद्योतः

४. तद्विषयिण्येव इति 'ख'पाठः साधीयान्

प्रार्थने प्रकारमात्रभेदोऽयं तात्पर्यं त्वेकमेव । आदरातिशयादेव हि पुनः प्रार्थनम् । एवं परोक्षं प्रार्थयित्वाऽपरोक्षं प्रार्थयते– **आविरिति** ।। हे भगवन् **मे** मम **त्वं आविरेधि** आविर्भव अपरोक्षविषयो भव । **आविरेधि** अतिशयेनाविर्भव च । आविर्भावं च वाग्वधिष्ठाने प्राप्नुहीति भावेन संबोधयति– **वेदस्येति** ।। **मे** मदुपास्य हे **वेदस्य आणीस्थ** सर्ववेदसमुदायाधारप्राणस्थितविष्णो **मे** मम **श्रुतं** अधीतं **मा प्रहासीः** मा त्यज, मदधीतशास्त्रजन्ययथार्थज्ञानविषय एव सर्वदा भव । कदापि विस्मृतो मा भवेत्यर्थः । एतत्प्रार्थनानुकूल्येनैव वेदस्य म आणीस्थेति संबोधनम् । अन्यथा प्राणस्थेत्येवावक्ष्यत् । हे विष्णो **अनेन** त्वद्विषयेणैवाधीतेन **अहोरात्रान् संदधामि** सर्वाहोरात्रेष्वपि त्वद्विषयमेवाध्ययनं कुर्यामिति यावत् । **ऋतं** पूर्वावगतवत्सदास्थितं शश्वदेकप्रकारं **त्वां वदिष्यामि** शिष्येषु वदेयम् । तथा **सत्यं** साधुगुणैस्ततं सर्वनियन्तारं च त्वां **वदिष्यामि** वदेयमित्यर्थः । एवमपरोक्षं प्रार्थयित्वा पुनः परोक्षं प्रार्थयते– **तन्मामिति** ।। **तत्** विष्ण्वाख्यं ब्रह्म **मां** अध्येतारं शष्यमवतु । वक्तुर्गुरोरभावेऽध्ययनस्यैवाभावापत्तेः **तत्** ब्रह्म **वक्तारं** गुरुमप्यवतु । तात्पर्यातिषयेन पुनरिदमेव प्रार्थयते– **अवतु मां अवतु वक्तारमिति** ।।

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचित**

**श्रीमन्महैतरेयोपनिषद्भाष्यभावप्रदीपे द्वितीयारण्यके**

**सप्तमोऽध्यायः**

# अथ तृतीयारण्यके प्रथमोऽध्यायः

विष्णुनामगतपूर्वोत्तरसन्धीनां महिमावर्णनम्

उपनिषत्

**अथातः संहिताया उपनिषत् ।**

सर्वशब्दानां विष्णुनामार्थकत्वकथनम्

भाष्यम्

विष्णुनाम्नी षकारस्य णकारस्य च संहिताम् ।
विष्णोस्तु बहुरूपाणां [१]वाचिकामृषयो विदुः ॥

तौ च वर्णौ हरेः सम्यक्स्वरूपप्रतिपादकौ ।
बहुधैव[२] स्थितस्यास्य सदैवैकस्वरूपिणः ॥

विष्णुनामार्थरूपत्वाद्वेदानामपि सर्वशः ।
अन्येषामपि शब्दानां संहिता विष्णुवाचिकाः[३] ॥

तद्वाचकास्तथा वर्णाः सर्वे लौकिकवैदिकाः[४] ।

भावप्रदीपः

विष्णुनामार्थरूपाणां वेदानां संहितात्मनाम् ।
लौकिकानां च शब्दानां मुख्यवाच्यं हरिं भजे ॥

'अथातःसंहिताया उपनिषत्' इत्येतत्खंडं (व्याख्यास्यन् आद्य-

---

१. वाचकां इति ह.पाठः
२. बहुधेव इति ह.पाठः
३. वचकाः इति ह.पाठः
४. वैदिकलौकिकाः इति ह.पाठः

वाक्यं तावत्)[५] व्याचष्टे– **विष्णुनाम्नीति** ।। **संहितां** सन्धिम् । **ऋषयो** मांडूकेयादयः । न केवलं षकारणकारयोः संहितामात्रं बहुरूपविष्णुवाचकं किन्तु **तौ** षकारणकाराख्यौ वर्णौ च सदैवैकस्वरूपिणोऽपि **बहुधैव स्थितस्य** बहुरूपतया भिन्नवद्विद्यमानस्य **अस्य** हरेः स्वरूपस्य सम्यक् प्रतिपादकौ मन्तव्यौ । अस्तु विष्णुनाम्नि संहितातद्गतवर्णवाच्यत्वं विष्णोस्ततः किमित्यत आह– **विष्ण्विति** ।। **अन्येषाम**ग्न्यादिशब्दानामपि संहिता विष्णुवाचिकाः । तथा तद्गतवर्णाश्च तद्वाचकाः । ततश्च वैदिकानामेव शब्दानां लौकिकत्वाल्लौकिकवैदिकाः सर्वे शब्दा विष्णोरेव वाचका ज्ञेया इत्यर्थः । एतेन **संहितायाः** विष्णुनामसंहितायास्तद्व्याख्यानभूतसर्ववैदिकशब्दसंहितायास्तदभिन्नलौकिकशब्दसंहितायाश्च । उपलक्षणमेतत् । तत्तत् संहितागताः सर्वे वर्णाश्च ग्राह्याः । तेषां **उपनिषत्** रहस्यं भगवद्रूपवाचकत्वं रूपं निरूप्यत इति मूलवाक्यं व्याख्यातं भवति ।।

### संहिताविद्या– मण्डूकेयमुनेरुपासनम्

### उपनिषत्

**पृथिवी पूर्वरूपम् । द्यौरुत्तररूपम् । वायुस्संहितेति माण्डूकेयः ।**

### भाष्यम्

पृथिवीनामकं रूपं पृथुत्वात् पृथिवीस्थितम् ।
देवता पूर्ववर्णस्य पूर्वरूपं तदुच्यते ।।

---

५. ()एतच्चिह्नस्था पंक्तिः 'क'पाठे नास्ति

देवतोत्तरवर्णस्य क्रीडनाच्च द्युनामकम् ।
दिवि स्थितं हरे रूपमुत्तरं रूपमुच्यते ।।

वेदकत्वाच्चायनत्वाद्रूपं यद्वायुनामकम् ।
विष्णोस्तद्वर्णयोर्मध्यदेवतेति प्रकीर्तितम् ।।

संहितानामकं तच्च रूपद्वयसहस्थितेः ।

**भावप्रदीपः**

'पृथिवी पूर्वरूपं द्यौरुत्तररूपं वायुः संहिता' इति वाक्यं व्याचष्टे– **पृथिवीति** ।। विष्णुनाम्नि पूर्ववर्णस्य देवतात्वात्पूर्वरूपं, उत्तरवर्णस्य देवतात्वादुत्तररूपम् । वेदकत्वात् वः । वातेरवगत्यर्थादन्तर्णीतण्यर्थात् 'आतोऽनुपसर्गे कः'[६] इति कः । विदेर्वा डः टिलोपश्च । **अयनत्वात्** आश्रयत्वादायुः । अय पय गतौ इण् गतौ वा । अस्मादधिकरणे उण् । वश्चासावायुश्चेति वायुनामकं विष्णोर्यद्रूपं तत् वर्णयोर्मध्यदेवता । तच्च रूपं संहितानामकं, कुतः? **रूपद्वयसहस्थितेः** पूर्वोत्तरवर्णदेवतारूपद्वयेन सहस्थितत्वादित्यर्थः ।।

**विष्णुनाम्नि पूर्वोत्तरवर्णयार्मतभेदकथनं सर्वेषामुपादेयत्वोपपादनं च**

**भाष्यम्**

वर्णद्वयं विकारं च षकारं केचिदब्रुवन् ।
षकारं मध्यमत्रैव णकारं केचिदुत्तरम् ।।

पृथक्करणमेवैषां वर्णयोर्मध्यमुच्यते ।
उपसर्गमात्रं वीत्याहुः केचिन्नाम ष्णुमात्रकम् ।।

---

६. पा.सू. ३-२-३ सि.कौ.सू.सं. २९१५

**षकारं च णकारं च वर्णौ पूर्वोत्तरावपि ।**
**व्यक्तिरेवोष्मणस्तत्र मध्यमित्यभिधीयते ।**
**सर्वेऽप्येत उपादेयाः पक्षा निर्दोषका यतः ॥**

इत्याद्यैतरेयसंहितायाम् ॥

**भावप्रदीपः**

अत्र विष्णुनाम्नि पूर्वोत्तरवर्णौ कावित्यतो मतभेदेन विविच्य दर्शयति– **वर्णद्वयमिति** ॥ तस्यैव विवरणं– **विकारं च षकारं चेति** । णकारस्तु विष्णव इत्यादौ तदुत्तरसंहितान्तरे पूर्ववर्ण इति भावः । केचित्तु **अत्रैव** विष्णुनाम्नि विकारं पूर्ववर्णं षकारं मध्यं णकारस्तूत्तरवर्णमब्रुवन् । नन्वेतत्पक्षे षकारस्य मध्ये संस्थितत्वेन विकारणकारयोः कदापि संश्लेषाभावेन कथं तयोः संहिता स्यादित्यत आह– **पृथक्करणमेवेति** ॥ पार्थक्यज्ञापनमेवेत्यर्थः । एषां पक्षे **मध्यं** मध्यमवर्णषकारकार्यम् ।

अयं भावः । यद्यपि षकारोऽत्र वर्णयोर्मध्ये तिष्ठति । तथापि तस्य वर्णयोः पार्थक्यज्ञापनमात्रहेतुत्वेनैकपद्यरूपसंश्लेषविघटकत्वा-भवात्संहितोपपद्यत एवेति ।

केचित्तु **ष्णुमात्रकं** ष्णु इत्येतावन्मात्रं नाम । वीति वर्णस्तू-पसर्गमात्रमित्याहुः । तत्र च षकारं च णकारं च वर्णौ पूर्वोत्तरा-वप्याहुरित्यन्वयः । नन्वेवं षकारस्य व्यञ्जनमात्रत्वेन णकारान्त-र्भावात्तयोर्मध्यभागस्यैवाभावेन वायुनामकं रूपं मध्यदेवतेति कथ-मुक्तमित्यत आह– **व्यक्तिरेवेति** ॥ **ऊष्मणः** षकारस्य **व्यक्तिः** व्यक्ततयाऽवस्थानमेव **तत्र** ष्णुनाम्नि मध्यमित्यभिधीयते ।

तथाचोच्चारणकाले तस्य व्यक्ततयैवोच्चार्यत्वेन व्यंजनमात्रत्वेऽपि षण्णामित्यादावाद्यणकारस्येव णकारान्तर्भावाभावात्षकारणकारयो-र्मिलितयोरपि स्वत एव पृथग्भावापन्नत्वान्मध्यभागोपपत्तिरिति भावः । एवं पक्षत्रये कः पक्ष उपादेयः कश्च परित्याज्य इत्यत आह– **सर्वेऽपीति** ॥

संहिताविद्यायां माक्षव्य-अगस्त्यमनेरभिप्रायकथनम्

उपनिषत्

**आकाशः संहितेत्यस्य माक्षव्यो वेदयाञ्चक्रे । स हाविपरिहृतो मेने, न मेऽस्य पुत्रेण समगादिति । समाने वै तत् । परिहृतो मेन इत्यागस्त्यः ।**

भाष्यम्

आकाशस्थ आकाशनामा भगवान् वर्णयोर्मध्यदेवतेति माक्षव्यः । उभयरूपसंहितात्वात्[७] संहितानामकः[८] । स माण्डूकेयस्तेन माक्षव्ये-णापरिहृतः स्वपक्षः इति मेने । मे[९] मदीयेन मदुपासितेनास्याकाशस्य पुत्रेण वायुना न समागादसौ माक्षव्यः । वायुस्थविष्ण्वनुपासनात् । यद्यप्याकाशस्थो भगवान् संहितानामको भवति । तथापि न वायुस्थस्यासंहितात्वं भवतीत्यपरिहृतत्वम् । परिहृतो माण्डूकेयपक्ष इत्यहं मेन इत्यागस्त्यः । आकाशे विष्णूपासनस्याधिकफलत्वात् । पिता ह्याकाशो वायोः ॥

---

७. सहितत्वात् इति ह.पाठः    ८. संहितानामकं इति ह.पाठः

९. मे इति पदं ह.पाठे नास्ति

**भावप्रदीपः**

'आकाशः संहिता' इत्यस्यार्थमाह– **आकाशस्थ इति** ।। 'संहिता'-शब्दर्थो **वर्णयोर्मध्यदेवतेति** । वर्णद्वयसमाहाररूपत्वात्संहितायाः कथमाकाशनामकभगद्रूपस्य संहितात्वमित्यत आह– **उभयेति** ।। पूर्वोत्तरवर्णदेवतालक्षणेत्यर्थः । 'स हाविपरिहृतो मेने' इत्येतद्व्याचष्टे– **स मांडूकेय इति** ।। अपरिहारे कर्तृकर्मानुक्तेस्तेन माक्षव्येण स्वपक्ष इत्यध्याहृतम् । **स्वपक्षो** मांडूकेयपक्षो**ऽपरिहृतो** न निराकृतः । ननु कथमयं पक्षो परिहृतः । वायुः संहिता आकाशः संहिता' इति संहितादेवतयोर्भेदेनोक्तत्वादित्यतोऽपरिहारप्रकारं दर्शयितुं प्रवृत्तं 'न मेऽस्य पुत्रेण समगादिति' इति वाक्यं व्याचष्टे– **मे मदीयेनेति** ।। **वायुना** वायुस्थविष्णुना । एतेनास्य मे मम पुत्रेण न समगादित्यन्यथाप्रतीतिरप्यपास्ता भवति । कथमसौ वायुना न समगादित्यत आह– **वायुस्थेति** ।। संहितादेवतात्वेनेति शेषः । नन्वेवं तर्हि मांडूकेयपक्षो माक्षव्येन परिहृत एव । वायुस्थविष्णोः संहितादेवतात्वेनानुपासनादित्यतोऽनुपासनस्याज्ञानादिनाऽपि संभवान्न तावता तन्निराकरणं कृतं स्यादिति भावेनापरिहारोक्तेरभिप्रायं व्यनक्ति– **यद्यपीति** ।। यद्यप्यकाशस्थो विष्णुः संहितेति माक्षव्यो मन्यते । तथापि वायुस्थविष्णुः संहिता न भवतीति तेनानुक्तत्वात् माण्डूकेयस्तेन माक्षव्येणापहृतः स्वपक्ष इति मेन इति भावः । 'परिहृतो मेन इत्यागस्त्यः' इति वाक्यं मांडूकेयः स्वपक्षो माक्षव्येण परिहृत इति मेन इत्यागस्त्यो नाम ऋषिराहेत्यन्यथाप्रतीतिं पराकर्तुं यथावद्व्याचष्टे– **परिहृत इति** ।। **मेने** अमनिषम् । एकस्यैव मांडूकेयस्य स्वपक्षः परिहृतोऽपरिहृत इत्युभयथामननविरोधादागस्त्यमननपरतयैव

व्याख्यानमुचितमिति भावः । तथापि परिहृतत्वापरिहृतत्वोर्विरोध एवेत्यतः परिहृतत्वमन्तुरागस्त्यस्याभिप्रायं स्वयमाह– **आकाश इति** ।। वायौ च विष्णूपासनस्योनफलकत्वादित्यपि ग्राह्यम् । तथा चाधिकफलोपासनपक्षस्यैवोत्तमत्वादल्पफलकोपासनपक्षो माक्षव्येण परिहृत इत्यवगम्यत इति भावः । वाय्वपेक्षयाऽऽकाशे विष्णूपासनस्याधिकफलत्वं कुत इत्यत आह– **पितेति** ।। **आकाशो** विनायकः । **वायुः** प्रवहः ।।

### माण्डूकेयमाक्षव्यमुनिपक्षयोः साम्यनिरूपणम्

### उपनिषत्

## समानं ह्येतद्भवति वायुश्चाकाशश्चेत्यधिदैवतम् ।

### भाष्यम्

**भगवतस्तु पक्षः समत्वमेव वाय्वाकाशयोरिति । आकाशस्य पितृत्वाद् वायोर्बलाधिकत्वाच्चोभयोरुपासनास्थानत्वे साम्यम् । तस्मादुभावपि ग्राह्यौ ।**

**त्वगिन्द्रियदेवतात्वेनाकाशात् पूर्वमेव वायोः सात्त्विकाहङ्कारजत्वाद् वायोराकाशाद्गुणाधिकत्वम्[१०] । तथाप्यत्र आकाशस्य पितृत्वं, व्याप्तिश्चाधिका इत्युपासनायां साम्यम् ।।**

### भावप्रदीपः

'समानं ह्येतद्भवति वायुश्च' इत्येतत्कस्य पक्ष इति न ज्ञायते । अतस्तत्कथयन्व्याचष्टे– **भगवतस्त्विति** ।। महिदसस्येत्यर्थः । समग्रोपनिषदोऽपि महिदासवाक्यत्वेन विशेषानुक्तेः सामान्याभ्यनुज्ञा-

१०. गुणाधिक्यं इति ह्.पाठः

पकत्वेन भगवत एवायं पक्ष इति ज्ञायत इति भावः । पितापुत्रयोः कथं साम्यमित्यतस्तदुपपादयति– **आकाशस्येति** ।। बलेति गुणान्तरस्याप्युपलक्षणम् । अस्त्वनयोरुक्तयुक्त्या साम्यम् । ततः किमित्यत आह– **तस्मादिति** ।। वायुसंहितात्वपक्ष आकाशसंहितात्वपक्षश्चेत्युभावपि पक्षौ ग्राह्यावित्यर्थः ।

आकाशवाय्वोरुक्तमेव साम्यं पुनः स्पष्टमुपपादयति– **त्वगिन्द्रियेति** ।। सात्विकाहंकारोपादानकत्वाद्देवतादेहानां त्वगिन्द्रियदेवताया वायोस्तामसाहंकारकार्यादाकाशात् पूर्वमेव जातत्वादादिसृष्टौ पूर्वोत्पन्नस्योत्तरतो गुणाधिक्यनियमादाकाशदेवतापेक्षया यद्यपि वायोर्गुणाधिक्यं, तथापि आकाशस्य भूतकोटौ पुनः सृष्टवाय्वपेक्षाया पूर्वजातस्य तत्पितृत्वाद्भूतवाय्वपेक्षया दशकुणव्याप्त्याधिक्याच्च संहितात्वेन विष्णूपासनायामुभयोस्साम्यमुपपन्नमेवेत्यर्थः ।।

शूरवीरमाण्डूकेय-तत्पुत्रपक्षयोः साम्यवैशम्यनिरूपणम्

**उपनिषत्**

**अथाध्यात्मम् । वाक्पूर्वरूपं, मन उत्तररूपं प्राणस्संहितेति शूरवीरो माण्डूकेयः ।**

**अथ हास्य पुत्र आह ज्येष्ठः । मनः पूर्वरूपम् । वागुत्तररूपम् । मनसा वा अग्रे सङ्कल्पयति । अथ वाचा व्याहरति । तस्मान्मन एव पूर्वरूपम् । वागुत्तररूपम् । प्राणस्त्वेव संहितेति । समानमेनयोरत्र पितुश्च पुत्रस्य च ।**

### भाष्यम्

**अत्र प्राणाख्यस्य प्राणे स्थितस्य विष्णोः संहितानामत्वे पितापुत्रयोः साम्यमेव । अन्यत्र तु पुत्रपक्ष एव बलीयान् । युक्तिमत्वात् ।।**

### भावप्रदीपः

'अध्यात्मं वाक् पूर्वरूपं' इत्यारभ्य 'समानमेनयोरत्र पितुश्च पुत्रस्य च' इत्यन्तस्य तात्पर्यमाह– **अत्रेत्यादिना** ।। अत्रेत्यनुवादः । तस्य विवरणं– **प्राणाख्यस्य प्राणे स्थितस्य विष्णोः संहितानामत्व इति** ।। विषयसप्तमीयम् । **पितापुत्रयोः** शूरवीरमांडूकेयस्य तज्ज्येष्ठपुत्रस्य च साम्यमेव । प्राणः संहितेति प्राणस्त्वेव संहितेति द्वाभ्यामप्युक्तत्वात् । **अन्यत्र** वाङ्मनसयोरन्योन्यपूर्वोत्तररूपत्वे तु नानयोस्साम्यम् । अपि तु पुत्रपक्ष एव बलीयान् । कुतः? **युक्तिमत्वात्** 'मनसा वा अग्रे संकल्पयत्यथ वाचा व्याहरति तस्मान्मन एव पूर्वरूपं वागुत्तररूपं' इति पुत्रेण स्वप्रतिज्ञातार्थे युक्तेरुपन्यस्तत्वादित्यर्थः ।।

देहस्य भगवद्रथत्ववर्णनम् तत्फलनिरूपणं च

### उपनिषत्

**स एषोऽश्वरथः प्रष्टिवाहनो मनोवाक्प्राणसंहतः । स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन । सर्वमायुरेतीति नु माण्डूकेयानाम् ।।३.१.१।।**

### प्रष्टिवाङ्मनशब्दार्थनिरूपणम्

### भाष्यम्

**मनोवाक्प्राणनामाऽसौ मन आदिषु संस्थितः ।**
**विष्णुस्तस्य रथो देह इन्द्रियाश्वः प्रकीर्तितः ।। इति च ।**

**प्रष्टिः स पृच्छनीयत्वात् परमात्मा जनार्दनः ।**
**वक्तृत्वाच्चैव वाङ्नामा मनो मन्तृत्वहेतुतः ।। इति च ।**

**'प्राणन्नेव प्राणो नाम भवति । वदन् वाक्पश्यंश्चक्षुः शृण्वन् श्रोत्रं मन्वानो मनस्तान्यस्यैव तानि कर्मनामान्येव'[११] इति च श्रुतिः ।**

### भावप्रदीपः

'स एषोऽश्वरथः प्रष्टिवाहनो मनो वाक् प्राणसंहतो' इत्येतदुक्तार्थम् । इन्द्रियाश्व इत्यनेनाश्वरथ इत्येतद्विवृतम् । इन्द्रियाख्याश्वसंबन्धी रथ इति । प्रष्टिवाहन इत्यत्र प्रष्टेर्वाहन इति विग्रहमभिप्रेत्य प्रष्टिशब्दार्थमाह– **प्रष्टिरिति** ।। प्रच्छ ज्ञीप्सायामिति धातोः कर्मणि क्तिन् । **मनआदिषु संस्थित** इति विष्णोर्मनोवाक्प्राणनामवाच्यत्वे रूढिः सूचिता । योगमपि दर्शयति– **वक्तृत्वादिति** ।। अत्र प्राणशब्दनिर्वचनस्योर्वरितत्वात्तद्दर्शयन् वाङ्मनःशब्दयोरुक्तार्थदार्ढ्यार्थं श्रुतिमेवोदाहरति– **प्राणन्नेवेति** ।। प्रकर्षेण चेष्टयन्नित्यर्थः । 'पश्यंश्चक्षुः शृण्वन् श्रोत्रं' इत्यनेन मनोवाक्प्राणसंहत इत्येतदुपलक्षणमित्यभिप्रैति ।।

---

११. बृह.उ. ३-५-१

उपसनायाः फलद्वैविध्यकथनम्

**भाष्यम्**

**मुक्तिरेव स्वर्गलोकः । 'अमुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वा' इति प्रस्तुतत्वात् ।**

**मुक्तः प्रकृष्टज्ञानैश्च वेदैर्विष्णूत्थतेजसा ।**
**नित्यायुषा च युक्तः स्यात् संहितारूपविद्धरेः ।। इति च ।**

**प्रकृष्टत्वेन जननात् प्रजेति ज्ञानम् । पान्ति शंसाधनाश्चेति पशवो वेदाः । परब्रह्मणो विष्णोर्वरणादेव सम्यक्चायितं स्वरूपं तेजः[१२] ब्रह्मवर्चसम् । लौकिकप्रजादिकमपि तदिच्छतां[१३] यथायोग्यं भवति । माण्डूकेयैर्ऋषिभिरुपाश्रिता एता विद्याः ।।३.१.१।।**

**भावप्रदीपः**

'स्वर्गेण लोकेन' इत्यत्र स्वर्गलोकशब्दार्थमाह– **मुक्तिरेवेति** ।। मुक्तिस्थानमेवेत्यर्थः । कुत इत्यत आह– **अमुष्मिन्निति** ।। तत्रापि स्वर्गलोक इति मुक्तिस्थानं कुत इत्यतः 'सर्वान् कामानाप्त्वा' इति शेषोदाहरणम् । न हि मुक्तिं विनाऽन्यत्र सर्वकामावाप्तिः संभवतीति ।

'स य एवमेतां' इति समग्रं फलवाक्यं प्रमाणेनैव व्याचष्टे– **मुक्त इति** ।। तत्र 'स्वर्गेण लेकेन सन्धीयते' इत्यस्यार्थो– **मुक्त इति** ।। प्रकृष्टज्ञानैरिति प्रजाशब्दार्थः । पशुभिरित्यस्य– **वेदैरिति** । विष्णूत्थतेजसेति ब्रह्मवर्चसशब्दार्थः । 'सर्वमायुरेति' इत्यस्यार्थो– **नित्यायुषेति** ।। 'स य एवमेतां संहितां वेद' इत्यस्यार्थो– **हरेः**

१२. स्वरूपतेजः इति ह.पाठः १३. तदिच्छूनां इति ह.पाठः

**संहितारूपविदिति** ।। प्रजादिशब्दानामुक्तार्थं निरुच्य दर्शयति– **प्रकृष्टत्वेनेति** ।। **जननात्** जननहेतुत्वात् । तथा च प्रकृष्टत्वेन जायतेऽनयेति व्युत्पत्तिरिति भावः । अथवा प्रकृष्टत्वेन जननान्नित्योदिततया स्थितत्वात्प्रजा ज्ञानमित्यर्थः । पान्ति स्वार्थज्ञातृनिति पाः, शंसाधनत्वात् शवः, शंशब्दपर्यायः शशब्दः सुखवाची । ततः उः, पाश्च ते शवश्चेति पशव इति । **ब्रह्मणः** परब्रह्मणो विष्णोः **वरणात्** प्रसादादेव सम्यक् **चायितं** उपचायितं वर्धितं यत्स्वरूपतेजस्तद्ब्रह्मवर्चसमित्युच्यते । यथोक्तं बृहद्भाष्ये[१४]–

अल्पतेजस्तथैवाल्पं जीवरूपं हि संसृतौ ।
तदेव सुमहत्तेजः करोतीशो महत्तदा ।। इति ।

नन्वेवं तर्हि प्रसिद्धप्रजादीच्छूनां तत्प्राप्तिर्न भवत्येव किं? इत्यत आह– **लौकिकेति** ।। इति नु मांडूकेयानामिति वाक्यं साकांक्षत्वात् किंचिदध्याहारेण व्याचष्टे– **मांडूकेयैरिति** ।। उपासिता इति षष्ठ्यर्थसंबन्धप्रदर्शनम् ।।

ततश्चायं खण्डार्थः । **अथेति** मङ्गलार्थे । द्वितीयप्रघट्टकप्रतिपाद्यनिरूपणान्तर्यार्थे च । विद्यान्तरप्रारंभार्थो वा । **अतः** महाफलसद्भावत् । **संहितायाः** विष्णुनामसंहितायास्तद्व्याख्यानभूतसर्ववैदिकशब्दसंहितायाः तदभिन्नलौकिकशब्दसंहितायाः । उपलक्षणमेतत् । तत्तत्संहितागतसर्ववर्णनां च । **उपनिषत्** रहस्यं भगवद्रूपवाचकत्वरूपम् । निरूप्यत इति शेषः ।

---

१४. ६-६-४

उपसनायाः फलद्वैविध्यकथनम्

भाष्यम्

**मुक्तिरेव स्वर्गलोकः । 'अमुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वा' इति प्रस्तुतत्वात् ।**

**मुक्तः प्रकृष्टज्ञानैश्च वेदैर्विष्णूत्थतेजसा ।**
**नित्यायुषा च युक्तः स्यात् संहितारूपविद्धरेः ।। इति च ।**

**प्रकृष्टत्वेन जननात् प्रजेति ज्ञानम् । पान्ति शंसाधनाश्चेति पशवो वेदाः । परब्रह्मणो विष्णोर्वरणादेव सम्यक्चायितं स्वरूपं तेजः[१२] ब्रह्मवर्चसम् । लौकिकप्रजादिकमपि तदिच्छतां[१३] यथायोग्यं भवति । माण्डूकेयैर्ऋषिभिरुपाश्रिता एता विद्याः ।।३.१.१।।**

भावप्रदीपः

'स्वर्गेण लोकेन' इत्यत्र स्वर्गलोकशब्दार्थमाह– **मुक्तिरेवेति** ।। मुक्तिस्थानमेवेत्यर्थः । कुत इत्यत आह– **अमुष्मिन्निति** ।। तत्रापि स्वर्गलोक इति मुक्तिस्थानं कुत इत्यतः 'सर्वान् कामानाप्त्वा' इति शेषोदाहरणम् । न हि मुक्तिं विनाऽन्यत्र सर्वकामावाप्तिः संभवतीति ।

'स य एवमेतां' इति समग्रं फलवाक्यं प्रमाणेनैव व्याचष्टे– **मुक्त इति** ।। तत्र 'स्वर्गेण लेकेन सन्धीयते' इत्यस्यार्थो– **मुक्त इति** ।। प्रकृष्टज्ञानैरिति प्रजाशब्दार्थः । पशुभिरित्यस्य– **वेदैरिति** । विष्णूत्थतेजसेति ब्रह्मवर्चसशब्दार्थः । 'सर्वमायुरेति' इत्यस्यार्थो– **नित्यायुषेति** ।। 'स य एवमेतां संहितां वेद' इत्यस्यार्थो– **हरेः**

---

१२. स्वरूपतेजः इति ह.पाठः १३. तदिच्छूनां इति ह.पाठः

**संहितारूपविदिति** ।। प्रजादिशब्दानामुक्तार्थं निरुच्य दर्शयति– **प्रकृष्टत्वेनेति** ।। **जननात्** जननहेतुत्वात् । तथा च प्रकृष्टत्वेन जायतेऽनयेति व्युत्पत्तिरिति भावः । अथवा प्रकृष्टत्वेन जननान्नित्योदिततया स्थितत्वात्प्रजा ज्ञानमित्यर्थः । पान्ति स्वार्थज्ञातृनिति पाः, शंसाधनत्वात् शवः, शंशब्दपर्यायः शशब्दः सुखवाची । ततः उः, पाश्च ते शवश्चेति पशव इति । **ब्रह्मणः** परब्रह्मणो विष्णोः **वरणात्** प्रसादादेव सम्यक् **चायितं** उपचायितं वर्धितं यत्स्वरूपतेजस्तद्ब्रह्मवर्चसमित्युच्यते । यथोक्तं बृहद्भाष्ये[१४]–

अल्पतेजस्तथैवाल्पं जीवरूपं हि संसृतौ ।
तदेव सुमहत्तेजः करोतीशो महत्तदा ।। इति ।

नन्वेवं तर्हि प्रसिद्धप्रजादीच्छूनां तत्प्राप्तिर्न भवत्येव किं? इत्यत आह– **लौकिकेति** ।। इति नु मांडूकेयानामिति वाक्यं साकांक्षत्वात् किंचिदध्याहारेण व्याचष्टे– **मांडूकेयैरिति** ।। उपासिता इति षष्ठ्यर्थसंबन्धप्रदर्शनम् ।।

ततश्चायं खण्डार्थः । **अथेति** मङ्गलार्थे । द्वितीयप्रघट्टकप्रतिपाद्यनिरूपणान्तर्यार्थे च । विद्यान्तरप्रारंभार्थो वा । **अतः** महाफलसद्भावत् । **संहितायाः** विष्णुनामसंहितायास्तद्व्याख्यानभूतसर्ववैदिकशब्दसंहितायाः तदभिन्नलौकिकशब्दसंहितायाः । उपलक्षणमेतत् । तत्तत्संहितागतसर्ववर्णनां च । **उपनिषत्** रहस्यं भगवद्रूपवाचकत्वरूपम् । निरूप्यत इति शेषः ।

---

१४. ६-६-४

पृथुत्वात्पृथिवीनामकं पृथवीसंस्थं[१५] हरे रूपं **पूर्वरूपं** पूर्ववर्ण-देवता । क्रीडनात् द्युनामकं द्युस्थितं हरे रूपं **उत्तररूपं** उत्तर-वर्णदेवता । **वायुः** वेदकत्वात् अयनत्वाच्च वायुनामकं रूपं **संहिता** वर्णयोर्मध्यदेवता । पूर्वोत्तरवर्णदेवताभूतरूपद्वयसंहितात्वात् संहिता-नामकं चेति मांडूकेयो नाम ऋषिराह ।

**आकाशः** आसमन्तात् काशनात् इत्याकाशनामा आकाशस्थो भगवान् **संहिता** वर्णयोर्मध्यदेवतेति माक्षव्यो नाम ऋषिः **अस्य वेदयांचक्रे** एनं मांडूकेयं प्रति बोधयामास । **सः** मांडूकेयस्तेन माक्ष-व्येण **अविपरिहृतो**ऽपरिहृतो न निराकृतः स्वपक्ष इति मेने । कथं न निराकृतः? **मे** मदीयेन मदुपासितेना**स्या**काशस्य **पुत्रेण** वायुनाऽसौ माक्षव्यो **न समगात्** सङ्गतो नाभूत् । वायुस्थंविष्ण्वनुपासनात् । न हि वायुःसंहितेत्यनुपासनमात्रेण वायुस्थस्य संहितादेवतात्वं तेन निराकृतं भवति **इति** हेतोर्न मत्पक्षोऽनेन निराकृत इति मेन इति पूर्वेणान्वयः । स्वोक्तं पक्षं परित्यज्य पक्षान्तरमवलम्बमानेन माक्ष-व्येण निराकृतप्राय एवायं पक्ष इत्यत आह– **समाने वै तदिति ॥ तत्** ते उपासने **समाने** अविरुद्धे वै । आकास्थवायुस्थयोरुभयोरपि रूपयोः संहितादेवतात्वोपपत्तेरिरिति भवः । प्रकारान्तरेणानयोर्मतयोः साम्यमभिप्रेत्य तत्राकाशसंहितात्वपक्ष एव बलवानिति पूर्वपक्षं तावदगस्त्यमतानुसारेणोत्थापयति– **परिहृतो मेन इत्यागस्त्य इति ॥** माण्डूकेयपक्षोऽनेन माक्षव्येण परिहृत एवेत्यहं **मेने** मन्य इत्यागस्त्य आह । एवं मन्तुरागस्त्यस्यायमभिसन्धिः । आकशो हि वायोः पिता ।

---

१५. पृथिवीस्थितं इति 'ख'पाठः

'आकाशाद्वायुः'[१६] इति श्रुतेः । पिता च पुत्रादुत्तमः । अत आकाश एव विष्णूपासनमधिकफलं न वायाविति ।

एवं पूर्वपक्षयित्वा भगवान् स्वसिद्धान्तमाह– **समानमिति** ।। **एतत्** वायुराकाशश्चेति द्वयं समानं ह्येव भवति । त्वगिन्द्रियदेवतात्वेनाकाशदेवताविनायकोत्पत्तेः पूर्वमेव वैकारिकाहङ्कारजातत्वात् वायोराकाशाद्गुणाधिक्येऽपि भूतकोटौ पुनराकाशादेव वायोरुत्पन्नत्वादाकाशस्य वायुपितृत्वात् तदपेक्षया दशगुणव्यस्याधिक्याच्चोभयोरुपासनास्थानत्वेन साम्याङ्गीकारोपपत्तेः । अत उभावपि पक्षौ ग्राह्यावेति भावः । इत्यधिदैवतम् । संहिताया उपनिषन्निरूपितेति शेषः ।

अध्यात्मं, सा निरूप्यत इति शेषः । **वाक्** वाचि स्थितं वक्तृत्वाद्वाङ्नामकं भगवद्रूपं **पूर्वरूपं** पूर्ववर्णप्रतिपाद्यम् । मन्त्रत्वान्मनोनामकं मनःस्थितं रूपं **उत्तररूपं** उत्तरवर्णप्रतिपाद्यम् । **प्राणः** प्राणनात् प्राणनामा प्राणस्थितो भगवान् **संहिता** सन्धिदेवतेति शूरवीरो मांडूकेयो मन्यते । अत्र **वाक्** वागिन्द्रियं **पूर्वरूपं** प्रधानं **मनो** अन्तःकरणं **उत्तररूपं** अप्रधानमित्यर्थान्तरमपि विवक्षितं बोध्यम् ।

अथेति पक्षान्तरे । **अस्य** शूरवीरमांडूकेयस्य ज्येष्ठः पुत्र आह । किमिति? **मनःपूर्वरूपं वागुत्तररूपमिति** । अत्रापि पूर्ववदर्थद्वयं विवक्षितम् । तत्रास्तु पूर्वोत्तरवरवर्णदेवतयोः पूर्वमतव्युत्क्रमः । उभयोरप्युभयदेवतात्वोपपत्तेः । जडयोर्वाङ्मनसयोरिन्द्रिययोर्गुणप्रधानभावे पूर्वमतव्यत्यासः कुतः इत्यत आह– **मनसेति** ।। मनसा वा **अग्रे** प्रथमतः संकल्पयति, अथ वाचा व्याहरति । तस्मान्मन एव

---

१६. तै.उ. २-३

**पूर्वरूपं** प्रधानं वागिन्द्रियं च **उत्तरं** अप्रधानमित्यर्थः । संहिताविषये तु नैवं विप्रतिपत्तिरस्तीत्याह– **प्राणस्त्वेव संहितेति** ।। पूर्ववदेव व्याख्यानम् । अत्रापि मतद्वये किमुभयोः साम्यमुतैकस्य प्राबल्य-मन्यस्य दौर्बल्यमित्यतः स्वयं भगवानाह– **समानमिति** ।। **अत्र** प्राणाख्यस्य प्राणे स्थितस्य विष्णोः संहितानामकत्वे पितुश्च पुत्रस्य चेत्येतयोः **समानं** समानत्वमेव । उभाभ्यामपि प्राणसंहितात्वाङ्गी-कारात् । वाङ्मनसयोरन्योन्यपूर्वोत्तररूपत्वविषये तु पुत्रपक्ष एव बलीयान् । 'मनसा वा अग्रे संकल्पयती'ति युक्तेरुपन्यस्तत्वादिति वाक्यशेषः ।

अध्यात्मं संहितोपनिषत्कथनप्रसङ्गाद्देहस्य विष्णुरथत्वमप्यनुसन्धेयं सर्वदाऽध्यात्मप्रवणेन इत्यभिप्रेत्याह– **स एष इति** ।। अश्वयुक्त-श्चासौ रथश्चेत्यश्वरथ इति मध्यमपदलोपीसमासः । **स एष** देहाख्यो रथ इन्द्रियाख्याश्वयुक्त इत्यर्थः । पृच्छनीयत्वात् **प्रष्टिः** परमात्मा तस्य **वाहनो** वाहकः । **मनोवाक्प्राणसंहतः** मनआदिस्थित मन-आदिनामकभगवता संहतः संबद्धश्चेत्यर्थः । एतद्विद्यावेत्तुः फलमाह– **स य इति** ।। **यः** उपासक **एवमुक्तप्रकारेण एतां संहितां** संहिता-नामकं भगवन्तं वेद स **स्वर्गेण लोकेन** वैकुंठादिमुक्तिस्थानेन सन्धीयते । मुक्तो भवतीति यावत् । तत्र च **प्रजया** प्रकृष्टज्ञानेन **पशुभिर्वेदैः यशसा** ब्रह्मवर्चसेन विष्णुप्रसादात्सम्यगुपचायितस्वरूप–तेजसा च सन्धीयते । **सर्वं** नित्यमायुश्च **एति** प्राप्नोति । लौकिक-प्रजादीच्छुश्चेत्तादृशप्रजादीनापि यथायोग्यं सन्धीयते सर्वं पूर्णमायुश्चै-तीत्यपि व्याख्येयम् । **इति नु** एवं हि मांडूकेयानां संबन्धिन्य-स्तदुपासिता विद्या इति शेषः ।।३.१.१।।

अधिदैवे शाकल्यमुनेरुपासनम्

### उपनिषत्

**अथ शाकल्यस्य । पृथिवी पूर्वरूपम् । द्यौरुत्तररूपम् । वृष्टिः सन्धिः । पर्जन्यः सन्धाता । तदुतापि यत्रैतद्बलवदनुद्बल्हन् सन्दधदहोरात्रे वर्षति । द्यावापृथिव्यौ समधातामित्युताप्याहुरिति न्वधिदैवतम् ।**

शाकल्योपासितसन्धिगतभगवद्रूपकथनम्

### भाष्यम्

वराहो वामनः सिंह इति रूपत्रयं हरेः ।
पूर्वोत्तरार्णमध्येषु स्थितमुक्तं सनातनम् ।।

माण्डूकेयैर्हि शाकल्यो वासुदेवादिरूपिणम् ।
तेषु चोच्चारके चैव स्थितमाह चतुर्विधम् ।
भूमिद्युवृष्टिपर्जन्यनाम्नोर्व्यादिषु संस्थितम् ।।

### भावप्रदीपः

'अथ शाकल्यस्य' इत्यादिखण्डं वासुदेवादिचतुर्मूर्तिपरत्वेन व्याख्यास्यन् पूर्वखण्डोक्तं पूर्वरूपोत्तररूपसंहितानामकं रूपत्रयं (किं नामधेयकं)[१७] किमित्याकांक्षां तावत्सिंहावलोकनेन परिहरति– **वराह इति** ।। **सिंहो** नारसिंहः । मांडूकेयैर्ऋषिभिरुक्तमिति संबन्धः । 'अथ शाकल्यस्य' इत्यादेर्थः– **शाकल्य इति** । भूम्यादिनाम्ना य उर्व्यादिषु चतुर्षु स्थितस्तं वासुदेवादिरूपिणं चतुर्विधं हरिं **तेषु**

१७. ()एतच्चिह्नस्था पंक्तिः 'क'पाठे नास्ति

त्यर्थः । तथा च 'तस्येदमेव पृथिव्या रूपमिदं दिवः' इत्यनन्तरं 'वागेव वृष्टेरात्मा पर्जन्यस्ये'त्यपि ग्राह्यमित्युक्तं भवति । 'तत्रायमन्तरेणाकाशः' इत्यादिकं व्याचष्टे– **आकाशस्येति** ।। **आकाशस्य** आकाशदेवताया **अन्तराकाशे** हृदयाकाशे संस्थितिं अत्रान्तराकाशस्थिताकाशदेवतायां नृसिंहस्य संस्थितिं चाहेत्यन्वयः । 'तस्मिन् हास्मिन्नाकाशे प्राण आयत्तः' इत्यादिव्याचष्टे– **वायोरिति** ।। **तत्र** वाय्वात्मके प्राणे । 'यथाऽमूनि त्रिणि ज्योतींषि' इत्यादेरर्थमाह– **सूर्येति** ।। सूर्यस्य **दृशि** चक्षुषि । विद्युतो देवताया हृदि, **हुताशस्य** अग्रे रेतसि स्थितिमिति क्रमेणान्वयः । **तेषु** सूर्यविद्युद्धुताशेषु कपिलादीनां क्रमेण स्थितिं वदति शाकल्य इति संबन्धः । 'स य एवमेतां संहितां' इत्यादिफलवाक्यतात्पर्यमाह– **विद्येयमिति** ।। प्रागुक्तमांडूकेयविद्यासमुच्चयार्थोऽपिशब्दः ।।

### वृष्टि-पर्जन्य-सन्धीत्यादिशब्दनिर्वचनपुरःसरं तच्छब्दानां भगवत्परत्वकथनम्

### भाष्यम्

**वर्षणाद् वृष्टिः । परं जनयतीति पर्जन्यनामा विष्णुः । सन्धिनोतीति सन्धिः । धिनु पुष्टाविति धातुः । सम्यग्धारणात् सन्धाता । वर्षणमेव द्यावापृथिव्योः सन्धानम् । पर्जन्यस्थो भगवांस्तु तत्कर्ता**[२०] ।।३.१.२।।

### भावप्रदीपः

पृथुत्वात् पृथिवी, क्रीडनात् द्यौरिति पृथिवीद्युशब्दयोर्निरुक्तत्वाद-

२०. भगवांस्तत्कर्ता इति ह.पाठः

निरुक्तवृष्ट्यादिशब्दान् भगवति निर्वक्ति– **वर्षणादिति** ।। **परं** सस्यादिकम् । जनयतीत्यनेन जनेरन्तर्णीतण्यर्थाद्यग् इत्युक्तं भवति । अथावा परं जन्यं यस्येति बहुव्रीहिलब्दार्थप्रदर्शनमिदम् । कथं वृष्टेस्संन्धित्वं पर्जन्यस्य च सन्धातृत्वमित्यतस्तदुपपादनाय प्रवृत्तस्य 'तदुतापि यत्रैतत्' इति वाक्यस्य तात्पर्यमाह– **वर्षणमेवेति** ।। **सन्धानं** संबन्धरूपम् । **पर्जन्यस्थेति** ।। **पर्जन्यो** मेघचक्राभिमानी देवस्तत्स्थ इत्यर्थः ।।

ततश्चायं खंडार्थः । **अथ** मांडूकेयोपासितविद्यानिरूपणानन्तरं **शाकल्यस्य** शाकल्यसंबन्धिनी तदुपासिता विद्या निरूप्यत इति शेषः । **पृथिवी** पृथिवीस्थितं पृथिवीनामकं वासुदेवाख्यं रूपं **पूर्वरूपं** पूर्ववर्णप्रतिपाद्यम् । **द्यौस्त**न्नामकं द्युस्थितं संकर्षणाख्यं रूपं **उत्तररूपं** उत्तरवर्णप्रतिपाद्यम् । **वृष्टिः** वर्षणाद्वृष्टिनामकं वृष्टिस्थितं प्रद्युम्नाख्यं रूपं **सन्धिः** संहितादेवता, सन्धिनोति सम्यक् पुष्णाति स्वभक्तानिति सन्धिनामकं च । **पर्जन्यः** परसस्यादिजनकत्वात् पर्जन्यनामा पर्जन्यस्थो भगवाननिरुद्धः **सन्धाता** सम्यग्धारणात्सन्धातृ-नमकोच्चारयितृपरुषस्थः स्वयं च सम्यग्धारणात् द्यावापृथिव्यो-र्वृष्टिरूपसन्धानकर्तृत्वाच्च सन्धातृनामेत्यर्थः । वृष्टेः सन्धित्वं पर्जन्यस्य सन्धातृत्वं च कुत इत्यतो लोकव्यवहारसिद्धत्वादित्याह– **तदुतापीति** ।। **तदुत** तच्च वृष्टेः सन्धित्वं पर्जन्यस्य सन्धातृत्वं च **अपि** संभावितमेव । कुतः **यत्र** यदा **एतत्** एष पर्जन्यो बलवद्यथाभवति तथा **अनूत्** **अगृह्णन्** अनुकूलतयोच्चैर्गृह्णन् सामुद्रोदकं स्वोदरे स्वीकुर्वन्नहोरात्रे **सन्धदत्** अभिव्याप्य वर्षति । तदा द्यावापृथिव्यौ समधातामिति । **उतापि** अद्यापि जना आहुरित्यर्थः । **इति नु** एवं प्रकारेण हि अधिदैवतं निरूपितम् ।।

त्यर्थः । तथा च 'तस्येदमेव पृथिव्या रूपमिदं दिवः' इत्यनन्तरं 'वागेव वृष्टेरात्मा पर्जन्यस्ये'त्यपि ग्राह्यमित्युक्तं भवति । 'तत्रायमन्तरेणाकाशः' इत्यादिकं व्याचष्टे– **आकाशस्येति** ।। **आकाशस्य** आकाशदेवताया **अन्तराकाशे** हृदयाकाशे संस्थितिं अत्रान्तराकाशस्थिताकाशदेवतायां नृसिंहस्य संस्थितिं चाहेत्यन्वयः । 'तस्मिन् हास्मिन्नाकाशे प्राण आयत्तः' इत्यादिव्याचष्टे– **वायोरिति** ।। **तत्र** वाय्वात्मके प्राणे । 'यथाऽमूनि त्रिणि ज्योतींषि' इत्यादेरर्थमाह– **सूर्येति** ।। सूर्यस्य **दृशि** चक्षुषि । विद्युतो देवताया हृदि, **हुताशस्य** अग्ने रेतसि स्थितिमिति क्रमेणान्वयः । **तेषु** सूर्यविद्युद्धुताशेषु कपिलादीनां क्रमेण स्थितिं वदति शाकल्य इति संबन्धः । 'स य एवमेतां संहितां' इत्यादिफलवाक्यतात्पर्यमाह– **विद्येयमिति** ।। प्रागुक्तमांडूकेयविद्यासमुच्चयार्थोऽपिशब्दः ।।

### वृष्टि-पर्जन्य-सन्धीत्यादिशब्दनिर्वचनपुरःसरं तच्छब्दानां भगवत्परत्वकथनम्

### भाष्यम्

**वर्षणाद् वृष्टिः । परं जनयतीति पर्जन्यनामा विष्णुः । सन्धिनोतीति सन्धिः । धिनु पुष्टाविति धातुः । सम्यग्धारणात् सन्धाता । वर्षणमेव द्यावापृथिव्योः सन्धानम् । पर्जन्यस्थो भगवांस्तु तत्कर्ता[२०] ।।३.१.२।।**

### भावप्रदीपः

पृथुत्वात् पृथिवी, क्रीडनात् द्यौरिति पृथिवीद्युशब्दयोर्निरुक्तत्वाद-

२०. भगवांस्तत्कर्ता इति ह.पाठः

निरुक्तवृष्ट्यादिशब्दान् भगवति निर्वक्ति– **वर्षणादिति** ।। **परं** सस्यादिकम् । जनयतीत्यनेन जनेरन्तर्णीतण्यर्थाद्यग् इत्युक्तं भवति । अथावा परं जन्यं यस्येति बहुव्रीहिलब्धार्थप्रदर्शनमिदम् । कथं वृष्टेस्संन्धित्वं पर्जन्यस्य च सन्धातृत्वमित्यतस्तदुपपादनाय प्रवृत्तस्य 'तदुतापि यत्रैतत्' इति वाक्यस्य तात्पर्यमाह– **वर्षणमेवेति** ।। **सन्धानं** संबन्धरूपम् । **पर्जन्यस्थेति** ।। **पर्जन्यो** मेघचक्राभिमानी देवस्तत्स्थ इत्यर्थः ।।

ततश्चायं खंडार्थः । **अथ** मांडूकेयोपासितविद्यानिरूपणानन्तरं **शाकल्यस्य** शाकल्यसंबन्धिनी तदुपासिता विद्या निरूप्यत इति शेषः । **पृथिवी** पृथिवीस्थितं पृथिवीनामकं वासुदेवाख्यं रूपं **पूर्वरूपं** पूर्ववर्णप्रतिपाद्यम् । **द्यौस्त**न्नामकं द्युस्थितं संकर्षणाख्यं रूपं **उत्तररूपं** उत्तरवर्णप्रतिपाद्यम् । **वृष्टिः** वर्षणाद्वृष्टिनामकं वृष्टिस्थितं प्रद्युम्नाख्यं रूपं **सन्धिः** संहितादेवता, सन्धिनोति सम्यक् पुष्णाति स्वभक्तानिति सन्धिनामकं च । **पर्जन्यः** परसस्यादिजनकत्वात् पर्जन्यनामा पर्जन्यस्थो भगवाननिरुद्धः **सन्धाता** सम्यग्धारणात्सन्धातृ-नमकोच्चारयितृपरुषस्थः स्वयं च सम्यग्धारणात् द्यावापृथिव्यो-र्वृष्टिरूपसन्धानकर्तृत्वाच्च सन्धातृनामेत्यर्थः । वृष्टेः सन्धित्वं पर्जन्यस्य सन्धातृत्वं च कुत इत्यतो लोकव्यवहारसिद्धत्वादित्याह– **तदुतापीति** ।। **तदुत** तच्च वृष्टेः सन्धित्वं पर्जन्यस्य सन्धातृत्वं च **अपि** संभावितमेव । कुतः **यत्र** यदा **एतत्** एष पर्जन्यो बलवद्यथाभवति तथा **अनूत् अगृह्णन्** अनुकूलतयोच्चैर्गृह्णन् सामुद्रोदकं स्वोदरे स्वीकुर्वन्नहोरात्रे **सन्धदत्** अभिव्याप्य वर्षति । तदा द्यावापृथिव्यौ समधातामिति । **उतापि** अद्यापि जना आहुरित्यर्थः । **इति नु** एवं प्रकारेण हि अधिदैवतं निरूपितम् ।।

अथाध्यात्मं निरूप्यते । **अयं सर्वः पुरुषः** समग्रः पुरुषदेह **आन्दं** एकोऽवयवी । तस्य देहस्य **द्वे विदले** विभागौ भवत इत्याहुः । **तस्य** देहस्य **इदमेव** अधरार्धमेव **पृथिव्या रूपं** पृथिवीप्रतिनिधिरिति यावत् । अधोभागस्थितत्वात् । **पृथिव्याः** पृथिवीदेवतायाः प्रतिमारूपं च । **इदं** उत्तरार्धं **दिवः**, रूपमिति वर्तते । दिवः प्रतिनिधिरिति यावत् । ऊर्ध्वभागस्थितत्वात् । दिवो द्युदेवतायाः प्रतिमारूपं च । अत्र वागेव वृष्टेः आत्मा पर्जन्यस्येत्यपि ग्राह्यम् । अस्मिन्नुत्तरार्धे **वागेव वष्टे रूपं** वृष्टिप्रतिनिधिः वृष्टिदेवतायाः प्रतिमा च । **आत्मा** उच्चारक जीवः पर्जन्यस्य **रूपं** प्रतिनिधिः प्रतिमा चेत्यर्थः । अत्र पृथिवीद्युवृष्टिपर्जन्यशब्दैर्वासुदेवादिरूपचतुष्टयं च क्रमेण तत्तदन्तर्गतं मुख्यतो वाच्यं बोध्यम् ।

अथ देहस्योक्तं पृथिवीद्युसाम्यं सामस्त्येनोपपादयति– **तत्रेति ।। तत्र** देहे योऽयं **अन्तरेण** पूर्वोत्तरार्धयोर्मध्ये आकाशो वर्तते सोऽयं **द्यावापृथिव्यावन्तरेण** तयोर्मध्ये वर्तमान आकाशो यथा तथा तत्प्रतिनिधिर्ज्ञेयः । बहिराकाशदेवताधिष्ठानत्वात्तदन्तर्गतनृसिंहरूपाधिष्ठानत्वाच्च तद्वदेव ज्ञेयः । किञ्च **तस्मिन्** प्रसिद्धेऽ**स्मिन्नाकाशे** अन्तराकाशे **प्राण आयत्तो**ऽधिष्ठितो ह । हास्मिन्निति भवितव्ये सवर्णदीर्घलोपश्छान्दसः । स च प्राणो**ऽस्मिन्** बहिराकाशे यथा वायुः **आयत्तो**ऽधिष्ठितस्तथा ज्ञेयः । तयोरैक्यात् । वायुस्थितदाशरथिरूपाधिष्ठानत्वाच्च । अपि चा**मूनि** बहिःस्थितानि त्रीणि रूपाणि ज्योतींषि यथा एवं **पुरुषे** पुरुषदेहेऽपि इमानि त्रीणि ज्योतींषि सन्निहितानि । कान्यमूनि त्रीणि ज्योतींषि कानि चेमानीत्यतो विविच्य दर्शयति– **यथेति ।। यथा दिव्यसावादित्य** आदित्याख्यं ज्योतिरेवं

पुरुषदेहे शिरसि **इदं चक्षुस्तदाख्यं** ज्योतिः । चक्षुष आदत्याधिष्ठानत्वादादित्याधिष्ठातृकपिलाधिष्ठानत्वाच्च तयोस्साम्यं बोध्यम् । यथा चान्तरिक्षेऽसौ विद्युत् एवं **आत्मनि** देहे **इदं हृदयं** हृदयाख्यं ज्योतिर्ज्ञेयम् । हृदयस्य विद्युद्देवताधिष्ठानत्वाद्विद्युदधिष्ठातृहंसरूपाधिष्ठानत्वाच्च तयोस्साम्यम् । यथा पृथिव्यामयमग्निरेवमपुस्थे इदं रेतःआख्यं ज्योतिः । रेतसोऽग्न्यधिष्ठातृत्वात्[२१] तदधिष्ठातृपरशुरामाधिष्ठानत्वाच्च । एवमुक्तप्रकारेण **सर्वलोकं** लोकत्रयरूपं **आत्मानं** पुरुषदेहमेव **अनुविधाय** अनुसन्धायाह शाकल्यः । किमिति? **इदमेव पृथिव्या रूपमिदं दिव इति** । स य एवमेवतामित्यादि पूर्ववदेव ।।३.१.२।।

संहिताध्ययनकर्तुः निन्दा नोचिता

उपनिषत्

**अथातो निर्भुजप्रवादाः । पृथिव्यायतनं निर्भुजम् । दिव्यायतनं प्रतृण्णम् । अन्तरिक्षायतनमुभयमन्तरेण । अथ यद्येनं निर्भुजं ब्रुवन्तमुपवदेत् अच्योष्ठाऽवराभ्यां स्थानाभ्यामित्येनं ब्रूयात् ।**

**अथ यद्येनं प्रतृण्णं ब्रुवन्तमुपवदेत् अच्योष्ठा उत्तराभ्यां स्थानाभ्यामित्येनं ब्रूयात् । यस्त्वेवोभयमन्तरेणाह तस्य नास्त्युपवादः ।**

---

२१. अग्न्याधिष्ठानत्वात् इति 'ख'पाठः

## संहितापदक्रमादिदेवताकथनम्

### भाष्यम्

**पृथिवीस्थो वराहस्तु संहितादेवतोदिता ।**
**दिविष्ठो वामनश्चैव सम्प्रोक्तः पददेवता ॥**

**नृसिंहस्त्वन्तरिक्षस्थो भगवान् क्रमदेवता ।**
**स्वाध्यायमेवं ध्यात्वा यः करोत्युपवदेन्न[२२] तम् ॥**

**तस्यापवदिता याति त्रैलोक्यादध एव हि ।**
**नाशमाप्नोति निरये तस्मादपवदेन्न तम् ॥**

**गच्छस्यध इति ब्रूयादन्यं ब्राह्मणतस्तथा ।**
**ब्रह्मप्राप्तेर्हि योग्यो यो ब्राह्मणः स न चेतरः ॥ इति च ॥**

### भावप्रदीपः

'अथातो निर्भुजप्रवादाः' इति खंडं व्याचष्टे– **पृथिवीस्थ इत्यादिना** ॥ तत्र 'पृथिव्यायतनं निर्भुजः' इत्यादेर्व्याख्या– **पृथिवीस्थ इति**[२३] । एतेन पृथिवीद्यन्तरिक्षपदानि तत्स्थवराहवामननृसिंहरूपवाचकानि । निर्भुजप्रतृण्वोभयमन्तरेणपदानि च संहितापदक्रमवाचीनीत्युक्तं भवति । 'अथ यद्येनं निर्भुजं ब्रुवन्तमुपवदेत्' इत्यादेस्तात्पर्यमाह– **स्वाध्यायमिति** ॥ कुतो नापवदेदित्यत आह– **तस्येति** ॥ अधो यानेऽपि किं बाधकमित्यतस्तदेव दर्शयति– **नाशमिति** ॥ दुःखाद्यनर्थमित्यर्थः । निगमयति– **तस्मादिति** ॥ 'न त्वेवान्यत्कुशलात् ब्राह्मणं ब्रूयात्' इत्यादेस्तात्पर्यमाह– **गच्छस्यध इति** ॥ अन्येषां

---

२२. अपवदेन्न इति ह.पाठः २३. पृथिवीस्थ इत्यादीति 'ख'पाठः

प्रायः संहितापदादिज्ञानस्यैवाभात् तदध्येतृनिन्दनस्य दूरोत्सारितत्वेन तज्ज्ञानवतां ब्राह्मणानामेवेदं संहिताद्यध्येतृनिन्दनादिकं संभावितम् । तथा च गच्छस्यध इत्युक्तेर्यदि ब्राह्मणो न विषयस्स्यात् तर्हि निर्विषयतैवापन्ना । अन्यस्मिन्निन्दनादेरसंभावितत्वादित्यतोऽत्र विवक्षितं ब्राह्मणशब्दार्थमाह– **ब्रह्मप्राप्तेरिति** ।। ब्रह्माणनयोग्य एव हि ब्राह्मणो नेतरो ब्राह्मणजातिमात्रोत्पन्नः । अतो ब्राह्मणकुलोत्पन्ना अपि केचनायोग्यास्सन्त्येव । तेषां च संहितादिज्ञानसत्वेन तदध्येतृनिन्दनं संभावितमेवेति स एव ब्राह्मणादन्यः प्रकृतेऽपि विवक्षित इति भावः ।।

### संहितातादीनां निर्भुजादिशब्दवाच्यत्वकथनम्

### भाष्यम्

**भञ्जनवर्जितत्वान्निर्भुजं संहिता । तृण[२४] च्छेदन इति धातोः प्रतृण्णं पदम् । उभयमन्तरेण क्रमः । निर्भुजमूलत्वात् पदादीनां तद्विषयप्रवादा अपि निर्भुजप्रवादा इत्येवोच्यन्ते ।**

### भावप्रदीपः

संहितादीनां निर्भुजादिशब्दाभिधेयत्वं कथमित्यतो निरुच्य दर्शयति– **भञ्जनेति** ।। निरुपपदाद्भंज आमर्दने इत्यतोऽच् । अनुस्वारलोपः अकारस्योत्वं च । उभयमन्तरेण वर्तमानो योऽसौ क्रम इत्यर्थः । केवलसंहितारूपो वा केवलपदरूपो वा न भवति । किन्तु उभयमिश्र एवेति यावत् । नन्वेवं तर्हि निर्भुजप्रवादा इत्युपक्रमः कथं सङ्गच्छते । न हि पदक्रमप्रवादावपि निर्भुजसंबन्धिनावित्यत आह– **निर्भुजेति** ।।

---

२४. तृणु इति ह.पाठः

क्रमाध्ययनकर्तुः निन्दा बह्वनर्थकरी

भाष्यम्

पृथिवीस्थितपृथिवीनामकविष्ण्वायतनं पृथिव्यायतनमित्यादि । अवराभ्यां पृथिव्यन्तरिक्षाभ्यां च्युतोऽसीति । उत्तराभ्यामन्तरिक्षद्युभ्याम् ।

क्रमस्वाध्यायकृद्यस्तं विशेषेण न निन्दयेत् ।
लोकत्रयादपि भ्रष्टो यस्मात् तन्निन्दको भवेत् ।। इति च ।

तस्मादतिदुष्टत्वात् तन्निन्दको नास्त्येवेत्युक्तं तस्य नास्त्युपवाद इति । 'तं कृष्णं पुण्डरीकाक्षं को नु युध्येत बुद्धिमान्' इत्यादिवत् ।

भावप्रदीपः

ननु निर्भुजादीनां पृथिव्यादिलोकत्रयायतनत्वस्यैव मूले प्रतीयमानत्वात् वराहादिदेवताकत्वेन कथं व्याख्यानमुपपद्यत इत्यतः पृथिवीस्थ इत्यादिविशेषणैः सूचितामेवोपपत्तिं स्पष्टयति– **पृथिवीस्थितेति** ।। आदिपदेन दिविस्थितद्युनामकविष्ण्वायतनं दिव्यायतनमन्तरिक्षस्थितान्तरिक्षनामकविष्ण्वायतनं अन्तरिक्षायतनमित्यस्य सङ्ग्रहः । 'अच्योष्ठा अवराभ्यां स्थानाभ्यामच्योष्ठा उत्तराभ्यां स्थानाभ्यां' इति मूले स्थानचतुष्टयभ्रंशोऽभिधीयते । तत्कथं 'तस्यापवदिता याति त्रैलोक्यादध एव हि' इति लोकत्रयभ्रंश एव भाष्ये कथित इत्यतस्ते वाक्ये यथावद्व्याचष्टे– **अवराभ्यामिति** ।। एकस्यैवान्तरिक्षस्य द्व्यपेक्षयाऽवरत्वस्य पृथिव्यपेक्षयोत्तरत्वस्य च विवक्षितत्वान्न स्थानचतुष्टयापत्तिरिति भावः । 'यस्त्वेवोभयमन्तरेणाह तस्य नास्त्युपवादः' इति क्रमस्वाध्यायकर्तृनिन्दैव लोके नास्तीत्युच्यते, तत्कथं

युज्यते । तन्निन्दनस्यापि लोके दर्शनात् । 'तस्यापवदिता याति त्रैलोक्यादध एव हि' इत्युक्तत्वाच्चेत्यतस्तुदुक्तेः प्रमाणेनैव तात्पर्यमाह– **क्रमेति** ।। **विशेषेण** सर्वथा । तर्हि तथैव वक्तव्ये तस्य नास्तीत्युपवाद इत्युक्तिः कुत इत्यत आह– **तस्मादिति** ।। क्रमस्वाध्यायकृन्निन्दनस्य नरकाद्यनर्थश्रवणात्तन्निन्दनस्यातिदुष्टत्वात् तत्सर्वथा न कर्तव्यमिति ज्ञापनार्थमेव एवमुक्तमिति भावः । अत्रोदाहरणमाह– **तं कृष्णमिति** ।। तत्र यथा कृष्णं प्रति योद्धा नास्त्येवेति नाभिप्रायः किन्तु योद्धुर्जीवनस्यैव हानेस्तेन सह युद्धस्यातिदुष्टत्वाद्बुद्धिमता न कर्तव्यमेवेति । एवमत्रापीति भावः ।।

विष्णुनाम्नि संहिताक्रमनिरूपणं तदध्ययनकर्तुः निन्दने प्रतिवचनप्रकारश्च

उपनिषत्

**यद्धि सन्धिं विवर्तयति तन्निर्भुजस्य रूपम् । अथ यच्छुद्धे अक्षरे अभिव्याहरति तत्प्रतृण्णस्य । अग्र उ एवोभयमन्तरेणोभयं व्याप्तं भवति । अन्नाद्यकामो निर्भुजं ब्रूयात् । स्वर्गकामः प्रतृण्णम् । उभयकाम उभयमन्तरेण ।**

**अथ यद्येनं निर्भुजं ब्रुवन्तं पर उपवदेत्, 'पृथिवीं देवतामारः पृथिवी त्वा देवता रिष्यति' इत्येनं ब्रूयात् ।**

**अथ यद्येनं प्रतृण्णं ब्रुवन्तं पर उपवदेत्, 'दिवं देवतामारो द्यौस्त्वा देवता रिष्यति' इत्येनं ब्रूयात् ।**

**अथ यद्येनमुभयमन्तरेण ब्रुवन्तं पर उपवदेत्, 'अन्तरिक्षं देवतामारोऽन्तरिक्षं त्वा देवता रिष्यति' इत्येनं ब्रूयात् ।**

**यथा तु कथा च ब्रुवन्वा ब्रुवन्तं वा ब्रूयादभ्याशमेव यत्तथा स्यात् ।**

निन्दने कृते प्रतिवचनब्रुवणप्रकारः

भाष्यम्

उपवदेदित्युक्तो मनुष्यमात्रः । पर उपवदेत्यसुरः । सर्वशत्रुत्वात् ।

अमुक्तियोग्यैस्तु नरैर्विदुषां निन्दने कृते ।
ब्रूयाल्लोकच्युतोऽसीति निन्दितोऽसुरसर्गगैः ॥

नाशयिष्यति विष्णुस्त्वामन्धे तमसि पातयेत् ।
इति ब्रूयान्न तु ब्रूयाद्देवसर्गात्मकं क्वचित् ॥ इति च ।

विष्णुनाम्नि सन्ध्यादिकरणे प्रयोजनाभिधानम्

षणयोः सन्धिकरणात् संहिताध्ययनं भवेत् ।
विषणस्त्विति यो ब्रूयात् पदाध्यायी भवेत सः ॥

सन्ध्युक्तिश्च विभागश्च द्वयं व्याप्तं क्रमेण तु ।
तस्माद् द्विधापि वचनात् क्रमाध्यायी भवेत सः ॥

भोगवृद्धिं च[२५] यो मोक्ष इच्छेद्विष्णव इत्यसौ ।
मोक्षकामो विषणवे द्वयकामो द्वयं वदेत् ॥

विष्णुनामात्मकत्वाच्चाथ संहितपदक्रमाः ।
सर्ववेदस्थिता मोक्षतद्भोगद्वयसाधकाः ॥

तज्ज्ञानामेव नान्येषामिति वेदानुशासनम् ।
संहिताद्या ब्रुवन् वाऽपि य एवंविन्न चाब्रुवन् ॥

---

२५. तु इति ह्.पाठः

**परिवादं ब्रुवन्तं वा न ब्रुवन्तमथापि वा ।**
**यद्वदेत् तत्तथैव स्यात् क्षिप्रमेव न संशयः ।। इति च ।**

**अग्र एव[२६] अग्र्यमेवोभयमन्तरेण ।**

**भावप्रदीपः**

'यद्येनं निर्भुजं ब्रुवन्तमुपवदेत्' इत्याद्युक्तत्वात् 'यद्येनं निर्भुजं ब्रुवन्तं पर उपवदेत्' इत्यादि पुनर्वचनं कुत इत्यत उभयोर्वाक्ययोर्विषयभेदं दर्शयति– **उपवदेदितीति** ।। पर इति विशेषणेऽपि कुतोऽयमसुर इत्यत परशब्दार्थमाह– **सर्वशत्रुत्वादिति** ।। परशब्दस्य शत्रुवाचित्वादसुरस्य च सर्वशत्रुत्वादित्यर्थः । उक्तार्थदार्ढ्याय प्रमाणेनैवैतद्वाक्यद्वयं व्याचष्टे– **अमुक्तियोग्यैरिति** ।। एतेनोपवदेदित्यादि मानुषविषयं वाक्यं व्याख्यातं भवति । 'निन्दितोऽसुरवर्गै'रित्यादिना 'पर उपवदेदि'त्याद्यसुरविषयं द्वितीयवाक्यम् ! तत्र 'रिष्यती'त्यस्यार्थो– **नाशयिष्यतीति** । तस्यैव विवरणं– **अन्धे तमसि पातयेदिति** । 'न त्वे वाऽन्यत्कुशलात् ब्राह्मणं ब्रूयात्' इत्यस्यार्थो– **न तु ब्रूयाद्देवसर्गात्मकं क्वचिदिति** ।।

'यद्धि सन्धिं निवर्तयति तन्निर्भुजस्य रूपं' इत्यादि व्याचष्टे– **षणयोरिति** ।। **सन्धिकरणात्** विष्णुरिति कथनात् । **संहिताध्ययनं** तज्जन्यं फलं प्राप्तं भवेत् । अथवा 'यद्युद्धे अक्षरे अभिव्याहरति तत्प्रतृण्णस्य' इत्यस्यार्थो– **विष्णुस्त्वितीति** । **पदाध्यायी** पदा-ध्ययनफलवान् । 'उभयमन्तरेणोभयं व्याप्तं भवति' इत्यस्यार्थः– **सन्ध्युक्तिश्चेत्यादि** ।। **तस्मात्** क्रमस्योभयसन्धित्वात् **द्विधापि**

२६. अग्रे एव इति ह.पाठः

**वचनात्** विष्णुरिति सन्धिकरणात् विषणुरिति विभागकथनाच्च **क्रमाध्यायी** क्रमाध्ययनफलवानित्यर्थः । 'अन्नाद्यकामो निर्भुजं ब्रूयात्' इत्यादि व्याचष्टे– **भोगवृद्धिमिति** ।। 'स्वर्गकामः प्रतृण्णं' इत्यस्यार्थो– **मोक्षकामो विषणव इति** ।। इतिशब्दोऽत्र योज्यः । 'उभयकाम उभयमन्तरेण' इत्यस्यार्थो– **द्वयकामो द्वयं वदेदिति** । विष्णवे विषणव इति द्वयं वदेदित्यर्थः । अस्य नम इत्यध्याहृत-क्रिययाऽन्वयः ।

एवं 'यद्धि सन्धिं विवर्तयती'त्यादिवाक्यं व्याख्यायेदानीं तद्व्या-ख्यानात्मकसर्ववैदिकसंहितापदक्रमपरत्वेनापि व्याचष्टे– **विष्ण्विति** ।। सर्ववेदस्थिताः **संहितपदक्रमाः** संहितापदक्रमाश्च **विष्णुनामात्मक-त्वात्** विष्णुनामसंहितापदक्रमार्थरूपत्वान्मोक्षतद्भोगद्वयसाधकाः ।

तत्रायं विवेकः । पदं सम्यक् स्वरूपाभिव्यक्तिरूपमोक्षसाधकं संहिता मोक्षभोगसाधिका । क्रमस्तु मोक्षतद्भोगद्वयसाधक इति ।

ननु मोक्षादीनां ज्ञानादिसाध्यत्वात्कथं संहिताध्ययनमात्र-साध्यत्वमित्यत आह– **तज्ज्ञामेवेति** ।। विष्णुज्ञानवतामेवेत्यर्थः । ज्ञानात्पूर्वं क्रियमाणसंहिताध्ययनं ज्ञानद्वारा मोक्षादिसाधनं तदुत्तरं तु मोक्षीयभोगसाधनमिति विवेकः । 'ब्रुवन्वे'त्यादिकं व्याचष्टे– **संहिताद्या इति** ।। **य एवं वित्** सर्वसंहितापदक्रमाणां विष्णुनामार्थरूपत्वादिकं वेत्ति सः संहिताद्या ब्रुवन्वा न ब्रुवन्वा स्वात्मानं प्रति **परिवादं** निन्दां ब्रुवन्तमथवा न ब्रवन्तमपि प्रकारान्तरेण स्वद्रोहं कुर्वाणमिति यावत् । यं कंचित्पुरुषं प्रति **यद्वदेत्** शापरूपवचनं तत् क्षिप्रमेव **तथैव** सत्यमेव स्यात् । नात्र संशय इत्यर्थः । तथाचोक्तप्रकारेण ज्ञानमेवान्वयव्यतिरेकाभ्यां कार्यकारि न केवलसंहिताध्ययनमात्रमिति भावः ।।

'अग्र उ एवोभयमन्तरेणे'त्यत्र अग्रशब्दार्थं वदन्नन्वयं दर्शयति – **अग्र एवेति** ।। उभयमन्तरेण क्रम इत्यर्थः ।।

सात्त्विकानां शापो न देयः

**उपनिषत्**

**न त्वेवान्यत्कुशलाद् ब्राह्मणं ब्रूयात् । अतिद्युम्न एव ब्राह्मणं ब्रूयात् । नातिद्युम्ने च न ब्राह्मणं ब्रूयात् । नमो अस्तु ब्राह्मणेभ्यः इति ह स्माह शूरवीरो माण्डूकेयः ।।३.१.३।।**

अतिद्युम्नशब्दार्थकथनम्

**भाष्यम्**

द्युम्नो द्युतिस्वरूपत्वाद् विष्णुरेव प्रकीर्तितः ।
योऽतिक्रमति तस्याज्ञामतिद्युम्नः प्रकीर्तितः[२७]।।

मोक्षयोग्योऽपि[२८] यस्त्वेवमतिद्युम्नो भवेत् पुमान् ।
लोकच्युतोऽसीत्येवं तं ब्रूयान्नाज्ञास्थितं क्वचित् ।।

लोकच्युतो भवेत्येनमपि नैव वदेत् क्वचित् ।
च्युतोऽसीति तु शिक्षार्थं ब्रूयान्नैवान्यथा क्वचित् ।। इति च ।।३.१.३।।

**भावप्रदीपः**

'अतिद्युम्न एव ब्राह्मणं ब्रूयात्' इत्येतद्व्याचष्टे– **द्युम्न इति** ।। 'नातिद्युम्ने च न ब्राह्मणं ब्रूयात्' इत्यस्यार्थो– **नाज्ञास्थितमिति** ।। मोक्षयोग्योऽपि कश्चिदतिद्युम्नश्चेत् सोऽपि वाच्य एवेत्युक्तम् । तर्हि

---

२७. स कीर्तितः इति ह.पाठः २८. मोक्षायोग्योऽपि इति ह.पाठः

तस्यासुरात्को विशेष इत्यत आह– **लोकच्युत इति** ।। असुरं प्रति यथा देवता त्वां रिष्यतीति ब्रूयात् तथा न ब्रूयादित्येव न । किन्तु लोकच्युतो भवेत्यपि नैव वदेदित्यपिशब्दार्थः । किन्तु [२९]च्युतोऽसीति ब्रूयात् । नन्वेवमुक्तावपि फलतः सममेव । लोकच्यवनस्यास्मिन्कालो कालान्तरे वाऽवश्यं भावादित्यत उक्तं– **शिक्षार्थमिति** ।। योग्यं प्रति च्युतोऽसीत्युक्तौ निन्दनं च्युतिसाधनमिति मत्वा परावर्तनादिदं शिक्षारूपं तस्य भवति । च्युतो भवेत्युक्तौ तु तस्य शापरूपत्वेन परावर्तनाहेतुतया नेदं शिक्षारूपं तस्य भवति । तस्माद्योग्यः पुमान्न तथा वाच्य इत्यर्थः ।।

ततश्चायं खण्डार्थः । अथ **अतः** मोक्षादिफलसद्भावात् **निर्भुजप्रवादाः** संहितापदक्रमविषयाः प्रकृष्टवादाः कथ्यन्ते । तत्र **निर्भुजं** भंजन(वर्जि)रहितत्वान्निर्भुजशब्दवाच्यं संहिता **पृथिव्यायतनं** पृथिवीस्थितपृथिवीनामकवराहदेवताका । **प्रतृण्णं** पदं **दिव्यायतनं** दिविस्थितो द्युनामा वामनो हरिरायतनं यस्येति । अलुक्समासः । अथवा दिव्यो द्युस्थितो वामन आयतनं यस्येति विग्रहः । **उभयमन्तरेणेति** क्रमनाम । तत् **अन्तरिक्षायतनं** अन्तरिक्षस्थितान्तरिक्षनामकनृसिंहदेवताकम् । तस्मादेतज्ज्ञानपूर्वकसंहिताध्ययनकर्ता[३०] पूज्य एव न निन्दनीय इत्युपस्कर्तव्यम् ।

अथेति पक्षान्तरे । **यद्येनं निर्भुजं ब्रुवन्तं** संहितामधीयानं विष्णुभक्तं कश्चिन्मानुष **उपवदेत्** निन्द्यात् तर्हि **अवराभ्यां** पृथिव्य-

---

२९. लोकच्युतोऽसि इति 'ख'पाठः

३०. संहिताद्यध्ययनकर्ता इति 'ख'पाठः

न्तरिक्षाभ्यां स्थानाभ्यां **अच्योष्ठाः** च्युतोऽसीत्येनं ब्रूयात् । अधीयान इति शेषः । विष्णुभक्तनिन्दाऽसहिष्णुरन्यो वा । अथ **यद्येनं प्रतृण्णं** पदं ब्रुवन्तं उपवदेत् तर्हि **उत्तराभ्यां स्थानाभ्यां** अन्तरिक्षद्युभ्यां अच्योष्ठा इत्येनं निन्दकं ब्रूयात् । यस्तु **उभयमन्तरेणाह** क्रममधीते तस्योपवादो नास्त्येव । तन्निन्दनस्य नरकाद्यनर्थहेतुत्वादतिदुष्टत्वेन सर्वथा तन्निन्दनं न कुर्यादिति भावः ।।

ज्ञानपूर्वकं विष्णुनामोच्चारणादेव समस्तवैदिकसंहिताध्ययनफलं लभ्यत इत्याशेनाह– **यद्धीति** ।। विष्णनाम्नि **यत्** यदि **सन्धिं** षणयोर्मेलनं **विवर्तयति** विशेषेण वर्तयति **तत्** तर्हि **निर्भुजस्य रूपं** समस्तवैदिकसंहितारूपं तदध्ययनफलप्रदमिति यावत् । अथ **यद्यदि** तत्र वीत्यनन्तरं **शुद्धे**ऽअमिलिते **अक्षरे** षणुरिति वर्णे अभिव्याहरति तर्हि **तत् प्रतृण्णस्य** पदस्य **रूपं** समस्तपदाध्ययन-फलप्रदमिति यावत् । **उभयमन्तरेण** क्रमस्तु **अग्र एव** अग्र्य एव संहितापदाभ्यां श्रेष्ठ एव । कुतः? क्रमेण **उभयं** सन्ध्युक्तिः विभागेनो-क्तिश्चेति द्वयं **व्याप्तं** गर्भीकृतं भवति यतस्तस्मात् । ततश्च विष्णु-र्विषणुरित्युभयथापि वचनात्समस्तक्रमाध्ययनफलं भवतीति भावः ।।

अथवा संहितापदक्रमस्वरूपं निरूपयति– **यद्धीति** ।। पूर्वोत्तर-वर्णयोः सन्धिं विवर्तयतीति यावत् । तन्निर्भुजस्य **रूपं** स्वरूपं । अथ **यच्छुद्धेऽक्षरे** अमिलितवर्णात्मकपदे अभिव्याहरति तत्प्रतृण्णस्य रूपम् । येन निर्भुजं प्रतृण्णं चेत्युभयं व्याप्तं भवति स एवोभय-मन्तरेण क्रम इत्युच्यते । **स त्वग्र एव** अग्र्य एवेत्यर्थः ।।

संहिताध्ययनफलं विविच्याह– **अन्नाद्यकाम इति** ।। यो

तस्यासुरात्को विशेष इत्यत आह– **लोकच्युत इति** ।। असुरं प्रति यथा देवता त्वां रिष्यतीति ब्रूयात् तथा न ब्रूयादित्येव न । किन्तु लोकच्युतो भवेत्यपि नैव वदेदित्यपिशब्दार्थः । किन्तु [२९]च्युतोऽसीति ब्रूयात् । नन्वेवमुक्तावपि फलतः सममेव । लोकच्यवनस्यास्मिन्कालो कालान्तरे वाऽवश्यं भावादित्यत उक्तं– **शिक्षार्थमिति** ।। योग्यं प्रति च्युतोऽसीत्युक्तौ निन्दनं च्युतिसाधनमिति मत्वा परावर्तनादिदं शिक्षारूपं तस्य भवति । च्युतो भवेत्युक्तौ तु तस्य शापरूपत्वेन परावर्तनाहेतुतया नेदं शिक्षारूपं तस्य भवति । तस्माद्योग्यः पुमान्न तथा वाच्य इत्यर्थः ।।

ततश्चायं खण्डार्थः । अथ **अतः** मोक्षादिफलसद्भावात् **निर्भुजप्रवादाः** संहितापदक्रमविषयाः प्रकृष्टवादाः कथ्यन्ते । तत्र **निर्भुजं** भंजन(वर्जि)रहितत्वान्निर्भुजशब्दवाच्यं संहिता **पृथिव्यायतनं** पृथिवीस्थितपृथिवीनामकवराहदेवताका । **प्रतृण्णं** पदं **दिव्यायतनं** दिविस्थितो द्युनामा वामनो हरिरायतनं यस्येति । अलुक्समासः । अथवा दिव्यो द्युस्थितो वामन आयतनं यस्येति विग्रहः । **उभयमन्तरेणेति** क्रमनाम । तत् **अन्तरिक्षायतनं** अन्तरिक्षस्थितान्तरिक्षनामकनृसिंहदेवताकम् । तस्मादेतज्ज्ञानपूर्वकसंहिताध्ययनकर्ता[३०] पूज्य एव न निन्दनीय इत्युपस्कर्तव्यम् ।

अथेति पक्षान्तरे । **यद्येनं निर्भुजं ब्रुवन्तं** संहितामधीयानं विष्णुभक्तं कश्चिन्मानुष **उपवदेत्** निन्द्यात् तर्हि **अवराभ्यां** पृथिव्य-

---

२९. लोकच्युतोऽसि इति 'ख'पाठः

३०. संहिताद्यध्ययनकर्ता इति 'ख'पाठः

न्तरिक्षाभ्यां स्थानाभ्यां **अच्योष्ठाः** च्युतोऽसीत्येनं ब्रूयात् । अधीयान इति शेषः । विष्णुभक्तनिन्दाऽसहिष्णुरन्यो वा । अथ **यद्येनं प्रतृण्णं** पदं ब्रुवन्तं उपवदेत् तर्हि **उत्तराभ्यां स्थानाभ्यां** अन्तरिक्षद्युभ्यां अच्योष्ठा इत्येनं निन्दकं ब्रूयात् । यस्तु **उभयमन्तरेणाह** क्रममधीते तस्योपवादो नास्त्येव । तन्निन्दनस्य नरकाद्यनर्थहेतुत्वादतिदुष्टत्वेन सर्वथा तन्निन्दनं न कुर्यादिति भावः ॥

ज्ञानपूर्वकं विष्णुनामोच्चारणादेव समस्तवैदिकसंहिताध्ययनफलं लभ्यत इत्याशेनाह– **यद्धीति** ॥ विष्णनाम्नि **यत्** यदि **सन्धिं** षणयोर्मेलनं **विवर्तयति** विशेषेण वर्तयति **तत्** तर्हि **निर्भुजस्य रूपं** समस्तवैदिकसंहितारूपं तदध्ययनफलप्रदमिति यावत् । अथ **यद्यदि** तत्र वीत्यनन्तरं **शुद्धेऽ**अमिलिते **अक्षरे** षणुरिति वर्णे अभिव्याहरति तर्हि **तत् प्रतृण्णस्य** पदस्य **रूपं** समस्तपदाध्ययन-फलप्रदमिति यावत् । **उभयमन्तरेण** क्रमस्तु **अग्र एव** अग्र्य एव संहितापदाभ्यां श्रेष्ठ एव । कुतः? क्रमेण **उभयं** सन्ध्युक्तिः विभागेनो-क्तिश्चेति द्वयं **व्याप्तं** गर्भीकृतं भवति यतस्तस्मात् । ततश्च विष्णु-र्विषणुरित्युभयथापि वचनात्समस्तक्रमाध्ययनफलं भवतीति भावः ॥

अथवा संहितापदक्रमस्वरूपं निरूपयति– **यद्धीति** ॥ पूर्वोत्तर-वर्णयोः सन्धिं विवर्तयतीति यावत् । तन्निर्भुजस्य **रूपं** स्वरूपं । अथ **यच्छुद्धेऽक्षरे** अमिलितवर्णात्मकपदे अभिव्याहरति तत्प्रतृण्णस्य रूपम् । येन निर्भुजं प्रतृण्णं चेत्युभयं व्याप्तं भवति स एवोभय-मन्तरेण क्रम इत्युच्यते । **स त्वग्र एव** अग्र्य एवेत्यर्थः ॥

संहिताध्ययनफलं विविच्याह– **अन्नाद्यकाम इति** ॥ यो

मोक्षेऽन्नादिभोगबाहुल्यकामः सः **निर्भुजं** विष्णुरित संहितारूपं नाम ब्रूयात् । **स्वर्गकामो** मोक्षकामः **प्रतृण्णं** विषणुरिति पदात्मकं नाम ब्रूयात् । यस्तु मोक्षतद्भोगोभयकामः स **उभयमन्तरेण**, विष्णुर्विषणुरि द्विधाऽपि ब्रूयादित्यर्थः ।।

अथवा विष्णुनामार्थभूतत्वात्सर्ववेदस्थिता अपि संहितापदक्रमाः विष्णुप्रतिपादका एव । अतस्तत्संहितापदक्रमाध्यनफलमेवैतत्सं-हिताद्यध्ययनफलं मन्तव्यमित्याह– **अन्नाद्यकाम इति ।।** अत्र निर्भुजादिशब्दाः सकलसंहितादिपराः ।।

संहिताद्यध्येतृनिन्दने कृते मनुष्यमात्रं प्रति ब्रुवणप्रकारः प्रागुक्तः । इदानीमसुरप्रकृतिकं प्रति ब्रुवणप्रकार उच्यते– **अथ यद्येनमित्या-दिना ।।** यद्येनं निर्भुजं ब्रुवन्तं **परः** सर्वशत्रुरसुरप्रकृतिरूपवदेत्तर्ह्येनं प्रति ब्रूयात् । किमिति? मयाऽधीयमानस्य निर्भुजस्य या पृथिवीस्था पृथिवीनाम्नी वराहाख्या देवता तामेव त्वं **आरः** दूषितवानसि । धातूनामनेकार्थत्वात् दूषणार्थात् ऋ धातोर्लुङि रूपमेतत् । तद्देवता-कनिर्भुजाध्यनकाले क्रियमाणस्य मद्दूषणस्यापि तद्दूषणत्वात् । तस्मात्सा पृथिवी देवता **त्वा** त्वां **रिष्यति**, रिष हिंसायां अन्तरर्णीतण्यर्थोऽयम् । नाशयिष्यति, अन्धे तमसि पातयेदिति ।

अथ यद्येनं प्रतृण्णं ब्रुवन्तं पर उपवदेत्तर्हि **दिवं देवतां** वामनाख्यां त्वमारस्तस्मात्सा द्यौर्देवता त्वां रिष्यतीत्येनं ब्रूयात् ।

अथ यद्येनं **उभयमन्तरेण** क्रमं ब्रुवन्तं पर उपवदेत्तर्ह्य**न्तरिक्षं देवतां** नृसिंहाख्यामारस्तस्मात्साऽन्तरिक्षदेवता त्वां रिष्यतीत्येनं ब्रूयादिति ।

ननु निन्दकेन निन्दायां कृतायामपि ज्ञानिनो द्वन्द्वसहिष्णुतया तत्सोढव्यमेव । तत्कुत एवं प्रत्युत्तरं दातव्यमित्यत आह– **यथा तु कथा चेति** ।। लोके यथा वादिप्रतिवादिनोः कथा प्रवृत्ता चेत्तत्र वाद्युत्तरस्य प्रतिवादिना प्रत्युत्तरं दीयत एव । न तूष्णींभाव आश्रीयते, एवं प्रकृतेऽपीत्यर्थः । निन्दादिसहनं तु केवलात्मनिन्दादिविषयम् । इदं तु देवताविषयं च भविष्यति । देवतास्तुतिकाले क्रियमाणस्य निन्दादेः स्तुत्यदेवताद्रोहरूपत्वादतो न तत्सोढव्यमिति भावः । ननु निन्दकं प्रति त्वा देवता रिष्यतीत्यादि ब्रुवणविधानं व्यर्थम् । ब्रुवणमात्रस्याप्रयोजकत्वादित्याशङ्क्योक्तप्रकारेण ज्ञानवता प्रयुक्तं वाक्यं न जातु मोघं भवितुमर्हतीत्याह– **ब्रुवन्निति** ।। संहिताद्याः श्रुतिततीर्**ब्रुवन्** अधीयानः । वाशब्दादब्रुवन्वा पुमान् **ब्रुवन्तं** निन्दन्तं । वाशब्दादनिन्दन्तं वा । प्रकारान्तरेण स्वद्रोहं कुर्वाणमिति यावत् । यं कंचित्पुरुषं प्रति **यत्** शापरूपं वचनं ब्रूयात् **तत्** वचनं **अभ्याशमेवं** समीपत एव, क्षिप्रमेवेति यावत् । **तथैव** सत्यमेव स्यात् । न जातु मोघमित्यर्थः ।।

निन्दकमात्रं प्रत्येवं शापप्रदानप्रसक्तौ तत्र विशेषमाह– **न त्विति** ।। **ब्राह्मणं** ब्रह्मप्राप्तियोग्यं प्रति **कुशलादन्यत्** अकुशलं तस्यानर्थकारिवचनं नैव ब्रूयात् । अयोग्यजनान् प्रत्येवैवं ब्रूयान्न तु मोक्षयोग्यान् प्रतीति भावः । तत्राप्यपवादमाह– **अतिद्युम्न इति** ।। द्युतिस्वरूपत्वात् द्युम्नो विष्णुस्तदाज्ञातिक्रमी अतिद्युम्नः । विष्ण्वाज्ञारूपश्रुतिस्मृत्युदितधर्मोल्लंघनकारीति यावत् । तथा च तस्मिन्नतिद्युम्ने सत्येव तं **ब्राह्मणं** मोक्षयोग्यं पुरुषं प्रति शिक्षार्थं लोकच्युतोऽसीत्येव ब्रूयान्न तु लोकच्युतो भवेति । **नातिद्युम्ने च** । न समासोऽयम् ।

भगवदाज्ञानुवर्तिनि सति तु तादृशं **ब्राह्मणं** मोक्षयोग्यं प्रति नैव ब्रूयात् । अतो ब्राह्मणानां शापाविषयत्वन्मान्यत्वाच्च ब्राह्मणेभ्यो नमो अस्त्विति ह शूरवीरो माण्डूकेय आह[31] । अत्र नमो अस्त्विति एङः प्रकृतिभावः छान्दसः ॥३.१.३॥

अशक्त्यादिदोषवदन्तं प्रति प्रत्युक्तिप्रकारकथनम्

### उपनिषत्

**अथातोऽनुव्याहाराः । प्रणो वंश इति विद्यात् । स य एनं प्राणं वंशमुपवदेत्, शक्नुवन्तं चेन्मन्येत, प्राणं वंशं समधां३ । प्राणं मां वंशं सन्दधतं न शक्नोषीत्याह । आत्थ प्राणस्त्वा वंशो हास्यतीत्येनं ब्रूयात् । अथ चेदशक्नुवन्तं मन्येत, प्राणं वंशं समधित्सिषन्तं नाशकः सन्धातुम् । प्राणस्त्वा वंशो हास्यतीत्येनं ब्रूयात् ।**

**यथा तु कथा च ब्रुवन्वा ब्रुवन्तं वा ब्रूयादभ्याशमेव यत् तथा स्यात् न त्वेवान्यत् कुशलाद् ब्राह्मणं ब्रूयात् । अतिद्युम्न एव ब्राह्मणं ब्रूयात् । नातिद्युम्ने च न ब्राह्मणं ब्रूयात् । नमो अस्तु ब्राह्मणेभ्य इति ह स्माह शूरवीरो माण्डूकेयः ॥३.१.४॥**

पूर्वोत्तरखण्डयोः पुनरुक्तिपरिहारः

### भाष्यम्

भगवदुपासकस्य यस्मिन् कस्मिंश्चिद्दोष उक्ते तं प्रत्युक्तिप्रकारः

---

३१. आह स्म इति 'ख'पाठः

**पूर्वं दर्शितः । अनुव्याहारशब्देन भगवदुपासनाविषय एवास्याशक्त्यादिदोषं वदतः प्रत्युक्तिरुच्यते । निर्भुजं वदन्तमित्यादि त्ववस्थामात्रदर्शनम् । आत्मनो ज्ञानसामर्थ्यानुसारेण वक्तव्यत्वादनुव्याहारः ।**

**भावप्रदीपः**

'अथातोऽनुव्याहाराः' इत्यादिखण्डं व्याख्यास्यन्नादौ तावत् पूर्वखण्डेन [३२]अस्य अगतार्थतासिद्ध्यै उभयोस्तात्पर्यभेदं दर्शयति– **भगवदुपासकस्येति** ।। **पुर्वं** पूर्वखण्डे 'यद्येनं निर्भुजं वदन्तं ब्रुवन्तं' इत्यादिना दर्शितिः । अत्र तु भगवदुपासनाविषय एव **अस्य** उपासकस्य त्वमुपासनायामशक्त इत्यादिप्रकारेणाशक्त्यादिदोषं वदतः पुरुषस्य, वदन्तं प्रति **प्रत्युक्तिः** प्रत्युक्तिप्रकारः कथ्यत इत्यनुव्याहारशब्देनोच्यत इत्यर्थः । ननु पूर्वखंडोक्तोऽपि प्रत्युक्तिप्रकारो भगवदुपासनाविषयकदोषं वदन्तं प्रत्येव । अन्यथा 'निर्भुजं ब्रुवन्तमुपवदेत् । प्रतृण्णं ब्रुवन्तमुपवदेत्' इत्याद्युपासनाविशेषानुवादो न स्यात् । अतः कथं विषयभेद इत्यतस्तदुक्तेरभिप्रायं व्यनक्ति– **निर्भुजमिति** ।। तथा च निर्भुजाद्यध्ययनकाले भगवदुपासकस्य यस्मिन्कस्मिंश्चिद्दोष उक्ते तं प्रत्युक्तिप्रकारः पूर्वं प्रदर्शितः । इदानीं तु भगवदुपासनाविषय एव दोषं वदतः प्रत्युक्तिप्रकारः प्रदर्श्यत इति विषयभेदकल्पने नोक्तानुपपत्तिरिति भावः । नन्वनुव्याहारशब्देन भगवदुपासनाविषय एवास्याशक्त्यादिदोषं वदतः प्रत्युक्तिरित्युच्यत इत्युक्तम् । तत्कथं लभ्यत इत्यतोऽनुव्याहारशब्दार्थमाह– **आत्मन इति** ।। 'शक्नुवन्तं चेन्मन्येत' 'अथ चेदशक्नुवन्तं चेन्मन्येत' इत्यादिनाऽऽत्मनो ज्ञानसामर्थ्यानुसारेण प्रत्युक्ते वक्तव्यत्वावगमादेते व्याहारा

---

३२. अस्य खण्डस्य इति 'ख'पाठः

अनुव्याहारा इत्युच्यन्ते । तदुक्तिप्रकारपर्यालोचनायां चैषा प्रत्युक्तिर्भगवदुपासनाविषय एवास्याऽशक्त्यादिदोषं वदन्तं प्रतीत्यवगम्यत इति भावः ॥

### उपासनानिन्दनस्य प्रत्युत्तरम्

### भाष्यम्

**सर्वाधारत्वतो वंश इत्युपासीत यो हरिम् ।**
**वायुं च मुक्तिमाप्नोति य एवं तदुपासकम् ॥**

**निन्देत विष्णुविज्ञानविषये तं वदेत सः ।**
**विष्णुना वंशभूतेन वायुना सहितं[३३] तथा ॥**

**न शक्नोषीति मामात्थ हास्यतस्त्वामतो हि तौ ।**
**ज्ञानसामर्थ्यवानित्थं ब्रूयाद्देवादिरुत्तमः ॥**

**अन्यो गन्धर्वपित्रादिरल्पज्ञानबलो हि यः ।**
**स ब्रूयाद्विष्णुवायुभ्यां सन्धिमिच्छन्तमेव माम्[३४] ॥**

**सन्धातुं नाशको यस्माद्धास्यतस्त्वामतो हि तौ ॥ इति च ।**

### भावप्रदीपः

इदानीं 'प्राणो वंशः' इत्यादिकं व्याचष्टे– **सर्वाधारत्वत इति** ॥ **वंशो** गृहाधारभूतस्थूणा तत्तुल्य इत्यर्थः । हरिं वायुं चेत्यनेन प्राणशब्द उभयवाचीत्युक्तं भवति । 'स य एनं प्राणं वंशमुपवदेत्' इत्यादि व्याचष्टे– **य एवमिति** ॥ विष्णुविज्ञानविषयेऽशक्तस्त्वमिति यो

---

३३. सहितं वायुना इति ह.पाठः ३४. मा इति ह.पाठः

निन्देत् तं **स** उपासको वदेतेति योजना । 'प्राणं वंशं समधां' इत्यस्य तात्पर्यम्– **विष्णुना वंशभूतेन तथा वायुना सहितमिति ।** 'प्राणस्त्वा वंशो हास्यति' इत्यस्यार्थो– **हास्यतस्त्वमतो हि ताविति ।।** **तौ** विष्णुवायू । 'शक्नुवन्तं चेन्मन्येत' इत्यस्य तात्पर्यं– **ज्ञानसामर्थ्यवान्देवादिरुत्तम इति** । 'अथ चेदशक्नुवन्तं चेन्मन्येत' इत्यादिव्याचष्टे– **अन्य इति ।।** अल्पज्ञानबलो हि य इत्यनेनाशक्नुवन्तमित्येतदल्पज्ञानशक्तिकमिति व्याख्यातम् भवति ।।

**हरिभक्तभक्तेषु प्रीत्यकरणे दोषकथनम्**

**भाष्यम्**

**स य एनं प्राणं वंशमुपवदेत् प्राणं प्रत्येनमुपासकमुपवदेत् । प्राणस्य विष्णोः प्रियत्वं तव न प्राप्स्यतीति । नाशकः सन्धातुं मया सह सन्धानं कर्तुं नाशकः । मम प्रीतिं कर्तुं नाशकः ।**

**तद्भक्तभक्तेष्वपि यो न कुर्यात् प्रीतिमञ्जसा ।**
**विष्णुर्जहाति तं पापमिह चामुत्र च प्रभुः ।। इति च भारते ।।४।।**

**भावप्रदीपः**

'स य एनं प्राणं वंशमुपवदेत्' इत्येत् 'य एवं तदुपासकं निन्देत' इति व्याख्यातम् । तत्कथं लभ्यते । उपवादस्योपास्यप्राणविषयताया एव प्रतीतेरित्यतोऽनूद्य यथावत् व्याचष्टे– **स य एनमिति ।।** प्राणमिति प्रतिद्वितीया । एनमिति कर्मणि द्वितिया । तथा च प्राणं प्रति विद्यमानमेनं प्राणोपासकमुपदेदित्यर्थलाभ इति भावः । 'प्राणं मा वंशं सन्दधतं न शक्नोषीत्याह' इत्यस्य तात्पर्यमाह– **प्राणस्येति ।। तव न प्राप्स्यति** न सेत्स्यति । 'नाशकः सन्धातु'मित्येतदनूद्य

व्याचष्टे– **नाशक इति** ।। तात्पर्यमाह– **ममेति** ।। अत्र प्रमाणमाह– **तद्भक्तेति** ।। तिष्ठतु तावद्भक्तेषु । अन्तस्तद्भक्तभक्तेष्वपि यः प्रीतिमञ्जसा न कुर्यादिति कैमुद्योतनायापिशब्दः ।।

ततश्चायं खण्डार्थः । **अथातोऽनुव्याहारा** आत्मनो ज्ञानसामर्थ्यानुसारेण भगवदुपासनाविषय एवोपासकस्याशक्त्यादिदोषं वदन्तं प्रति वक्तव्या व्यवहाराः प्रदर्श्यन्ते । तदर्थमेकामुपासनां तावदाह– **प्राण इति** ।। **प्राणो** विष्णुर्वायुश्च सर्वाधारत्वात् **वंशो** वंशस्थानीय इति **विद्यात्** उपासीत । **स** प्रसिद्धो **यः** पुमान् **वंशं** प्राणं प्रति स्थितं तदुपासकं **एनमुपवदेत्** प्राणप्रीतिसंपादने त्वं न शक्नोषीत्यादिरूपेण निन्देत् तर्हि तमेनं निन्दकं प्रति अयं प्राणोपासको ब्रूयात् । यद्यात्मानं **शक्नुवन्तं** ज्ञानसामर्थ्ययुक्तं **मन्येत** देवाद्युत्तमाधिकारी चेदिति यावत् । किमिति? अहं प्राणं वंशं **समधां** सन्दधानोऽभवम् । विष्णुवायुप्रियतां संपादितवानस्मीति यावत् । एवं प्राणं वंशं सन्दधतं **मा** मां त्वं प्राणप्रीतिसंपादने न शक्नोषीत्याह । **आत्थ** अतो **वंशः** प्राण**स्त्वा** त्वां **हास्यति** इहामुत्र च परित्यजतीति । अथ यद्ययं प्राणोपासक आत्मान**मशक्नुवन्तं** अल्पज्ञानशक्तिमन्तं मन्येत । गन्धर्वपित्राद्यल्पाधिकारी चेदिति यावत् । तर्ह्येनं निन्दकं प्रति ब्रूयात् । किमिति? **प्राणं वंशं समधित्सिषन्तं** प्राणेन सन्धिमिच्छन्तं प्राणप्रीतिसंपादनोद्योगिनमिति यावत् । **मां सन्धातुं नाशकः** मया सह सन्धानं कर्तुं नाशकः मम प्रीतिं कर्तुं नाशक इति यावत् । अतस्त्वां **वंशः** सर्वाधारः प्राणो विष्णुर्वायुश्च हास्यतीति । यथा तु कथा चेत्यादि पूर्ववत् ।।३.१.४।।

संहिताविद्या– निर्भुजवक्तृकृतोपसना

उपनिषत्

**अथ खल्वाहुर्निर्भुजवक्त्राः । पूर्वमक्षरं पूर्वरूपम् । उत्तरमुत्तररूपम् । योऽवकाशः पूर्वरूपोत्तररूपे अन्तरेण सा संहितेति । स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ।**

ह्रस्वमाण्डूकेयोपासना

**अथ वयं ब्रूमो निर्भुजवक्त्रा इति ह स्माह ह्रस्वो माण्डूकेयः । पूर्वमेवाक्षरं पूर्वरूपम् । उत्तरमुत्तररूपम् । योऽवकाशः पूर्वरूपोत्तररूपे अन्तरेण, येन सन्धिं विवर्तयति, येन स्वरास्वरं विजानाति, येन मात्रामात्रां विभजते सा संहितेति । स य एवमेतां संहितां वेद, सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ।**

मध्यमकृतोपासना

**अथ हास्य पुत्र आह मध्यमः प्रातीबोधीपुत्रः । अक्षरे खल्विमे अविकर्षन्ननेकीकुर्वन् यथावर्णमाह तद्यासौ मात्रा, पूर्वरूपोत्तररूपे अन्तरेण सन्धिविज्ञापनी साम तद्भवति । सामैवाहं संहितां मन्य इति ।**

## निर्भुजवक्त्रपासितसंहितागतभगवद्रूपवर्णनम्

### भाष्यम्

पूर्ववर्णस्थितं यत्तद्रूपं पूर्वाक्षराभिधम् ।
वराहाख्यं हरेरन्यवर्णगं वामनाभिधम् ।।

उत्तराक्षरसंज्ञं च वर्णयोरन्तरस्थितम् ।
अवनात् काशनाच्चैतदवकाशाभिधं हरेः ।।

नृसिंहरूपमित्याहुर्निर्भुजास्यास्तथाऽवदन्[३६] ।
ह्रस्वो येनाक्षरोच्चारो मात्रासन्धिस्वरात्मकः ।।

व्यासरूपो हरिः साक्षात् संहितानामकस्त्विति ।
मत्पुत्रो[३७] मध्यमः प्राह समोच्चारणकारणः ।।

सामनामा वासुदेवः संहितानामवानिति ।। इति च ।

मापयति त्रायति चेति मात्रा भगवान् । यथोच्चारितवर्णयोर्मध्यस्थितश्च ।

### भवप्रदीपः

'अथ खल्वाहुर्निर्भुजवक्त्राः' इत्येत्खंडं व्याचष्टे– **पूर्ववर्णेत्यादिना** ।। **अन्यवर्णगं** उत्तरवर्णस्थितम् । **वर्णयोः** पूर्वोत्तराक्षरयोः **अन्तरस्थितं** मध्ये स्थितम् । 'योऽवकाशः' इत्यत्रावकाशशब्दं हरौ निर्वक्ति– **अवनादिति** ।। निर्भुजवक्त्रा इति केषांचिदृषीणां संहितावादिनां यौगिकं नामेत्यभिप्रेत्योक्तम्– **निर्भुजास्या इति** ।। 'अथ वयं ब्रूमो निर्भुजवक्त्राः' इत्यादेरर्थः– **तथाऽवदन्निति** । **ह्रस्वः**

३६. अवदत् इति ह.पाठः

३७. तत्पुत्र इति पा.

ह्रस्वमांडूकेयो नाम ऋषिः । **मात्रा** ह्रस्वाक्षरम् । **सन्धिः** पूर्वोत्तरवर्णयोः । **स्वर** उदात्तादिः । एतदात्मकाक्षरोच्चारो **येन** यत्प्रेरणया भवति स व्यासरूपः साक्षाद्धरिः संहितानामक इत्यवददित्यन्वयः । एतेन 'येन सन्धिं विवर्तयती'त्यादिकं विवृतं भवति । 'अथ हास्य पुत्र आह मध्यमः' इत्यस्य व्याख्या– **मत्पुत्र**[३८] **इति** । ह्रस्वमांडूकेयपुत्रः । समोच्चारणकारण इत्यनेन 'अक्षरे खल्विमे अविकर्षन्ननेकीकुर्वन् यथावर्णमाह' इत्येतद्विवृतं भवति । कारणशब्दः करोतेर्ण्यन्तात् करणे ल्युडन्तः । स च पुल्लिङ्गोऽपि भवति । 'सामनामा वासुदेवः' इत्यनेन 'साम तद्भवति सामैवाहं संहितां मन्ये' इत्येतद्विवृतं भवति । 'तद्यासौ मात्रे'त्यत्र मात्रशब्दं भगवति निर्वक्ति– **मापयतीति** ।। **मापयति** ज्ञापयति **त्रायति** त्रायते पालयति चेति मात्रा भगवानित्यर्थः । 'पूर्वोत्तररूपे अन्तरेणे'त्यस्यार्थो– **यथोच्चारितवर्णयोर्मध्यस्थितश्चेति** । चशब्देन भगवानित्यस्यानुवृत्तिः ।।

**वासुदेवः संहिताप्रतिपाद्यः इत्यत्र ऋषिसम्मतिकथनम्**

**उपनिषत्**

**तदप्येतदृषिणोक्तम्– 'बृहस्पते न परः साम्नो विदुः' इति । स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ।।३.१.५।।**

---

३८. तत्पुत्र इति 'ख'पाठः

विद्यायाः पात्रापात्रनिरूपणम्

भाष्यम्

मा नः स्तेनेभ्यो ये अभि द्रुहस्पदे निरामिणो रिपवोऽन्नेषु जागृधुः ।
येषां नैतन्नापरं किं च नैकं ब्रह्मणस्पते[३९] ब्रूहि तेभ्यः कदाचित् ।।

अथोशमेनोपरताः मनुष्याः ये धर्मिणो ब्रूहि तेभ्यः सदा नः ।
आदेवानामोहते विव्रयो[४०] हृदि बृहस्पते न परः साम्नो विदुः ।।

अभिद्रुहस्पदे अभितो द्रोहस्य नित्यनिरतिशयदुःखस्यान्धतमसो योग्याः (शास्त्रदस्यवः) ।

ऐकात्म्यं नाम यदिदं केचिद् ब्रूयुरनैपुणाः ।
शास्त्रतत्त्वमविज्ञाय तथावादबला जनाः ।।

कामक्रोधाभिभूतत्वादहङ्कारवशं गताः ।
याथातथ्यमविज्ञाय शास्त्राणां शास्त्रदस्यवः ।।

ब्रह्मस्तेना निरानन्दा अपक्वमनसोऽशिवाः ।
वैगुण्यमेव पश्यन्ति न गुणानि नियुञ्जते ।।

तेषां तमःशरीराणां तम एव परायणम् ।।

इति मोक्षधर्मे भगवद्वचनादेवंविधा एव स्तेना अभिद्रुहस्पदस्थाश्च ।

भावप्रदीपः

ननु विष्णोः सामशब्दवाच्यत्वं संहिताशब्दवाच्यत्वं च कुत इत्यतस्तत्र सामशब्दवाच्यत्वे तावच्छ्रुतिसमाख्योच्यते– तदप्ये-

---

३९. बृहस्पते इति ह.पाठः ४०. विभ्रयो इति ह.पाठः

**तद्दूषिणोक्तमिति** ।। तत्रापि सामशब्दो विष्णुपरः कुतः इत्यतः तयोस्तदुपपादयितुं समग्रं मन्त्रवाक्यमुदाहृत्य व्याचष्टे– **मान इति** ।। अभिद्रुहस्पदे स्थातुं योग्या इति शेषमभिप्रेत्य तद्व्याख्यानं– **अभितो द्रोहस्येत्यादि** ।। स्तेनेभ्य इति न प्रसिद्धस्तेनाविवक्षिताः । तेषामभिद्रोहपदस्थत्वायोगादित्याशयेन प्रमाणेनैव विवक्षितान्स्तेनान् दर्शयति– **ऐकात्म्यमिति** ।। एकश्चासावात्मा चेत्येकात्मा, तस्य भाव ऐकात्म्यम् । सर्वात्मनां ब्रह्मैक्यमिति यावत् । यदैकात्म्यं नाम **इदमनैपुणा** अविद्यमाननैपुणाः केचित् ब्रूयुः । तेषां तथावचने किं मूलमित्यत उक्तम्– **शास्त्रतत्वमिति** ।। [४१]'अहं ब्रह्म' इत्यादिशास्त्राणां तत्त्वमन्तर्यामिरूपाणां ब्रह्मत्वादिरूपमभिप्रेतार्थमविज्ञाय ब्रूयुः । कथमविज्ञानमात्रेण तदुक्तिरित्यत उक्तम्– **तथेति** ।। ऐक्यप्रतिपादकसदृशो यो वाद एकविभक्तित्वादिरूपः स बलं येषां ते तथोक्ताः । 'अहं ब्रह्मास्मि' इत्यादिवाक्यानां तात्पर्यमविज्ञायापाततः प्रतीत एवार्थे भ्रान्ता इत्यर्थः । सर्वेषामविद्यमानं शास्त्रतत्त्वाज्ञानादिकं तेषामेव किं निमित्तमित्यत उक्तम्– **कामेति** ।। यथोक्तम्– 'इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन'[४२] इति । द्वन्द्वमोहस्तत्वज्ञानाभावः । ननु 'द्वा सुपर्णा'[४३] इत्यादिशास्त्रेषु विरोधिषु सत्सु कथमैक्यं ब्रूयुरित्यत आह– **याथातथ्येति** ।। भेदपराणां शास्त्राणां याथार्थ्यमविज्ञाय **शास्त्रदस्यवः** तानि शास्त्राण्यतत्त्वावेदकानीति मन्यमाना इत्यर्थः । एवमैक्यं मन्यमानाः ब्रह्मस्तेनाः । कामादीनामागन्तुकत्वान्मूलकारणमाह– **निरानन्दा इत्यादि** ।। एतेन पदत्रयेणा-

---

४१. बृह.उ. ३-४-४ ४२. भ.गी. ७-२७

४३. अथ.उ. ३-१-१

धमानां स्वरूपयोग्यतां लक्षयति । तथापि सर्वज्ञत्वाल्पज्ञत्वादि-विरुद्धधर्माधिकरणत्वानुमानविरुद्धमैक्यं कथं ब्रूयुरित्यत आह– **वैगुण्यमेवेति** ।। जीवब्रह्मणोस्तत्वतो निर्गुणत्वमेव पश्यन्तो **गुणानि** गुणान् सर्वज्ञत्वादिधर्मान् **न नियुञ्जते** तत्स्वरूपेण न योजयन्ति । एवं भूतानां फलमाह– **तेषामिति** ।। तमोगुणप्रचुरशरीराणां **तम एव** तामिस्रान्धतामिस्ररूपो नरकविशेष एव **परायणं** परमप्राप्यमित्येवं मोक्षधर्मे भगवद्वचनादेवंविधा जीब्रह्मणोरैक्यं मन्यमाना एव स्तेनास्त एवाभिद्रुहस्पदस्थाश्च । तम एव तेषां परायणमित्युक्तत्वादित्यर्थः ।।

### निरामिणशब्दार्थकथनम्

### भाष्यम्

**निरामिणः रामस्य रमणरूपस्य पूर्णानन्दस्वरूपस्य विष्णोर्जीव-स्वरूपताज्ञानेन नीचताविदः । त एव[४४] रिपवश्च तस्य ।**

**अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।**
**परं भावमजानन्तो मम भूतमहेश्वरम् ।।**

**मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।**
**राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं[४५] श्रिताः ।।**

**इत्यादिवचनादसुरादयः ।**

**अन्नेषु जागृधुः भोगमात्रगृध्नवः ।**

### भावप्रदीपः

'निरामिणः' इत्यस्यार्थमाह– **निरामिण इति** ।। नीचतया रामो

---

४४. तत एव इति ह.पाठः ४५. मोहनीं इति ह.पाठः

भगवानेषां ज्ञानेऽस्तीति निरामिण इत्यर्थः । **त एव** एवं नीचताविद एव **तस्य** विष्णो रिपवश्च । एवंविधा जीवाः के नामेत्यतः प्रमाणेनैव तत्स्वरूपमाह– **अवजानन्तीति ।। मानुषीं तनुं** मूढानां मानुषवत् प्रतीतां न तु मनुष्यरूपां आश्रितं मामवजानन्ति । सति तत्त्वज्ञाने कथमवजानन्तीत्यत उक्तम्– **परं भावमिति ।। भावं** याथात्म्यम् । भूतं महदीश्वरं चेति भूतमहेश्वरम् । तेषां फलमाह– **मोघाशा इति ।। वृथाशाः** भगवद्वेषिभिराशासितमामुष्मिकं न किंचिदाप्यते । **मोघ-कर्माणः** यज्ञादिकर्माणि च तेषां वृथैव । **मोघज्ञानाः** ज्ञानं च वृथैव भवति । **विचेतसो** विरुद्धमनसः । द्वेषकारणमाह– **राक्षसीमिति ।।** तथा च विष्ण्ववज्ञानिनामत्रासुरराक्षसप्रकृतित्वस्योक्तत्वाद्विष्णोर्जीव-स्वरूपतादिज्ञानेन ये नीचताविदस्तेऽसुरादय एवेत्यर्थः ।

'अन्नेषु जागृधुः' इत्यत्रान्नशब्दो भोगमात्रोपलक्षण इत्यभिप्रेत्य व्याचष्टे– **अन्नेष्विति ।। गृध्नवः** अभिकांक्षमाणाः । गृधु अभिकांक्षायामस्मात् क्नुः ।।

असुरस्वभावनिरूपणम्

**भाष्यम्**

**येषामेतत्सर्वोत्तमं वासुदेवाख्यं परं ब्रह्म नास्तीति पक्षः ईशितव्ये विद्यमाने हीश्वरो भवतीति । न चापरं किञ्चित् परमापेक्षया ह्यपरमिति । किं तर्हि किञ्चनैकं किमप्येकमेव वस्त्वस्ति न परमपरं चेति[४६] तेषां पक्षः ।**

**असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।**
**अपरस्परसम्भूतं किमन्यत् कामहैतुकम् ।।**

४६. वेति इति ह.पाठः

**एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।**
**प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥**
**ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी[४७] ॥**

**इत्यादि वचनात् ।**

**भावप्रदीपः**

'येषां नैतदि'त्यस्यार्थो– **येषामेतदिति** ॥ वासुदेवाख्यमिति वक्ष्यमाणसामशब्दार्थः । 'न परः साम्नोविदुः' इति वक्ष्यमाणानुरोधेन सर्वोत्तममिति तस्य विशेषणम् । तत्पक्षे सर्वोत्तमवस्त्वभावमेवोपपादयति– **ईशितव्य इति** ॥ ईशितव्यं च तत्पक्षे मिथ्यैवेति भावः । येषां पक्षेऽ**पर**मवरमपि किंचिन्नास्ति । कुत इत्यत आह– **परमेति** ॥ परमं तु नास्त्येवेत्युक्तमेवेति भावः । 'किञ्चने'त्यस्यार्थः– **किमपीति** । निर्धर्मकमित्यर्थः । एतदेव व्यनक्ति– **न परमिति** ॥ कथमेषां पक्षे न परमपरं चास्तीति निश्चीयत इत्यत आह– **असत्यमिति** ॥ **ते** आसुराः । जग**दसत्यं** सद्विलक्षणमत एवा**प्रतिष्ठं** ज्ञानबाध्यं तत एवानीश्वरमाहुः । न च यतो यतो जातमसावीश्वर इति वाच्यम् । यतोऽ**परस्परसंभूतं** एकस्मादेकस्य नोत्पत्तिरिति यावत् । ननु जगत्सत्यं न चेत्किमसदेव । परस्परसंभूतं न चेत्किं नित्यं स्वतो वा जातम् । आद्यस्योत्तरं– **अन्यदिति** ॥ सदसद्भ्यामिति शेषः । द्वितीयस्योत्तरं– **कामहैतुकमिति** ॥ काम इति तत्कारणमविद्योपलक्ष्यते । किमर्थं ते तथाहुरित्यत आह– **एतामिति** ॥ **नष्टात्मानो** दुष्टस्वभावाः **अल्पबुद्धयः** शास्त्रविचाराकुशलाः **उग्रकर्माणः** भस्मधारणादिक्रूरव्यापाराः । जगतोऽहिताः ।

४७. सिद्धोऽहं बलवान् सुखी इति ह.पाठे नास्ति

'यो द्विष्याद्विबुधं श्रेष्ठं[४८] देवं नारायणं प्रभुं ।
कथं स न भवेद्द्वेष्य आलोकान्तस्य कस्यचित्[४९]

इति वचनात् । **एतां दृष्टिं** मिथ्याज्ञान**मवष्टभ्या**ऽवलंब्य जगतः **क्षयाय** व्यामोहनाय प्रभवन्तीत्यर्थः । एतेनापरं नास्तीति तेषां पक्ष इत्यंशसिद्धिः । परमपि नास्तीत्यत्रेश्वरोऽहमिति वाक्यान्तरम् । अत्राहमेवेश्वरो न मत्तोऽन्य इत्यनेन परं नास्तीत्यंशसिद्धिः ।।

## वायोर्वेदपतित्वे प्रमाणोदाहरणम्

### भाष्यम्

**ब्रह्मणस्पते ब्रह्मणो वेदस्य पते वायो । 'अथ हेममासन्यं प्राणमूचुः' । 'एष उ एव ब्रह्मणस्पतिर्वाग्वै ब्रह्म तस्या एष पतिस्तस्मादु ब्रह्मणस्पतिः' इत्यादि श्रुतेः । एतादृशेभ्यो मा ब्रूहि ।**

**[५०]शमेन विष्णुनिष्ठया उप समीपे तस्मिन्नेव रताः साम्नो विष्णोः परं किमपि न विदुः । तदेव देवानां त्रयः सर्वदेवानां परतमं विष्ण्वाख्यं ब्रह्म हृदा व्योहते । वासुदेवादिरूपेण वरं नियामकं चेति त्रयः, तेभ्यो ब्रूहि ।**

### भावप्रदीपः

वायोर्वेदपतित्वेन ब्रह्मणस्पतिशब्दवाच्यत्वे बृहदारण्यश्रुतिं प्रमाणयति– **अथ हेममिति** ।। अत्र यद्यपि [५१]'एष उ एव ब्रह्मणस्पतिः'

---

४८. विबुधश्रेष्ठं इति 'ख'पाठः

४९. अनु. ३-३-१२०

५०. अथो शमेन इति पा. ५१. बृह.उ. ३-३-२१

इत्येतदेवोदाहर्तव्यम् । तथापि [५२]'अथ हेममासन्यं प्राणमूचुः' इति व्यवहितोपक्रमवाक्योदाहरणं तद्वाक्यस्य मुख्यवायुपरत्वप्रदर्शार्थमिति बोध्यम् । तत्र नासिक्यप्राणव्यावृत्यर्थं **असन्य**मिति विशेषणात् । आस्ये भवो ह्यासन्यः । आस्ये भवत्वं च 'अयमास्येऽन्तरिति सोऽयास्य' इत्याद्युत्तरवाक्यान्मुख्यप्राणलिङ्गमवगम्यत इति । तर्हि केभ्यो वक्तव्यमित्यत उक्तम्– **अथो शमेनेति** ।। तस्य व्याख्यानं– **शमेनेति** ।। [५३]'शमो मन्निष्ठता बुद्धेः' इति वचनात् । पर इत्यस्य परमिति व्याख्या । उत्तममित्यर्थः । **तदेव** सामाख्यं ब्रह्मैव । 'देवानां व्रयः' इत्यनुवादस्तस्यार्थः– **सर्वदेवानां परतममिति** । एतादृशं च विष्ण्वाख्यं वासुदेवादिरूपेण स्थितं ब्रह्म ये हृदा **व्योहते** वहन्ति तेभ्यो ब्रूहीत्यन्वयः । व्रय इत्यस्य परतममिति कथमर्थ इत्यतो निरुच्य दर्शयति– **वरं नियामकं चेति व्रय इति** ।। वरशब्दे वकारस्यान्तलोपः । यम उपरम इत्यतोऽर्डः । धातूनामनेकार्थत्वान्नियामकमित्युक्तम् । तथा च नियामकत्वे सति वरत्वमेव परतमत्वमिति भावः ।।

**भाष्यम्**

**वायुं विद्या समासाद्य सर्वासां पतिमूचिरे ।**
**स्तेनेभ्यो मैव नो ब्रूहि ब्रूह्यथो वैष्णवेषु च ।। इति च ।**

**सामनाम्ना श्रुतिर्यस्माद्विष्णुमाह ततः प्रियम् ।**
**तन्नाम विष्णोरिह तु संहितार्थं वदेद्यतः ।। इति च ।**

**सामनाम्नः संहिताशब्दार्थत्वाद्विष्णोस्तस्य नाम्नः श्रुतिसिद्धत्वाच्च सामनाम्नो वासुदेवरूपसमाख्यासु पञ्चरात्रे पठितत्वाच्च तद्रूपं संहितानामकमिति युक्तमित्यभिप्रायः ।।३.१.५।।**

---

५२. बृह.उ. ३-३-७ ५३. गी.भा.उ.प्र.१०-४

**भावप्रदीः**

अत्रार्थे प्रमाणमाह– **वायुमिति** ।। **विद्याः** विद्याभिमानिदेवताः सरस्वत्याद्याः । **सर्वासां** विद्यानां । नन्वस्तु सामनामकत्वं विष्णोस्तथापि 'विष्णुमेवाहं संहितां मन्ये' इत्युक्तिसंभवे 'सामैवाहं संहितां मन्य' इत्युक्तिः कुत इत्यतः प्रमाणेनैवोत्तरमाह– **सामनाम्नेति** ।। **श्रुतिः** 'न परः साम्नो विदुः' इति । **इह तु** उपनिषदि तु तत्सामनाम यतः **संहितार्थं** संहिताशब्दार्थमपि वदेत् । अतः साम्नो[५४] विष्णुप्रियत्वात्संहिताशब्दपर्यायत्वाच्च प्रियनाम्नैव व्यवहार्यत्वात्सामनामा विष्णुरेव संहितानामक इति विवक्षितार्थलाभायैवमुक्तिरित्यर्थः । इममेव स्मृत्यभिप्रायं विवृण्वन् 'सामैवाहं संहितां मन्ये' इत्यत्र सम्मतित्वेनोदाहृतमन्त्रस्यासङ्गतिशङ्कानिरासाय मन्त्रोदाहरणाभिप्रायं व्यनक्ति– **सामनाम्न इति** ।। **संहिताशब्दार्थत्वात्** संहिताशब्दसमानार्थत्वात् । समाख्यासु नामसु **तद्रूपं** सामनामकं वासुदेवरूपम् ।।

ततश्चायं खण्डार्थः । **अथ** प्रमेयान्तरं निरूप्यते । **निर्भुजवक्त्राः** निर्भुजं संहिता वक्तृमुखे[५५] येषां ते तथोक्तास्तन्नामानः केचन ऋषय आहुः । खल्विति वाक्यालंङ्कारे । किमिति? **पूर्वमक्षरं** पूर्वाक्षरस्थितं यद्वराहाख्यं रूपं तत्**पूर्वरूपं** पूर्ववर्णप्रतिपाद्यम् । **उत्तरमु**रवर्णस्थितं वामनाख्यं रूपं **उत्तररूपं** उत्तरवर्णप्रतिपाद्यम्[५६] । **पूर्वोत्तररूपे अन्तरेण** पूर्वोत्तरवर्णयोरन्तरस्थितः योऽ**वकाशः** अवनात् काशनाच्चावकाशनामा नृसिंहः **सा संहिता** संहितानामक इति । विधेयानुसारेण स्त्रीलिङ्गम् । स य एवमित्यादिकं पूर्ववदेव व्याख्येयम् ।।

---

५४. सामनाम्नो इति 'ख'पाठः ५५. वक्तृे मुखे इति 'ख'पाठः

५६. वाच्यम् इति 'ख'पाठः

**अथ** एवं ब्रुवाणान्निर्भुजवक्त्रान्प्रति **ह्रस्वो मांडूकेयो** नाम ऋषिः **हे निर्भुजवक्त्रा** इति संबोध्य वयं ब्रूम इत्याह स्म । किमिति? पूर्वमेवाक्षरं पूर्वरूपम् । उत्तरमक्षरमेवोत्तररूपम् । नात्रास्मकं विप्रतिपत्तिरित्येवकारेणाह । **पूर्वरूपोत्तररूपे** अन्तरेण योऽवकाशः **येन** यत्प्रेरणया **सन्धिं** पुर्वोत्तरवर्णयो**र्विवर्तयति** विशेषेण वर्तयति । पुरुषः येन च **स्वरास्वरं विजाति** अत्रायं स्वरो न भवति किन्त्वन्य एवेति ज्ञात्वा क्लृप्तस्वरेणैवाक्षरमुच्चारयतीति यावत् । येन च **मात्रामात्रां विभजते** ह्रस्वदीर्घविभागं करोति । **सा** वेदव्यासाख्यं रूपं **संहिता** संहितानामकमिति । 'स य एव'मित्याद्युक्तार्थम् ।।

अथ ह **अस्य** ह्रस्वमांडूकेयस्य पुत्रः **प्रातीबोधीपुत्रः** तन्नामकभार्याजातो मध्यमो नाम ऋषिराह । किमिति? **इमे खल्वक्षरे** पुर्वोत्तरवर्णे **अविकर्षन् अनेकीकुर्वन्** विकर्षणसंश्लेषावप्रापयत्[५७] । **यथावर्णं** वर्णस्थितिमनतिक्रम्याह । सममेवाक्षरोच्चारणं करोतीति यावत् । यदनुग्रहात् पुमानिति शेषः । तत्साम भवतीत्युत्तरेणान्वयः । या चासौ **मात्रा** मात्रानियामिका मापयति त्रायते चेति मात्रानाम्नी यापि च **पूर्वोत्तररूपे अन्तरेण** यथावदुच्चारितपूर्वोत्तरवर्णयोर्मध्ये स्थित्वा **सन्धिविज्ञापनी** सन्धिप्रेरिका **तत्साम भवति** सा मूर्तिः सामनाम्नी वासुदेवाख्या भवति । तस्मात्**सामैव** सामनामकं वासुदेवरूपमेवाहं **संहितां** पुर्वोत्तरवर्णगतरूपद्वयसहितत्वात्संहितानामकं मन्य इति । आहेति पूर्वेणान्वयः ।।

**तदप्येतत्** विष्णोः सामशब्दवाच्यत्वमृषिणोक्तम् । **हे बृहस्पते**

---

५७. प्रापयन् इति 'ख'पाठः

वाग्घि बृहती 'तस्या एष पतिः' इति श्रुतेर्वाक्पते वायो साम्नो विष्णोः सकाशात्परमुत्तमं किंचन ये न विदुः विष्णुमेव सर्वोत्तमं ये जानन्ति तेभ्यो नोऽस्मान् ब्रूहीति श्रुतिशेषेणान्वयः । 'स य एवं' इति पूर्ववत् ॥३.१.५॥

संहिताविद्या– तार्क्ष्यमुनेरुपासनम्

उपनिषत्

**बृहद्रथन्तरयो रूपेण संहिता सन्धीयत इति तार्क्ष्यः । वाक् वै रथन्तरस्य रूपम् । प्राणो बृहतः । उभाभ्यामु खलु संहिता सन्धीयते, वाचा च प्राणेन च । एतस्यां ह स्मोपनिषदि संवत्सरं गा रक्षयते तार्क्ष्यः । एतस्यां ह स्म मात्रायां संवत्सरं गा रक्षयते तार्क्ष्यः । तदप्येतदृषिणोक्तं 'रथन्तरमाजभारा वसिष्ठः' 'भरद्वाजो बृहदाचक्रे अग्नेः' इति ।**

**स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ।**

तार्क्ष्यमुनिकृतभगवद्रूपोपासना

भाष्यम्

देवता पूर्ववर्णस्य लक्ष्मीरेव प्रकीर्तिता ।
नारायणस्तूत्तरस्य तौ वाक्प्राणाभिधौ मतौ ॥

मध्यस्थः संहितानामा सोऽर्धनारीपुमात्मकः ।
वेदात्मकत्वाद् वाङ्नाम्नी लक्ष्मीरेव प्रकीर्तिता ॥

प्राणनामा प्रणेतृत्वात् साक्षान्नारायणः स्वयम् ।
रमित्यानन्द उद्दिष्टः सम्भोग्यं थमुदाहृतम्[५८] ।।

विष्णुभोग्या रतितरा लक्ष्मीरेव रथन्तरम् ।
नारायणो बृहत्वात्तु बृहन्नामा प्रकीर्तितः ।।

रथन्तरस्य बृहतो देवते चैव तावुभौ ।
वाक्प्राणसंस्थितौ चैव ताभ्यामेव हि सन्धितम्[५९] ।।

लक्ष्मीनारायणं रूपं संहितानामकं शुभम् ।
एतां विद्यामवाप्तुं हि वत्सरं गा अरक्षत ।।

तार्क्ष्ये एतन्मात्रं[६०] च समुद्दिश्य न चापरम् ।

**भावप्रदीपः**

'बृहद्रथन्तरयो रूपेण' इति खंडं व्याचष्टे– **देवतेत्यादिना** ।। एतेन बृहद्रथन्तरशब्दौ नारायणलक्ष्मीपरावित्युक्तं भवति । 'वाग्वै रथन्तरस्य रूपं प्राणो बृहतः' इत्यस्यार्थः– **तौ वाक् प्रणाभिधौ मताविति** ।। 'संहिता सन्धीयते' इत्यत्र संहिताशब्दस्यार्थो– **मध्यस्थः संहितानामेति** । वाक्प्राणशब्दौ कथं लक्ष्मीनारायणवाचकावित्यत आह– **वेदेति** ।। रथन्तरबृहच्छब्दौ लक्ष्मीनारायणयोर्निर्वक्ति– **रमितीति** ।। रमेर्डः, 'संभोग्यं थं अन्नं थं' इति श्रुतेः । तथा च विष्णुभोग्यत्वात् थं । [६१]रतिरतत्वाद्रतरं, रशब्दस्य व्यवहितेनापि तरपा सामार्थ्यादन्वयः ।

---

५८. संभोग्यस्थमुदाहृतं इति ह.पाठः

५९. सहितम् इति ह.पाठः

६०. एतावन्मात्रं इति प्र.पाठः ६१. रतितरत्वात् इति 'ख'पाठः

रतरं च तत् थं च रथन्तरमिति लक्ष्मीरेवोच्यत इत्यर्थः । **बृहत्वात्** पूर्णत्वात् । एवं रथन्तरबृहच्छब्दयोर्योगं प्रदर्श्य रूढिमपि दर्शयितुमाह– **रथन्तरस्येति** ।। रथन्तरबृहदिति सामविशेषौ । तयोश्च **तावुभौ** लक्ष्मीनारायणौ **देवते** अधिष्ठातारौ । तथा च [६२]'मृदब्रवीदि'त्यादौ मृदादिशब्दानां मृदाद्यधिष्ठातृदेवतासु यथारूढिरेवमत्रापीति भावः । एवं वाक्प्राणशब्दयोरपि रूढिं दर्शयितुमाह– **वागिति** ।। तावुभाविति वर्तते । 'उभाभ्यां खलु संहिता सन्धीयते' इत्येतद्व्याचष्टे– **ताभ्यामिति** ।। लक्ष्मीनारायणाभ्यां पूर्वोत्तरवर्णस्थाभ्यां **संहितानामकं** लक्ष्मीनारायणमर्धनारीपुमात्मकत्वात् तदाख्यं रूपं सन्धितमिर्थः । 'एतस्यां ह स्मोपनिषदि संवत्सरं गा रक्षयते तार्क्ष्यः' इत्येतद्व्याचष्टे– **एतां विद्यामिति** ।। 'एतस्यां ह स्म मात्रायां' इत्यस्य व्याख्यानम्– **एतन्मात्रं चेति** ।

संहिताविद्या– कौण्ठरव्यमुनेरुपासनम्

**उपनिषत्**

**वाक्प्राणेन संहितेति कौण्ठरव्यः । प्राणः पवमानेन, पवमानो विश्वैर्देवैर्विश्वेदेवाः स्वर्गेण लोकेन, स्वर्गो लोको ब्रह्मणा । सैषाऽवरपरा संहिता ।**

**स यो हैतमवरपरां संहितां वेद, एवं हैव स प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सन्धीयते यथैषा संहिता ।**

---

६२. शत.ब्रा. ६-१-३

## कौण्ठरव्यमुनेरभिप्रायवर्णनम्

### भाष्यम्

संहितादेवता बह्वृच इति कुण्ठरवात्मजः ।।
द्वयं द्वयं देवतानां मिलितं[६३] हरिशर्ववत् ।

संहितानामकं तत्र वर्णमध्यस्य देवता ।।
तयोरेकं देवतयोः परमन्यत् तथावरम् ।

अवरस्य परस्यापि संयोगात् संहिता तु सा ।।
प्रोक्तावरपरेत्येव वाक्प्राणाख्यौ रमाच्युतौ ।

संहितैका तथैवान्या केशवो वायुसंयुतः ।।
वायुः स पवमानाख्यो देवताश्चाखिला अपि ।

तृतीया संहिता प्रोक्ता देवतास्ताः सशङ्कराः ।।
चतुर्थी संहिता प्रोक्ता शङ्करो ब्रह्मणा सह ।

पञ्चमी संहिता चैव संहिता मोक्षदा इमाः ।।

### भावप्रदीपः

'वाक्प्राणेन संहितेति कौण्ठरव्यः' इत्यादिकं व्याचष्टे– **संहिता देवता इति** ।। 'बह्व इति कुंठरवात्मज आहे'त्यनेन 'प्राणः पवमानेने'त्यादिकमपि कौण्ठरव्यस्यैव वचनमिति सूचयति । तत्र देवतानां मध्ये हरिः शर्ववन्मिलितं **द्वयं द्वयं** वाक्प्राणरूपं प्राण-पवमानरूपमित्यादिकं संहितानामकं । तस्यैवार्थो– **वर्णमध्यस्य**

---

६३. मिळितं इति ह.पाठः

**देवतेति** । 'सैषाऽवरपरा संहिता' इत्येतद्व्याचष्टे– **तयोरिति** ।। **तयोः** संहिताघटकयोर्देवतयोर्वागादिप्राणादिकयोर्मध्ये एकं प्राणादिकं **परं** उत्तमं **अन्यत्** वागादिकमवरम् । तथाशब्द एवमित्यर्थे । एवमपरस्य परस्यापि संयोगाद्या संहिता निष्पन्ना सा अवरपरेति प्रोक्तेत्यर्थः । तत्र किमवरं किञ्च परमित्याशङ्कायां तज्ज्ञापयिष्यन् पञ्चसंहिताघटक-देवतास्वरूपं तावन्निरूपयति– **वाक्प्राणाख्याविति** ।। 'केशवो वायुसंयुतः' इत्यनेन 'प्राणः पवमानेने'त्येतद्विवृतम् । 'पवमानो विश्वैर्देवै'रित्यस्यार्थो– **वायुः स पवमानाख्यो देवताश्चाखिला अपीति** ।। 'विश्वे देवाः स्वर्गेण लोकेने'त्यस्य– **देवतास्ताः सशङ्करा इति** । स्वर्गलोकशब्देन तदभिमानी शंकरो ग्राह्य इति भावः । 'शंकरो ब्रह्मणा सह' इत्यनेन 'स्वर्गो लोको ब्रह्मणे'त्येतद्विवृतम् । 'स यो है तामवरपारां संहितां' इत्यादेस्तात्पर्यं– **संहितामोक्षदा इमा इति** ।। स्वज्ञानिनामिति शेषः ।।

### पञ्चसंहितायां अवरपरदेवतानिरूपणम्

### भाष्यम्

**प्रथमायां द्वितीयायां विष्णुरेव परो मतः ।**
**तृतीयायां वायुरेव चतुर्थ्यां सर्वदेवताः ।।**

**विरिञ्च एव पञ्चम्यामवरा इतरे ततः ।**
**प्रथमायां संहितायामवरो वामभागगः ।।**

**द्वितीयायां तु परमस्तृतीयायां तथाऽवरः ।**
**चतुर्थ्यां परमश्चैव पञ्चम्यां वामगोवरः ।।**

**अवराद्याः परान्ता यदेताः सर्वाश्च संहिताः ।**
**ततोऽवरपराः प्रोक्ता नैवोक्तास्ताः परावराः ।।**

**अभिमानी द्युलोक्स्य शिवः सर्वस्य लोकनात् ।**
**द्योतनाच्च..............................।।**

### भावप्रदीपः

एवं संहितादेवतास्वरूपमुक्त्वा तत्रावरं परं च क्रमेण निरूपयति– **प्रथमायामिति** ।। वाक्प्राणाख्यरमाऽच्युतरूपायां (संहितायां)[६४] तथा प्राणपवमानाख्यविष्णुवायुरूपायां द्वितीयसंहितायां च विष्णुरेव परमो मतः, **तृतीयायां** पवमानविश्वदैवरूपायां संहितायां वायुरेव परः । **चतुर्थ्यां** विश्वदेवशंकरात्मिकायां सर्वदेवताः पराः, सर्वदेवतासु विष्णुरमाब्रह्मसरस्वतीभारतीनां पदतः किंचिदधिकशेषगरुडयोश्चान्त-र्भूतत्वेन तदपेक्षयैवात्र शङ्करस्यावरत्वोक्तिरिति बोध्यम् । एवं तृतीयायां संहितायां वायोः परत्वमपि विष्णुरमाविरिंचान्यदेवापेक्षयेति ज्ञातव्यम् । **पञ्चम्यां** शंकरब्रह्मरूपायां संहितायां विरिञ्चिरेव परः **इतरे** तद्भिन्नाः, पञ्चसंहितास्वपि **ततो** विष्ण्वादिभ्योऽवरा इत्यर्थः । संहितापञ्चके प्रथमान्तोक्ताः सर्वे वामभागगास्तृतीयान्तोक्ताः दक्षिण-भागगा इत्यभिप्रेत्य वामभागगततामात्रेण नावरत्वं शंकनीयमिति भावेन क्रमेण वामभागगदेवतानां दक्षिणदेवतापेक्षयाऽवरत्वमुत्तमत्वं चाह– **प्रथमायामिति** ।। प्राणाख्यविष्णवपेक्षयाऽवरो वागाख्यलक्ष्मीरूपः पदार्थो वामभागगः । द्वितीयायां प्राणाख्यो विष्णुः परम एव वाम-भागगः । तृतीयायां पवमानाख्यो वायुर्वर एव वामभागगः । चतुर्थ्यां

---

६४. ()चिह्नस्थं पदं 'क'पाठे नास्ति

सर्वदेवतारूपः परम एव वामभागगः । पञ्चम्यां स्वर्गलोकाख्यरुद्र-रूपोऽवरो वामभागग इत्यर्थः । अत्र 'सैषाऽवरपरा संहिता' इति संहिताया अवरपरत्वं यदुच्यते तत् द्वयोर्मध्ये एकस्यावरत्वं अपर-स्योत्तमत्वमभिप्रेत्यैव न तूभयोरप्युभयत्वमित्याशयेनाह– **अवराद्या इति** ।। अत्राद्यन्तशब्दौ न निर्देशक्रमानुरोधेन । क्वचिदुत्तमस्यैवादौ निर्देशात् । अवरस्याप्यन्ते निर्देशात् । किन्त्वारोहणतारतम्यक्रमानुरोधादेव । तथा च द्वयोर्मध्ये योऽवरः स **आद्यः** आदौ गणनीयः । यश्च परः सोऽन्ते गणनीयो यासां ता अवराद्याः परान्ता इत्यर्थः । ततोऽवर-परेति प्रोक्ताः न तु ता उभयरूपा अपि परावरा उक्ता इत्यर्थः । यत्त्ववरस्य परस्यापि संयोगात्संहिता तु सा प्रोक्ता परवरेत्येवेति प्रागुक्तं तदवरपरयोः परस्परसंयोगाभिप्रायमतो न तद्विरोधः । स्वर्ग-लोकशब्दः शंकरपरत्वेन व्याख्यातस्तत्कथमित्यत आह– **अभिमानीति** ।। स्वर्गाभिमानित्वात्स्वर्गः । सर्वस्य **लोकनाद**वलोकनात् **द्योतनात्** प्रकाशनाच्च लोकः शिव इत्यर्थः । लोकृ दर्शने, लुकृ प्रकाश इति च धातुः । अथवा द्युलोकस्याभिमानीति स्वर्गलोकशब्दस्य शङ्करे रूढि-प्रदर्शनम् । द्योतनाल्लोकनाच्चेति द्युलोकशब्दस्य योगदर्शनम् । तेन स्वर्गशब्दप्रवृत्तिनिमित्तमुपलक्षणीयम् । अतो नासङ्गतिरिति ।।

देवानामेव संहितोपसनायाः पूर्णं फलम्

उपनिषत्

**स यदि परेण वोपसृतः स्वेन वाऽर्थेनाभिव्याहरेत्, अभिव्याहार्षन्नेव विद्यात्, दिवं सहिताऽगमद्विदुषां देवानामेवं भविष्यतीति । शश्वत् तथा स्यात् । स य**

**एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ।**

**भाष्यम्**

..........यदि ब्रूयान्मन्त्रमेतमथापि वा ।
आत्मार्थेऽथ परार्थे वा चिन्तयेदेवमञ्जसा ।।

विद्वांसो देवता यस्मात् सम्यक्तेन महत्फलम् ।
तेषामेव हरिश्चैव संहितारूपकः प्रभुः ।।

अगमद्देवलोकं हि कर्तुं देवेष्वनुग्रहम् ।
इति चिन्तयतस्तेषां प्रसादात् फलमञ्जसा ।।

**भावप्रदीपः**

'स यदि परेण वोपसृतः स्वेन वाऽर्थेन नाभिहरेत्' इत्यादि व्याचष्टे– **यदि ब्रूयादिति** ।। **इमं मन्त्रं** 'रथन्तरमाजभार भरद्वाजो बृहदाचक्रे' इत्यादिकम् । **अथापि** 'वायं कंचिदन्यं मन्त्रं' इति शेषः । आत्मार्थे वा परार्थे वा यदि ब्रूयात्तदा **एवं** वक्ष्यमाणप्रकारेण चिन्तयेत् । किमिति? यस्मात् **देवताः** देवा एव सम्यक् **विद्वांसो** ज्ञानिनस्तेन कारणेन तेषां महत्फलं । अत एव संहितारूपको हरिश्च देवेष्वनुग्रहं कर्तुं देवलोकमगमदिति । एवं चिन्तनेन किमस्य फलमित्यत आह– **इति चिन्तयत इति** ।। **तेषां** देवानां, फलं भवतीति शेषः । अत्र 'संहितारूपको हरिरगमद्देवलेकं' इत्यनेन 'दिवं संहिताऽगमत्' इति, 'विद्वांसो देवता यस्मात्सम्यक्तेन महत्फलम् । तेषामेव' इत्यनेन 'विदुषां देवानामेवं भविष्यति' इति, 'इति चिन्तयतस्तेषां प्रसादात्फलमञ्जसा' इत्यनेन 'शश्वत्तथा स्यात्' इति च व्याख्यातं भवति ।।

संहिताविद्या- पञ्चालचण्डमुनेरुपासना

उपनिषत्

**वाक्संहितेति पञ्चालचण्डः । वाचा वै वेदास्सन्धीयन्ते । वाचा छन्दांसि । वाचा मित्राणि सन्दधति । वाचा सर्वाणि भूतानि । अथो वागेवेदं सर्वमिति । तद्यत्रैतद-धीयते वा भाषते वा वाचि तदा प्राणो भवति । वाक् तदा प्राणं रेळिह । अथ यत्र तूष्णीं वा भवति, स्वपिति वा प्राणे तदा वाग्भवति । प्राणस्तदा वाचे रेळिह । तावन्योन्यं रीळहः । वाग्वै माता प्राणः पुत्रः ।**

**तदप्येतदृषिणोक्तम्—**

**[६५]एकः सुपर्णः स समुद्रमाविवेश**
**स इदं विश्वं भुवनं विचष्टे ।**
**तं पाकेन मनसा पश्यमन्ति**
**तस्तं माता रेळिह स उ रेळिह मातरम् ।। इति**

**स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ।**

पञ्चालचण्डोपासितसंहितादेवता

भाष्यम्

पञ्चालचण्डो वाचं तु ब्रह्माणीं हि सरस्वतीम् ।
मन्यतेऽस्याः पुत्रवच्च देवं नारायणं प्रभुम् ।।

---

६५. ऋक्.सं. १०-११४-४

[६६]वेदैर्हि व्यज्यते विष्णुः सा च वेदाभिमानिनी ।
प्राणस्थो भगवान् विष्णुः प्राणनामा प्रणेतृतः ।।

ब्रह्मणोऽपि पिता नित्यं भगवान् पुरुषोत्तमः ।
उपचर्यते पुत्र इति वेदैर्यद्व्यज्यते हरिः ।
सा देवी संहितानाम्नी वाच्योऽस्या विष्णुरेव हि ।।

**भावप्रदीपः**

'वाक्संहितेति पञ्चालचंड' इत्यत्र वाक्शब्दार्थमाह– **पञ्चालचंड इति** ।। तुशब्दो वाङ्नाम्नी लक्ष्मीरिति पूर्वमतादस्य मतस्य विशेषद्योतकः । नारायणं चास्याः सरस्वत्याः **पुत्रवत्** पुत्रमिव मन्यते । नारायणस्य कथं सरस्वतीपुत्रसाम्यमित्यतस्तदुपपादयति– **वेदैरिति**[६७] ।। एतेन 'वाग्वै माता प्राणः पुत्रः' इत्येतद्विवृतम् । प्राणशब्दस्य भगवति रूढियोगौ स्मारयति– **प्राणस्थ इति** ।। अत्र प्राणस्थ इत्यनेन रूढिः । **प्रणेतृतः** प्रणेतृत्वत इति योगः । सरस्वत्यजातत्वात्तदभिमन्यमान-वेदव्यंग्यतामात्रेण कथं विष्णोस्तत्पुत्रत्वमित्यत औपचारिकोक्ति-रियमित्याह– **ब्रह्मणोऽपीति** ।। सरस्वतीपतेरपीत्यर्थः । मुख्य-पुत्रत्वे बाधकोपन्यासार्थमिदं वचनम् । पूर्वं पितुरपि जन्मान्तरे पुत्रत्वं लोके दृष्टमेव । तद्वत्प्रकृतेऽपि किं न स्यादित्यत उक्तं– [६८]**सत्यमिति** ।। प्रतिकल्पमित्यर्थः । उपचारे निमित्तान्तरप्रतिषेधार्थं 'वेदैर्यद् व्यज्यते हरिः' इति पुनर्वचनम् । 'इदानीं वाक्संहिता' इत्येतद्व्याचष्टे– **सेति** ।। 'वाचि तदा प्राणो भवती'त्यस्य तात्पर्यं– **वाच्योऽस्या इति** । **अस्याः** सरस्वत्यभिमन्यमानाया वेदवाचः ।।

---

६६. देवै इति पा. ६७. देवैरिति 'ख'पाठः
६८. नित्यमिति 'ख'पाठः

संहिताविद्या– प्राजापत्याख्यशर्वकृता उपासना

### उपनिषत्

**अथातः प्रजापतिसंहिता । जाया पूर्वरूपम् । पतिरुत्तररूपम् । पुत्रः सन्धिः । प्रजननं सन्धानम् । सैषाऽदितिः संहिता। अदितिर्हीदं सर्वं यदिदं किञ्च, पिता च माता च पुत्रश्च प्रजननं च । तदप्येतदृषिणोक्तं– 'अदितिर्माता स पिता स पुत्रः'[६९] इति ।**

**स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति सर्वमायुरेति ।।३.१.६।।**

।। इति तृतीयारण्यके प्रथमोऽध्यायः ।।

शिवोपासितसंहितागतरूपाणि

### भाष्यम्

प्रजापत्याख्यशर्वेण प्रोक्ताऽन्या संहितापि हि ।
विष्णुरेवादितिर्नाम सर्वस्यात्ता यतः प्रभुः ।।

स एव पितृसंस्थस्तु पातृत्वात् पितृनामकः ।
देवतोत्तरवर्णस्य मातृस्थो मातृनामकः ।।

माननात् पूर्ववर्णस्य देवतेति प्रकीर्तितः ।
पोषकत्वात् सन्धिनामा वर्णयोरन्तरस्थितः ।।

---

६९. ऋक्.सं. १-८९-१०

**स एव पुत्रसंस्थश्च पुत्रनामा जनार्दनः ।**
**त्राणात् पूर्तित एवासौ वर्णसन्धानकर्मणि ।।**

**सन्धाननामा सन्धानकर्तृत्वात् पुरुषोत्तमः ।**
**प्रजातिकर्मसंस्थश्च स एव प्रजनाभिधः ।।**

**जनकत्वात् परो विष्णुरेवं विष्णुर्हि संहिता ।**
**वासुदेवादिरूपेण चतुर्धैवं व्यवस्थितः ।।**

**भावप्रदीपः**

'अथातः प्रजापतिः संहिता' इत्येतद्व्याचष्टे– **प्रजापतीति** ।। शर्वेणापीत्यपिशब्दसंबन्धः । 'सैषाऽदितिः' इत्यस्यार्थो– **विष्णुरेवेति** ।। 'जाया पूर्वरूपं पतिरुत्तररूपं पुत्रः सन्धिः प्रजननं सन्धानं, पिता च माता च' इत्यादिकं व्याचष्टे– **स एवेत्यादिना** ।। पितृसंस्थः पातृत्वात्पितृनामकः । **स** विष्णुरेवोत्तरवर्णस्य देवतेत्यनेन, मननात् संभावनान्मातृनामको मातृस्थो भगवान् पूर्ववर्णस्य देवतेत्यनेन च 'जाया पूर्वरूपं' 'पतिरुत्तररूपं' इति वाक्यद्वयमुक्तार्थम् । जाया-पत्योरेव पुत्रं प्रति मातापितृत्वात् । यो वर्णयोरन्तरस्थितो भगवान्, धिनु पुष्टाविति धातोः सन्धिनोतीति व्युत्पत्या पोषकत्वात्सन्धिनामा, स एव पुत्रसंस्थः **पूतितो** दुर्गन्धात्मकान्नरकात् **त्राणात्** उद्धरणात् पुत्रनामा चेत्यनेन 'पुनः सन्धि'रित्येतद्विवृतम् । असावेव वर्ण-सन्धानकर्मणि स्थितः सन्धानकर्तृत्वात्सन्धाननामा **स** एव विष्णुः प्रजातिकर्मसंस्थः जनकत्वात्प्रजनाभिधश्चेत्यनेन 'प्रजननं सन्धानं' इति वाक्यं व्याख्यातं वेदितव्यम् । 'अदितिः संहिताऽदितिर्हीदं सर्वं यदिदं किञ्च पिता च माता च पुत्रश्च प्रजननं च' इति वाक्यं

निगमनरूपेण व्याचष्टे– **एवमिति** ।। संहितारूपो विष्णुरेव **एवं** पित्रादिषु पित्रादिनाम्ना वासुदेवादिरूपेण चतुर्धा व्यवस्थित इत्यर्थः ।।

अदितिर्द्यौरिति मन्त्रव्याख्यानम्

**भाष्यम्**

**स एव दिवि संस्थश्च द्युनामा क्रीडनात् प्रभुः ।**
**अन्तरेवेक्षणाच्चैव सोऽन्तरिक्षोऽन्तरिक्षगः ।।**

**पृथिवी पृथिवीस्थश्च प्रथितत्वाज्जनार्दनः ।**
**मुख्यार्थत्वात् सर्वनाम्नां सर्वदेवाभिधो हरिः ।।**

**विश्वे देवा इति प्रोक्ता बहुधा तेषु संस्थितः ।**
**ज्ञानद्युतेर्देवनामा स्थितो देवेषु केशवः ।।**

**गां धारयंश्च गन्धर्वो गन्धर्वेषु व्यवस्थितः ।**
**माननान्मानुषो नाम मनुष्येषु स्थितो हरिः ।।**

**पालनात् पितृनामाऽसौ पितृष्वेव व्यवस्थितः ।**
**रतेः प्राणेसुराख्यश्च सोऽसुरेषु व्यवस्थितः ।।**

**एवं पञ्चजनेषुस्थो हरिः पञ्चजनाभिधः ।**
**जातनामा जातसंस्थः प्रादुर्भूतगुणत्वतः ।।**

**जनिक्रियास्थितश्चासौ जनित्वमिति गीयते ।**
**जनिं यस्मात् तवयति तवनं हि प्रकाशनम् ।।** इति च ।

## भावप्रदीपः

उक्तार्थे प्रमाणत्वेन तदप्येतदृषिणोक्तमिति मन्त्रैकदेश उदाहृतः । स चोक्तरीत्या व्याख्यातप्राय एवेत्यभिप्रेत्य प्रसङ्गाद्विशेषं जिज्ञापयिषुर्मन्त्रशेषमपि व्याचष्टे– **स एवेति** ।। इत्थं हि मन्त्रस्थितिः–

'अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ।
विश्वे देवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम्'[७०] ।। इति ।

अत्र[७१] द्यौरन्तरिक्षमिति शब्दौ पृथिव्या अप्युपलभकावित्यभिप्रेत्य त्रीनपि शब्दान् भगवति रूढिप्रदर्शनपूर्वकं निर्वक्ति– **दिवीति** ।। **अन्तः** स्वान्तरेव सर्वस्यापि जगत ईक्षणादन्तरिक्षः । 'विश्वे देवाः' इत्यस्यार्थकथनं– **मुख्यार्थत्वादिति** ।। **सर्वनाम्नां** सर्वदेवनाम्नां मुख्यार्थत्वात्सर्वदेवाभिधः ततश्च हरिर्विश्वे देवा इत्युच्यत इत्यर्थः । तथापि 'विश्वे देवाः' इति बहुवचनोपपत्तिः कथमित्यत आह– **बहुधेति** ।। **तेषु** इन्द्रादिषु **बहुधा** बहुरूपेण स्थितत्वात् बहुवचनोपपत्तिरिति भावः । देवा गन्धर्वा मानुषाः पितरोऽसुरा इति पञ्चजना अप्यदितिर्विष्णुरेवेति वाक्यार्थमभिप्रेत्य तान् पञ्चशब्दान् भगवति निर्वक्ति– **ज्ञानद्युतेरिति** ।। ज्ञानाख्यप्रकाशरूपत्वाद्देवनामा । दीव्यतेर्घञ् । **गां** भूमिं स्वर्गं वा धारयतीति **गन्धर्वः** । गामित्युपपदात्धृञ् धारण इत्यतो वप्रत्ययः । गामित्यस्य गंभावः । माननात् **मानुषः** । मान पूजायामित्यतः कुषन् । पालनात् **पितृ**नामा, पा पालन इत्यतस्तृच् प्रत्ययः । धात्वाकारस्येत्वं च । असौ प्राणे रतेः रमणात् **असुराख्यः** । एवं देवादिपञ्चजनवाचकविशेषशब्दवाच्यत्वं प्रदर्श्य पञ्चजनाख्य

---

७०. ऋक्.सं. १-८९-१०      ७१. तत्र इति 'ख'पाठः

सामान्यशब्दवाच्यतामप्यस्तीत्याह– **एवमिति** ।। जातजनित्वशब्दौ निर्वक्ति– **जातनामेति** ।। जाताः प्रादुर्भूताः नित्यव्यक्ता गुणा अस्य सन्तीति जातनामेत्यर्थः । [७२अ]'अर्श आदिभ्योऽच्' इत्यच् । जनिं जननक्रियां सर्वस्य तवयति प्रकाशयतीति जनित्वम् । तवशब्दे तकारस्यान्तलोपः ।।

प्रथश्च यस्य सप्रथश्चेति मन्त्रव्याख्यानम्

**भाष्यम्**

**प्रथश्च सप्रथश्चैव राजानौ मत्स्यदेशजौ ।**
**यापयामासतुर्विष्णोर्हविर्नाम्नो हविर्मुखे ।।**

**अनुष्टुब्देवता यस्तु नृसिंहो जगतोऽस्य च ।**
**स्वमुखे हवनादेव हविरित्यभिधीयते ।।**

**तस्मिन् यज्ञे वसिष्ठस्तु चतूरूपाज्जनार्दनात् ।**
**आजहार श्रियं देवीं रथन्तरवराभिधाम् ।।**

**चतुर्मूर्तिः स्तुतस्तेन प्रेषयामास तां श्रियम् ।**
**सा चास्मै प्रददौ विद्यां प्रययौ च पुनर्हरिम् ।।**

**धातेत्युक्तोऽनिरुद्धस्तु प्रद्युम्नस्तु द्युनामकः[७२] ।**
**वासुदेवः प्रसविता सर्वस्य प्रसवाद्विभुः[७३] ।।**

**सङ्कर्षणो विष्णुनामा प्रणेतृत्वाद् बलादपि ।**

---

७२. द्युतानकः इति ह.पाठः ७२.अ. पा.सू. ५.२.१२७

७३. प्रभुः इति ह.पाठः

## भावप्रदीपः

'रथन्तरमाजभारा वसिष्ठः भरद्वाजो बृहदाचक्रे अग्नेः' इत्येकदेशेन प्रागुदाहृतमन्त्रद्वयमादित आरभ्य व्याचष्टे– **प्रथश्चेत्यादिना ।।**

प्रथश्च यस्य स प्रथश्चनामाऽनुष्टुभस्य हविषो हविर्यत् ।
धातुर्द्युतानात्सवितुश्च विष्णो रथन्तरमाजभारा वशिष्ठः ।

ते विन्दन्मनसा दीध्याना यजुष्कन्नं प्रथमं देवयानं ।
धातुर्द्युतानात्सवितुश्च विष्णोर्भरद्वाजो बृहदाचक्रे अग्नेः[७४] ।।

इत्युपनिषदुपत्तौ मन्त्रौ । तत्र 'हविषः' इत्यस्य हविर्नाम्नो विष्णोरिति व्याख्या । मुख इति शेषोक्तिः । 'यदि'त्यस्य– **यापयामासतुरिति** । 'अनुष्टुभस्ये'त्यस्य– **अनुष्टुब्देवता यस्तु नृसिंह इति** । नृसिंहे हविःशब्दं निर्वक्ति– **अस्य जगतः स्वमुखे हवनाद्धविरित्यभिधीयत इति ।।** हु दानादनयोरिति धातोरसुन् । तस्मिन्मखे वसिष्ठो मुनिश्चतूरूपाज्जनार्दनाद्रथन्तरमिति वरा अभिधा यस्याः सा, तां **श्रियं** देवीमाजहारेत्यनेनोत्तरार्धमुक्तार्थं भवति । किं बलादाजहरेति शङ्कानिरासायाह– **चतुर्मूर्तिरिति ।। तेन** वसिष्ठेन । **सा च** भगवता प्रेषिता श्रीः **अस्मै** वसिष्ठाय । कास्ताश्चतुर्मूर्तयः केन केन च पदेन तल्लाभ इत्यतो विविच्याह– **धातेत्यादिना ।।** धारणात् **धाता** । दिवा प्रकाशेन ततत्वात् **द्युतानः** । तनोतेर्घञ् । अथवा द्युत दीप्तावित्यतः शानच् । **प्रणेतृत्वा**च्चेष्टकत्वात् **बलात्** विशिष्टबलवत्वाच्च विष्णुनामा । 'णकारो बलं षकारः प्राण आत्मा'[७५] इति श्रुतेरिति भावः ।।

---

७४. ऋक्.सं. १०.१८१.१,३ ७५. ऐत.उ. पु.७४६

तेऽविन्दन् मनसेति मन्त्रव्याख्यानम्

**भाष्यम्**

चतूरूपं परं विष्णुं राजानौ प्रथसप्रथौ ।
भरद्वाजौ वसिष्ठश्च ध्यात्वाऽविन्दन् परात् परम् ।।

यजनीयो यजुर्नामा विष्णुः सङ्कर्षणाभिधः ।
जीवानां स्कन्दनादेव स्कन्नः प्रद्युम्न उच्यते ।।

प्रथमो वासुदेवस्तु देवयानोऽनिरुद्धकः ।
प्राप्यो देवैर्यतो नित्यमनिरुद्धाभिधो हरिः ।।

तस्मादेवं चतुर्मूर्तेः स्तुतिसन्तोषिताद्धरेः ।
आजहार भरद्वाजो रूपं नारायणाभिधम् ।।

तद्बृहन्नामकं विष्णोश्चातुरात्म्यात् समुद्गतम् ।
भरद्वाजमुपागम्य प्रादान्मोक्षवरं परम् ।।

चतुर्मूर्तिः स भगवानग्निरित्यभिधीयते ।
अग्र्यत्वात् सर्वभूतानाम्............।।

**भावप्रदीपः**

'अथ तेऽविन्दन्' इति द्वितीयमन्त्रस्य व्याख्या– **चतूरूपं परमित्यादि** ।। तत्र त इत्यस्यार्थो– **राजानौ प्रथसप्रथौ भरद्वाजो वसिष्ठश्चेति** । 'यजुष्कन्न'मित्यादिपदचतुष्टयार्थः– **चतूरूपं विष्णुमिति** । 'मनसा दीध्याना अविन्दन्नि'त्यस्य– **ध्यात्वाऽविन्दन्निति** । अत्रापि चतुर्मूर्तीर्विविच्याह– **यजनीय इति** ।। यजतेः कर्मण्यसुन्[७६] ।

---

७६. उसुन् इति 'ख'पाठः

जीवानां **स्कन्दनात्** स्वोदराद्बहिर्निसरणात्**स्कन्नः** । स्कंदिरगतिशोषणयोरित्यतः कर्तरि क्तः । यथोक्तम्– 'स सृष्टिहेतोः प्रद्युम्नतामुपगतः'[७७] इति । 'प्रद्युम्नरूपक इमांश्चरमात्मनेऽदात्'[७८] इति च । **प्रथमः** आद्यप्रादुर्भावः । देवैः प्राप्यत्वाद्देवयानः । इदमेव मूर्तिचतुष्टयं धात्रादिशब्दैरुच्यत इति भावेनोत्तरार्धं व्याचष्टे– **तस्मादिति** ।। 'आचक्रे' इत्यस्यार्थः– **आजहारेति** ।। नेदमप्याहरणं बलादिति भावेनोक्तं– **स्तुतिसन्तोषितादिति** ।। **तत्** बृहन्नामकं नारायणाभिधं रूपं विष्णोः **चातुरात्म्यात्** चतुरात्मकव्यूहात्**समुद्भवं** निर्गतं सत् भरद्वाजमुपागम्य मोक्षाख्यं वरं प्रादादित्यन्वयः । नन्वग्नेः सकाशाद्बृहन्नामकरूपस्योद्गतत्वोक्तेः कथं विष्णोश्चातुरात्म्यात्तत्समुद्गतत्वमुच्यत इत्यत आह– **चतुर्मूर्तिरिति** ।। अग्निशब्दप्रवृत्तिनिमित्तमाह– **अग्र्यत्वादिति** ।। अग्रे भवत्वात् उत्तमत्वादित्यर्थः । अग्रशब्दाद्भवार्थे निप्रत्ययो रशब्दलोपश्च । तथा चाग्नेरित्येतत् धात्रादिचतुर्णामपि पृथक्पृथक् विशेषणमतो न चातुरात्म्यादुद्गतत्वानुपपत्तिरिति भावः ।।

### अविन्दन् ते अतिहितमिति मन्त्रव्याख्यानम्

### भाष्यम्

**.................एवं चत्वार एव ते ।**
**अविन्दंस्तं चतुर्मूर्तिं साक्षान्नारायणं प्रभुम् ।।**

**गुहायां संस्थितमपि ह्यतीव हितमस्य च ।**
**सर्वज्ञत्वाद्यज्ञनाम्नो विष्णोस्तेजः परं हि तत् ।।**

---

७७. म.भा.ता.नि. १-७

७८. म.भा.ता.नि. १-४,८

**तस्मादेव चतुर्मूर्तेः सूरिप्राप्यत्वहेतुतः ।**
**सूर्यनाम्नोऽहरन् घर्मनामानं तं नृसिंहकम् ।।**

**घर्षणात् सर्वलोकस्य नृसिंहो घर्म उच्यते ।**
**निर्गत्य स चतुर्मूर्तेर्विप्रक्षत्राभिसंस्तुतात् ।।**

**प्रथादीनां चतुर्णां च पुरुषार्थचतुष्टयम् ।**
**दत्वा जगाम भगवान् स्वकीयां तनुमेव च ।।**

**वसिष्ठाच्च भरद्वाजाद्धोत्रध्वर्य्वोर्नृपौ तु तौ ।**
**यथेष्टसिद्धिं संप्राप्तौ सम्यगिष्टाज्जनार्दनात् ।।**

**इत्याद्यृग्वेदसंहितायाम् ।**

**भावप्रदीपः**

एवमुपनिषदुपात्तमन्त्रद्वयं व्याख्याय प्रकरणसङ्गतत्वात्तदुत्तरं–

'अविन्दन् ते अतिहितं यदासीद्यज्ञस्य धाम परमं गुहा यत् ।
धातुर्ध्युतानात्सवितुश्च विष्णोरासूर्यादभरन् घर्ममेतः'[७९] ।।

इति मन्त्रमपि व्याचष्टे– **एवमिति** ।। प्रथसप्रथवसिष्ठभरद्वाजास्तमतीव हितं चतुर्मूर्तिं नारायणं हृदयगुहायां संस्थितमपि **अविन्दन्** व्यजानन् । यदिदं रूपमविन्दन् तत् सर्वज्ञत्वात् यज्ञनाम्नोऽस्य विष्णोः परं तेजो हीत्यन्वयः । यात्यवगच्छतीति यः । जानातीति ज्ञः । यश्चासौ ज्ञश्च यज्ञ इत्यनेन ज्ञानज्ञान इत्यादिवत्सर्वज्ञ इत्यर्थलाभः । एतेन पूर्वार्धं व्याख्यातम् । उत्तरार्धस्य व्याख्या– **तस्मादेवेति** ।।

---

७९. ऋक्.सं. १०.१८१.१

सूर्यनाम्नश्चतुर्मूर्तेर्विष्णोर्घर्मनामानं नृसिंहरूपिणं तमेवाहरन्नित्यन्वयः । घर्मशब्दं नृसिंहे निर्वक्ति– **घर्षणादिति** ।। **पीडनात्** संहरणादिति यावत् । घृषु संघर्षण इत्यतो मन् षकारलोपो गुणश्च । चतुर्मूर्त्यात्मकव्यूहान्निर्गतस्य घर्मनाम्नो नृसिंहस्य कृत्यमाह– **निर्गत्येति** ।। स नृसिंहः **विप्रक्षत्राभिसंस्तुतात्** विप्राभ्यां वसिष्ठभरद्वाजाभ्यां क्षत्राभ्यां प्रथसप्रथाभ्यां चाभिसंस्तुतात् । **स्वीयां तनुं** यतः स्वयमुद्गतस्तामित्यर्थः । प्रथसप्रथयोर्यज्ञे वसिष्ठभरद्वाजयो रथन्तराद्याहरणं कथमुपपद्यते । कथंचिदुपपत्तावपि किं तेनानयो राज्ञोः प्रयोजनमित्यत आह– **वसिष्ठाद्येति** ।। **होत्रध्वर्योः** होत्रध्वर्युभ्याम् । तथा च राज्ञोर्यज्ञे वसिष्ठस्य होतृत्वाद्भरद्वाजस्याध्वर्युत्वात् ताभ्यां स्वार्थं राजार्थं च रथन्तराद्याहरणादिकं कृतमिति भावः । अत एवोक्तं प्राक्– 'यदि ब्रूयान्मन्त्रमेतमथापि वा । आत्मार्थे च परार्थे च चिन्तयेदेवमञ्जसा'[८०] इति ।।

### भाष्यम्

**यस्य प्रथ इति नाम स च हविर्नाम्नो विष्णोर्हविर्यत् अयत् । अटो लोपेनान्तर्णीतणिच्त्वेन [८१]अयापयदित्यर्थः । एवं सप्रथ इति यस्य नामासौ । हविर्यदिति पृथक्सम्बन्धः ।**

**आचक्रे आकारयामास[८२] । 'अविन्दन् ते' 'ते अविन्दन्' इत्यध्यात्माधिदैवतयोः[८३] उभयत्रापि भगवन्तमविन्दन्नित्यर्थः । 'देवयानं गुहायत्' इति वचनात् ।**

८०. ऐत.भा. ६४६-पु

८१. अयातयत् इति ह.पाठः

८२. आह्वयामास इति ह.पाठः

८३. अध्यात्माधिदैवयोः इति ह.पाठः

**भावप्रदीपः**

एवं मन्त्रत्रयं प्रमाणतो व्याख्यायापि तत्र तत्रानुपपत्तिशङ्कापरिहाराय पुनः स्ववचनेनापि व्याचष्टे– **यस्येति** ।। एतेन 'यस्य प्रथश्च सप्रथश्चेति नाम तस्यानुष्टुभस्य हविषः' इति सामानाधिकरण्यप्रतीतिः, यद्धविरिति संबन्धे क्रियाऽभावेनानन्वयशङ्का च निरस्ता वेदितव्या । नन्वेवं यदित्यस्यायापयदित्यर्थकत्वे प्राक् यापयामासतुरिति कथं प्रमाणवाक्येन व्याख्यातमित्यतः पृथक् क्रियान्वयाङ्गीकारान्न दोष इत्याह– **एवं सप्रथ इति** ।। आचक्र इत्यस्य सम्यक् चकारेत्यन्यथाप्रतीतिनिरासायाऽऽकारयामासेति व्याख्यानम् । 'अविन्दन् ते' इत्येषोऽपि मन्त्रोऽत्रोदाहर्तव्यः । प्रकरणैक्यात् । तर्ह्यनयोरैकार्थ्यात्पौनरुक्त्यमित्याशङ्कां विषयभेदप्रदर्शनेन निरस्यति– **अविन्दन् त इति** ।। उभयोर्भिन्नविषयत्वेऽन्तरङ्गज्ञापकमाह– **देवयानमिति** ।। देवयानमिति देवप्राप्यत्वोक्त्याऽस्याधिदैवतविषयत्वं गुहायदिति हृदयगुहास्थत्वोक्त्याऽस्याध्यात्मविषयत्वमवगम्यत इति भावः ।।

चतुष्कपर्दायुवतिरिति मन्त्रव्याख्यानम्

**भाष्यम्**

**चतुःशिखण्डां तु रमां द्विरूपो भगवान् हरिः ।**
**परमानन्दरूपत्वात् सुपर्ण इति नामकः ।।**

**रमयामास तस्यां च निषण्णः सर्वदैव सः ।**
**एक एव च विष्णुः स प्रविष्टः क्षीरसागरम् ।।**

**सर्वं पश्यत्यसौ देवः पूर्णाकुण्ठेन चेतसा ।**
**परिपक्केन मनसाऽपश्यमित्याह तं त्वजः ।।**

मातेव व्यञ्जकत्वात् तं प्राणस्थं वाक् सरस्वती ।
लिहते लिह्यत इव प्राणस्थेन तु सा सदा ।।

स्वयं तु भगवान् विष्णुर्वाक्पतेर्ब्रह्मणोऽपि हि ।
नित्यः पिता स्वतन्त्रश्च नास्य माता पिताऽपि च[८४] ।।

इत्यादि च ।।३.१.६।।

**।। इति तृतीयारण्यके प्रथमोऽध्यायः ।।**

**भावप्रदीपः**

'एकः सुपर्णः स समुद्रं' इत्यत्र कथं स सुपर्ण इत्येकवचनेन परामर्शः संभवति । तत्पूर्वस्यां 'चतुष्कपर्दे'ति श्रुतौ सुपर्णा वृषणेति द्वयोः सुपर्णयोः प्रकृतत्वादित्याशङ्क्य 'चतुष्कपर्दा युवतिः' इति श्रुतिं प्रमाणेनैव व्याचष्टे– **चतुःशिखण्डामिति** ।। वृषणेत्यादि-द्विवचनोपपत्तिव्युत्पादनायोक्तं– **द्विरूपो भगवानिति** ।। सुपर्ण-शब्दार्थमाह– **परानन्देति** ।। सुष्ठु परः परमो ण आनन्दः सुपूर्ण-स्तद्रूपत्वात्सुपर्ण इत्यर्थः । 'निषेदतु'रित्यस्य तात्पर्यं– **निषण्णो रमयामासेति** । एवं द्विवचनश्रुतेर्द्विरूपभगवद्विषयत्वाद्युक्तमत्र 'स सुपर्णः' इत्येकवचनेन तस्य परामर्श इति भावेनेमं मन्त्रं व्याचष्टे– **एक एवेति** ।। स्वगतभेदवर्जितः, स सुपर्णो विष्णुः क्षीरसागरे प्रविष्टो बभूव । असौ देवः सर्वं पश्यतीत्यन्वयः । अनेन पूर्वार्धो विवृतः । तत्र विचष्ट इत्यत्र वीत्यस्यार्थः– **पूर्णाकुंठेन तेजसेति** । 'तं पाकेने'त्यस्यार्थः– **परिपक्वेनेति** । भक्तिज्ञानादिपरिपूर्णेनेत्यर्थः । अपश्यमित्युत्तमपुरुषप्रयोगस्य विषयप्रदर्शनार्थमाह– **इत्याह तं त्वज**

---

८४. वा इति ह.पाठः

इति ।। चतुर्थपादस्यार्थो– **मातेवेति** । व्यंजकत्वान्मातेव स्थिता सरस्वती **तं** विष्णुं **लिहते** आस्वदयति ग्रसतीव । तेन च स्वयं **लिह्यते** आस्वाद्यते, ग्रस्यत इवेत्यर्थः । 'वाग्वै माता प्राणः पुत्रः' इत्युक्त्यनुसारेण 'वाक्सरस्वती'ति 'प्राणस्थं तं' इति चोक्तम् । सरस्वत्या विष्णुमातृत्वं कुतो गौणं व्याख्यायत इत्यत आह– **स्वयं त्विति** ।। **वाक्पतेः** सरस्वतीपतेः ।।

ततश्चायं खंडार्थः । **बृहद्रथन्तरयोः** बृहन्नाम्नो बृहत्सामदेवतायाः नारयणस्य रथन्तरनम्न्याः रथन्तरसामदेवताया लक्ष्म्याश्च रूपेण **संहिता** संहितानामकमर्धनारीनरात्मकं लक्ष्मीनारायणात्मकं रूपं **सन्धीयते** सन्धितमस्ति । अत्र सन्धीयमानरूपस्य संहितात्वोक्त्या रथन्तराख्य-रमायाः पूर्ववर्णदिवतात्वं बृहदाख्यनारायणस्योत्तरवर्णदिवतात्वं च सूचितं भवति । अन्यथाऽस्य रूपस्य संहितादेवतात्वानुपपत्तेः । पूर्वोत्तरवर्णयोस्सन्धिरेव हि संह्तितेत्युच्यत इति ताक्ष्यों नाम मुनिराह । बृहद्रथन्तररूपयोरधिष्ठानान्तरं सूचयन्नामान्तरमप्याह– **वाग्वा इति** ।। **वाक्** सरस्वती तत्स्थं तन्नामकं च रथन्तरस्य लक्ष्म्याः रूपं, **वै** प्रसिद्धम् । **प्राणो** वायुः, तत्स्थं तन्नाकं च **बृहतो** नारायणस्य रूपमित्यर्थः । **वाचा च प्राणेन चेत्युभाभ्यां** रथन्तरबृहद्रूपाभ्यां उ एव संहितानामकं लक्ष्मीनारायणाख्यमर्धनारीनररूपं सन्धीयते खलु । य एतां विद्यामधीतवान् **स** ताक्ष्योंऽपि नानायासेनैतद्विद्यां संपादितवान् । किन्तु **एतस्यां ह स्मोपनिषदि** तादर्थ्ये सप्तमीयम् । एतां विद्या-मवाप्तुमिति यावत् । संवत्सरं याः गुरुसंबन्धिनी गा **रक्षयते** अरक्षयत[८५] । तात्पर्यातिशयद्योतनाय गोरक्षणस्य प्रयोजनान्तरं निषेधति–

---

८५. अरक्षत इति 'ख'पाठः

**एतस्यामिति ।। एतस्यां ह स्म मात्रायाम्** एतद्विद्यामात्रप्राप्त्यर्थं संवत्सरं तार्क्ष्यो गा **रक्षयते** अरक्षत । न तु प्रयोजनान्तरमप्यभिसन्धायेत्यर्थः । **तदप्येतदृषिणोक्तं** लक्ष्मीनारायणयो रथन्तर-बृहच्छब्दवाच्यत्वं ऋषिणा मन्त्रे कथितम् । किमिति? वसिष्ठः प्रथ-सप्रथयोर्यज्ञे होता सन्ननिरुद्धादिचतुर्मूर्त्यात्मकं हरिं स्तुत्वा तत्प्रसादात् **रद्रथन्तरं** तन्नामकलक्ष्मीरूपं **आजभार** आजहार । 'हृगृहोर्भ-श्छन्दसि'[८६] इति सूत्रात् । स्वसमीपमागत्य स्वस्य राज्ञोश्च यथा पुरुषार्थप्रदात्री सा स्यात् तथा चकरेति यावत् । एवमेव भरद्वाजोऽपि **अग्नेः** अग्र्यत्वादग्निशब्दवाच्यात् चतुर्मूर्तेर्हरेर्बृहदाख्यं नारायणरूप**माचक्रे** आकारयामासेति । फलमाह– **स य एवमिति ।।**

एवं तार्क्ष्यमातानुसारेणैकां संहितादेवतामर्धनारीपुमात्मिकां भगवन्मूर्तिमुक्त्वा कौण्ठरव्यमतानुसारेण द्विद्विदेवतात्मिकाः पञ्चसंहिता मूर्तीराह– **वाक्प्राणेनेति ।। वाक्** रमा **प्राणेन** विष्णुना सहिता एका संहिता । स च विष्णुः **पवमानेन** वायुना सह द्वितीया संहिता । पवमानश्च **विश्वैर्देवैः** विष्ण्वादिसमस्तदेवैः सह तृतीया संहिता । विश्वे देवाश्च **स्वर्गेण लोकेन** स्वर्गाभिमानिना सर्वद्रष्टृत्वात्प्रकाशनाच्च लोकनाम्ना शिवेन सह चतुर्थी संहिता । स्वर्गलोकश्च **ब्रह्मणा** चतुर्मुखेन सह पञ्चमी संहितेति । **सैषा संहिता**ऽवरपरघटितत्वा-दवरपरेत्युच्यते । द्वयोर्द्वयोर्मध्ये एकमवरमन्यत्परमिति । सैषेत्याद्येकवचनं समुदायापेक्षम् । तत्र प्रथमानिर्दिष्टं वामभागगम् । तृतीया-निर्दिष्टं दक्षिणभागगम् । एवमेताः सर्वाः संहिता देवता मूर्तयो हरिहरमूर्तिवत् **मिथो** मिलिता एव बोध्याः ।

---

८६. वार्तिकं सि.कौ.सू.सं ५९२

फलमाह– **स इति** ।। **स** प्रसिद्धो **यो**ऽधिकारी वेद सः यथैषा संहिता मिथः सन्धितैव वर्तते । एवमेव प्रजापश्वादिभिः सन्धीयते हेत्यर्थः ।

उक्तविद्याफलप्राप्तौ कश्चिदित्थंभावमाह– **स इति** ।। **स** एतद्वाद्यावेत्ता यदि **परेण वोपसृत** उपसन्नः **स्वेन वाऽर्थेनोपसृतः** परार्थे वाऽत्मार्थेवेति यावत् । अभिव्याहरेत् । मन्त्रमिति शेषः । तर्हि **अभिव्याहर्षन्नेव** अभिव्याहर्तुमिच्छन्नेव अभिव्याहरणात्पूर्वमेवेति यावत् । **विद्यात्** चिन्तयेत् । किमिति? **संहिता** संहितारूपो हरिः **दिवं** द्युलोकमगमत् । देवष्वनुग्रहं कर्तुमिति शेषः । अतो देवानामेव **एवं** उक्तं विद्याफलं संपूर्णं भविष्यति । कुतः, **विदुषां** हेतुगर्भं विशेषणमेतत् । देवानामेव मुख्यतो विद्वत्वात् । इति विद्यादिति संबन्धः । ततश्चैवं चिन्तयतः पुंसो देवानां प्रसादादुक्तं फलं तथैव **शश्वत्** नित्यं स्यादित्यर्थः । एवं तार्क्ष्यमते कौण्ठरव्यमते च संहितारूपज्ञानिनः फलं पृथगभिधायाऽपि तात्पर्यार्थं पुनः सामान्येनाभिधत्ते– **स य एवमेतामिति** ।। **एतां** तार्क्ष्योक्तां कौठरव्योक्तां च ।

अथ मतान्तरानुसारात्संहितादेवतां पृथगाह– **वाक्संहितेति** ।। **वाक्** सरस्वती **संहिता** वर्णमध्यदेवता संहितानाम्नी चेति पञ्चालचंडो नाम मुनिर्मन्यते । कुतो वाचः संहितात्वमित्यतस्तदुपपादयति– **वाचेति** ।। **वाचा** वाग्देवतया सरस्वत्या **वेदाः सन्धीयन्ते** तत्प्रेरणयैव संहिततयोच्चार्यन्ते । गायत्र्यादिछन्दांस्यपि वाचैव सन्धीयन्ते । लोके मित्राण्यपि वाचैव **सन्दधति** मिथः प्रीतिरूपं सन्धानं कुर्वन्ति । सर्वाण्यपि भूतानि वाचैव **सन्धीयन्ते** व्यवहारविषयाणि भवन्ति ।

**अथो** तस्मादिदं सर्वं **वागेव** सरस्वत्यधीनमेवेति पश्चालचंड आहेति पूर्वेणान्वयः । तथा च वेदादिसन्धानकर्तृत्वाद्वाचः संहितात्वमिति भावः । **तत्** तस्माद्वाचः सर्ववेदादिवाङ्नियामकत्वात् **यत्र** यदा **एतत्** वदादिकमधीते वा **भाषते** लौकिकभाषणं वा करोति पुमांस्तदा **प्राणः** प्राणस्थः प्रणेतृत्वात्प्राणनामा भगवान्**वाचि भवति** वागाश्रितो भवति । वाच्यतया तदधीन इव भवतीत्यर्थः । अत एव तदाऽध्ययनादिकाले **वाक्सरस्वती प्राणं** भगवन्तं **रेल्हि** लेढि । लिह आस्वादने । आस्वादयति ग्रसति वाच्यतया स्वाधीनमिव करोति । अथ **यत्र** यदा पुमांस्तूष्णीं भवति वा स्वपिति वा तदा वाक् **प्राणे** प्राणाश्रिता भवति । प्राणस्थे भगवत्येव लीना भवति । तदा **प्राणो** भगवान्वाचं **रेल्हि** लेढि ग्रसतीव, स्ववाचकताशक्तिमन्तर्धापयति । एवं **तौ** वाक्प्राणौ अन्योन्यं **रील्हः** लीढः । युक्तं च सरस्वतीभगवतो-रन्योन्यमास्वादनं मातृपुत्रभावापन्नत्वादिति भावेनाह– **वाग्वै माता प्राणः पुत्र इति** ।। सरस्वत्यभिमन्यमानवेदव्यंग्यत्वाद्भगवतः पुत्रत्वं व्यञ्जकत्वाच्च तस्या मातृत्वमौपचारिकमेवेति बोध्यम् ।

**तदप्येतत्** वाक्प्राणयोर्मातृपुत्रभावोऽन्योन्यमास्वादयितृत्वं च ऋषिणोक्तम् । कथं **स** द्विरूपत्वेनोक्तोऽपि **एकः** स्वगतभेदवर्जितः **सुपर्णः** सुष्टु परानन्दो भगवान् **समुद्रं** क्षीराब्धिमाविवेश । तत्र श्वेतद्वीपे शेत इति यावत् । स **एवेदं** विश्वं समस्तं भुवनं **विचष्टे** स्वभावसिद्धप्रज्ञयैव पश्यति । **तं** एतं भगवन्तं **पाकेन** परिपक्वेन मनसा **अन्तितः** समीप एवाहमपश्यम् । ब्रह्मवाक्यमिदम् । तमेनं विष्णुं **माता** सरस्वती **रेल्हि** लेढि । **स उ** स च विष्णु**र्मातरं** सरस्वतीं **रेल्हि** लेढीति । स य एवमित्युक्तार्थम् ।

**अथातः प्रजापति संहिता** प्रजापतिना रुद्रेण प्रोक्ता संहितापि निरूप्यते । **जाया** जयशालित्वाज्जायाशब्दवाच्यो जायास्थितो भगवान् **पूर्वरूपं** पूर्ववर्णदेवता । पालनात्पतिनामा पतिस्थो हरिः **उत्तररूपं** उत्तरवर्णदेवता । **पुत्रः** पूतिगन्धात्मकत्वात्पुतो नरकात् त्राणात् पुत्रनामा स एव **संधिः** वर्णयोर्मध्यदेवता । सन्धिनोति पुष्णातीति सन्धिनामा च । सैषा संहिता **प्रजननं** प्रजोत्पत्तिकर्मस्थः प्रकर्षेण जनकत्वात् प्रजनननामा विष्णुः **सन्धानं** वर्णसन्धानकर्मणि स्थितः सन्धानकर्तृत्वात् सन्धाननामा च । **सैषा संहिता** संहितादेवता भगवान् सर्वस्यादनाददितिर्नाम । **यदिदं किंच** इदं सर्वमपि **अदितिर्हि** अदितिनामकविष्ण्वधीनं हि । पिता च माता चादितिरेव । पालकत्वान्माननाच्च पुत्रश्च, प्रजननं चोक्तरीत्याऽदितिरेव ।

**तदप्येतत्** विष्णोरदितिशब्दवाच्यत्वं पित्रादिशब्दवाच्यत्वादिकं च ऋषिणोक्तम्– **अदितिर्माता स पिता स पुत्र इति** । पिता पुत्र इति विधेयानुसारेण स इति पुल्लिङ्गप्रयोगः । अत्रैतन्मन्त्रोत्तरार्धगतमदितिर्जनित्वमित्येतदपि ग्राह्यम् । तेन प्रजननं चेत्युक्तार्थे समाख्यात्वसिद्धिः । एतैश्चतुश्शब्दैः क्रमेण वासुदेवादिचतुर्मूर्तय उच्यन्त इत्यवगन्तव्यम् । एतद्विद्याफलमाह– **स य इति** ।। ३.१.६ ।।

**।। इति श्रीमन्महैतरेयोपनिषद्भाष्यभावप्रदीपे**

**तृतीयारण्यके प्रथमोऽध्यायः ।।**

# अथ तृतीयारण्यके द्वितीयोऽध्यायः

इन्द्रियाभिमानिदेवानां वायुराश्रयः

उपनिषत्

**ॐ प्राणो वंश इति स्थविरः शाकल्यः । तद्यथा शालावंशे सर्वेऽन्ये वंशाः समाहिताः स्युरेवमस्मिन् प्राणे चक्षुः श्रोत्रं मनो वागिन्द्रियाणि शरीरं सर्व आत्मा समाहितः । तस्यैतस्यात्मनः प्राण ऊष्मरूपम् । अस्थीनि स्पर्शरूपम् । मज्जानः स्वररूपम् । मांसं लोहितमित्ये-तदन्यच्चतुर्थमन्तस्थरूपम् इति ह स्माह ह्रस्वो माण्डूकेयः ।**

अस्थिमज्जास्वरादिशब्दानां निर्वचनपूर्वकं भगवत्प्रतिपादकत्वसमर्थनम्

भाष्यम्

गृहस्याच्छादनादीनां मध्यवंशो यथाश्रयः ।
तथेन्द्रियाभिमान्यादिदेवानां वायुराश्रयः ।।

तेषु सर्वेषु भगवान् बहुरूपो हरिः स्थितः ।
विष्णुनामाक्षरेष्वेवमन्येष्वपि तदर्थतः ।।

प्राणनामा तु भगवान् प्राणस्थश्चोष्मसु स्थितः ।
ऊष्मनामा समर्थत्वात् स एव भगवान् हरिः ।।

पूर्णत्वादात्मनामाऽसौ प्रतिमात्वादमुष्य तु ।
सङ्घात आत्मशब्दोक्तो ह्यस्थिरश्चास्थिनामकः ।।

**अस्थिस्थितो हरिः स्पर्शसंस्थितः स्पर्शनामकः ।**
**स्पर्शहेतुत्वतः स्पर्शनामा स भगवान् हरिः ।।**

**मज्जासुस्थो स मज्जाख्यो मदं जनयतीति ह ।**
**स एव स्वरसंस्थश्च स्वराख्यः स्वरतेः प्रभुः ।।**

**प्रमाणं सारयेद्यस्मान्मांसाख्यो मांससंस्थितः ।**
**लोहिताख्यो रक्तवर्णो लोहितस्थो जनार्दनः ।।**

**भावप्रदीपः**

**अस्थिमज्जापर्वगतं सर्वगं मृत्युनाशकम्[1] ।**
**वन्दे दुर्गापतिं विष्णुं सर्ववेदोदितं प्रभुम् ।।**

'प्राणो वंशः' इति खण्डं व्याचष्टे– **गृहस्येत्यादिना** ।। **इन्द्रियाभिमान्यादिदेवानामिति** ।। चक्षुरादीन्द्रियाणां तदभिमानिदेवानाम् । आदिपदेन शरीरस्य तदभिमानिदेवस्य चाश्रय इत्यर्थः । एतेन प्राणवंशत्वोपपादनाय 'तद्यथा शालावंशे' इत्यादि यदुक्तं तद्व्याख्यातं भवति । **तेषु सर्वेषु** चक्षुरादीन्द्रियेषु शरीरे तदभिमानिदेवेषु तदाश्रये प्राणे च हरिर्बहुरूपः स्थित इत्यनेन 'सर्व आत्मा समाहितः' इत्येतद्व्याख्यातं भवति । **सर्वो** बहुरूपः **आत्मा** परमात्मा **तत्र** सर्वत्र **समाहितः** स्थित इति । 'तस्यैतस्यात्मनः प्राण ऊष्मरूपं' इत्यादेस्तात्पर्यमाह– **विष्णुनामेति** । एवं देहेन्द्रियतदभिमानिषु यथा तथा विष्णुनामाक्षरेषु स्थितः । यथा विष्णुनामाक्षरेषु स्थित एवमन्येष्वप्यक्षरेषु स्थितः । कुतः? **तदर्थतः**

---

१. मृत्युनाशनम् इति 'ख'पाठः

सर्वनामाक्षराणां विष्णुनामार्थत्वात् । अथवा **तदर्थतः** तत्तत्प्रतिपाद्यत्वेन स्थित इत्यर्थः । अत्र विष्णुनामग्रहणमुपसंहारे वक्ष्यमाणानुसारेण । विष्णुनाम्न्यप्यूष्मस्पर्शस्वरान्तस्थान्यक्षराणि सन्त्येवेति । 'प्राण उष्मरूपं' इत्यस्यार्थः– **प्राणनामा त्विति** ।। **समर्थत्वात्** कस्यापि सोढुमशक्यत्वात् ऊष्मनामा । 'सर्व आत्मा' इत्यत्रात्मशब्दार्थमाह– **पूर्णत्वादिति** ।। तस्यैवामुख्यमर्थान्तरं चाह– **प्रतिमात्वादिति** ।। **संघातो** देहेन्द्रियसमुदायः । तथा च 'तस्यैतस्यात्मनः' इति संघातपरामर्शोपपत्तिरिति भावः । 'अस्थीनि स्पर्शरूपं' इत्यस्य विवरणम्– **अस्थिरश्चेति** । अधिकं स्थिर इत्यर्थः । स्पर्शनामकत्वं कुत इत्यत आह– **स्पर्शहेतुत्वत इति** ।। स्पर्शनहेतुत्वादित्यर्थः । 'मज्जानः स्वररूपं' इत्यस्यार्थमाह– **मज्जासुस्थ इति** ।। मज्जाशब्द आकारान्तः स्त्रीलिङ्गो नकारान्तः पुल्लिङ्गश्चास्ति । अतो मज्जानो मज्जास्वित्युभयथाप्युपपन्नम् । मदं आनन्दं जनयतीति मज्जाख्यः । मदशब्दपर्यायो मच्छब्दः । तस्मिन्नुपपदे जनेर्डन्, स्त्रीलिङ्गत्वे डः टाप् च । **स्वरतेः** स्वरमणात्स्वराख्यः । 'मांसं लोहितं' इत्यस्यार्थः– **प्रमाणमिति** । वेदादिप्रमाणं **सारयेत्** प्रवर्तयेत् ।।

### ह्रस्वमाण्डूकेयमुनेरध्यात्मोपासनम्

### उपनिषत्

**त्रयं त्वेव न एतत्प्रोक्तम् । तस्यैतस्य त्रयस्यास्थ्नां मज्ज्ञां पर्वणामिति, त्रीणीतः षष्टिशतानि त्रीणीतः । तानि सप्तविंशतिशतानि भवन्ति ।**

### अस्थ्यादिगतभगवद्रूपसंख्यानिरूपणम्

#### भाष्यम्

**अस्थिस्थान्येव रूपाणि पर्वस्वपि हरेर्यतः ।**
**तत एव विभक्तानि सङ्ख्या तेषां पृथङ् न तत् ।।**

**तस्मात् सप्तशतान्येव देहे विंशच्च तस्य हि ।**
**रूपाणि विष्णोर्भागे तु षष्ट्युत्तरशतत्रयम् ।।**

#### भावप्रदीपः

नन्वस्थ्नां मज्जां पर्वणां च प्रत्येकं षष्ट्युत्तरशतत्रयसंख्याकत्वेनाशीत्युत्तरसहस्रत्वात् तद्गतरूपाणां च तावत्वावश्यंभवात्कथं 'तानि सप्तविंशतिशतानि भवन्ति' इति विंशत्यधिकसप्तशतत्वोक्तिस्तेषामित्यत आह– **अस्थिस्थान्येवेति** ।। हरे रूपाणि पर्वस्वपि यतो वर्तन्ते, कथं? **यतस्तत** एवास्थिस्थभगवद्रूपेभ्य एव विभक्तानि **तत्** तस्मात् **तेषां** पर्वस्थितानां रूपाणां न पृथक् संख्येत्यर्थः । ततः किमित्यत आह– **तस्मादिति** ।। पृथग्गणनस्याविवक्षितत्वात् देहे विष्णो रूपाणि सप्तशतानि **विंशत्** विंशतिश्चैवोच्यन्ते इत्यर्थः । 'त्रीणीतः शष्टिशतानि त्रीणीतः' इत्येतद्व्याचष्टे– **भागे त्विति** ।। दक्षिणोत्तरभेदेनैकैकस्मिन् भाग इत्यर्थः ।।

### संवत्सराहोरात्रगतभगवद्रूपनिरूपणम्

#### उपनिषत्

**सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राः । स एषोऽहःसंमानश्चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मा ।**

सर्वनामाक्षराणां विष्णुनामार्थत्वात् । अथवा **तदर्थतः** तत्तत्प्रतिपाद्यत्वेन स्थित इत्यर्थः । अत्र विष्णुनामग्रहणमुपसंहारे वक्ष्यमाणानुसारेण । विष्णुनाम्न्यप्यूष्मस्पर्शस्वरान्तस्थान्यक्षराणि सन्त्येवेति । 'प्राण उष्मरूपं' इत्यस्यार्थः– **प्राणनामा त्विति ।। समर्थत्वात्** कस्यापि सोढुमशक्यत्वात् ऊष्मनामा । 'सर्व आत्मा' इत्यत्रात्मशब्दार्थमाह– **पूर्णत्वादिति ।।** तस्यैवामुख्यमर्थान्तरं चाह– **प्रतिमात्वादिति ।। संघातो** देहेन्द्रियसमुदायः । तथा च 'तस्यैतस्यात्मनः' इति संघातपरामर्शोपपत्तिरिति भावः । 'अस्थीनि स्पर्शरूपं' इत्यस्य विवरणम्– **अस्थिरश्चेति ।** अधिकं स्थिर इत्यर्थः । स्पर्शनामकत्वं कुत इत्यत आह– **स्पर्शहेतुत्वत इति ।।** स्पर्शनहेतुत्वादित्यर्थः । 'मज्जानः स्वररूपं' इत्यस्यार्थमाह– **मज्जासुस्थ इति ।।** मज्जाशब्द आकारान्तः स्त्रीलिङ्गो नकारान्तः पुल्लिङ्गश्चास्ति । अतो मज्जानो मज्जास्वित्युभयथाप्युपपन्नम् । मदं आनन्दं जनयतीति मज्जाख्यः । मदशब्दपर्यायो मच्छब्दः । तस्मिन्नुपपदे जनेर्डन्, स्त्रीलिङ्गत्वे डः टाप् च । **स्वरतेः** स्वरमणात्स्वराख्यः । 'मांसं लोहितं' इत्यस्यार्थः– **प्रमाणमिति ।** वेदादिप्रमाणं **सारयेत्** प्रवर्तयेत् ।।

ह्रस्वमाण्डूकेयमुनेरध्यात्मोपासनम्

**उपनिषत्**

**त्रयं त्वेव न एतत्प्रोक्तम् । तस्यैतस्य त्रयस्यास्थ्नां मज्ज्ञां पर्वणामिति, त्रीणीतः षष्टिशतानि त्रीणीतः । तानि सप्तविंशतिशतानि भवन्ति ।**

अस्थ्यादिगतभगवद्रूपसंख्यानिरूपणम्

भाष्यम्

**अस्थिस्थान्येव रूपाणि पर्वस्वपि हरेर्यतः ।**
**तत एव विभक्तानि सङ्ख्या तेषां पृथङ् न तत् ।।**

**तस्मात् सप्तशतान्येव देहे विंशच्च तस्य हि ।**
**रूपाणि विष्णोर्भागे तु षष्ठ्युत्तरशतत्रयम् ।।**

भावप्रदीपः

नन्वस्थ्नां मज्जां पर्वणां च प्रत्येकं षष्ट्युत्तरशतत्रयसंख्याकत्वेनाशीत्युत्तरसहस्रत्वात् तद्गतरूपाणां च तावत्वावश्यंभवात्कथं 'तानि सप्तविंशतिशतानि भवन्ति' इति विंशत्यधिकसप्तशतत्वोक्तिस्तेषामित्यत आह– **अस्थिस्थान्येवेति** ।। हरे रूपाणि पर्वस्वपि यतो वर्तन्ते, कथं? **यतस्तत** एवास्थिस्थभगवद्रूपेभ्य एव विभक्तानि **तत्** तस्मात् **तेषां** पर्वस्थितानां रूपाणां न पृथक् संख्येत्यर्थः । ततः किमित्यत आह– **तस्मादिति** ।। पृथग्गणनस्याविवक्षितत्वात् देहे विष्णो रूपाणि सप्तशतानि **विंशत्** विंशतिश्चैवोच्यन्ते इत्यर्थः । 'त्रीणीतः शष्टिशतानि त्रीणीतः' इत्येतद्व्याचष्टे– **भागे त्विति** ।। दक्षिणोत्तरभेदेनैकैकस्मिन् भाग इत्यर्थः ।।

संवत्सराहोरात्रगतभगवद्रूपनिरूपणम्

उपनिषत्

**सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राः । स एषोऽहःसंमानश्चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मा ।**

**स य एवमेतमहःसंमानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयमात्मानं वेद, अह्नां सायुज्यं सरूपतां सलोकतामाश्नुते पुत्री पशुमान् भवति, सर्वमायुरेति ॥३.२.१॥**

अरादिशब्दानां निर्वचनपूर्वकं भगवत्परत्वप्रतिपादनम्

**भाष्यम्**

तान्येव विष्णो रूपाणि वत्सराहस्सु सर्वशः ।
अहर्नामा च भगवानहार्यत्वात् प्रकीर्तितः ॥

अहोभिः समसङ्ख्यानि यस्मादध्यात्मगानि तु ।
रूपाणि विष्णोस्तेनायमहस्संमान उच्यते ॥

पूर्णदर्शनशक्तित्वाच्चक्षुर्मय उदीरितः ।
तादृक् श्रवणशक्तित्वात् तथा श्रोत्रमयः स्मृतः ॥

छन्दोमयः सत्यकामो मन्तृवक्तृबलात्मकः ।
एवं विद्वांस्तस्य रूपाण्याप्नोति ज्ञानपुत्रवान् ॥

पीयमानं शमाप्नोति प्राप्याहर्नामकं हरिम् ॥३.२.१॥

**भावप्रदीपः**

'सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्रे'ति वाक्यं व्याचष्टे– **तान्येवेति** ॥ **वत्सराहस्सु** संवत्सरगताहोरात्रेषु । अहार्यत्वादहर्नामा । चशब्दाद्रतिप्रदत्वात् रात्रिनामा चेति ग्राह्यम् । 'स एषोऽहःसंमानः' इत्येतदव्याचष्टे– **अहोभिरिति** ॥ अहोरात्रैरित्यर्थः । 'चक्षुर्मयः श्रोत्रमयः' इत्यादिकं व्याचष्टे– **पूर्णदर्शनेति** ॥ पूर्णेति

मयडर्थः । **सत्यकामः** अमोघेच्छः । 'मनोमयो वाङ्मयः' इत्यस्यार्थो– **मन्तृवक्तृबलात्मक इति** । मन्तृत्ववक्तृत्वशक्तिपूर्ण इत्यर्थः । 'स य एवमेतमहः संमानं' इत्यादिफलवाक्यं व्याचष्टे– **एवं विद्वानिति** ।। 'अन्हां सायुज्यं' इत्यादेरर्थः– **तस्य रूपाण्याप्नोतीति** । 'पुत्री'त्यस्यार्थो– **ज्ञानपुत्रवानिति** ।। 'पशुमान्' इत्यस्यार्थः– **पीयमानं शमाप्नोतीति** ।। पा पान इत्यतः कर्मणि कः । **शं** सुखम् । आधिक्येऽधिकमित्युकारः । स्वरूपसुखमित्यर्थः । संसारेऽप्यनभिव्यक्तस्वरूपसुखस्य सत्वात् **पीयमानमिति** विशेषणम् । अनुभूमयमानमित्यर्थः । अहर्नामकमित्यह्नामित्यहःशब्दार्थोक्तिः ।।

अधिदैवे कौण्ठरव्यमुनेरुपासनम्

उपनिषत्

**अथ कौण्ठरव्यः । त्रीणि षष्टिशतान्यक्षराणां, त्रीणि षष्टि शतान्यूष्मणां त्रीणि षष्टि शतानि सन्धीनाम् । यान्यक्षराण्यवोचामाहानि तानि, यानूष्मणोऽवोचाम रात्रयस्ताः, यान् सन्धीनवोचामाहोरात्राणां ते सन्धय इत्यधिदैवतम् ।**

अधिदैवे कौण्ठरव्यमुनेरुपासनफलम्

**अथाध्यात्मम् । यान्यक्षराण्यधिदैवतमवोचाम, अस्थीनि तान्यध्यात्मम् । यानूष्मणोऽधिदैवतमवोचाम, मज्जानस्तेऽध्यात्मम् । एष ह वै सम्प्रति प्राणो यन्मज्जा । एतद्रेतः । न ह वा ऋते प्राणाद्रेतः सिच्यते । यद्वा ऋते प्राणाद्रेतः सिच्येत, पूयेन्न सम्भवेत् । यान्सन्धीन-**

**धिदैवतमवोचाम पर्वाणि तान्यध्यात्मम् । तस्यैतस्य त्रयस्य, अस्थ्नां मज्ज्ञां पर्वणामिति पञ्चेतः चत्वारिंशच्छतानि पञ्चेतः । तदशीतिसहस्रं भवति ।**

**अशीतिसहस्रं वा अर्कलिनो बृहतीरहरभिसम्पादयन्ति ।**

कौण्ठरव्यमुनेरुपासनम्

**स एषोऽक्षरसंमानश्चक्षुमयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मा ।**

**स य एवमेतमक्षरसंमानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयमात्मानं वेदाक्षराणां सायुज्यं सरूपतां सलोकतामश्नुते पुत्री पशुमान् भवति सर्वमायुरेति ॥३.२.२॥**

मुनिमतेषु विवक्षाभेद एव न विरोधः

भाष्यम्

एवमुक्तप्रकारेण तस्य ह्यक्षरनामकम् ।
अशीत्युत्तरसाहस्रं रूपं वर्णेषु संस्थितम् ॥

विष्णुनाम्नोऽथवान्येषु पञ्चाशत्सङ्ख्यकेष्वपि ।
तावत् सङ्ख्यानि देहेषु पृथङ्मज्जास्थिपर्वसु ॥

रूपाणि विष्णोस्तावन्ति (चेष्टकानि) इष्टकासु[२] पृथक् पृथक् ।
अर्कस्थितबृहत्याख्यरूपाण्यह्नां च सर्वशः ॥

सम्पादकानि तान्येव तान्यक्षरमितानि च ।
अस्थ्यादिस्थितरूपाणि तान्युपास्य विमुच्यते ॥ इति च ।

---

२. चेष्टकासु इति ह.पाठः

**भावप्रदीपः**

'अथ कौण्ठरव्यः' इत्येतत्[3] व्याचष्टे– **एवमुक्तप्रकारेणेत्यादिना** ।। अस्थिमज्जापर्वसु प्रत्येकं षष्ट्युत्तरत्रिशतरूपाणि सन्तीत्युक्तप्रकारेण अशीत्युत्तरसाहस्रं रूपमिति योजना । 'स एषोऽक्षरसंमानः' इति वक्ष्यमाणानुरोधेनाक्षरनामकमित्युक्तम् । अक्षराणां ऊष्मणां सन्धीनां च पृथक् त्रीणि षष्ठिशतानीत्युक्तत्वात् आहत्याशीत्युत्तरसाहस्रमित्युक्तं । विष्णुनाम्नो **वर्णेषु** वकारादिषु । अथवा**ऽन्येषु** अन्यनामघटकेषु पञ्चाशत्संख्याकेष्वपि वर्णेषु स्थितम् । अत्रापि विष्णुनामग्रहणं पूर्ववद्वक्ष्यमाणानुरोधेनैव । 'यान्यक्षराण्यधिदैवतमवोचामास्थीनि तान्यध्यात्मम्' । 'यान् ऊष्मणोऽधिदैवतमवोचाम मज्जानस्तेऽध्यात्म्' । 'यान् सन्धीन् इधिदैवतमवोचाम पर्वाणि तान्यध्यात्मं' इति वाक्यत्रयतात्पर्यमाह– **तावत्संख्यानीति** ।। 'अशीतिसहस्रं वाऽर्कलिनो बृहती'त्यस्य तात्पर्यमाह– **तावन्तीति** ।। अर्कस्थितबृहत्याख्यरूपाणि **तावन्ति** अशीत्युत्तरसहस्रसंख्याकानि **इष्टकासु** चित्यवयवभूतासु षष्ट्युत्तर-शतत्रयसंख्याकासु । 'इष्टकादेवतां विष्णुं षष्ट्युत्तरशतत्रयं'[४] इति काठकभाष्योक्तेः । **पृथक् पृथक्** एकैकस्यामिष्टकायां त्रीणि त्रीणीत्येवं स्थितानीत्यर्थः । अत्रार्कपदेन सूर्यवच्चितिरप्युच्यते । 'अर्कः शीघ्र-गतित्वतः । श्येन एव तदाकारा चितिरर्कपदोदिता'[५] इति प्रागुक्त-त्वाच्चितेरप्यहःसंपादकतायाः वक्ष्यमाणरीत्याऽवगमाच्च । 'अहरभि संपादयन्ती'त्यस्यार्थमाह– **अह्नां चेति** ।। **सर्वशः** सर्वेषाम् ।

---

३. इत्येतत् खण्डं इति 'ख'पाठः

४. काठ.भा. १-१५

५. ऐत.भा. २५-पु

'स एषोऽक्षरसंमान' इत्येतद्व्याचष्टे– **तान्यक्षरमितानि चेति** ।। नन्वक्षराणां पञ्चाशत्वात्कथमशीत्युत्तरसहस्ररूपाणामक्षरसंमानत्वमित्यत उक्तमुपपादकं स्मारयति– **अस्थ्यादिस्थितरूपाणीति** ।। अस्थिमज्जापर्वगतानां पृथक् षष्ट्युत्तरत्रिशतरूपाणामेव 'यान्यक्षराण्यधिदैवतमवोचामास्थीनि तान्यध्यात्मं' इत्यादिना त्रिविधाक्षरगतत्वस्योक्तत्वादक्षराणां पञ्चाशत्वेऽप्यक्षरसंमानत्ववचनमुपपन्नमेवेति भावः । 'स य एवमक्षरसंमानं' इत्यादि फलवाक्यार्थमाह– **तान्युपस्य विमुच्यत इति** ।।

**अस्थिमज्जादिशब्दैर्वाच्यो भगवान्**

**भाष्यम्**

**तस्यैतस्यात्मनस्तस्य शरीराख्यस्यात्मनो य आत्मा[६] आदानादिकर्ता तस्य परमात्मन एतस्य । अस्थ्नां मज्ज्ञां पर्वणां च [७]मिलितानामपि विंशोत्तरसप्तशतत्वोक्तेस्तत्रस्थ[८]विष्णुरूपाण्येवोच्यन्त इति सिद्धम् । अस्थ्यादीन्येव चेदशीत्युत्तरसहस्राणि सन्ति हि ।**

**षणु(ण)ष्णुरित्येतानि विष्णुनामगतान्यूष्माक्षरसन्धिनामकानि तद्गतभगवद्रूपाणि मुख्यतस्तन्नामकानि ।**

**भावप्रदीपः**

एवं प्रमाणेन खण्डद्वयं व्याख्यायापि स्पष्टत्वार्थं तदेव कचिद्विशदयिष्यन् 'तस्यैतस्यात्मनः' इति पूर्वखण्डीयं वाक्यमनूद्य व्याचष्टे– **तस्यैतस्येति** ।। **शरीराख्यस्य** शरीरेन्द्रियादिसंघातरूपस्यात्मन

---

६. आत्मा इति पदं ह.पाठः ७. मिळितानां इति ह.पाठः

८. तत्स्थ इति ह.पाठः

इत्यर्थः । तथा च तस्यैतस्येति व्यधिकरणषष्ठ्यौ । आत्मन इति चावर्तनीयम् । तत्रैकः संघातपरः । अपरः परमात्मपर इत्युक्तं भवति । अन्यथा तस्यैतस्येत्यनयोरन्यतरवैय्यर्थ्यापत्तिः । केवलसंघातपरत्वे तदीय प्राणादीनामूष्मादिरूपत्वानुपपत्तिश्चेति भावः । नन्वस्थ्यादिसंख्यापर-त्वमेवैषां वाक्यानां किं न स्यात् । किं भगवत्परत्वेन संयोज-नयेत्यतोऽत्र ज्ञापकमाह– **अस्थ्नामिति** ।। अन्यथा बाधकमाह– **अस्थ्यादीनीति** ।। **सन्ति** भवन्ति ।

'त्रीणि षष्टिशतान्यक्षराणां' इत्यादिकं विष्णुनामगतवर्णस्थरूप-परत्वेन व्याख्यातम् । तत्कथमित्यतो विशदयति– **ष णु ष्णुरिति** ।। तत्र षकार ऊष्मा । णुकारः स्पर्शाक्षरम् । ष्णु इति सन्धिस्तन्नाम-कानि तद्गतभगवद्रूपाण्येव मुख्यतस्तन्नामकानि । ऊष्मादयस्त्वमुख्यत एवोष्मादिनामानः । मुख्यामुख्ययोर्मुख्यस्यैव ग्राह्यत्वादक्षरादिशब्दा विष्णुपरा एव व्याख्याता इति भावः ।।

### अस्थिमज्जाशब्दानां निर्वचनम् तत्स्थभगवद्रूपाणि

### भाष्यम्

**अहार्यत्वादहर्नामा रात्रिनामा रतिप्रदः ।**
**सन्धानात् सन्धिनामाऽसौ स्वयं नारायणः प्रभुः ।।**

**सन्ध्यूष्माक्षरगाण्यस्य विष्णो रूपाणि सर्वशः ।**
**सन्ध्यारात्रिदिवास्थानि साशीतिकसहस्रकम् ।।**

**तान्येवास्थिषु मज्जासु पर्वस्वपि च सर्वशः ।**
**परज्ञानात् तु पर्वाणि विष्णो रूपाणि तानि हि ।।**

[9]अस्थानान्मदनाच्चैव ह्यस्थिमज्जाभिधानि च ।
व्यक्तिर्मज्जासु तस्यैव प्राणो मज्जासु संस्थितः[10] ॥

मज्जायां विशेषतः प्राणसन्निधानम्

मज्जैव रेतो भवति रेतसिस्थो विशेषतः ।
प्राणस्तेन हि तद्रेतोयुक्तं प्राणेन सर्वदा ॥

यदि प्राणो न तद्रेतो न गर्भत्वं व्रजेत् क्वचित् ।
विशेषप्राणसम्बन्धवर्जितान्यत एव हि ॥

न मांसादीनि गर्भत्वं यान्त्यतः स हि रेतसि ।
विशेषेण स्थितः प्राणः प्राणे चैव विशेषतः ॥

स्थितो नारायणो देवस्तस्मान्मज्जासु च स्थितः ॥ इति च ।

**भावप्रदीपः**

एवमूष्माक्षरसन्धिशब्दा विष्णावेव मुख्या इत्यभिधाय 'यान्यक्षराण्यवोचामाहानि तानि' इत्याद्युक्ताहोरात्रिसन्धिशब्दास्तावद्भगवति निर्वक्ति– **अहार्यत्वादिति** ॥ रतिं राति ददातीति रतिप्रदो रात्रिनामा । एवमहरादिशब्दान्निरुच्य तद्वाक्यार्थमाह– **सन्धीति** ॥ एतानि च संभूय **साशीतिकसहस्रकं** अशीत्युत्तरसहस्रसंख्याकानीत्यर्थः । 'अथ यान्यक्षराण्यधिदैवतमवोचामास्थीनि तान्यध्यात्मं' इत्यादिवाक्यत्रयं प्राक् संक्षेपतो व्याख्यातं विशदयति– **तान्येवेति** ॥ **सर्वशः** सर्वेषु । पर्वादिशब्दान्विष्णौ निर्वक्ति– **परज्ञानादिति** ॥ पूर्णज्ञानत्वादित्यर्थः । वा गतिगन्धनयोरिति धातोः कनिन् ह्रस्वता

९. आस्थानात् इति ह.पाठः १०. हि स्थितः इति ह.पाठः

च परशब्दान्तलोपः । **अस्थानात्** अधिकं स्थिरत्वात् । **मदनात्** मदजननात् । 'एष ह वै संप्रति प्राणो यन्मज्जैतत्' इत्यादि व्याचष्टे– **व्यक्तिरिति ।। तस्य** विष्णोर्मज्जास्वेव व्यक्तिर्विशेषत इति शेषः । कुतः? यतः प्राणो मज्जासु **संस्थितः** विशेषतः स्थित-स्तस्मादिति योजना । एनेन **यद्यस्मादेष प्राणो** वायुः संप्रति **मज्जा** मज्जायां विशेषतः सन्निहितस्तस्मात्**प्राणो** विष्णुर्मज्जा । तत्रेतर-धात्वपेक्षया विशेषतः सन्निहित इति तद्वाक्यं व्याख्यातं भवति । ननु प्राणस्यापि मज्जायां विशेषतः सन्निधानं कुतोऽवसीयत इत्यत उक्तम्– **एतद्रेत इति ।।** तस्यार्थो– **मज्जैव रेतो भवतीति ।।** रेतसि प्राणो विशेषतः **स्थः** सन्निहितः । तदपि कुतः? **तेन** प्राणेन तद्रेतो विशेषतो युक्तं चेदेव सर्वदा गर्भत्वं व्रजेत् । **यदि रेतसि प्राणो न** यदि प्राणेन तद्रेतो न संयुक्तं तर्हि क्वचिदपि गर्भत्वं न व्रजेदत इत्यर्थः । रेतसोऽपि गर्भत्वप्राप्तौ विशेषतः प्राणसंबन्ध एव कारणमिति कुत इत्यत आह– **विशेषेति ।।** मांसादीनि विशेषप्राण-संबन्धवर्जितानि । अत एव न तानि रेतोवद्गर्भत्वं यान्ति । अतः स प्राणो रेतसि विशेषतः स्थितः । तस्मात्तदुपादानभूतासु मज्जास्वपि स प्राणो विशेषतः स्थित इत्यङ्गीकार्यमिति भावः । अनेन 'न ह वा ऋते प्राणाद्रेतः सिच्यते यद्वा ऋते प्राणाद्रेतः सिच्येत पूयेन्न संभवेत्' इत्येतदुक्तार्थं भवति । ननु मज्जायां प्राणस्य विशेषतः सन्निहि-तत्वेऽपि विष्णोरपि तत्र विशेषतः स्थितौ कथमेतत्प्रयोजकमित्यत आह– **प्राणे चेति ।।** मज्जाधिष्ठातृप्राणे विशेषसन्निधानान्मज्जास्वपि विणुर्विशेषतः स्थित इत्येषोऽर्थः सिद्ध्यतीति भावः ।।

## अर्कलिनशब्दवाच्यभगवद्रूपाणि

### भाष्यम्

**मज्जास्वधिकसन्निधानज्ञापनार्थमिदं वचनम् । अशीत्युत्तर-सहस्र[११]वर्णानामभावाच्च तत्स्थविष्णुरूपाण्येव तत्सङ्ख्यानीति सिद्धम् ।**

**अर्के निलीनत्वेनादृश्यत्वेन स्थिता भगवत्प्रादुर्भावा अर्कलिनः । त एव शरीरे स्थित्वा सहस्रं बृहतीः सम्पादयन्ति । वाक्प्रेरकत्वाद् विष्णुनामार्थवत्वादेव च बृहतीसहस्रस्य तद्देवताश्चैतान्येवा-शीत्युत्तरसहस्ररूपाणि एतान्येवाहःप्रवर्तकानि च । अहःशब्देन यज्ञो दिवसश्चोभावप्यभिप्रेतौ ।**

**यज्ञानां दिवसानां च साशीतिकसहस्रकैः ।**
**विष्णुः प्रवर्तको रूपैर्बृहत्युक्थस्य चाञ्जसा ।।**
**बृहत्युक्थेन वाच्यानि रूपाण्येतान्यधीशितुः ।। इति च ।।३.२.२।।**

### भावप्रदीपः

ननु 'यन्यक्षराण्यधिदैवतमवोचामास्थीनि तान्यध्यात्मं' इतिवत्[१२] 'यानूष्मणोऽधिदैवतमोचमाम मज्जानस्तेऽध्यात्मं' इत्येतावतैव पूर्तौ किं 'एष ह वै संप्रति प्राणः' इत्यादिमज्जार्थवादवाक्येनेत्यत आह– **मज्जास्विति** ।। अस्थ्याद्यपेक्षयेति शेषः । 'त्रीणि षष्ठिशतान्य-क्षराणां' इत्यादिना भगवद्रूपाण्येव तत्तन्नमकान्युच्यन्त इत्यत्र युक्तिमप्याह– **अशीतीति** ।। यदि ह्यत्राक्षरोष्मसन्धिशब्दैर्वर्ण-तत्सन्धय एव विवक्षिताः स्युस्तर्हीदमनुपपन्नार्थकमापद्येत । वर्णानां

---

११. साहस्र इति ह.पाठः १२. इति पूर्ववत् इति 'ख'पाठः

पञ्चाशन्मात्रत्वेन सन्धिभिः सहाप्यशीत्युत्तरसहस्रत्वस्य बाधितत्वात् । अत्र च तावत्त्वस्याभिधीयमानत्वादुदाहृतसमाख्याप्रमाणबलाच्चाक्षरादिस्थिततन्नाकभगवद्रूपाण्येव तत्संख्यानीति सिध्यतीति भावः ।

'अशीतिसहस्रं वा अर्कलिनः' इत्यादि व्याचष्टे– **अर्क इति** ।। **अर्के** सूर्ये श्येनाकारचितौ च । अर्कलिन इति बहुवचनान्तोऽयं पुल्लिङ्गः । अत एव भगवत्प्रादुर्भावा इत्युक्तम् । 'बृहतीः सम्पादयन्ति' इत्यस्यार्थः– **त एवेति** ।। अर्कस्थिता एव प्रादुर्भावाः पुरुषस्य शंसितुः शरीरे स्थित्वा सहस्रबृहतीः संपादयन्ति । तत्र हेतुः– **वाक् प्रेरकत्वादिति** ।। ननु बृहतीसहस्रसंपादकतया देहे सतां तत्प्रतिपाद्यानां रूपाणां कथमशीत्युत्तरसहस्रत्वमित्यतस्तद्धटयति– **विष्णुनामेति** ।। **बृहतीसहस्रस्य विष्णुनामार्थवत्वात्** विष्णुनाम्नो योऽर्थस्तद्वत्वात् विष्णुनामव्याख्यानरूपत्वादेव च **एतान्येव** विष्णुनामगतान्येव अशीत्युत्तरसहस्ररूपाणि तद्देवताः बृहतीसहस्रप्रतिपाद्यानि च भवन्ति । अतो बृहतीसहस्रप्रतिपादकतत्प्रतिपाद्यरूपाणां विष्णुनामगतरूपाभिन्नत्वात् युक्तमशीत्युत्तरसहस्रत्वमिति भावः । 'अहरभिसंपादयन्ती'त्यस्यार्थः– **एतान्येवेति** ।। सूर्ये स्थितान्येव रूपाणीत्यर्थः । अहःशब्दार्थं प्रदर्शयति– **अहःशब्देनेति** ।। अत्र यज्ञग्रहणेनार्कलिन इत्यस्य यत्प्राक् श्येनाकारार्कपदोदितचित्यवयवभूतेष्टकासु स्थिता इत्यप्यर्थ इति सूचितं तस्योपयोगो दर्शितो भवति । यज्ञसिद्धेरिष्टकानिर्मितचितिगतभगवद्रूपाधीनत्वादिति ।

अत्र प्रमाणमाह– **यज्ञानामिति** ।। चितिगतो विष्णुर्यज्ञानां सूर्यगतो दिवसानां देहगतश्च बृहत्युक्थस्य प्रवर्तकः । **एतानि** त्रिविधान्यपि रूपाणि बृहत्युक्थेन वाच्यानीत्यर्थः ।।

ततश्चायं खण्डद्वयार्थः । **प्राणो** मुख्यवायुः **वंशः** सर्वाश्रयत्वाद्वंशस्थानीय इति स्थविरः शाकल्यो नाम ऋषिराह । **तत्** तत्र निदर्शनमुच्यते । यथा **शालावंशे** शालामध्यगते वंशे सर्वेऽन्ये वंशाः **समाहिताः** तदाधारतया स्थिताः स्युरेवमस्मिन्प्राणे चक्षुः श्रोत्रं मनो वागिन्द्रियण्यन्यानि त्वक् पाण्यादीनि शरीरं च पृथक् पृथक् । तथा **सर्वः** चक्षुरादिसर्वसमुदायरूप **आत्मा** संघातश्च समाहितः । तथा एतदभिमानिनः श्रोत्रादिशब्दवाच्या देवाश्च समाहिताः । एतेषु च सर्वेष्वपि **आत्मा** परमात्मा **सर्वः** बहुरूपः सन् **समाहितः** संस्थितः । **तस्य** आत्मनस्संघातस्य य आत्मा आदानादिकर्ता **तस्यैतस्यात्मनः** परमात्मनो मूलरूपस्य संबन्धी यः **प्राणः** तस्थो भगवान् प्राणनामा **ऊष्मरूपं** ऊष्माक्षरप्रतिपाद्यः, समर्थत्वेन सर्वैः सोढुमशक्यत्वादूष्मनामा ऊष्माक्षरस्थश्च । **अस्थीनि** अधिकं स्थिरत्वादस्थिनामकं यदस्थिगतं बहुरूपं भगवद्रूपं तत्**स्पर्शरूपं** स्पर्शाक्षरप्रतिपाद्यं स्पर्शनहेतुत्वात्स्पर्शनामकं स्पर्शाक्षरस्थितं च । एवं **मज्जानः** मदस्य जनकत्वान्मज्जाख्यं यन्मज्जास्थितं बहुरूपं भगवतो रूपं तत् **स्वररूपं** स्वराक्षरप्रतिपाद्यं स्वरतत्वात्स्वरनामकं स्वराक्षरस्थितं च । **यच्च अन्यत्**संघातसंबन्धि **चतुर्थं मांसं लोहितं** चेत्येतत् मांसलोहितगतं मां प्रमाणं सारयति प्रवर्तयतीति मांसनामकं रक्तवर्णत्वाल्लोहितनामकं भगवद्रूपं तत् **अन्तस्थरूपं** अन्तस्थाक्षप्रतिपाद्यं अन्तःस्थितत्वादन्तःस्थनामकमन्तस्थाक्षरस्थितं चेति ह स्थविरः शाकल्य आह स्मेत्यन्वयः ॥

ह्रस्वो माण्डूकेयस्त्वेवमाह । किमिति? नः पक्षे तु **एतत्** संघातसंबन्धि **त्रयमेव** अस्थीनि मज्जानः पर्वाणि चेति अस्थ्न्यां

मज्जां पर्वणामिति **तस्यैतस्य त्रयस्य** एतत्त्रयगतस्य अधिकस्थिरत्वात् मदस्य जननात् परज्ञानत्वाच्चास्थिमज्जापर्वनामकभगवद्रूपसंघातस्य[१३] मध्ये **इतः** दक्षभागे **त्रीणि शतानि** षष्टि षष्टिश्च षष्ट्युत्तरशतत्रयसंख्याकानीति यावत् । **इतः** वामभागे, त्रीणि षष्टिशतानीति वर्तते । षष्ट्युत्तराणि शतानीति यावत् । तानि सप्तविंशतिशतानि भवन्ति । एवं भागद्वयस्थितानि भगवद्रूपाणि **सप्तशतानि विंशतिश्च** विंशत्युत्तरसप्तशतानि भवन्ति ।

**संवत्सरस्याहोरात्रा** अहोरात्राण्यपि सप्तशतानि विंशतिश्च भवन्ति । अत एतान्येव सप्तशतानि विंशतिश्च भगवतो रूपाणि अहोरात्राणि अहार्यत्वाद्रतिप्रदत्वाच्चाहोरात्रनामकानि तत्स्थितानि । अतः स एव भगवान् अहःसंमान उच्यते । यतोऽध्यात्मगतानि विष्णुरूपाण्यहोभिः समसंख्यानि । **स एष** आत्मा **चक्षुर्मयः** पूर्णदर्शनशक्तिमान् । पूर्णश्रवणशक्तिमत्वात् **श्रोत्रमयः** । सत्यकामत्वात् **छन्दोमयः** । पूर्णमन्तृत्वशक्तिमत्वात् **मनोमयः** । पूर्णवक्तृत्वशक्तिमत्वात् **वाङ्मयश्च** । य एवमेतमहःसंमान**मात्मानं** भगवन्तं चक्षुर्मयादिरूपं वेद सः **अन्हां** अहर्नामकानां भगवद्रूपाणां **सायुज्यं** सरूपतां सलोकतां च **अश्नुते** प्राप्नोति । **पुत्री** ज्ञानवान्[१४] भवति । भगवद्रूपसायुज्यादिकं प्राप्य च **पशुमान् भवति** पीयमानस्वरूपसुखवान् स्वरूपसुखानुभववान् भवतीति यावत् ॥३.२.१॥

अथकौण्ठरव्य आह । किमिति? **त्रीणि शष्टिशतान्यक्षराणां** अत्राक्षरशब्देन विष्णुनामगतं णकाररूपं स्पर्शाक्षरमुच्यते । तथा च

---

१३. संघस्य इति 'ख'पाठः १४. ज्ञानपुत्रवान् इति 'ख'पाठः

**अक्षराणां** णकारगतानामक्षरनामकानां भगवद्रूपाणां **त्रीणिषष्टिशतानि** षष्ट्युत्तराणि त्रीणि शतानि । तथो**ष्मणां** विष्णुनामगतषकाररूपोष्माक्षरगतानां समर्थत्वादूष्मनामकानां भगवद्रूपाणां त्रीणि षष्टिशतानि । तथा **सन्धीनां** षणयोः सन्धिगतानां सन्धानात्सन्धिनाम्नां विष्णुरूपाणां त्रीणि शष्टिशतानि । एवमेतान्येवान्यनामघटकेषु पञ्चाशद्वर्णेषु मध्येऽक्षराणां ऊष्मभिन्नसर्ववर्णानां तद्गततन्नामकभगवद्रूपाणां त्रीणि षष्ठिशतानि । ऊष्मणां तद्गतानां तन्नाम्नां भगवद्रूपाणां त्रीणि षष्ठिशतानि तत्सन्धीनां तद्गतसन्धिनामकभगवद्रूपाणां च त्रीणि षष्ठिशतानि संभूयाशीत्युत्तरसहस्रसंख्याकानि सन्ति । तत्र यान्यक्षराणि विष्णुनामगतानि वा नामान्तर्गतानि वा ऊष्मभिन्नानि तद्गतानि तन्नामकानि यानि भगवद्रूपाण्यवोचाम तान्य**हानि** अहर्यत्वादहर्नामकानि संवत्सराहर्नियामकानि । एवं 'यान् ऊष्मणोऽवोचाम ता रात्रयः' 'यान् सन्धीनवोचामाहोरात्राणां ते सन्धयः' इत्येतद्वाक्यद्वयमपि व्याख्येयम् । इत्यधिदैवतं भगवद्रूपाणि ।।

अथाध्यात्मं निरूप्यन्ते । **यान्यक्षराण्यधिदैवतमवोचाम** अधिदैवं यान्यक्षरनामकानि रूपाण्यवोचाम तानि रूपाण्यध्यात्मं **अस्थीनि** अस्थिगतानि अस्थिनामकानि । यान् ऊष्मणोऽधिदैवतमवोचाम मज्जानस्तेऽध्यात्ममित्येतदप्येवमेव व्याख्येयम् । मज्जास्त्वितरधात्वपेक्षया भगवतोऽधिकसन्निधानमस्तीति ज्ञापयितुमाह– **एष ह वा इति ।। यत्** यस्मात् **एष प्राणो** वायुः **सम्प्रति** साम्प्रतं **मज्जा** मज्जायां विशेषतः सन्निहितस्तस्मात् **प्राणो** विष्णुः **मज्जा** मज्जायामितरधातुभ्यो विशेषतः सन्निहित इत्यर्थः । यद्वा **यत्** यो मज्जा एष एव हि संप्रति **प्राणः** प्राणस्य वायोर्विशेषसन्निधानपात्रम् । अत एव

प्राणो विष्णुरपि । प्राणनामकविष्णोर्विशेषसन्निधानपात्रमपीत्यर्थः । ननु प्राणस्यापि कुतो मज्जायां विशेषतः सन्निधानमित्यत आह– **एतद्रेत इति ।। एतत्** एष मज्जैव रेतो भवति । रेतसि च प्राणो विशेषतः सन्निहितः । अतो मज्जायां विशेषतः प्राणसन्निधानमवसीयत इति भावः । रेतस्यपि प्राणस्य विशेषसन्निधानं कुतः? येन तदुपादानमज्जायां तद्विशेषसन्निधानं प्रतीम[१५] इत्यत आह– **न ह वा इति ।। प्राणादृते रेतो न सिच्यते ह वै** प्राणसन्निधानं विना रेतो न गर्भत्वं यतीति यावत् । तथा चेतरधातूनां गर्भीभावयोग्यताऽभावात् रेतस एव तद्भावात् तत्र विशेषतः प्राणसन्निधानमवगम्यत इति भावः । ननु गर्भीभावस्य रेतःस्वभावत्वान्न तत्र प्राणसन्निधानं प्रयोजकमित्यत आह– **यद्वा इति ।।** यदि हि प्राणादृते रेतः स्त्रियां सिच्येत तर्हि **पूयेत्** पूतिगन्धयुक्तमेव भवति । यत्र क्व वा निःसृतं सन्नश्यतीति यावत् । **न संभवेत्** न गर्भत्वेन निष्पद्यते । अतो रेतसो गर्भताप्राप्तौ प्राणसन्निधानमेव कारणमिति भावः । 'अथ यान्सन्धीनधिदैवतमवोचाम पर्वाणि तान्यध्यात्मं' इत्येतदपि प्राग्वदेव व्याख्येयम् । **तस्यैतस्य** अस्थ्नां मज्जां मज्जानां पर्वणामिति **त्रयस्य** अस्थ्यादित्रयान्तर्गतस्य तत्तन्नामकस्य हरे रूपाणि देहे **इतः** दक्षभागे पञ्चशतानि चत्वारिंशच्च सन्ति । **इतो** वामभागे पञ्चचत्वारिंषच्छतानीति वर्तते । चत्वारिंशदधिकपञ्चशतानि सन्ति । **तत्** भागद्वयस्थं रूपजातं संभूयाशीत्युत्तरसहस्रं भवति । एत एवाशीतिसहस्रं अशीत्युत्तरसहस्रसंख्याका भगवत्प्रादुर्भावा **अर्कलिनः** अर्के सूर्ये श्येनाकारचितौ च निलीनत्वेनादृश्यत्वेन स्थिताः त एव **बृहतीः**

---

१५. प्रतीमहि इति 'ख'पाठः

बृहत्यः पूर्णत्वाद्बृहत्याख्या बृहतीसहस्रप्रतिपाद्याश्च । पुनर्बृहतीरित्यावर्तनीयम् । एते चार्कलिनो **बृहतीर्बृहतीसहस्रं अहश्चाभिसंपादयन्ति** अहःशब्देन यज्ञो दिवसश्चोभवप्यभिप्रेतौ । तथाचायमत्र विवेकः । एत एव प्रादुर्भावाः पुरुषशरीरे स्थित्वा वाक् प्रेरकतया बृहतीसहस्रं संपादयन्ति । सूर्ये स्थित्वा दिवसान् संपादयन्ति । चितौ स्थित्वा यज्ञान् संपादयन्तीति । स एषोऽस्थ्यादिगतो भगवान् **अक्षरसंमानः** ऊष्माक्षरसन्धिभेदेन त्रिविधवर्णगतरूपसमसंख्याकः । अशीत्युत्तरसहस्रसंख्याकरूपवानिति यावत् । चक्षुर्मय इत्यादि पूर्ववत् ॥३.२.२॥

वायूपासितचतुर्विधपुरुषनिरूपणम्

**उपनिषत्**

**चत्वारः पुरुषा इति बाध्वः । शरीरपुरुषश्छन्दःपुरुषो वेदपुरुषो महापुरुष इति ।**

शरीरपुरुषः

**शरीरपुरुष इति यमवोचाम, स य एवायं दैहिक आत्मा । तस्य योऽयमशरीरः प्रज्ञात्मा स रसः ।**

छन्दःपुरुषः

**छन्दःपुरुष इति यमवोचाम, अक्षरसमाम्नाय एव । तस्यैतस्याकारो रसः ।**

वेदपुरुषः

**वेदपुरुष इति यमवोचाम, येन वेदान् वेद, ऋग्वेदं यजुर्वेदं सामवेदम् । तस्यैतस्य ब्रह्मा रसः । तस्माद् ब्रह्माणं ब्रह्मिष्ठं कुर्वीत, यो यज्ञस्योल्बणं पश्येत् ।**

महापुरुषः

**महापुरुष इति यमवोचाम, संवत्सर एव, प्रध्वंसयन् अन्यानि भूतानि, ऐक्याभावयन्नन्यानि । तस्यैतस्यासावादित्यो रसः ।**

बाध्वशब्दवाच्यो वायुः

**भाष्यम्**

संसारबाधितैः प्राप्यो बाध्वो वायुरुदाहृतः ।
स हि मोक्षप्रदो विष्णोराज्ञया स उवाच ह ।।

देहवर्णवेदाद्यभिमानिदेवतानिरूपणम्

सर्वदेहाभिमानी तु शरीरपुरुषः शिवः ।
सर्ववर्णाभिमानी च शेषोऽसौ छान्दसः पुमान् ।।

सर्ववेदाभिमान्येव गरुडो वेदपूरुषः ।
संवत्सराभिमानी तु ब्रह्मैव हि महापुमान् ।।

सारः शिवस्यानिरुद्धनामा देहस्थितो हरिः ।
अ इत्याक्रियते यस्माद् वासुदेवो ह्यकारगः ।।

शेषस्य सारः स विभुर्ब्रह्माख्यो ज्ञानबृंहणात् ।
सङ्कर्षणाख्यस्तु हरिः सारः स गरुडस्य च ।।

ब्रह्मिष्ठं ऋत्विजं कुर्वीत

ब्रह्मर्त्विक्संस्थितश्चासौ तस्माद् ब्रह्मिष्ठमेव हि ।
कुर्याद् ब्रह्मर्त्विजं तस्मिन् विशेषेण स्थितो हरिः ।।

**ब्रह्मणः सारभूतस्तु प्रद्युम्नो भगवान् हरिः ।**
**स एवादित्यसंस्थश्च स ह्यादिर्जगतो विभुः ।।**

**ततश्च सर्वभूतेषु जीवानां विनियामकः ।**

**भावप्रदीपः**

'चत्वारः पुरुषाः' इत्येत्खण्डं व्याचष्टे– **संसारबाधितैरित्यादिना** ।। तत्र बाध्वशब्दार्थमाह– **संसारेति** ।। बाध्यन्त इति बाधः संसारबाधवन्तः । बाधतेः कर्मणि क्विप् । वायते प्राप्यत इति वः वातेः कर्मणि कः । कथं स्वयं संसारिणो वायोः संसारबाधितप्राप्यत्वमित्यतस्तदुपपादयति– **स हीति** ।। बाध्व इत्यन्तरमध्याहार्यं दर्शयति– **स उवाचेति** ।। 'शरीरपुरुष इति यमवोचाम स य एवायं दैहिक आत्मा' इत्येतद्याचष्टे– **सर्वदेहेति** ।। 'छन्दः पुरुष इति यमवोचामाक्षरसमाम्नाय एव' इत्यस्यार्थः– **सर्ववर्णेति** ।। यः सर्ववर्णाभिमानीति शेषः । असौ छान्दसः पुमानित्यन्वयः । एतेन 'अक्षरसमाम्नायः' इत्युक्तार्थम् । 'वेदपुरुष इति यमवोचाम येन वेदान्वेद' इत्यादेर्व्याख्या– **सर्ववेदाभिमान्येवेति** ।। 'महापुरुष इति यमवोचाम संवत्सर एवे'ति वाक्यं विवृणोति– **संवत्सराभिमानीत्विति** ।।

अथैषां चतुर्णां पुरुषाणामुपास्य भगवद्रूपाभिधायकं 'तस्य योऽयमशरीरः प्रज्ञात्मा स रसः । तस्यैतस्याकारो रसः । तस्यैतस्य ब्रह्म रसस्तस्यैतस्यादित्यो रसः' इति वाक्यचतुष्टयं मूर्तिचतुष्टयपरत्वेन व्याचष्टे– **सार इत्यादिना** ।। 'तत्राय'मित्यस्यार्थो– **देहस्थित इति** ।। 'अकारः' इत्यस्यार्थः– **अ इत्याक्रियते** आहूयते **इति** ।।

अकारस्थितत्वाच्चाकरनामास्येति भावेनाह– **अकारग इति** ।। **ज्ञानबृंहणात्** ज्ञानेन पूर्णत्वात् । भक्तानां ज्ञानवर्धनाच्च ब्रह्माख्यः संकर्षणनामा हरिः **असौ** संकर्षणो **ब्रह्मर्त्विक्संस्थश्च** ब्रह्माख्ये ऋत्विजि संस्थितश्च अतोऽपि ब्रह्माख्य इति भावः । ननु ब्रह्मशब्देन संकर्षणाख्यभगवद्रूपस्यैव ग्रहणे 'तस्माद्ब्रह्माणं ब्रह्मिष्ठं कुर्वीत' इत्युत्तरवाक्यमसङ्गतं स्यादित्यतश्चेदमुक्तम्– **ब्रह्म ऋत्विक् संस्थितश्चासाविति** । अत एवोत्तरवाक्यं नासङ्गतमिति भावेन तद्व्याचष्टे– **तस्मादिति** ।। 'तस्मात्' इत्यस्यैव विवरणम्– **तस्मिन्विशेषेण स्थितो हरिरिति** । **ब्रह्मिष्ठं** ब्रह्मज्ञानिनं सर्ववेदाभिज्ञं च । तस्य ब्रह्मनिष्ठत्वाभावे तस्मिन्हरेर्विशेषेण सन्निधानासंभवादिति भावः । प्रद्युम्ने आदित्यशब्दप्रवृत्तौ निमित्तद्वयमाह– **स एवादित्यसंस्थ इत्यादिना** ।। तत्रादित्यसंस्थ इत्यनेन रूढिज्ञापनं, स ह्यादिरित्यादिना योगप्रदर्शनम् । **आदिः** कारणभूतः, ततः व्याप्तः । ततश्चादित्वात्ततत्वान्नियामकत्वाच्चादित्य इत्युक्तं भवति । तनोतेः ड्विप्रत्यये तकारमात्रं रूपम् । यती प्रयत्न इत्यतोऽन्तर्णीतण्यर्थात् डुप्रत्यये यमिति रूपम् । ततः कर्मधारयः ।।

### उपनिषत्

**स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्य एकमेतदिति विद्यात् । तस्मात् पुरुषं पुरुषं प्रत्यादित्यो भवति । तदप्येतदृषिणोक्तं–**

**चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।**
**आ प्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ।। इति ।**

**भाष्यम्**

स एवादित्यगो विष्णुर्यः प्रद्युम्नाभिधो हरिः ।।
स एव सर्वदेहेषु चानिरुद्धतनुः स्थितः ।

सङ्कर्षणो वासुदेव इत्येकः स चतुर्विधः ।।
प्रतिपूरुषमेतस्मात् स्थितो विष्णुर्नियामकः ।

आदित्यादिषु च स्थित्वा द्योतकोऽसौ प्रति प्रति ।।
स चेतनतमत्वाद्धि चित्रमित्यभिधीयते ।

मुख्यत्वात् सर्वदेवानामननादीशितृत्वतः ।।
कर्तृत्वादप्यनीकं स उदैत् सूर्यस्थितो हरिः ।

ज्ञानदत्वाच्च देवानां चक्षुरेतेन[१६] दर्शनात् ।।
[१७]आपूरयन्सर्वलोकान् प्रकाशेन जनार्दनः ।

आदानात् सर्वजीवानामत्तृत्वात् प्रलयेऽपि[१८] च ।।
आत्मेत्युक्तः स भगवान् जगतः स्थावरस्य च ।

**भावप्रदीपः**

'स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्य एकमेतदिति विद्यात्' इत्येतद्विवृणोति– **स एवेति** ।। यः प्रद्युम्नाभिधो हरिः स एवादित्यगो विष्णुर्न तत्र भेदोऽस्ति । य आदित्यगतो विष्णुः स एव सर्वदेहेषु चानिरुद्धतनुः स्थित इत्यर्थः । एवं रूपद्वयस्यैवात्यन्ताभेदोक्त्या संकर्षणवासुदेवयोः प्राप्तां भेदशङ्कां पराकरोति– **संकर्षण इति** ।। स

---

१६. चक्षुरेनेन इति पा. १७. आपूरयत् इति प्र.पाठः

१८. प्रळयेऽपि इति ह.पाठः

प्रद्युम्नानिरुद्धरूपी भगवानेक एव संकर्षणो वासुदेवश्चेति रूपद्वयेन सह चतुर्विध इत्यर्थः । तथा च वक्ष्यमाणप्रमेयानुगुण्यार्थमेवादित्यगत-पुरुषदेहस्थितयोर्द्वयोरेवैक्यमभिहितम् । वस्तुतस्तु चतुर्णामपि रूपाणामैक्यमस्त्येवेति भावः । 'तस्मात्पुरुषं पुरुषं प्रत्यादित्यो भवति' इत्येतद्व्याचष्टे– **प्रति पूरुषमिति** ।। **एतस्मात्** पुरुषादित्यगत-रूपयोरैक्यान्निमित्तात् विष्णुरादित्यगतः प्रतिपुरुषं नियामकतया स्थितः । आदित्यादिषु च स्थित्वाऽसौ विष्णुः सर्वेषां 'मां प्रति मां प्रत्यादित्यो वर्तते' इति **द्योतकः** प्रतीतिजनकश्च भवतीत्यर्थः ।

अत्रोदाहृतं समाख्यामन्त्रं व्याचष्टे– **स इति** ।। **चेतनतमत्वात्** अतिशयितचेतनत्वात् । तस्यैव विवरणम्– **मुख्यत्वादिति** । सर्व-चेतनेषु मुख्यत्वाच्चित्रमित्यभिधीयते । अतिशयिता चित् चित्तरा । चित्तरैव चित्रं, तरशब्दे तकारान्तलोपः । अनीकशब्दं निर्वक्ति– **सर्वदेवानामिति** ।। **अननात्** चेष्टकत्वादन्, ईशितृत्वात् ई, कर्तृत्वात्कं, ततः कर्मधारयः अनीकम् । अव्यक्तस्वभावस्य हरेः कथमुदगादित्युदयोक्तिरित्यतस्तद्घटयितुमुक्तम्– **सूर्यस्थित इति** ।। 'मित्रस्य वरुणस्य अग्नेश्चक्षुः' इत्यस्यार्थः– **ज्ञानदत्वाद्देवानां चक्षुरिति** ।। ज्ञानदत्वादित्यस्यैव विवरणम्– **एतेन दर्शनादिति** ।। **एतेन** एतदनुग्रहेण **दर्शनादे**तद्दर्शनादित्यर्थः । तथा च चष्टेऽनेनेति चक्षुरिति चक्षुःशब्दव्युत्पत्तिरप्यनुकूलिता भवति । 'आ प्रा द्यावा पृथिवी अन्तरिक्षं' इत्यस्यार्थः– **आपूरयन्निति** । 'आत्मा जगतस्तस्थुषश्च' इत्यस्यार्थमाह– **आदानादिति** ।। जगतस्थस्थुषश्चेत्यस्य जगत-स्स्थावरस्येत्यनुवादपूर्वकं सर्वजीवानामिति व्याख्यानम् । **आदानात्** स्वीकरणात् स्ववशे स्थापनादिति यावत् । प्रलयोऽत्तृत्वाच्चात्मेत्युक्तः । आङ् पूर्वकात् दादातेर्डमन् । आङ् पूर्वकादद भक्षण इत्यतश्च डमन् ।।

उपनिषत्

**एतामनुविधं संहितां सन्धीयमानां मन्य इति ह स्माह बाध्वः । एकं ह्येव बह्वृचा महत्युक्थे मीमांसन्ते । एतमग्नावध्वर्यवः । एतं महाव्रते छन्दोगाः । एतमस्यां, एतं दिवि, एतं वायौ, एतमाकाशे, एतमप्स्वु, एतमोषधीषु, एतं वनस्पतिषु, एतं चन्द्रमसि, एतं नक्षत्रेषु, एतं सर्वेषु भूतेषु । एतमेव ब्रह्मेत्याचक्षते ।**

**स एष संवत्सरसंमानश्चक्षुर्मयः श्रोत्रमयः छन्दोमयो मनोमयो वाङ्मय आत्मा ।**

**स य एवमेतं संवत्सरसंमानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयमात्मानं परस्मै शंसति ॥३.२.३॥**

संवत्सरसम्मानो विष्णुः

भाष्यम्

एवं चतुर्विधो विष्णुः संहितादेवता यदा ।
ज्ञायते पूर्ववर्णस्य रूपं नारायणाभिधम् ॥

प्रादुर्भावाः समस्ताश्च चरमार्णस्य देवताः ।
तदा तु संहितां सम्यङ् मन्येऽहं सन्धितामिति ॥

आह वायुरिमं विष्णुं बृहत्युक्थस्य[१९] देवताम् ।
महाव्रताख्यस्तोत्रस्य चेष्टकानां च देवताम् ॥

---

१९. बृहदुक्थस्य इति ह.पाठः

**एतमेवाखिलजगद्व्याप्तं पूर्णगुणात्मकम् ।**
**संवसद्रतिदातृत्वाद् ब्रह्मा संवत्सराभिधः ।।**

**नियामकः स जीवानां सर्वेषां प्रभुरीश्वरः ।**
**अनन्तमूर्तिर्ब्रह्मासावनन्तजगदास्थितः ।।**

**नियामकस्तस्य विष्णुस्तावद्रूपेषु[२०] संस्थितः ।**
**तत्संवत्सरसम्मानः स विष्णुः परमेश्वरः ।।३.२.३।।**

**भावप्रदीपः**

'एतामनुविधं संहितां सन्धीयमानां मन्य इति ह स्माह बाध्वः' इत्येतद्व्याचष्टे– **एवं चतुर्विध इति** ।। एवं शरीरपुरुषादीनां सारत्वेनोक्तोऽनिरुद्धादिरूपेण चतुर्विधो विष्णुर्यदा संहितादेवतेति ज्ञायते । तथा पूर्ववर्णस्य नारायणाभिधं रूपं देवतात्वेन ज्ञायते **चरमार्णस्य** उत्तरवर्णस्य च समस्ताः प्रादुर्भावा देवता ज्ञायन्ते **तदा तु** तदैव **संहितां** सम्यक्सन्धितामहं मन्य इति वायुराहेत्यन्वयः । 'अनुविधां' इत्यस्यार्थः– **सम्यगिति** । 'एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्ते' इत्येतद्व्याचष्टे– **इमं विष्णुं बृहत्युक्थस्य** उक्थनामकबृहतीसहस्रस्य **देवतामिति** ।। वायुराहेति संबन्धः । 'एतामग्नावध्वर्यवः' इत्यस्य तात्पर्यम्– **इष्टकानां च देवतामिति** ।। इष्टकानिर्मितचितिस्थाग्नौ विष्णोरध्वर्यूपास्यत्वात् अस्यापि वायुराहेति संबन्धः । 'एतमस्यां एतं दिवी'त्यादेर्व्याख्या– **एतमेवाखिलजगद्व्याप्तमिति** । 'एतमेव ब्रह्मेत्याचक्षते' इत्यस्यार्थः– **पूर्णगुणात्मकमिति** । एतमेव वायुराहेति संबन्धः । 'स एष संवत्सरसमानः' इत्येतद्व्याचष्टे– **संवसदिति** ।।

२०. रूपेण इति ह.पाठः

सम्यक् शमदमादिमत्वेन वसन्तीति संवत्साः मोक्षाधिकारिणो जीवास्तान् रमयतीति संवत्सराभिधो ब्रह्मेति भावः । समुपपदाद्वसतेः क्सप्रत्ययः । धातुसकारस्य चर्त्वम् । एवं संवत्सरशब्दार्थमभिधाय तत्संमानत्वं भगवतो वक्तुं तदुपयुक्तं तावदाह– **नियामक इति ।। स** ब्रह्मा । जीवानामित्युपलक्षणम् । जडानां चेत्यपि ग्राह्यम् । अत एवासौ ब्रह्म अनन्तमूर्तिस्सन् अनन्तजगदवस्थित इत्यर्थः । एवमुपयुक्तप्रमेयमभिधायेदानीं संवत्सराख्यब्रह्मसंमानत्वं विष्णोर्घटयति– **नियामक इति ।।** तावद्रूपेषु ब्रह्मा यावद्रूपैरनन्तजगदास्थितस्तावद्रूपेषु विष्णुस्तावद्रूपैर्नियामकतया संस्थितः । **तत्** तस्मात्कारणात्स विष्णुः संवत्सरसंमान इत्यर्थः ।।

अयोग्योपदेशोऽनिष्टकथनम्

उपनिषत्

**दुग्धदोहा अस्य वेदा भवन्ति न तस्यानूक्ते भागोस्ति न वेद सुकृतस्य पन्थानमिति ।**

भाष्यम्

**य एनं वक्त्ययोग्येभ्यो योऽथ चैनं[21] महाव्रते ।**
**कर्मण्याचार्यतोऽन्यस्य शंसेत पितृतोऽथवा ।।**

**महाव्रतेन[22] स्तोत्रेण स्तुवीतैनमथापि वा ।**
**महाव्रते[23] चितिं वापि कुर्यान्नास्य फलं श्रुतेः ।।**
**सुकृतस्य फलं चैव नासौ सम्यगवाप्स्यति ।**

२१. वैनं इति ह.पाठः २२. महाव्रतेन इति ह.पाठः

२३. महाव्रते इति ह.पाठः

### भावप्रदीपः

'दुग्धदोहा अस्य वेदा भवन्ति' इत्येतत् खण्डं व्याचष्टे– **य एनमित्यादिना** ।। अत्र 'दुग्धदोहा भवन्ती'त्यादिवाक्यस्य 'स य एवमेतं संवत्सरसंमानादिरूपमात्मानं परस्मै शंसती'ति पूर्वखण्डेनैवान्वय इत्यभिप्रेत्य व्याख्याति– **य एनं वक्त्ययोग्येभ्य इति** ।। तत्वज्ञानायोगेभ्य इत्यर्थः । **परस्मा** इति परशब्दार्थोऽयम् । अस्यैवार्थान्तरमाह– **योऽथ चैनमिति** ।। **एनं** परमात्मानम् । आचार्यतोऽन्यस्य अथवा पितृतोऽन्यस्य संबन्धिनि महाव्रताख्ये कर्मणि अन्यस्यार्थे बृहतीसहस्रादिना **शंसेत** शंसेत् । अथापि वा महाव्रताख्येन स्तोत्रेण **एनं** परमात्मानमाचार्यपित्रन्योद्देशेन स्तुवीत । अन्येन क्रियमाणे महाव्रते चितिं वापि कुर्यात् तर्हि **अस्य** अयोग्योपदेशादिकर्तुः **श्रुतेः फलं** वेदाध्ययनादिफलं न लभ्यते । असौ गङ्गास्नानादिसुकृतस्य फलं च सम्यक् नैवाप्स्यतीत्यर्थः । एतेन परस्मै इत्येतदाचार्यपित्रन्यपरम् । शंसतीत्येतच्चितिकरणस्याप्युपलक्षणमित्युक्तं भवति । न परस्मा अग्निं चिनुयादिति वक्ष्यमाणत्वाच्च । 'दुग्धदोहा अस्य वेदा भवन्ती'त्यादेस्तात्पर्यम्– **नास्य श्रुतेः फलमिति** । 'न वेद सुकृतस्य पन्थानं' इत्यस्यार्थः– **सुकृस्य फलं च नासाववाप्स्यतीति** ।।

**अयोग्योपदेशेऽपरोक्षज्ञानिनोऽपि आनन्दह्रासः किमुत अज्ञानिनः**

### भाष्यम्

**प्रत्यक्षज्ञानिनोऽप्येतदातनन्दह्रासकृद्भवेत् ।**
**प्रत्यक्षज्ञानिनो मोक्षो न कथञ्चिद्धि हीयते ।।**

**आचार्यमेव तं विद्याद् गुणैर्यः स्वात्मनोऽधिकः ।**
**गुणाधिकस्य तेनैव शंसनादि न दुष्यति ।।**

**अयोग्यस्योपदेशे तु कृते हौत्रादिकेऽपि वा ।**
**प्रायश्चित्तार्थमेतत्तु शंसीत शतवारकम् ।।**

**अन्यथा मानुषेष्वेव जायते न दिवं व्रजेत् ।**
**योग्या अस्याश्च[२४] विद्याया देवा ऋषय एव च ।।**
**एकदेशज्ञानयोग्या मानुषा उत्तमा यदि ।।**

**भावप्रदीपः**

ननु कथमस्य न श्रुतेः फलमिति युज्यते । अपरोक्षज्ञानिभिरप्यन्यस्य यज्ञादौ शंसनादेः क्रियमाणत्वात् । तेषां च मोक्षस्य नियतत्वात् । मोक्षस्यैव श्रुतिफलत्वादित्यत आह– **प्रत्यक्षेति** ।। सत्यं । यद्यपि प्रत्यक्षज्ञानिनो न कथंचिन्मोक्षो हीयते । तथापि **एतत्** अन्योद्देशेन शंसनादिकं मोक्षे आनन्दह्रासकृद्भवेदतस्तेनापि न कर्तव्यमेवेदमिति । नन्विन्द्रस्य महाव्रताख्ये कर्मणि विश्वामित्रादिभिः शंसनादेः कृतत्वात्तेषां ज्ञानित्वादान्दह्रासाभावस्य प्रमितत्वाच्च कथमेतदित्यत आह– **आचार्यमेवेति** ।। गुणाधिकस्योद्देशेन शंसनादि **तेनैव** तस्याचार्यवर्गप्रविष्टत्वेनैव कारणेन **न दुष्यति** नानर्थावहं भवतीत्यर्थः । दाक्षिण्यप्रमादादिनाऽयोग्योपदेशघटनायां तस्य प्रायश्चित्तमाह– **अयोग्यस्येति** ।। **हौत्रादिके** होत्रादिभिः क्रियमाणे शंसनादिव्यापारे वाऽन्योद्देशेन कृते सति तस्य प्रायश्चित्तार्थं **एतत्** यच्छंसनेन पापमापतितं तत् बृहतीसहस्रादिकं महाव्रताख्यस्तोत्रं वा शतवारकं शंसीतेत्यर्थः । प्रायश्चित्ताकरणे बाधकमाह– **अन्यथेति** ।। ननु प्रायश्चित्ताकरणे 'नास्य फलं श्रुते'रित्यादिनोक्तानिष्टस्यैव

---

२४. अस्यास्तु इति ह.पाठः

स्थितत्वात्पृथगनिष्टविधानमिदं कथमिति चेन्न । इदमपि तस्यैव फलमित्यङ्गीकारात् । एतद्विद्यायोग्यान्दर्शयति– **योग्या इति** ।।

अयोग्योपदेशः विष्णुसन्त्यागरूपः

**उपनिषत्**

**तदप्येतदृषिणोक्तम्-**

**[२४अ]यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति यदीं शृणोत्यलकं शृणोति न हि प्रवेद सुकृतस्य पन्थाम् ।। इति ।**

**न तस्यानूक्ते भागोऽस्ति न वेद सुकृतस्य पन्थानमित्येतत् तदुक्तं भवति तस्मादेवं विद्वान्न परस्मा अग्निं चिनुयान्न परस्मै महाव्रतेन स्तुवीत न परस्मा एतदहः शंसेत् कामं पित्रे वाचार्याय वा शंसेदात्मन एवास्य तत्कृतं भवति ।**

**भाष्यम्**

कर्मसञ्चयवेत्तारं त्यजेन्नारायणं हि यः ।
प्रीत्यैकदेशसंस्थत्वात् सखायमिति चोदितम् ।।

न विद्यायाः फलं तस्य श्रुतं च नरकावहम् ।
नैव प्राप्नोति सुकृतं सन्त्यागात् परमात्मनः ।।

**भावप्रदीपः**

'यस्तित्याज' इति समाख्यामन्त्रं व्याचष्टे– **कर्मसंचयवेत्तारमिति** ।।

---

२४अ. (ऋक्.सं. १०-७१-६)

सचिविदमित्यस्यार्थोऽयम् । तित्याजेत्यस्यार्थः– **त्यजेदिति** । सखायमित्युक्तसखित्वोपपादनं– **प्रीत्यैकस्मिन्देशे देहाख्ये संस्थत्वादिति** । 'न तस्य वाच्यपि भागोऽस्ती'त्यस्य विवरणम्– **न विद्यायाः फलं तस्येति** । तृतीयपादस्य तात्पर्यम्– **श्रुतं च नरकावहमिति** । तुरीयपादस्यार्थो– **नैव प्राप्नोति सुकृतमिति** । यस्त्यजेदित्यनुवादेनैव त्यागस्य कारणता लाभेऽपि पुनः 'सन्त्यागात्परमात्मनः' इति वचनं त्यागविवरणाय प्रस्तावार्थम्[२५] ॥

**परमात्मत्यागः – प्रथमविधः**

**भाष्यम्**

मुख्यत्यागो हरेरेव[२६] यन्नास्तीति वदेदमुम् ।
तत्समं वाऽधिकं वाऽपि ब्रूयादैक्यमथापि वा ॥

ऐश्वर्यादिगुणानां वा ह्रासं नास्तित्वमेव वा ।
तत्प्रसादं विना मोक्षं ब्रूयाद्वा कस्यचित् क्वचित् ॥

ऐक्यं वा ब्रह्मशर्वादेर्मुक्तावैक्यमथापि वा ।
व्यत्यासं चावताराणां[२७] जीवाभेदममुष्य वा ॥

भेदज्ञानं तद्गुणानां तेन वाऽथ मिथोऽपि वा ।
तथैव तत्क्रियाणां च तद्रूपाणामथापि वा ॥

असाम्यदर्शनं वाऽपि तद्गुणानां[२८] परस्परम् ।
देहदेहिविभेदं च तस्मिन्नवयवेषु वा ॥

---

२५. प्रस्तावनार्थम् इति 'ख'पाठः
२६. हरेरेष इति ह.पाठः
२७. वावताराणां इति ह.पाठः
२८. तद्रूपाणां इति ह.पाठः

परस्परं भेददृष्टिं तेन वा कुत्रचित् क्वचित् ।
दोषसंसर्गमस्यापि स्वतः परत एव वा ।।

अज्ञानतो ज्ञानतो वा निर्देहत्वममुष्य च ।
तद्देहस्य प्राकृतत्वमचिदानन्ददेहताम् ।।

प्रादुर्भावेष्वपि विभोर्देहत्यागोद्भवादिकम् ।
अज्ञानदुःखसामर्थ्यपारवश्यादिकं तथा ।।

अतद्वशत्वं कस्यापि कदाचित् क्वचिदप्युत ।
परिमाणं बलादेर्वा तस्य विष्णोर्महात्मनः ।।

भेदाभेददृशिर्वाऽस्य जीवैर्वा स्वगुणादिभिः ।
तर्कैस्तस्यापलापो वा तत्र रक्तेन चेतसा ।।

त्यागानामेवमुक्तानां तर्काद्यैः साधनं तथा ।
अचिन्त्यविभवेऽप्यस्मिन्नसम्भवनिरूपणम् ।।

स एव[२९] मुख्यतस्त्यागो वासुदेवस्य कीर्तितः ।।

**भावप्रदीपः**

त्यागं विविच्य दर्शयति– **मुख्यत्याग इति** ।। 'नास्ति' इति 'वदेदमुं' इति चार्वाकादिमतानुसारेण । 'तत्समं' इति रामानुजमत-रीत्या । 'अधिकं' इति पाशुपतादिमतानुसारेण[३०] । 'ऐक्यं' इति परिणामवादिभास्कमतावलंबेन । यस्य कस्यचित्पुरुषस्य, ब्रह्मशर्वादि-र्देवजातस्य मुक्तावैक्यं संसारे भेद इति कस्यचित्पक्षः । अवताराणां

---

२९. एष इति ह.पाठः ३०. अनुरोधेन इति 'ख'पाठः

व्यत्यासं पृथुबलनरनारदादीनामवतारत्वं परशुरामादीनामनवतारत्वमिति । 'जीवाभेदः' इति मायिमतानुरोधेन । ब्रूयादिति संबन्धः । 'तद्गुणानां तेन वा मिथो वा भेदज्ञानं' इति वैशेषिकमतावष्टंभेन । यद्भेदज्ञानं तदप्येकस्त्याग इति योजना । असाम्यदर्शनमप्येकस्त्यागः । रामे यावद्बलं न तावज्ज्ञानम् । व्यासे यावज्ज्ञानं न तावद्बलमिति गुणानां परस्परं असाम्यदर्शनं तस्मिन्देहदेहिविभेदं च यद्ब्रूयात् सोऽप्येकस्त्यागः । तस्यावयवेषु परस्परं तेन वा भेददृष्टिं यः कुर्यात्सोऽपि त्याग एव । कुत्रचिद्रूपे क्वचित्काल इति सर्वत्रानुषङ्गः । दोषसंसर्गमपि यद्ब्रूयात्सोऽपि त्यागः । तत्र प्रकारभेदः– **स्वत इत्यादि** । **स्वतः** स्वभावतः । यथाऽसुरादीनाम् । परतः यथाऽसुरावेशेन देवादीनाम् । अज्ञानतः यथा वृषध्रादेर्गोहत्यादिना । ज्ञानतः यथा चन्द्रसुग्रीवादीनां बुद्धिपूर्वं स्वोच्चदारपरिग्रहादिनेति । **निर्देहत्वं** निराकारत्वम् । **अचिदानन्ददेहतां** अज्ञानदुःखात्मकदेहताम् । **परिमाणं** इयत्ता । स्वगुणादिभिर्वेति संबन्धः । **तर्कैः** कुयुक्तिभिस्तस्य विष्णोरपलापः । यथा ईश्वरोऽसन् अनुपब्धत्वात् शशविशाणवदिति ।

ननु साधूनामपि तत्त्वज्ञानस्थैर्याय कथायां परमतावष्टंभेन पूर्वपक्षितया प्रत्यवस्थानदर्शनात्सोऽप्यपलापस्त्यागरूपः किं? नेत्याशयेनाह– **तत्र रक्तेन चेतसेति** ।। यथोक्तम्–

शिष्योऽपि पूर्वपक्षस्थस्तदेवात्ममतं ब्रुवन् ।
नैवदुष्यत्यसत्येन स्थिरत्वार्थं हि तद्वचः[३१] । इति ।

एतच्च सर्वत्र योज्यम् । एवं तदपलापरूपत्यागवदन्येषामपि

३१. भाग.ता. ११-१०-३७

समाधिकसद्भावादिवादरूपाणामुक्तत्यागानां तर्कैर्युक्तिभिराद्यपद्येन वाक्याभासैश्च साधनम् । अचिन्त्यविभवेऽपि अस्मिन् युगपदणुत्वमहत्वादीनामसंभवनिरूपणम् । मुख्यतो हरित्यागनिरूपणमुपसंहरति– **स एवेति** ।।

परमात्मनस्त्यागः– द्वितीयः

**भाष्यम्**

**रमाब्रह्मादिकानां च तारतम्यानभिज्ञता ।**
**संशयश्चोक्ततत्त्वेषु जगन्मिथ्यात्वदर्शनम् ।।**
**अस्मृतिर्वासुदेवस्य तद्भक्तानां च निन्दनम्[३२] ।**
**द्वितीय एष त्यागस्तु विष्णोरेव प्रकीर्तितः ।।**

**भावप्रदीपः**

तदनन्तरत्यागं दर्शयति– **रमाब्रह्मेति** ।। **तारतम्यानभिज्ञता** तारतम्यविषये विपरीतज्ञानम् । न तु ज्ञानाभावमात्रम् । उक्ततत्त्वेषु हरेः समाधिकराहित्यादिषु **अस्मृतिः** स्मतेरकर्तव्यातानिरूपणम् । न तु स्मरणाभावमात्रम् । [३३]'त्यागद्वयात्तु प्रथमात्प्राप्यतेऽन्धं तमः क्रमात्' इति वक्ष्यमाणत्वात् । स्मरणाद्यभावमात्रेण तदयोगात् । एष तु त्यागो द्वतीयोऽपि विष्णोरेव त्यागः प्रकीर्तितः विष्ण्वप्रीतिहेतुत्वात् । विष्णुतत्त्वनिश्चयप्रतिबन्धकत्वाच्च ।।

---

३२. विनिन्दनम् इति ह.पाठः

३३. ऐत.भा. ७०१-पु

## तृतीयचतुर्थौ परमात्मनस्त्यागौ

### भाष्यम्

**निषिद्धकर्मकरणं विहितस्य च वर्जनम् ।**
**त्यागस्तृतीयो हि हरेश्चतुर्थोऽयोग्यपूरुषे ।।**
**उपदेशः केशवस्य यथाशास्त्रोदितक्रमात् ।**
**आचार्यपित्रोरन्यत्र तथैव च महाव्रते[३४] ।**
**हौत्रोद्गात्राध्वर्यवाणि त्याग एव चतुर्विधः ।।**

### भावप्रदीपः

तृतीयत्यागं निरूपयति– **निषिद्धेति** ।। एषोऽपि त्यागो हरेरेव प्रकीर्तितः । विष्ण्वप्रीतिहेतुत्वात्, द्वितीयत्यागानन्तर्यं तु पापद्वारा विष्णुतत्वनिश्चयप्रतिबन्धकत्वात् । यथोक्तमनुव्याख्याने[३५]– 'निषिद्धानि ज्ञान-रोधया' इति । चतुर्थत्यागं दर्शयति– **चतुर्थ इति** ।। अयोग्यपूरुषे केशवस्योपदेश इति संबन्धः । ननु चतुर्मुखादीनां विरोचनादिषू-पदेशदर्शनात्कथं स हरित्यागरूप इत्यत उक्तम्– **यथा शास्त्रोदित-क्रमादिति** । शास्त्रोदितक्रममनुसृत्योपदेश इत्यन्वयः । तथा च मिथ्याज्ञानोत्पानायायोग्यपुरुषेऽन्यथोपदेशस्य क्रियमाणत्वेऽपि न यथावदुपदेशः कार्यः । अतोऽयोग्ये यथावदुपदेश एव हरित्यागरूप इति भावः । तथाऽऽचार्यपित्रोरन्यत्र अन्यैः क्रियमाणे **महाव्रते** यज्ञे **हौत्रौद्गात्राध्वर्यवाणि** हौत्रादिव्यपारकरणमित्येषु चतुर्थो त्याग इत्यन्वयः । यद्यपीदं निषिद्धकर्मकरणमेवेति तृतीयत्याग एवान्तर्भाव-

---

३४. महाब्रते इति ह्.पाठः

३५. ३-४-२१२

मर्हति । तथापि यथावदुपदेशादेरङ्गिनो निषिद्धत्वादुद्देश्यस्यायोग्य-पुरुषादेरेव हेयत्वादयं त्यागश्चतुर्थत्वेन निरूपित इति मन्तव्यम् । उपसंहरति– **त्याग इति** ।।

चतुर्विधत्यागे फलभेदनिरूपणम्

**भाष्यम्**

**त्यागद्वयात् तु प्रथमात् प्राप्यतेऽन्धं तम क्रमात् ।**
**तृतीयान्निरयप्राप्तिश्चतुर्थान्न दिवं व्रजेत् ।।**

**उपदिष्टेऽपि यस्तत्त्वे संशयं कुरुते पुमान् ।**
**सोऽन्धन्तमो व्रजेदन्यो निरयायैव गच्छति ।।**

**स एव[३६] भगवान् विष्णुरेतैर्दोषैर्विना यदि ।**
**ज्ञायते मुक्तिदः साक्षान्नात्र कार्या विचारणा ।।**

**यदि ज्ञानं नातिपक्वं सरागं च मनो भवेत् ।**
**तदा स्वर्गादिलोकाप्तिः संशयश्चेत् क्वचित् क्वचित् ।**

**आवृत्तिरेव संसारे यावन्निःसशंयो भवेत् ।।**

**भावप्रदीपः**

त्यागचतुष्टयस्य फलाह– **त्यागद्वयादिति** ।। त्यागद्वये तारतम्यस्य सत्वात्तत्फलमन्धंतमः कथमेकरूपमुपपद्यत इत्यत उक्तम्– **क्रमा-दिति** ।। अधोमध्योर्ध्वक्रमादित्यर्थः । यथोक्तं बृहद्भाष्ये पैङ्गिश्रुतौ[३७]–

३६. एष इति ह्.पाठः

३७. बृह.उ.३-५-४ (११५पु)

ब्रह्मणस्तद्गुणानां च भेददर्श्यधरं तमः ।
भेदाभेदप्रदर्शी च मध्यमं तु तमो विशेत् ॥

ईषद्भेदप्रदर्शी च तम एवोत्तरं विशेत् ।
अदेहं भूतदेहं वा विदुस्ते चाधरं तमः ॥

तथा प्रकृतिदेहज्ञाः कर्मदेहविदोऽपि वा ।
जीवाभेदं तथाऽभेदं जगतोऽपि विदुः प्रभोः ॥

तेऽपि यान्ति तमोघोरमधरं ब्रह्मतस्कराः ।
भेदाभेदं विदुर्ये च जीवैस्तु जगताऽपि वा ॥

परस्य ब्रह्मणो यान्ति तमस्तेऽप्युत्तरं सदा ।
अभेदज्ञाः प्रकृत्याऽपि भेदाभेदविदस्तथा ।
तेऽपि यान्ति तमो घोरमधरं चोत्तरक्रमात् ॥ इत्यादि ।

तृतीयात्त्यागात् **निरयप्राप्तिः** अनित्यनरकप्राप्तिः । एतेन 'यदीं शृणोत्यलकं शृणोती'त्येतत् त्यागत्रयकथनपरमिति गदितं भवति । ननु यदुक्तं 'संशयश्चोक्ततत्वेषु' इत्युक्ततत्वविशयकसंशयस्य 'त्यागद्वयात्तु प्रथमात्प्राप्यतेऽन्धं तमः क्रमात्' इति तमःप्राप्तिफलकत्वम् । तदयुक्तम् । गुरूपदेशेन संशयनिवृत्त्या तत्त्वनिश्चये ब्रह्मदर्शनद्वारा मोक्षप्राप्तेः सर्वप्रमाणसिद्धत्वादित्याशङ्क्य तदुक्तेर्विषयं दर्शयति– **उपदिष्टेऽपीति** ॥ पूर्वपक्षकोटेर्दौर्बल्यव्युत्पादनपूर्वकं सिद्धान्तकोटिव्यवस्थापने कृतेऽपीत्यर्थः । **अन्यः**, एतादृशमुपदेशमलब्ध्वा कोटिद्वयश्रवणमात्रेण जातसंशयोऽपि संशयनिरासार्थं गुरूपसदनादिकमकृत्वा नित्यानुवृत्तसंशय इत्यर्थः ।

नन्वत्रादित आरभ्य तत्तद्विद्यानिरूपणानन्तरं तत्तद्विद्याफलस्य कथितत्वात्प्रकृतेऽपि फलस्यैव कथनमुचितम् । तद्विहाय 'य आत्मानं

परस्मै शंसति' 'दुग्धदोहा अस्य वेदा भवन्ति' इत्यादिना परशंसनादौ कुतोऽनर्थ उच्यत इत्याशङ्क्य सर्वत्रापि कथ्यमानं विद्याफलमुक्तदोषविहीनस्यैव पुंसो न तद्युक्तस्येति ज्ञापयितुमत्रेदमुक्तमिति भावेन विद्याफलप्राप्तावित्थंभावमाह– **स एवेति** ।। उक्तमनोदोषविहीनविष्णुज्ञानिनो मुक्तिरेव फलमित्युक्तस्य कचिदपवादमाह– **यदि ज्ञानमिति** ।। **सरागं** स्वर्गादिविषयेषु । एतादृशस्य पुंसः कचित्कचित् उक्ततत्वविषये संशयोऽपि वर्तते चेत् यावन्निःसंशयो भवेत्तावत्संसारे आवृत्तिरेव भवति । संशयादिनिवृत्यनन्तरमेव ब्रह्मदर्शनद्वारा मुक्तिरित्यर्थः ।।

**भाष्यम्**

**पुनरावृत्तिहीनं तु तमोऽन्धं मुक्तिरेव च ।**
**पूर्वं तु निःसुखं तत्र निर्दुःखं चापरं मतम् ।।**

**निश्शेषगुणहीनं च पूर्वं निर्दोषकं परम् ।**
**[३८]विमिश्रगतयस्त्वन्याः पुनरावृत्तिसंयुताः ।।**

**असुरा देवता मर्त्या योग्या एतेषु च क्रमात् ।**
**न च तेषां सङ्करोऽस्ति यथायोग्या हि तद्गतिः ।।**

**मानुषेषूत्तमा मुक्तिमधमा निरयं तथा ।**
**आप्नुवन्ति[३९] मनुष्येषु मध्यमाः सृतिभागिनः ।।**

सृष्टिस्थितिलयादीनां कदाऽपि नोच्छेदः

**नियमोऽयं नान्यथा स्यादच्छिद्रत्वं यथा[४०] भवेत् ।**
**दोषेऽथवा गुणे वाऽपि तदा दैत्याः सुरा अपि ।।**

---

३८. विमिश्रागतयः इति ह.पाठः ३९. प्राप्नुवन्ति इति ह.पाठः

४०. यदा इति ह.पाठः

**स्वां स्वां गतिं समायान्ति तावत् संसारभागिनः ।**
**अच्छिद्रत्वं नैव सर्वैः कदाचित् प्राप्यते यतः ।।**

**सृष्टिस्थितिलयादीनां नोच्छेदस्तेन कुत्रचित् ।**
**तस्माद्दोषान् प्रहायैव विष्णुं सर्वोत्तमोत्तमम् ।**
**जानीयात् तेन मुक्तिः स्यादपरोक्षदृशेरनु ।।**

**भावप्रदीपः**

प्रसङ्गात् त्रिविधगतिस्वरूपं तत्राधिकारिणस्तेषां स्वस्वगतिप्राप्तिकालं च निरूपयति– **पुनरावृत्तीति** ।। **पूर्वं** तमः । **अपरं** मुक्तिः । **अन्याः** मोक्षतमोव्यतिरिक्ताः स्वर्गमनुष्यनिरयलक्षणाः । ननु गुणे दोषे वाऽछिद्रप्राप्त्यनन्तरं सर्वेषां स्वस्वगतिप्राप्तौ पुनः सुरासुराणां सृष्ट्यादिप्रवाहोच्छेदप्रसङ्ग इत्यत आह– **अच्छिद्रत्वमिति** ।। कदाचिदपि नैव प्राप्यते । युगपदिति शेषः । प्रकृतमर्थमुपसंहरति– **तस्मादिति** ।। मुक्तेर्निर्दोषज्ञानप्राप्यत्वादित्यर्थः ।।

मरणसूचकानि दुर्निमित्तानि तत्परिहारश्च

उपनिषत्

**स यश्चायमशरीरः प्रज्ञात्मा, यश्चासावादित्ये, एकमेतदित्यवोचाम । तौ यत्र विहीयेते, चन्द्रमा इवादित्यो दृश्यते । न रश्मयः प्रादुर्भवन्ति । लोहिनी द्यौर्भवति यथा मञ्जिष्ठाः । व्यस्तः पायुः । काककुलायगन्धिकमस्य शिरो वायति । सम्परेतोऽस्यात्मा न चिरमिव जीविष्यतीति विद्यात् । स यत्करणीयं मन्येत तत्कुर्वीत ।**

**'यदन्ति यच्च दूरके'[४१] इति सप्त जपेत् । 'आदित् प्रत्नस्य रेतसः' इत्येका । 'यत्र ब्रह्मा पवमानः'[४२] इति षट् । 'उद्वयं तमसस्परि'[४३] इत्येका ।**

दुर्निमित्तकारणनिरूपणम्

**भाष्यम्**

सूर्यमण्डलगो विष्णुर्देहे चक्षुषि संस्थितः ।
अनिरुद्धश्च हृदये न च भेदोऽनयोः क्वचित् ।।

अन्येषामपि रूपाणामिति विद्याद् विचक्षणः ।
द्विरूपः स यदा विष्णुरपगच्छति देहतः ।।

तदैव दुर्निमित्तानि जायन्ते नान्यदा क्वचित् ।
तस्मात् तेषां दर्शने तु कर्तव्यं पारलौकिकम् ।।
सर्वमेव जपेच्चैव यदन्तीत्यादिका ऋचः ।

**भावप्रदीपः**

'स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्य एकमेतत्' इत्येतद्व्याचष्टे– **सूर्यमण्डलग इति** ।। तत्र 'स यश्चायं' इत्यस्यार्थः– **अनिरुद्धश्च हृदय इति** । 'स यश्चासावादित्यः' इत्यस्य– **सूर्यमंडलग इति** । केवलसूर्यमंडलस्थस्य देहादपगमनोक्त्यसंभवात् **देहचक्षुषि संस्थ** इत्युक्तम् । एकमेतदिति रूपद्वयस्यैवोक्त्या

४१. ऋक्.सं. ९-३७-२१

४२. ऋक्.सं. ९-११३-७

४३. ऋक्.सं. १-५०-१०

तदन्यरूपाणामैक्यं नास्तीति शङ्कानिरासार्थमाह– **अन्येषामपीति** ।। वक्ष्यमाणप्रमेयानुगुण्यार्थं रूपद्वयस्यैवैक्यमभिहितम् । वस्तुतस्तु सर्वाण्यपि रूपाण्यभिन्नानीति भावः । 'तौ यत्र विहियेते चन्द्रमा इवादित्यो दृश्यते' इत्यादि व्याचष्टे– **द्विरूप इति** ।। **दुर्निमित्तानि** मरणसूचकानि । 'स यत्करणीयं मन्येत तत्कुर्वीत' इत्यस्यार्थमाह– **तस्मादिति** ।। मरणकाले प्रत्यासन्ने सत्येव दुर्निमित्तानां जायमानत्वादित्यर्थः । **पारलौकिकं** परलोकप्राप्तिसाधनम् । सर्वं कर्तव्यमेवेति संबन्धः । 'यदन्ति यच्च दूरक इति सप्त जपेत्' इत्यस्यार्थः– **जपेच्चैवेति** ।।

अनिष्टपरिहारकमन्त्राः तद्देवताश्च

**भाष्यम्**

**ऋग्भिः षड्भिर्वायुरेव पवमानादिनामकः ।**
**स्तूयते सोऽङ्गनेतृत्वादग्निरित्यभिधीयते ।।**

**परस्य ब्रह्मणो विष्णोर्ज्ञापनाख्यप्रसूतिभिः ।**
**वायुः पुनाति यल्लोकान् सविता तेन कथ्यते ।।**

**पवित्रं नाम साक्षात् तत्परं ब्रह्म जनार्दनः ।**
**ज्ञानाख्यप्रसवेनापि स्वयं वायुः पुनात्ययम् ।**

**प्रसादयित्वा तं विष्णुं तेन लोकान् पुनात्ययम् ।।**
**प्राणाग्नेरर्चिषो देहे विततास्तेषु केशवः ।**
**अर्चिष्मान् विततो नित्यं वायुस्तेन पुनात्ययम्**[४४] **।।**

४४. अलं इति ह.पाठः

**भावप्रदीपः**

तत्र सप्तस्वृक्षु अन्तिमामृचमृते षड्भिः ऋग्भिः पवमानादिनामको वायुरेव स्तूयते । 'यत्ते पवित्रमर्चिष्यग्ने' इत्यग्नेः प्रार्थ्यमानत्वात्कथं वायुरेवेत्यवधार्यत इत्यतोऽग्निशब्दं वायौ निर्वक्ति– **सोऽङ्गेति ।। स** वायुः **अङ्गनेतृत्वात्** सर्वशरीरप्रवर्तकत्वादग्निरित्यभिधीयते । अङ्ग-शब्दोपपदान्नयतेर्डिप्रत्ययः । उपपदानुस्वारः अकारलोपश्च । 'उभाभ्यां देवसवितः' इत्यत्र सवितृशब्देनापि स एव संबोध्यत इति भावेनाह– **परस्येति ।। यत्** अस्माद्विष्णोर्ज्ञापनाख्यप्रसूतिभिर्लोकान्पुनाति **तेन** ज्ञापनाख्यप्रसवकर्तृत्वेन निमित्तेन सविता कथ्यत इत्यर्थः । 'यत्ते पवित्रमर्चिषि' इति मन्त्रार्थमाह– **पवित्रमिति** ।। तेन ब्रह्मणा पुनीहीत्यनेन ब्रह्मणः करणत्वोक्त्या प्राप्तामप्राधान्यशङ्कां वारयति– **प्रसादयित्वा तं विष्णुमिति** ।। तथा च तेनेत्यस्य तत्प्रसादेनेत्यर्थ इति भावः । एतेन 'यत्ते पवित्रमर्चिवदग्ने तेन पुनीहि नः' इत्येतदपि व्याख्यातं भवति । 'ब्रह्म सवैः पुनीहि नः' इत्येतद्व्याचष्टे– **ज्ञानाख्येति** ।। पुनाति लोकानिति शेषः । यद्यपि 'परस्य ब्रह्मणो विष्णोर्ज्ञापनाख्यप्रसूतिभिः वायुः पुनाति' इत्येनेनैवेदमुक्तार्थम् । तथापि तत्र सवितृशब्दस्य योगप्रदर्शनार्थं वक्ष्यमाणैतदर्थस्यानुवादमात्रमेत-दिति न पुनरुक्तता । 'यत्ते पवित्र मर्चिष्यग्ने विततमन्तरा । ब्रह्म तेन पुनीहि नः' । 'यत्ते पवित्रमर्चिवदग्ने तेन पुनीहि नः' इति वाक्यद्वयं व्याचष्टे– **प्राणाग्नेरिति** ।। प्राणाख्याग्नेरित्यर्थः । अर्चिष इत्यादिबहुवचनेनार्चिषीत्येतत्समुदायैकवचनमिति सूचयति । अर्चिवदित्यस्यार्थो– **अर्चिष्मानिति** ।।

ततश्चायं षड्चस्यार्थः ।

यदन्ति यच्च दूरके भयं विन्दति मामिह । पवमान वि तज्जहि[४५] ।

हे पवमान **इह** लोके **यद्भयं अन्ति** समीपे **यच्च दूरके** दूरे **मां विन्दति** प्राप्नोति **तत्** उभयं त्वं **विजहि** परिहर ।।१।।

पवमानः सो अद्य नः पवित्रेण विचर्षणिः । यः पोता स पुनातु नः[४६] ।।२।।

**स** पवमानः **पवित्रेण** पविवत् वज्रवत् भक्तरक्षकेण पवमानेन वा भगवता तत्प्रसादेन **नः विचर्षणिः** विशिष्टज्ञानाख्यप्रजादाता भवतु । यश्च **पोता** शोधकः **स** पवमानो नः पुनातु ।।२।।

यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा । ब्रह्म तेन पुनीहि नः[४७] ।।

हे **अग्ने** अङ्गप्रणेतः वायो **नो**ऽस्माकं देहे **यत्ते** तवार्चिः विततं, तस्मिन् **अर्चिषि अन्तरा** मध्ये **विततं** व्याप्तं यत्पवित्रं ब्रह्म **तेन** तत्प्रसादयित्वेति यावत् । नः पुनीहि ।।३।।

यत्ते पवित्रमर्चिवदग्ने तेन पुनीहि नः । ब्रह्म सवैः पुनीहिनः[४८] ।।४।।

**हे अग्ने** प्राण यत्तेऽस्मद्देहे विततत्वदीया अर्चिः विततं पवित्रं **अर्चिवत्** अर्चिष्मत् ब्रह्म तेन नः पुनीहि । **ब्रह्म सवैः** परब्रह्म-ज्ञापनरूपप्रसवैः परब्रह्मज्ञापनेन प्रसूतमिव कृत्वेति यावत् । नः पुनीहि ।।४।।

---

४५. ऋक्.सं. ९-६७-२१. 46. ४६. ऋक्.सं. ९-६७-२२

४७. ऋक्.सं. ऋक्.सं. ९-६७-२३ ४८. ऋक्.सं. ९-६७-२४

उभाभ्यां देव सवितः पवित्रेण सवेन च । मां पुनीहि विश्वतः[४९] ।।५।।

हे **सवितः** ज्ञापनेन ब्रह्मप्रसवकर्तृत्वात्सवितृशब्दवाच्य वायो **देव पवित्रेण** ब्रह्मणा परब्रह्मप्रसादेन **सवेन** तज्ज्ञापनाख्यप्रसवेन चेति **उभाभ्यां** भगवत्प्रसादज्ञानाभ्यां **विश्वतः** समस्तपापेभ्यो मां पुनीहि ।।५।।

त्रिभिष्ट्वं देव सवितर्वर्षिष्ठैः सोम धामभिः । अग्ने दक्षैः पुनीहि नः[५०] ।।६।।

हे देव **सवितः** सौम्यत्वात्**सोम अग्ने** प्राण **वर्षिष्ठैः** भक्ताभीष्ट-वर्षणशीलैः **धामभिः** लोकाश्रयैः **दक्षैः** समर्थैः **त्रिभिः** देवजनाः, वसवो, वश्वे देवा इति वक्ष्यमाणप्रकारेण त्रिविधैर्देवतासमूहैः सह नः पुनीहीति । **त्रिभिः** श्वेतद्वीपानन्तासनवैकुंठाख्यैर्धामभिः एतानि प्रापयित्वेति यावत् । पुनीहीति ।।६।।

'पुनन्तु मां देवजनाः पुनन्तु वसवो धिया । विश्वे देवाः पुनीतमा जातवेदाः पुनीहि मा'[५१] इति सप्तमी ऋक् तु स्पष्टार्थेति न व्याख्याता । अत्रापि जातं वेत्तीति जातवेदा इति जातवेदाः प्राण एवोच्यते । वसवो विश्वे दवा इति पृथगुपात्तत्वाद्देवजना इति तदितरे आदित्यरुद्रमरुदादिदेवगणा उच्यन्ते । **धिया** बुद्धिपूर्वं । एषा ऋक् बहुदैवत्या, अत एव ऋग्भिः षड्भिः वायुरेव स्तूयत इत्युक्तम् ।।

---

४९. ऋक्.सं. ९-६७-२५

५०. ऋक्.सं. ९-६७-२६

५१. ऋक्.सं. ९-६७-२७

अनिष्टपरिहाराय वायुप्रार्थना

भाष्यम्

**यत्र ब्रह्मेति षड्भिश्च प्रार्थनीयः स मारुतः ।।**
**मोचयित्वैव संसाराद्विष्णोर्लोके कृधीति च[५२] ।**

**आदित् प्रत्नस्येति विष्णुः स्तुत्यो वैकुण्ठलोकगः ।।**
**आदित्यमण्डलस्थश्च साक्षान्नारायणः प्रभुः ।**

**उद्वयं त्वितिमन्त्रेण स्तुत्यो वायोरपीश्वरः ।।**

भावप्रदीपः

'यत्र ब्रह्म पवमान' इति 'षळि'ति वाक्यं व्याचष्टे– **यत्र ब्रह्मेति** ।। न केवलं यदन्तीत्यादि षड्भिः किन्तु यत्र ब्रह्मेत्यादिषड्भिश्चेति चशब्दः । प्रार्थनीय इत्यनेन षड्भिरित्यनन्तरं जप्तव्या इत्यध्याहारं सूचयति । षण्णामप्यृचां तात्पर्यमाह– **मोचयित्वैवेति** ।। **कृधि** कुरु । मामिति शेषः । 'आदित्प्रत्नस्य रेतस इत्येके'त्यस्य तात्पर्यमाह– **आदिदिति** ।। 'उद्वयं तमसस्परीत्येके'त्यस्य तात्पर्यं दर्शयति– **उद्वयमिति** ।। न केनलं वायुः किन्तु **वायोरीश्वरो** विष्णुरपि स्तुत्य इत्यपिशब्दान्वयः ।।

अपमृत्युपरिहारक्रमः

भाष्यम्

**अपमृत्युभयं तस्य यदन्तीत्यृग्जपाद् व्रजेत् ।**
**कालमृत्युर्यदि भवेत् तथा[५३] जन्मादिकं भयम् ।।**

---

५२. ह इति ह.पाठः ५३. तदा इति ह.पाठः

**अन्याभिः कर्मतः पूतो यत्र ब्रह्मेति वैष्णवम् ।**
**लोकं व्रजेत् तथाऽन्याभ्यां विष्णुर्मोक्षसुखप्रदः ।।**

**भावप्रदीपः**

'यदन्ती'त्यादिका ऋचो जपेदित्युक्तम् । तत्रावान्तर्चां फलभेदमाह– **अपमृत्युभयमिति** ।। **तस्याधिकारिणो**ऽपमृत्युलक्षणभयं प्रसक्तं चेत्तत् यदन्तीति प्रथमऋक्जपात् **व्रजेत्** अपगच्छति । यदि काल-मृत्युर्भवेत्तदा तन्मृत्युभयापगमायोगात् यदन्तीति ऋक्जपाज्ज्ञानद्वारा कालान्तरे **जन्मादिकं** जन्मजराणरणादिरूपं संसारभयमेवापगच्छति । **अन्याभिः** षड्भिः ऋग्भिः जपात् **कर्मतः** पापकर्मणः **पूतः** शुद्धो भवति । 'यत्र ब्रह्मे'त्यादि ऋक्जपाद्**वैष्णवं लोकं** वैकुंठादिकं **व्रजेत्** प्राप्नुयात् । **अन्याभ्यां** 'अदित्प्रत्नस्य' 'उद्वयं तमसस्परि' इति द्वाभ्यामृग्भ्यां तज्जपात् विष्णुर्मोक्षसुखप्रदो भवतीत्यर्थः ।।

**यत्र ब्रह्मेति मन्त्रस्य वायुपरत्वसमर्थनम्**

**भाष्यम्**

**इष्टप्रदानशीलत्वादिन्दुर्वायुः स एव च ।**
**सोमः सौम्यस्वरूपत्वात् पवमानश्च पावनात् ।।**

**विष्णुः पुरातनत्वात् तु प्रत्नो रेतो महारतिः ।**
**देवत्रा देव एवासौ सर्वदेवेश्वरो यतः ।**

**सूर्यश्च सूरिभिः प्राप्यो नित्यानन्दो रमापतिः ।।**

**भावप्रदीपः**

'यत्र ब्रह्मे'ति षड्भिर्मारुतः प्रार्थनीय इत्युक्तम् । तत्कथं तत्र

'इन्दो परिस्रव' इति इन्द्रुप्रार्थनस्यैव प्रतीतेरित्यत इन्दुशब्दोऽपि मारुतस्यैव वाचक इति तत्र तन्निर्वक्ति– **इष्टेति** ।। इशब्दः कामवाचीष्टपरः । तदुपपदात् डु दाञ् दान इत्यतस्ताच्छील्ये उन्प्रत्ययः । उपपदेऽनुस्वारः । सोमशब्दपर्यायत्वाच्चेन्दुशब्दो वायुपरो मन्तव्य इति भावेन सोमशब्दं तस्मिन्निर्वक्ति– **सोम इति** ।। अथवा प्राक् सोमधामभिरित्यत्र सोमेति संबोधनं वायोरेव न प्रसिद्धसोमस्येति भावेनाह– **सोमेति** ।। पवमानशब्दसामानाधिकरण्याच्चायमिन्दुशब्दो वायुपर इति भावेन पवमानशब्दं निर्वक्ति– **पवमानश्चेति** ।। 'आदित्प्रत्नस्ये'त्येतत् किञ्चिद्व्याचष्टे– **विष्णुरिति** ।। 'प्रत्नं प्रदिवः प्रयया' इति पुराणनामसु पाठात्प्रत्नशब्दः पुरातनवाची । रमु क्रीडायामिति धातोर्डेतस् प्रत्यये रेत इति रूपमिति भावः । 'देवं देवत्रा सूर्यं' इत्यस्यार्थमाह– **देवत्रेति** ।। देवशब्दात्सप्तम्यर्थे त्रल् छान्दसः । सूर्यशब्दस्य सूरिभिः प्राप्य इत्येकोऽर्थः । सूरिशब्दोपपदाद्यातेः कर्मणि कः । उपपदान्तलोपः । नित्यानन्द इत्यपरः सुष्ठु रमणरूपत्वात्सूर्य इति । सूपपदात् रमतेः[५४] ड्यत् । उपपददीर्घः ।।

### मरणसूचकानि अन्यानि दुर्निमित्तानि

### उपनिषत्

**अथापि यत्र छिद्र इवादित्यो दृश्यते, रथनाभिरिवाभिख्यायेत, छिद्रां वा छायां पश्येत्, तदप्येवमेव विद्यात् । अथाप्यादर्शे वोदके वा जिह्मशिरसं वाऽशिरसं वाऽऽत्मानं पश्येत्, विपर्यस्ते वा कन्याके जिह्मेन वा**

---

५४. रमेः इति 'ख'पाठः

दृश्येयातां, तदप्येवमेव विद्यात् । अथाप्यपिधायाक्षिणी उपेक्षेत, तद्यथा वटरकाणि संपतन्तीव दृश्यन्ते, तानि यदा न पश्येत् तदप्येवमेव विद्यात् । अथाप्यपिधाय कर्णा उपशृणुयात्, स एषोऽग्निरिव प्रज्वलतो, रथस्येवोपब्दिः, तं यदा न शृणुयात् तदप्येवमेव विद्यात् । अथापि यत्र नील इवाग्निर्दृश्यते यथा मयूरग्रीवा, मेघे वा विद्युतं पश्येत्, मेघे वा विद्युतं न पश्येत्, महामेघे वा मरिचीरिव पश्येत, तदप्येवमेव विद्यात् । अथापि यत्र भूमिं ज्वलन्तीमिव पश्येत, तदप्येवमेव विद्यादिति प्रत्यक्षदर्शनानि ।

मरणसूचकाः दुःस्वप्नाः तत्परिहारश्च

अथ स्वप्नाः । पुरुषं कृष्णं कृष्णदन्तं पश्यति, स एनं हन्ति, वराह एनं हन्ति, मर्कट एनमास्कन्दयति, आशु वायुरेनं प्रवहति, सुवर्णं खादित्वाऽपगिरति, मध्वश्नाति, बिसानि भक्षयति, एकपुण्डरीकं धारयति, खरैर्वराहैर्युक्तै-र्याति, कृष्णं धेनुं कृष्णवत्सां नलदमाली दक्षिणामुखो व्राजयति ।

स यद्येतेषां किञ्चित् पश्येत्, उपोष्य, पायसं स्थालीपाकं श्रपयित्वा, रात्रिसूक्तेन प्रत्युचं हुत्वा, अन्येनान्नेन ब्राह्मणान् भोजयित्वा चरुं स्वयं प्राश्नीयात् ।

दुर्निमित्तेषु दःस्वप्नेषु प्राप्तेषु भगवद्गुणोपासनप्रकारः

स योऽतोऽश्रुतोऽगतोऽमतोऽनतोऽदृष्टोऽविज्ञातोऽ-

**नादिष्टः श्रोता मन्ता द्रष्टा देष्टा घोष्टा विज्ञाता प्रज्ञाता सर्वेषां भूतानामन्तरपुरुषः सम आत्मेति विद्यात् ॥३.२.४॥**

भगवतः अतः-अश्रुत-पुरुषादिशब्दवाच्यत्वं

**भाष्यम्**

देशतः कालतश्चैव गुणतश्चापि पूर्तितः ।
अत इत्युच्यते विष्णुः सन्ततो ह्यत उच्यते ॥

तृतीयवर्णोऽतिशये यतस्तेनातिरेव वा ।
अत इत्युच्यते विष्णुः सम्यक्श्रुत्याद्यशक्यतः ॥

पूर्णत्वाद् भगवान् विष्णुरश्रुतत्वादिनोदितः ।
अन्तस्थः सर्वजीवानां पूर्णत्वात् पुरुषाभिधः ॥

समः स सर्वरूपेषु सर्वजीवनियामकः ।
इति विद्यात् परं विष्णुं मुच्यते तेन संसृतेः ॥ इत्यादि च ।

**भावप्रदीपः**

'स योऽतोऽश्रुतः' इत्यादि व्याचष्टे– **देशत इति** ॥ कथमेतदतः-शब्दार्थ इत्यत आह– **सन्तत इति** ॥ व्याप्त इत्यर्थः । अत सातत्यगमने इति धातोरिति भावः । अतशब्दस्यार्थान्तरमाह– **तृतीयवर्ण इति** ॥ यतः 'तृतीयोऽतिशये' इति सूत्रात् तृतीय-वर्णोऽतिशये वर्तते तेन कारणेन अतिरेव अत इत्युच्यते । यथा अकारस्येकारस्तृतीयस्तथा इकारस्याप्यकारो व्युत्क्रमेण गणने तृतीय एव । उपसर्गा हि क्रियाया असन्निधाने ससाधनां क्रियामभिदधति । अतोऽतिरुपसर्गोऽतिशयितमाह । तत्र च तृतीयवर्णे प्राप्तेऽतिशयेना-

तिशयित इत्यर्थः सिद्ध्यतीति भावः । 'अश्रुतोऽगतोऽनतोऽदृष्टोऽविज्ञातोऽनादिष्टः' इत्यस्यार्थमाह– **सम्यगिति** ।। **श्रुतिः** श्रवणम् । आदिपदेन गतिमतिदृष्टिविज्ञानादेशाः । **अशक्यतः** अशक्यत्वात् । अश्रुतत्वादिनोदितः । कुतोऽशक्यत्वमित्यत उक्तम्– **पूर्णत्वादिति** ।। 'सर्वेषां भूतानामन्तरपुरुषः स म आत्मा' इति वाक्यं विवृणोति– **अन्तस्थ इति** ।। अन्तरशब्दार्थोऽम् । पूर्णत्वात्पुरुषाभिधः । पुरः कुषन् । सर्वजीवनियामक इत्यात्मशब्दार्थः । आदत्त इत्यात्मेति । स्वामी हि नियम्यानुपाधत्ते ।।

**भाष्यम्**

**शरीरपुरुषादीनां प्राप्यत्वात् [55]तदुपास्यत्वात् तेषां नियामकत्वेन तेभ्योऽप्युत्तमत्वेन[56] तेषु स्थितत्वाच्च तेषां सार इत्युच्यते भगवान् ।**

**यत् ई एव अलकं अरकं यत्किञ्चिच्छृणोति तत्सर्वमरतिरूपान्धतमःप्राप्तिकारणमेव तस्य भवति । तत्र हि सर्वरत्यभावो रतिविरुद्धदुःखं च पूर्णम् । परस्मै शंसनमात्रादरतिरेवेत्यतः प्रस्तुते चतुर्थत्यागेन 'न तस्य वाच्यपि भागो अस्ति । न हि प्रवेद सुकृतस्य पन्थां' इति दोषद्वयमेवेत्यवधारयति । न तस्यानूक्ते भागोऽस्ति न वेद सुकृतस्य पन्थानमित्येतत् तदुक्तं भवतीति । 'अलकं शृणोति' इति त्यागद्वयस्य मुख्यतस्तृतीयस्यापि नरकं शृणोतीति किञ्चिद्भवति ।**

**तौ यदाऽस्माच्छरीराद् विहीयेते [57]तदैवैतानि निमित्तानि [58]पश्यन्तीति नियमः । न च[59] तदा पश्यत्येवेति ।**

---

५५. तैः इति ह.पाठः
५६. अत्युत्तमत्वेन इति ह.पाठः
५७. तदैव तानि इति ह.पाठः
५८. पश्यतीति इति ह.पाठः
५९. तु इति ह.पाठः

## भावप्रदीपः

एवं प्रमाणेन खंडद्वयं व्याख्याय तत्र तत्र प्राप्तां विप्रतिपत्तिं निराकर्तुं स्पष्टत्वार्थं च स्ववचनेनापि व्याख्यातुमुपक्रमते । तत्र पूर्वखंडे शरीरपुरुषादीनां प्रज्ञात्मादयो रसतयोक्ताः । रसशब्दश्च सारवाची । सारसारवतोश्च दधिघृतादिवद्भेदाभेदौ वाच्यौ । तत्कथं प्रज्ञात्मादीनामनिरुद्धादिभगवन्मूर्तिपरतया व्याख्यानम् । न च शरीरपुरुषादीनामनिरुद्धादिभिरभेदो युज्यते इत्यतोऽत्र सारत्वोक्तेस्तात्पर्यमाह– **शरीरेति** ।।

'यदीं शृणोत्यलकं शृणोति' इत्येतत् 'श्रुतं च नरकावहं' इति तात्पर्यतो व्याख्यातम् । तदेवेदानीं विशदयति– **यदीं एवेति** ।। ईमित्यनुवादः । एवेत्यर्थकथनम् । रलयोरभेदादलकमित्यनूद्यारकमिति प्रतिपदमुक्तम् । तस्यार्थकथनम्– **यत्किंचिदिति** ।। अन्धं तमसोऽरतिरूपत्वमुपपादयति– **तत्र हीति** ।। **विरुद्धेति** ।। रतिविरुद्धेत्यर्थः । नञोऽभावविरुद्धोभयार्थत्वादरतिशब्देनोक्तार्थद्वयलाभ इति भावः । ननु 'यस्तित्याज' इत्युदाहृतमन्त्रे द्वितीयचतुर्थपादस्यैवानुवादेन तदुक्तार्थस्यैवेत्येतदुक्तं भवतीत्यवधारणं कुत इत्यत आह– **परस्मा इति** ।। समाख्यामन्त्रे यस्तित्याजेति चतुर्विधोऽपि विष्णुत्यागः समान्येनोक्तः तत्रोपनिषदि प्रस्तुतत्यागस्तु परस्मै शंसनरूपश्चतुर्थ एव । तत्फलं तु **अरतिः** रत्यभाव एव । 'चतुर्थान्नदिवं व्रजेत्' इत्युक्तत्वात् । न त्वन्धंतमः प्राप्तिरित्यतो हेतोः प्रस्तुते चतुर्थत्यागेऽयोग्योपदेशपरशंसनादिरूपे समाख्यामन्त्रोक्तदोषत्रये श्रुतफलाभावो द्युलोकाप्राप्तिश्चेति दोषद्वयमेवेत्यवधारणार्थमेतद्वाक्यं प्रवृत्तमिति भावः । तर्हि यदीदं शृणोत्यलकं शृणोतीत्येवं दोषकथनं कीदृशत्यागमित्यतो विविच्य दर्शयति– **अलकमिति** ।। त्यागद्वयस्य मुख्यतः 'त्याग-

द्वयात्तु प्रथमात्प्राप्यतेऽन्धं तमः क्रमात्' इति प्रागुक्तत्वात् । तृतीयस्यापि त्यागस्य नरकं श्रुणोतीत्येवमनित्यनरकप्राप्तिलक्षणं तमोपेक्षया किंचिदल्पं भवतीत्यर्थः । ननु 'तौ यत्र विहीयेते चन्द्रमा इवादित्यो दृश्यते' इत्याद्युक्तमयुक्तम् । केषांचिदेवंविधदुर्निमित्तानामदर्शनेऽपि मरणस्य दर्शनादित्यतस्तद्वाक्यतात्पर्यमाह– **यदेति** ॥

### यदन्तीत्यादि ऋचां तात्पर्यकथनम्

### भाष्यम्

**वासेन रमयतीति वासरं विष्णुर्ज्योतिः**[६०] ।

**यत्र ब्रह्मा वेदवाक्यं व्याचक्षाणो मखैर्यजन् ।**
**सोमेन च सुतेनेशमास्ते लोके हरेर्हि सः ॥ इति स्कान्दे ।**

**ग्राव्णा सोमविषये सोमेनेष्ट्वा महीयते तेनैव विष्णुप्रीत्या स्वस्यानन्दं जनयन् । स्वरानन्दरूपो विष्णुः । दिवो देव्या अवरोधनं तस्याः परिवारभूताः सर्वदेव्यः द्यौर्नाम वायुपत्नी । 'अजनयो मरुतो वक्षणाभ्यो दिव आवक्षणाभ्यः' इत्यादेः । यह्वतीः स्यन्दमानाः ।**

**सर्वेष्टद जगत्प्राण मामादाय परिस्रव ।**
**यत्रासौ भगवान् विष्णुस्त्वं हि मोक्षप्रदः सदा ॥ इति च ।**

**इन्दुरिष्टप्रदत्वाद्यो वायुरादाय गच्छति ।**
**इन्द्रनाम्नः केशवस्य समीपं मुक्तमञ्जसा ॥ इति च ।**

---

६०. विष्णुज्योतिः इति ह्.पाठः

**भावप्रदीपः**

'आदित्प्रत्नस्य' इत्यत्र प्रत्नरेतश्शब्दयोः व्याख्यातत्वाद्वासरशब्दार्थं दर्शयन्वाक्यार्थं सूचयति– **वासेनेति** ।। हृदयगुहायां जीवेन सह वसन् हि भगवान्जीवं रमयति । तथा चायमृगर्थः ।

आदित्प्रत्नस्य रेतसो ज्योतिष्पश्यन्ति वासरम् । परो यदिध्यते दिवा ।।

**प्रत्नस्य** पुरातनस्य **रेतसो** महानन्दरूपस्य विष्णोर्**वासरं** वासेन रमयतीति तथोक्तम् । **ज्योतिस्**तेजः बिम्बरूपमुपासका **आदित्** अस्मादेव विष्णुप्रसादादेव पश्यन्ति । **यत् दिवा** दिवः परः परस्तात् **इध्यते** दीप्यत इति ।।

'यत्र ब्रह्म' इत्यृचं प्रमाणेनैव व्याचष्टे– **यत्रेति** ।। **यत्र** लोके ब्राह्मा वेदवाक्यं व्याचक्षाणो मखैः सुतेन सोमेन चेशं यजन्नास्ते । स हरेर्लोको हीत्यन्वयः । अत्र 'वेदवाक्यं व्याचक्षाणः' इत्यनेन 'छन्दस्यां वाचं वदन्नि'त्युक्तार्थम् । 'मखैः सोमेन च यजन्निति' 'ग्राव्णा सोमे'त्यादेस्तात्पर्यम् । स्पष्टं चैतदुत्तरार्धं व्याचष्टे– **ग्राव्णेति** ।। सोमसवनपाषाणेन । इत्थंभूतलक्षणे तृतीया । सोम इति विषयसप्तमी । तथा च ग्रावणं हस्ते धृत्वा सोममभिषूय तेन भगवन्तमिष्ट्वा सोमयागविषयेऽयमद्वितीय इति सर्वैः **महीयते** पूज्यते । कथं भूतः सन् सोमेन तेनैव सोमयागेन विष्णुप्रीत्या स्वस्यानन्दं जनयन्नित्यर्थः । 'यस्मिन्लोके स्वर्हितं' इत्यत्र स्वःशब्दार्थमाह– **स्वरिति** ।। 'यत्रावरोधनं दिव' इत्यस्यार्थमाह– **दिव इति** ।। कुतो वायुपत्नी द्यौरित्यत आह– **अजनय इति** ।। हे भगवन् वहनात् **वक्षणाभ्यः** पक्षेभ्यः । बहुभ्य इति यावत् । 'वहनात्पक्षावक्षणा' इति

ऋग्भाष्योक्तेः । **मरुतो** वायून् अतीतानागतवर्तमानान् आ अजनयः । तथा **दिवः** अतीतानागतवर्तमानाः सर्वा भारतीश्च वक्षणाभ्य एव आ अजनय इत्यर्थः । अत्र मरुत्पदसन्निधानाद्दिवो मरुत्पत्नीत्वमवगम्यते । आदिपदेन 'द्यौर्वाव विद्युत्तत्पतिं वायुमुपगम्य' इत्यादिकं गृह्यते । 'यह्वयतीः' इत्यस्यार्थमाह– **यह्वयतीरिति** ।।

'इन्द्रायेन्दो परिस्रव' इत्यंशं प्रमाणेनैव व्याख्याति– **सर्वेष्टदेति** ।। इन्दुशब्दार्थोऽयम् । 'यत्रासौ भगवान्विष्णुः' इत्यनेन 'यस्मिन्लोके स्वर्हितं' इत्यस्योक्तो योऽर्थः प्रमापितो भवति । तत्र 'त्वमिन्द्राय परस्रव' इति प्रार्थनस्य स्वाभीष्टसाधकत्वान्मामादायेति शेषोक्तिः । तेन तस्मिन्मां धेहीत्येतदप्युक्तार्थम् । अत्रैव प्रमाणान्तरमाह– **इन्दुरिति** ।।

आनन्द-मोद-प्रमोद-मुच्छब्दानां अर्थभेदकथनम्

**भाष्यम्**

**अनन्यहेतुकं साक्षाद्भगवद्भक्तिरूपकम् ।**
**सुखमानन्द इत्युक्तो मोदो भोगनिमित्तकः ।।**
**प्रमोदस्तद्विशेषोत्थो मुन्नामात्यल्पभोगतः ।।**

**इत्यृग्वेदसंहितायाम् ।**

मन्त्रेषु न पौनरुक्त्यम्

**तमसः सकाशात् उद्गता वयमुत्तरं सर्वोत्तमं विष्ण्वाख्यं ज्योतिः परिपश्यन्तस्तमेव देवत्रा देवं देवविषयेऽपि देवमगन्म । तदेव ज्योतिष्ट्वेनोत्तरत्वेन च पश्यन्त इति दर्शने इत्थंभावविधानार्थं पूर्वम् । तथैवासौ भगवानुत्तमज्योतिः । न राजादिष्विवाविद्यमानभक्ति–मात्रमिदमिति ज्ञापयितुमगन्म ज्योतिरुत्तममिति पुनर्वचनम् ।**

**भावप्रदीपः**

'यत्रानन्दाश्च मोदाश्च' इत्यत्रानन्दादिशब्दार्थानपौनरुक्त्या प्रमाणेनैव दर्शयति– **अनन्येति** ।। **अनन्यहेतुकं** भोगाजन्यम् ।।

'उद्वयं तमसस्परिज्योतिष्पश्यन्त उत्तरं । देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमं' इत्येतद्विवृणोति– **तमसः सकाशादिति** ।। पूर्वार्धे 'ज्योतिरुत्तरं' इत्युक्तत्वात्पुनरुत्तरार्धे ज्योतिरुत्तममित्युक्तिः कुत इत्यतस्तयोस्तात्पर्यभेदं दर्शयति– **तदेवेति** ।। **इत्थंभावः** प्रकारः । यथा दर्शने ज्योतिष्ट्वं उत्तमत्वं च प्रकारत्वेन विहितं तथैवासौ भगवानुत्तमज्योतिर्भवत्येव । न राजादिष्विव **अविद्यमानभक्तिमात्रं** अविद्यमानगुणविषयकभक्तिमात्रमिदम् । ज्योतिष्ट्वेनोत्तरत्वेन च दर्शनमिति ज्ञापयितुं अगन्म ज्योतिरुत्तममित्युत्तरार्धे पुनरुत्तमज्योतिष्ट्ववचनमित्यर्थः ।।

**वटरकशब्दार्थकथनम् एकं पुण्डरीकं धारयतीत्यस्य अभिप्रायकथनम्**

**भाष्यम्**

**'अर्चिषोंऽशा वर्तुलास्तु नाम्ना वटरकाः[६१] स्मृताः' इति शब्दनिर्णये ।**

**बृहत्तमं[६२] मधु यदि सहापूपं प्रभक्षयेत् ।**
**स्वप्ने तस्याचिरात् मृत्यू रक्ताब्जे वा शिरोधृते ।। इति ब्रह्माण्डे ।**

**भावप्रदीपः**

'तद्यथा बटरकाणि संपतन्तीव' इत्यत्र बटरकशब्दार्थमाह– **अर्चिषोंऽशा इति** ।। 'मध्वश्नाती'त्यनेन केवलमध्वशनस्यैव मृति-

---

६१. बरटकाः इति ह्.पाठः     ६२. बृहत्तरं इति ह्.पाठः

सूचकत्वं प्रतीयते । 'एकपुण्डरीकं धारयति' इत्यनेन च हस्तादौ शुक्लादिपुण्डरीकधारणस्यापि तथात्वमनुमतमिव भाति । सामान्योक्तेः । तच्चानुभवबाधितम् । स्वप्ने तदुभयदर्शनेऽपि मृतेरजननादित्यतः प्रमाणेनैव तत्तात्पर्यमाह– **बृहत्तममिति** ।। शिरोधृते शिरसा धृते ।।

### रात्रिदेवताकथनपूर्वकं रात्रिसूक्तहोमफलविधानम्

### भाष्यम्

**रात्र्यास्तु देवता दुर्गा दुःस्वप्ने सा प्रपूजिता ।**
**पायसेन हरेन्मृत्युं रात्रिसूक्तादकालिकम् ।।**

**यदि कालिकमृत्युः स्यात् पदं सा परमं नयेत् ।**
**सहैव विष्णुना भक्तं विष्णोस्तद्धेदिनं तथा ।।**

**रतिदत्वात् परो विष्णुर्मुख्यतो रात्रिरुच्यते ।**
**तदाश्रयत्वाद् दुर्गाऽपि रात्रिरित्यभिधीयते ।।**

**स्त्रीरूपः स परो विष्णुः पायसेष्टो हि मोक्षदः ।**
**तस्मादुभौ सहैवेज्यौ भक्त्या दुःस्वप्नदर्शने ।।**

### भावप्रदीपः

'स यद्येतेषां किंचित्पश्येदुपोष्य पायसं स्थालीपाकं श्रपयित्वा रात्रीसूक्तेन प्रत्यृचं हुत्वा' इति दुःस्वप्नदर्शने रात्रीसूक्तेन होमो विधीयते । तत्र का नाम रात्रीदेवता किञ्च तद्धोमफलमित्यत आह– **रात्र्यास्त्विति** ।। दुःस्वप्ने दृष्टे सति रात्रीसूक्तात्पायसेन प्रपूजिताऽकालिकं मृत्युं हरेदित्यन्वयः । यदि कालिक एव मृत्युस्स्यात्तर्हि सा दुर्गा परमं पदं नयेदित्यर्थः । रात्रीसूक्तेन पूजकमात्रस्येदं फलं भवति

किं? नेत्याह– **विष्णोर्भक्तं तथा तद्वेदिनमेव नयेन्नान्यमिति** ।। परमपदनयने दुर्गायाः स्वातंन्त्र्यशङ्कां वारयितुमुक्तं– **सहैव विष्णुनेति** । पूजिता मृत्युं हरेत् परमं पदं नयेदित्यन्वयः । सहैवेत्यनेन विष्णोरेव मुख्यतो रात्र्यादिपदवाच्यत्वादिकं सूचितं तद्व्यनक्ति– **रतिदत्वादिति** ।। **तदाश्रयत्वात्** विष्ण्वधिष्ठानत्वात् । रात्रीशब्दस्य स्त्रीलिङ्गत्वात्कथं परमपुरुषस्य तद्वाच्यत्वमित्यत आह– **स्त्रीरूप इति** ।। **तस्मात्** उभयोर्मुख्यामुख्यतया रात्रीशब्दवाच्यत्वात् मोक्षदत्वाच्च ।।

रात्रिसूक्तव्याख्यानम्

**भाष्यम्**

**बहुभिर्नयनैर्विष्णुर्बहुधेदं ददर्श ह ।**
**आयन् सर्वेषु लोकेषु धृतास्तेनैव हि श्रियः ।।**

**नीचानुच्चांश्च जीवान् स ब्रह्मादीनुर्वपूरयत् ।**
**ज्ञानेन बाधतेऽज्ञानं स्वसारं स्वं तथाऽकरोत् ।।**

**उष आख्यं शुक्लवर्णं प्रमदारूपमेव च[६३] ।**
**तमश्चापकरोत्येव तदा[६४] सूर्यादिषु स्थितः ।।**

**स नः स्वामी यदुदरे यमनाद्यामनामके ।**
**अविक्ष्महि वयं सर्वे वृक्षे यद्वत्पतत्रिणः ।।**

**शेनाख्यास्तु सुखीनत्वादासमन्तात् सुरोत्तमाः ।**
**पद्वन्तो मानुषाश्चैव पादमात्रप्रयायिनः ।।**

**ग्रामाख्या बहुलत्वात्तु दैत्या एव प्रकीर्तिताः ।**
**अर्थिनस्तु कृतार्थत्वात् मुक्ता एव श्रुताः श्रुतौ ।।**

---

६३. तु इति ह.पाठः

६४. सदा इति ह.पाठः

**भावप्रदीपः**

इदानीं समग्रसूक्तं विष्णुपरतया व्याख्याति– **बहुभिरिति ॥**

**ऋचां पदान्युपादाय तेषां भाष्यपदैः सह ।**
**कुर्मः संवादितामात्रमृगर्थस्पष्टतार्थतः ॥**

रात्री व्यख्यदायती पुरुत्रा देव्य१क्षिभिः । विश्वा अधि श्रियोऽधित[६५] ॥१॥

रतिदत्वात् रात्रीशब्दवाच्यो **देवी** द्योतमानो विष्णु**रायती** आयन् आगच्छन् **अक्षिभिः** बहुभिः नयनैः **पुरुत्रा** बहुधा **इदं** जगत् **व्यख्यत्** ददर्श । तेनैव रात्रीनामकेन विष्णुना **विश्वाः** समस्ताः **श्रियः** सम्पदः **अधि** सर्वेषु लोकेषु **अधित** धृताः स्थापिताः । 'सुप्तिङ्' इति वचनाव्द्यत्ययेन बहुवचनस्यैकवचनम् ॥१॥

ओर्वप्रा अमर्त्या निवतो देव्युद्वतः । ज्योतिषा बाधते तमः[६६] ॥२॥

**अमर्त्या** मरणरहिता देवी स विष्णु**र्निवतो** नीचान् **उद्वतः** उच्चांश्च ब्रह्मादीन् देवान् (जीवान्) **उरु** उत्कृष्टतया तत्तद्योग्यतानुगुणया **आ अप्राः** अपूरयत् । प्र पूरणस्य लुङि पुरुषव्यत्ययेन रूपमेतत् । **ज्योतिषा** ज्ञानेन **तमो**ऽज्ञानं बाधते ॥२॥

निरु स्वसारमस्कृतोषसं देव्या यती । अपेदु हासते तमः[६७] ॥३॥

**देवी** विष्णुः **आयती** आयन् **उषसं** उष आख्यं शुक्लवर्णं स्वयमेव प्रमदारूपं स्त्रीरूपं स्वस्य स्वसारं **निरस्कृत उ** उत अकरोच्च **उ** उत सदा सूर्यादिषु स्थितः सन् **तमो**ऽन्धकारं **अपहासते इत्** अपाकरोत्येव । मिथः समुच्चये उशब्दद्वयम् ॥३॥

---

६५. ऋक्.सं. १०-१२७-१ ६६. ऋक्.सं. १०-१२७-२

६७. ऋक्.सं. १०-१२७-३

सा नो अद्य यस्या वयं नि ते यामन्न विक्ष्महि । वृक्षे न वसतिं वयः[६८] ।।४।।

**सा** देवी **स** विष्णुर्**नो**ऽस्माकं स्वामी । **अद्य** साम्प्रतं **यस्याः यामन्** यामनियमनात् संयमनात् यामनामके यदुदरे **यस्य** भगवतः उदरे **वयं** सर्वे जीवाः **अविक्ष्महि** कथं **वयः** पतत्रिणः पक्षिणः **वृक्षे न** यद्वन्निवसंति वासस्थानं नीडं विशन्ति तथा ।।४।।

नि ग्रामासो अविक्षित नि पद्वन्तो नि पक्षिणः ।
नि श्येनासश्चिदर्थिनः[६९] ।।५।।

वयं सर्वे अविक्ष्महीत्यस्यैव विरणमिदं । **ग्रामासो** ग्रामाः । ग्रामशब्दः समुदायवाची । बहुलत्वाद्दैत्या एव ग्रामाख्या प्रकीर्तिताः । 'असुरा बहुला' इति वचनात् । तथा च ग्रामनामकाः **पक्षिणो** दैत्यजीवाः । यदुदरे **न्यविक्षत** निविशन्ति । **पद्वन्तः** पादमात्र-प्रयाणिनो न तु देवादिवत्खेचराः मानुषाः पक्षिणः मानुषजीवाश्च **न्यविक्षत** । **श्येनासश्चित्** श्येनाख्यास्तु सुरोत्तमा ब्रह्माद्या एव । कुतः **आ** समन्तात्सुखीनत्वात्सुखिषु श्रेष्ठत्वात् शं सुखमेषामस्तीति शिनः सुखिनः । आ समन्तात् इना एनाः शिषु एनाः श्येना इति, श्येनाख्या पक्षिणः सुरोत्तमा जीवा अपि न्यविक्षत । **अर्थिना** मुक्ताः कृतार्थत्वात् तेऽपि न्यविक्षत **सा नः** स्वामीति पूर्वेणान्वयः ।।५।।

यावया वृक्या वृकं यवयस्ते न मूर्म्ये । अथानः सुतरा भव ।।६।।

---

६८. ऋक्.सं. १०-१२७-४.

६९. ऋक्.सं. १०-१२७-५

### भाष्यम्

**ऊरीकृतप्रमाणत्वादूर्म्यः स भगवान् हरिः ।**
**वृकास्तेनैव निर्याप्याः वृकाः क्रूरत्वतोऽसुराः ।।**

**तत्स्वभावाश्च वृक्याः स्युः स्तेनास्तत्र महासुराः ।**
**ब्रह्मस्तेना यतस्ते हि नित्यमैकात्म्यवेदिनः ।**

**विष्णुः सुखतरश्चैव भक्तानां भवति प्रभुः ।।**

### भावप्रदीपः

अत्रोर्म्येति रात्रिनाम । 'शर्वरी अक्तुः ऊर्म्ये'ति तन्नामसु पाठात् । तं शब्दं भगवति निर्वक्ति– **उरीकृतेनेति** ।। स्ववाचकतायाऽङ्गीकृतवेदादिप्रमाणत्वादित्यर्थः । ऊरशब्द ऊरीशब्दार्थः छन्दसि धातुं विनाऽपि प्रयुज्यते । तस्य चान्तलोपः । **म्यं** प्रमाणं । माङ् मान इत्यतः करणे यत् । ऊरीकृतं म्यं प्रमाणं यया सा ऊर्म्येति विग्रह इति भावः । वृकं वृक्यांश्च यावय स्तेनं यवयेत्येतत्तात्पर्यतो व्याचष्टे– **वृका इति** ।। वृकानां स्तेनानां चोपलक्षणमेतत् । के ते वृकादय इत्यत आह– **वृका इति** ।। तत्स्वभावः रक्षः पिशाचादयः । कथं महासुराणां स्तेनत्वमित्यत आह– **ब्रह्मस्तेना इति** ।। **ते** महासुरा यतो नित्यमैकात्म्यवेदिनः । स्वस्याविद्यमानब्रह्मभावाभिमानिन इति यावत् । 'सुतरा भव' इत्यस्यार्थमाह– **विष्णुरिति** ।। **सुखतरः** अतिशयेन सुखहेतुः । ततश्चायमर्थः । **हे ऊर्म्ये** ऊरीकृतवेदादिप्रमाणे **देवि** विष्णो **वृकं** तद्वत्क्रूरं असुरसमुदायं **वृक्यान्** असुरस्वभावान् रक्षः पिशाचादींश्च **यावय** निर्यापय **स्तेनं** ब्रह्मस्तेनं जीवब्रह्मैक्यवेदिनं

सा नो अद्य यस्या वयं नि ते यामन्न विक्ष्महि । वृक्षे न वसतिं वयः[६८] ।।४।।

**सा** देवी **स** विष्णुर्**नो**ऽस्माकं स्वामी । **अद्य** साम्प्रतं **यस्याः यामन्** यामनियमनात् संयमनात् यामनामके यदुदरे **यस्य** भगवतः उदरे **वयं** सर्वे जीवाः **अविक्ष्महि** कथं **वयः** पतत्रिणः पक्षिणः **वृक्षे न** यद्वन्निवसंति वासस्थानं नीडं विशन्ति तथा ।।४।।

नि ग्रामासो अविक्षित नि पद्वन्तो नि पक्षिणः ।
नि श्येनासश्चिदर्थिनः[६९] ।।५।।

वयं सर्वे अविक्ष्महीत्यस्यैव विरणमिदं । **ग्रामासो** ग्रामाः । ग्रामशब्दः समुदायवाची । बहुलत्वादैत्या एव ग्रामाख्या प्रकीर्तिताः । 'असुरा बहुला' इति वचनात् । तथा च ग्रामनामकाः **पक्षिणो** दैत्यजीवाः । यदुदरे **न्यविक्षत** निविशन्ति । **पद्वन्तः** पादमात्र-प्रयाणिनो न तु देवादिवत्खेचराः मानुषाः पक्षिणः मानुषजीवाश्च **न्यविक्षत** । **श्येनासश्चित्** श्येनाख्यास्तु सुरोत्तमा ब्रह्माद्या एव । कुतः **आ** समन्तात्सुखीनत्वात्सुखिषु श्रेष्ठत्वात् शं सुखमेषामस्तीति शिनः सुखिनः । आ समन्तात् इना एनाः शिषु एनाः श्येना इति, श्येनाख्या पक्षिणः सुरोत्तमा जीवा अपि न्यविक्षत । **अर्थिना** मुक्ताः कृतार्थत्वात् तेऽपि न्यविक्षत **सा नः** स्वामीति पूर्वेणान्वयः ।।५।।

यावया वृक्या वृकं यवयस्तेन मूर्म्ये । अथानः सुतरा भव ।।६।।

---

६८. ऋक्.सं. १०-१२७-४.

६९. ऋक्.सं. १०-१२७-५

## भाष्यम्

**ऊरीकृतप्रमाणत्वादूर्म्यः स भगवान् हरिः ।**
**वृकास्तेनैव निर्याप्याः वृकाः क्रूरत्वतोऽसुराः ।।**

**तत्स्वभावाश्च वृक्याः स्युः स्तेनास्तत्र महासुराः ।**
**ब्रह्मस्तेना यतस्ते हि नित्यमैकात्म्यवेदिनः ।**

**विष्णुः सुखतरश्चैव भक्तानां भवति प्रभुः ।।**

## भावप्रदीपः

अत्रोर्म्येति रात्रिनाम । 'शर्वरी अक्तुः ऊर्म्ये'ति तन्नामसु पाठात् । तं शब्दं भगवति निर्वक्ति– **उरीकृतेनेति** ।। स्ववाचकतायाऽङ्गीकृतवेदादिप्रमाणत्वादित्यर्थः । ऊरशब्द ऊरीशब्दार्थः छन्दसि धातुं विनाऽपि प्रयुज्यते । तस्य चान्तलोपः । **म्यं** प्रमाणं । माङ् मान इत्यतः करणे यत् । ऊरीकृतं म्यं प्रमाणं यया सा ऊर्म्येति विग्रह इति भावः । वृकं वृक्यांश्च यावय स्तेनं यवयेत्येतत्तात्पर्यतो व्याचष्टे– **वृका इति** ।। वृकानां स्तेनानां चोपलक्षणमेतत् । के ते वृकादय इत्यत आह– **वृका इति** ।। तत्स्वभावः रक्षः पिशाचादयः । कथं महासुराणां स्तेनत्वमित्यत आह– **ब्रह्मस्तेना इति** ।। **ते** महासुरा यतो नित्यमैकात्म्यवेदिनः । स्वस्याविद्यमानब्रह्मभावाभिमानिन इति यावत् । 'सुतरा भव' इत्यस्यार्थमाह– **विष्णुरिति** ।। **सुखतरः** अतिशयेन सुखहेतुः । ततश्चायमर्थः । **हे ऊर्म्ये** ऊरीकृतवेदादिप्रमाणे **देवि** विष्णो **वृकं** तद्वत्क्रूरं असुरसमुदायं **वृक्यान्** असुरस्वभावान् रक्षः पिशाचादींश्च **यावय** निर्यापय **स्तेनं** ब्रह्मस्तेनं जीवब्रह्मैक्यवेदिनं

महासुरसमुदायं च **यावय** निर्यापय । **अथ** तदनन्तरं **नोऽस्माकं सुतरा** सुखतरा अतिशेयेन सुखहेतुर्भवेति ।।६।।

**भाष्यम्**

**कृष्णं व्यक्तं तमोऽज्ञानमज्ञानां पेशलं हि तत् ।**
**तद्यातयत्यृणमिव भगवान् पुरुषोत्तमः ।।**

**स एव चोषाः कथितः प्रकाशत्वाज्जनार्दनः ।**
**जयिनः स्तोममिव च ब्राह्मणाय यथा च गाः ।**
**उपाकरं तथा स्तोमं तवाहं तत् गृणीष्व[७०] च ।।**

**भावप्रदीपः**

उप मा पेपिशत्तमः कृष्णं व्यक्तमस्थित । उष ऋणेव यातय[७१] ।।७।।

अस्य व्याख्यानं– **कृष्णं व्यक्तमित्यादि** । उषःशब्दार्थोक्तिः– **स एवेति** ।। ततश्चायमक्षरार्थः । **हे उषः** प्रकाशरूपे देवि विष्णो **कृष्णं** व्यक्तं स्पष्टनीलरूपं **पेपिशत्** अज्ञानां पेशलं भूषणरूपं **यत्तमो**ऽज्ञानं **मा** मां **उपस्थित** समाश्रितं तत् **ऋणेव** ऋणमिव **यातय** अपगमयेति ।।७।।

**भाष्यम्**

**द्यौरिति ज्ञानमुद्दिष्टं तद्व्यङ्ग्यत्वात् जनार्दनः ।**
**दुहिता दिव इत्युक्तः.....................।।**

---

७०. वृणीष्व इति ह्.पाठः ७१. ऋक्.सं. १०-१२७-७

### भावप्रदीपः

उप ते गा इवाकरं वृणीष्व दुहितर्दिवः । रात्रिस्तोमं न जिग्युषे[७२] ॥८॥

**हे दिवो दुहितः** रात्रि **गा इव** यथा ब्राह्मणाय गाः तदाति, **जिग्युषे** जयिने जयिनं प्रति **स्तोमं** नस्तोममिव स्तुतिं यथा कुर्वन्ति तथाऽहं **ते** तव **स्तोममु**पकरं कृतवानस्मि । **तत्** तं स्तोमं त्वं वणीष्वेति । कथं दिवोदुहितृत्वं भगवत इत्यत आह– **द्यौरिति** ॥

### रात्रिसूक्तोपासनं मोक्षसाधनम्

### भाष्यम्

**.....................एवमर्थेन पूज्यते ।**
**रात्रीसूक्तेन[७३] भगवान् साक्षान्नारायणः प्रभुः ॥**

**तत्सन्निधानाद् दुर्गाया एषोऽर्थ उपचारतः ।**
**एवं स्तुतस्तथैवेष्टो भगवान् मोक्षदो भवेत् ॥**

### भावप्रदीपः

एवं सूक्तं व्याख्यायोपसंहति – **एवमर्थेनेति** ॥ एवमर्थकेन रात्रीसूक्तेन भगवान्नारायणः **साक्षान्मुख्यतया** पूज्यते । दुर्गायास्तु एषोऽर्थ **उपचारतः** अमुख्यतया ज्ञेयः । तदपि तत्सन्निधानादेव । एवं स्तुतस्तथा इष्टश्च रात्रीसूक्तेनेति शेषः ॥

---

७२. ऋक्.सं. १०-१२७-८

७३. रात्रिसूक्तेन इति ह.पाठः

### सन्न्यासिभिरपि अञ्जसा रात्रिसूक्तं जप्यम्

**भाष्यम्**

**यदन्तीत्याद्यृचः सर्वा अपि दुःस्वप्नदर्शने ।।**
**जप्या एव विशेषोऽयं होमो दुःस्वप्नदर्शने ।**

**परोक्षज्ञानिनो विष्णुरापरोक्ष्यं व्रजेत् त्वरन् ।**
**अपरोक्षदृशः प्रीतः सुखाधिक्यं करोत्यतः ।।**

**मुक्तस्य द्विविधैस्तस्माज्जपो यागश्च सर्वथा ।।**
**कर्तव्यो न्यासिभी रात्रिसूक्तं जप्यं त्रिशोऽञ्जसा ।।**

इत्यैतरेयसंहितायाम् ।।३.२.४।।

**भावप्रदीपः**

अत्र जप्तव्यत्वेनोक्तानामान्यासामृचां रात्रीसूक्तस्य च विशेषमाह– **यदन्तीत्यादिना** ।। रात्रीसूक्ते त्वयं विशेषः । यज्जपो होमश्चेत्युभयमिति योजना । एतज्जपादेरवस्थानभेदेन फलभेदमाह– **अपरोक्षज्ञानिन इति** ।। अपरोक्षदृशस्तु **अतः** जपहोमानुष्ठानतः प्रीतः सन् तस्यैव मुक्तस्य सुखाधिक्यं करोति । तस्मात् **द्विविधैः** परोक्षज्ञानिभिः अपरोक्षज्ञानिभिश्च जपहोमश्चेत्युक्तरीत्या सर्वथा कर्तव्य इत्यर्थः । ननु सन्यासिनां होमाधिकाराभावात्कथमेतदित्यतस्तत्र जपाधिक्यमेव होमप्रतिनिधिरिति भावेनाह– **न्यासिभिरिति** ।।

ततश्चायं खण्डद्वयार्थः । **बाध्वः** संसारबाधितैः प्राप्यो विष्ण्वाज्ञया मोक्षप्रदो वायुश्चत्वारः पुरुषाः सन्तीत्याह । के ते? **शरीरपुरुषः छन्दःपुरुषो वेदपुरुषो महापुरुष इति** ।। तत्र शरीरपुरुष इति

यमवोचाम य एवायं **दैहिक आत्मा** सर्वदेहाभिमानी शिवः स एव । **तस्य** शिवस्य **योऽयं** देहस्थितो**ऽशरीरः** प्राकृतशरीररहितः **प्रज्ञात्मा** प्रकृष्टज्ञानरूपोऽनिरुद्धनामा हरिः **स रसः** शरीरपुरुषप्राप्यत्वात् तन्नियामाकत्वेन तदुत्तमत्वेन तत्र स्थितत्वाच्च साररूपः । एवमेवोत्तरत्रापि द्रष्टव्यम् ।।

छन्दःपुरुष इति यमवोचाम **सोऽक्षरसमाम्नायः** सम्यगाम्नायत अभ्यस्यत इति समाम्नायः समुदायः । सर्वे वर्णाः इति यावत् । तदभिमानी शेष एव । तस्यैतस्य अकारः इत्याक्रियते आहूयत इति तथोक्तः । अकारगतश्च वासुदेवो रसः । वेदपुरुष इति यमवोचाम सोऽयमेव । **येन** प्रेरितो वेदान्वेद, वेदानित्यस्यैव विवरणम्– **ऋग्वेदं यजुर्वेदं सामवेदमिति** ।। तथा च सर्ववेदाभिमानी गरुड एवेत्यर्थः । **तस्यैतस्य** वेदपुरुषस्य **ब्रह्मा** ज्ञानबृंहणात् ब्रह्माख्यऋत्विक् संस्थितत्वाच्च ब्रह्माख्यः संकर्षणो रसः । **तस्मात्** ब्रह्मर्त्विजि विशेषेण सङ्कर्षणस्य संस्थितत्वाद्यज्ञे ब्रह्माणं **ब्रह्मिष्ठं** ब्रह्मज्ञानिनमेव कुर्वीत । न तु यादृशतादृशं तस्मिन्विशेषतो हरिसन्निधानयोग्यताऽभावात् । ननु को विशेषो ब्रह्मर्त्विजः येनेतरेभ्यस्तस्य ब्रह्मिष्ठत्वादिकमवश्यं स्यादित्यत आह– **य इति** ।। **यो** ब्रह्मर्त्विक् **यज्ञस्य उल्बणं** क्रूरं दोषं **पश्येत्** कर्तृकरणादिवैगुण्यप्रसक्तिं दृष्ट्वा तत्प्रतिक्रियां विदध्यादिति यावत् । तादृशमेव ब्रह्माणं कुर्वीतेति पूर्वेणान्वयः ।।

महापुरुष इति यमवोचाम **स संवत्सर एव** संवत्सराभिमानी ब्रह्मैव । तन्माहात्म्यमाह– **प्रध्वंसयन्निति** ।। **अन्यानि भूतानि** कांश्चित्प्राणिनः प्रध्वंसयन् **अन्यानि च भूतानि** कांश्चित्प्राणिन **ऐक्याभावयन्** ऐक्यमाभावयन् लीनभावमापायदन्नित्यर्थः । संव-

त्सरात्मके क्लृप्तकाले पूर्णे केचित् बहिरेव प्रध्वस्तदेहा भवन्ति । केचिच्च मंडूकादयः सर्पादिषु लीनदेहा भवन्तीति प्रसिद्धम् । एतच्च कालाभिमानिब्रह्मकृत्यमेवेति भावः । **अन्यानि** भगवद्विरोधीनि भूतानि **प्रध्वंसयन्** तमसि पातयन् **अन्यानि भूतानि** मुक्तियोग्यजीवान् **ऐक्याभावयन्** मोक्षे स्वान्तःस्थानैक्यं संप्रापयन्नित्यपि व्याचक्षते । **तस्यैतस्य** संवत्सरनाम्नो ब्रह्मणः **असावादित्यः** आदित्यमण्डलस्थः, जगदादित्वात्सर्वभूतेषु ततत्वात्सर्वजीवानां नियामकत्वाच्चादित्य-नामकः प्रद्युम्नो रसः ॥

**स** प्रसिद्धो **यश्चायमशरीरः प्रज्ञात्मा** सर्वदेहेषु स्थितोऽनिरुद्धः **यश्चासावादित्यः** आदित्यस्थः प्रद्युम्नः एतद्रूपद्वयं **एकं** अत्यन्ता-भिन्नमिति विद्यात् । उपलक्षणमेतत् । संकर्षणवासुदेवावप्यभिन्नाविति विद्यादिति ग्राह्यम् । वक्ष्यमाणप्रमेयानुगुण्याय रूपद्वयस्यैवाभेदस्य स्वशब्देन कीर्तनम् । **तस्मात्** पुरुषदेहगतानिरुद्धस्य आदित्यमण्ड-लस्थप्रद्युम्नस्य चैक्यादेव हेतोः **आदित्यः** आदित्यगतो विष्णुः **पुरुषं पुरुषं प्रति** प्रतिपुरुषं भवति । नियामकतया तत्तद्देहस्थितो भवति । आदित्ये स्थित्वा सर्वेषां मां प्रत्यादित्यो मां प्रत्यादित्यो वर्तते इति प्रतीतिजनकश्च भवतीत्यर्थः ।

**तदप्येतत्** शिवादिसर्वदेवनियामकत्वादिरूपं शिवादिसारत्व-मृषिणोक्तम् । **सूर्यः** सूर्यस्थितो हरि**रुदगात्** उदितोऽभूदित्यन्वयः । कीदृशः सूर्यः **चित्रं** अतिशयेन चिद्रूपत्वात् परमचेतनत्वात् चित्तरं तदेव चित्रम् । **देवानां** ब्रह्मादिसर्वदेवानां **अनीकं** अननाच्चेष्टक-त्वादन् ईक्षितृत्वात् ई, कर्तृत्वात्किमिति । **मित्रस्य** वरुणस्याग्नेः । उपलक्षणमेतत् । सर्वदेवानां । चक्षुर्ज्ञानदाता **द्यावापृथिवी** द्यावा-

पृथिव्यौ अन्तरिक्षं च **आ** समन्तात् **अप्राः** स्वप्रकाशेनापूरयत् । **जगतो** जङ्गमस्य **तस्थुषः** स्थावरस्य च जङ्गमस्थावरात्मकसर्व-जीवानां **आत्मा** आदानात्स्ववशे स्थापनात् प्रलयेऽतृत्वाच्चात्मेत्युक्त इत्यर्थः । इति ऋषिणोक्तमित्यन्वयः ॥

एवमनिरुद्धादिचतुर्मूर्तिज्ञानपूर्वकमेव संहिताध्ययनं फलदं नान्यथेति भावेनाह– **एतामिति** ॥ **एतां** च **संहितां** सर्ववैदिकपूर्वोत्तरवर्ण सन्धिरूपां **तदैवानुविधं** विधामनुसरप्रकारं, सम्यगिति यावत् । **सन्धीयमानां** सन्धितामहं मन्ये । यदा चतुर्विधो विष्णुः संहिता-देवतेति ज्ञायते तथा पूर्ववर्णस्य नारायणो देवता । उत्तरवर्णस्य समस्ताः प्रादुर्भावदेवता इति च यदा ज्ञायते तदैवेति पूर्वेणान्वयः । इति हि बाध्व आह स्म । **एतं** विष्णुमेव **बृह्वृचा** ऋग्वेदिनो **महत्युक्थे** बृहतीसहस्रे **मीमांसन्ते** तत्प्रतिपाद्यं जानन्ति । **एतमेवाग्नौ** इष्टकानिर्मितचितिस्थेऽध्वर्यवो **मीमांसते** उपासते । एतं **महाव्रते** महाव्रताख्यस्तोत्रे छन्दोगाः **मीमांसन्ते** तत्प्रतिपाद्यदेवतां जानन्ति । तथा एतमेव **अस्यां** पृथिव्यां व्याादिसर्वभूतानां तेषु च व्याप्तं मीमांसन्ते ज्ञानिनः । **एतमेव ब्रह्म** पूर्णगुणात्मक इत्याचक्षते इति बाध्व आह स्मेति पूर्वेण योजना ।

**स एष आत्मा** भगवान् **संवत्सरसंमानः** संवसतां रतिदातृत्वात् संवत्सरो ब्रह्मा । स चानन्तमूर्तिः सन् अनन्तजगदधिष्ठाय तत्तन्नि-यामको भवति । भगवांश्च तस्य ब्रह्मणोऽनन्तरूपेषु स्वयं तावद्रूपै-स्तन्नियामकतया स्थित इति संवत्सरसंमान इत्युच्यते । तथा चक्षु-र्मयादिश्च भवति । **स** प्रसिद्धो यः पुमान् एवं संवत्सरसंमानं चक्षुर्मयादिरूपमात्मानं **परस्मै** अयोग्याय **शंसति** उपदिशति । तथा

**परस्मै** आचार्यपितृभ्यामन्यस्मै तत्क्रियमाणे महाव्रताख्ये कर्मणीति यावत् । शंसति बृहतीसहस्रादिशस्त्रेणेति शेषः । अथवा **परस्मै** आचार्यपितृभ्यामन्यमुद्दिश्य महाव्रताख्यस्तोत्रेण **आत्मानं** हरिं शंसति । उपलक्षणमेतत् । अन्योद्देशेन महाव्रते चितिं कुर्यादित्यपि ग्राह्यम् । 'न परस्मा अग्निं चिनुयात्' इति वक्ष्यमाणत्वात् । अस्योत्तरखण्डेनान्वयः ॥३.२.३॥

**अस्य** परस्मै आत्मशंसनकर्तुर्वेदा **दुग्धदोहा भवन्ति** । दुह्यत इति दोहो रसः । फलमिति यावत् । दुग्ध एव न तु दोग्धव्यो दोहो येषामिति तथोक्ताः । फलाधायका न भवन्तीत्यर्थः । तथा तस्य **अनुक्ते**ऽधीतशास्त्रे **भागः** फलमपि नास्ति । दृष्टादृष्टयोर्वेदाध्ययन-फलयोः पृथक् प्रतिषेधाय प्रवृत्तत्वान्नानयोर्वाक्ययोः पौनरुक्त्यम् । तथा **सुकृतस्य** गङ्गास्नानादिकर्मणः **पन्थानं** मर्गं फलमिति यावत् । **न वेद** न प्रोप्नोति । **तदेतत्** अयोग्योपदेशादिकर्तुर्नाध्ययनफलं नापि सुकृत फलमित्येतदप्यृषिणोक्तम् । **यः** पुमान् **सचिविदं** सचिः कर्मसञ्चयः, संपूर्वाच्चिनोतेः किः । उपसर्गस्यानुस्वारलोपः । तं वेत्तीति तथोक्तम् । प्रीत्यैकदेहे स्थितत्वात्**सखायं** नारायणं **तित्याज** तत्याज त्यजति । तस्य **वाचि** वेदवाचि अधीतायामपि **भागः** फलं नास्ति । **यदीं** यदेव शृणोति तत्सर्वं **अलकं** अरकं अरतिरूपान्धतमःप्राप्ति-साधनमेव शृणोति । श्रुतं सर्वमन्धतमःप्राप्तिसाधनमेव भवतीति यावत् । तथाऽ**लकं** रौरवादिनरकसाधनं च भवति । **सुकृतस्य पन्थां** पन्थानं फलं स्वर्गादिकं च **न हि प्रवेद** नैव प्राप्नोतीत्यर्थः ॥

ननु हरेस्त्यागश्चतुर्विधः । स एव नास्तीत्यादिज्ञानरूपः प्रथमः । रमाब्रह्मादीनां तारतम्यविषये विपरीतज्ञानादिरूपो द्वितीयः ।

निषिद्धकर्मकरणादिरूपस्तृतीयः । अयोग्योपदेषः परस्मै शंसनादिरूपश्चतुर्थः । तत्र प्रथमात् त्यागद्वयादन्धतमःप्राप्तिः । तृतीयान्नरकप्राप्तिः । चतुर्थादध्ययनसुकृतफलाप्राप्तिरिति प्रमाणप्रमितम् । अतः परस्मै शंसनमात्ररूपत्यागस्य कथमेतत्सर्वं फलं येन समाख्यात्वेनेयं श्रुतिरुदाह्रियत इति चेत् । सत्यम् । नेदं सर्वं फलं परस्मै शंसनकर्तुरेवात्रोच्यते । किन्तु यथायथं त्यागचतुष्टयकर्तृणामपि । तथापि प्रस्तुते परशंसनादिरूपे चतुर्थत्यागे 'न तस्य वाच्यपि भागोऽस्ति । न हि प्रवेद सुकृतस्य पन्थां' इति दोषद्वयमेव । न तु 'यदीं शृणोत्यलकं शृणोति' इत्युक्तदोष इत्यवधारयति । 'न तस्यानूक्ते भागोऽस्ति न वेद सुकृतस्य पन्थानमित्येतत्तदुक्तं भवती'ति ।

**तस्मात्** परस्मै शंसनादिरूपचतुर्थत्यागस्योक्तदोषद्वयरूपानर्थफलकत्वात् य एवं तस्यानर्थफलकत्वं विद्वान् **परस्मै** आचार्यपित्रोरन्यस्मै **अग्निं न चिनुयात्** इष्टकानिर्मितचितावग्निं प्रतिष्ठाप्य तत्र होमादिकं न कुर्यादिति यावत् । न परस्मै **महाव्रतेन** तन्नाम्ना स्तोत्रेण स्तुवीत, न परस्मै **एतदहः** बृहतीसहस्ररूपमुक्थं शंसेत् । पित्रे वाऽचार्याय वा तयोरर्थे **कामं** यथेच्छं शंसेत् । अस्य **तत्कृतं** आचार्यपित्रुद्देशेन शंसनं **आत्मने** आत्मार्थमेव कृतं भवति ॥

**स यश्चायमशरीरः प्रज्ञात्मा**ऽनिरुद्धः, **यश्चासावादित्यः** प्रद्युम्नः **एतत्** रूपद्वयं एकमित्यवोचाम । यद्यप्येतयोरैक्यविधानं प्रागेव कृतम् । तथापि प्रमेयान्तरनिरूपणार्थं पुनरुक्तस्यैवानुवादोऽयम् । **तौ** अनिरुद्धप्रद्युम्नौ **देहे** हृदयचक्षुषोः स्थितौ । **यत्र** यदा **विहियेते** शरीरादपगच्छतः तदाऽऽदित्यश्चन्द्रमा इव **दृश्यते** द्रष्टुं शक्यो भवति । आदित्यस्य **रश्मयो न प्रादुर्भवन्ति** रश्मिप्रादुर्भावदर्शनमस्य न

जायत इति यावत् । **द्यौर्लोहिनी** रक्तवर्णा **भवति** दृश्यते । कथं? यथा **मंजिष्ठा** लोहिनी तथा । **पायुर्गुदद्वारं व्यस्तो** विवृतो भवति । अस्य शिरः **काककुलायगन्धिकं** काकस्य कुलायवद्गन्धयुक्तं सत् **वायति** वाति । वा गतिगन्धनयोः व्यत्ययेन शन् । गच्छति स्वगन्धेन घ्राणमावृंक्त इति यावत् । एवमरिष्टदर्शनं यदा जायते तदाऽ**स्य पुरुषस्यात्मा संपरेतो** मृतप्राय एव । कुतः? **चिरमिव न जीविष्यति** । शतवर्षजीवनेऽपि चिरत्वमापेक्षिकमेव न मुख्यमिति ज्ञापनायेव शब्दः । इति विद्यात् । स एवं दृष्टारिष्टो यत्करणीयं पारलौकिकं मन्येत तत्सर्वं कुर्वीत । किञ्च 'यदन्ति यच्च दूरके' इति सप्तऋचो जपेत् । 'आदित्प्रत्नस्य रेतसः' इत्येका ऋक् । जप्तव्येति शेषः । 'यत्र ब्रह्मपवमाने'ति षट्ऋचः जप्तव्याः । 'उद्वयं तमसस्परि' इत्येका च जप्तव्या । एतज्जपेन चाकालमृत्युश्चेत् परिहृतो भवति । कालमृत्युश्चेदपरोक्षज्ञानद्वारा मोक्षो भविष्यतीति ज्ञेयम् ॥

अथ मृत्युसूचकानि अरिष्टान्तराण्युच्यन्ते । **यत्र** यदा आदित्यः **छिद्रः** छिद्रवानिव दृश्यते । तस्यैव विवरणं **रथनाभिश्चक्रमिवाभिख्यायेत** दृश्येत । आत्मनः छायां वा **छिद्रां** छिद्रवतीं पश्येत् । **तदपि** तदापि **एवमेवा**त्मानं न चिरमिव जीविष्यतीत्येव विद्यात् । **अथापि** अन्यदपि **आदर्शे** दर्पणे उदके वा **आत्मानं** आत्मप्रतिबिम्बं **जिह्मशिरसं** वक्रशिरसं वा **अशिरसं** शिरोहीनं वा पश्येत् । आत्मनः **कन्याके** कनीनके **विपर्यस्ते** व्यत्यस्ते ऊर्ध्वाधरीभावव्यत्यासेनेति यावत् । **जिह्मेन** जिह्मत्वेन वक्रतया वा दृश्येयातां तदप्येवमेव विद्यात् । **अथापि** अन्यदपि **अक्षिणी अपिधाय** अक्षिमूलं अंगुल्याऽवष्टभ्येति यावत् । **उपेक्षेत** उप समीप एवेक्षेत ।

**तत्** तर्हि यथा **बटरकाणि** वर्तुला अर्चिषोंशास्तादृशाः संपतन्तीव दृश्यन्ते स्वस्थात्मनां, तानि च बटरकसदृशानि यदा न पश्येत् तदा तदप्येवमेव विद्यात् । **अथापि** अन्यदपि **कर्णावपिधाय** करभ्यामाच्छाद्योपशृणुयात् **स एष** तदा श्रूयमाणो ध्वनिः प्रज्वलतोऽग्नेः **उपब्दिः** शब्द इव आगच्छतो रथस्योपब्दिरिव च स्वस्थात्मनां भाति । 'सरस्वतीनिवित्स्वाहा वग्नुरुपब्दिः' इति वाङ्नामसु पाठात् । **तं** तादृशं ध्वनिं यदा न शृणुयात् तदप्येवमेव विद्यात् । अथापि **यत्र** यदा अग्निर्नील इव दृश्यते । तस्यैव दृष्टान्तमुखेन विवरणम्– **यथा मयूरग्रीवेति** ।। **अमेघे** मेघरहिते व्योम्नि **विद्युतं** अन्यैरदृश्यमानां पश्येत् । मेघे वा विद्युतं अन्यैर्दृश्यमानामपि न पश्येत् । महामेघे वा **मरीचीः** सूर्यरश्मीनिव पश्येत् तदप्येवमव विद्यात् । **अथापि** अन्यच्च **यत्र** यदा भूमिं ज्वलन्तीमिव पश्येत तदप्येवमेव विद्यादिति । **प्रत्यक्षदर्शनानि** जाग्रदवस्थायां, द्रष्टुं योग्यानि दुर्निमित्तानि ।।

अथ स्वप्नाः मरणसूचका निरूप्यन्ते । पुरुषं **कृष्णं** कृष्णवर्णं तथा कृष्णदन्तं पश्यति । **स च** कृष्णः कृष्णदन्तश्च पुरुष **एनं** स्वप्नस्थं **हन्ति** ताडयति । वराहो वा एनं हन्ति । मर्कटो वा एनं **आस्कन्दयति** उपर्याक्रमते । आशु वायुरेनं **प्रवहति** ऊढ्वा प्रयाति । सुवर्णं खादित्वा **अपगिरति** चर्दति **मध्वश्नाति** अपूपसहितं बृहत्तमं मधु यदि भक्षयेत् । तथा **बिसानि** पद्मनालानि भक्षयति । **एकपुण्डरीकं** एकमेव रक्ताब्जं शिरसा धारयति । खरैर्वराहैर्वा युक्तैः रथादिभिर्याति । कृष्णवत्सां कृष्णां धेनुं **नलदमालां** नलदाख्यपुष्पविरचितमालाधारी सन् दक्षिणाभिमुखो भूत्वा व्राजयति । तदप्येवमेव विद्यादित्यन्वयः ।

**स** पुमानेतेषां मध्ये यदि किंचित्पश्येत् तर्हि तत्सूचिता-पमृत्युपरिहारार्थं उपोष्य स्थाल्यां पाको यस्य तत्स्थालीपाकं पायसं **संश्रपयित्वा** पक्त्वा रात्रीसूक्तेन प्रत्यृचं रात्रीसूक्तप्रतिपाद्यरात्रिशब्द-वाच्यस्त्रीरूपभगवन्मूर्तिं दुर्गां चोदिश्य हुत्वा **अन्येन** पृथक् पाचितेनान्नेन ब्राह्मणान् भोजयित्वा **चरुं** हविःशेषं स्वयं प्राश्नीयात् । तर्हि पायसेनेष्टो हरिर्दुर्गा चापमृत्युं परिहरतः कालमृत्युश्चेज्ज्ञानद्वारा मोक्षं नयत इति फलमत्रानुसन्धेयम् ॥

एवं प्रासङ्गिकं प्रमेयं निरूप्य प्रकृतमनुसरति– **स य इति** ॥ **सः** प्रसिद्धो **यः** परमात्मा **अतः** अत सातत्यगमने, देशतः कालतो गुणतश्च सन्ततत्वादतिपूर्णत्वादतशब्दवाच्यः । अतिशयेनातिशयितत्वाद्वा तथोक्तः । 'तृतीयोऽतिशये' इति सूत्रादतिशयेनातिरत इति । **अश्रुतः** साकल्येन श्रोतुमशक्यः पूर्णत्वात् **अगतः** साकल्येनावगन्तु-मशक्यः । एवं साकल्येन मन्तुं द्रष्टुं विज्ञातुमादेष्टुं चाशक्यत्वाद-मतोऽदृष्टोऽविज्ञातोऽनादिष्टश्च । सामान्यज्ञानविशेषज्ञानविवक्षया प्रवृत्तत्वादगतोऽविज्ञात इत्यनयोरपौनरुक्त्यम् । **अनतः** कस्याप्यप्रह्वः स्वतन्त्र इति यावत् । स्वयं तु सर्वस्य श्रोता मन्ता **देष्टा** उपदेष्टा **घोष्टा** घोषं कुर्वन् । **विज्ञाता** विविधज्ञाता । **प्रज्ञाता** प्रकृष्टज्ञाता । **सर्वेषां भूतानां** जीवानां **अन्तरो**ऽन्तस्थः पूर्णत्वात्पुरुषश्च । अन्तरश्चासौ पुरुषश्चेति तथोक्तः । **तं** विष्णुं **समः** सर्वरूपेषु एकप्रकारः । **आत्मा** सर्वजीवनियामश्चेति विद्यात् । तेन च संसार-नान्मुच्यत इत्यिपि ग्राह्यम् ॥३.२.४॥

स्पर्शाद्यक्षरप्रतिपाद्यरूपाभिधानम्

उपनिषत्

**अथ खल्वियं सर्वस्यै वाच उपनिषत् । सर्वा ह्येवेमाः सर्वस्यै वाच उपनिषदः । इमां त्वेवाचक्षते । पृथिव्या रूपं स्पर्शा अन्तरिक्षस्योष्माणो दिवः स्वराः । अग्ने रूपं स्पर्शा, वायुरुष्माण आदित्यस्य स्वराः । ऋग्वेदस्य रूपं स्पर्शा, यजुर्वेदस्योष्माणः सामवेदस्य स्वराः । चक्षुषो रूपं स्पर्शाः श्रोत्रस्योष्माणो मनसः स्वराः । प्राणस्य रूपं स्पर्शा अपानस्योष्माणो व्यानस्य स्वराः ।**

भाष्यम्

अथ सर्ववाग्विषया विद्योच्यते । विष्णुशब्दार्थत्वात् सर्ववाचाम् । पूर्वोक्ता अपि सर्ववागुपनिषद एव । तथापि मुख्यत[७४] एव सर्ववाग्विषयत्वाद् वक्ष्यमाणामेव 'सर्वस्यै[७५] वाच उपनिषत्' इति सर्वेऽप्याचक्षते[७६] ।

पृथिव्यादिस्थितो विष्णुः पृथिव्याद्यभिधानवान् ।
स्पर्शादीनां देवताऽसौ क्रमेणैव प्रकीर्तितः ।।

भावप्रदीपः

'अथ खल्वियं' इत्येतत्खण्डं व्याचष्टे– **अथेति** ।। **सर्वस्यै वाचे** सर्वस्या वाचः **उपनिषत्** रहस्यरूपा लौकिकवैदिकसर्ववाग्विषयका

---

७४. मुखतः इति ह्.पाठः ७५. सर्वस्याः इति ह्.पाठः

७६. व्याचक्षते इति ह्.पाठः

इयं वक्ष्यमाणा विष्णुनामार्थविषयिणी विद्योच्यत इत्यर्थ इति भावः । कथं वक्ष्यमाणविद्यायास्सर्ववाग्विषयकत्वमित्यतस्तत्र हेतुं स्वयमाह– **विष्ण्विति** ।। विष्णुशब्दस्य योऽर्थस्तदर्थकत्वात्सर्ववाचामित्यर्थः । 'सर्वा ह्येवेमास्सर्वस्यैवाचं उपनिषदः' इत्येतद्व्याचष्टे– **पूर्वोक्ता इति** ।। तथापीति श्रवणात् यद्यपीति प्राक् पूरणीयम् । 'इमां त्वेवाचक्षते' इत्यस्यार्थमाह– **तथापीति** ।। 'पृथिव्या रूपं स्पर्शाः' इत्यादिकं व्याचष्टे– **पृथिव्यादिस्थित इति** ।।

मानुषी तनुः दैवी वीणा प्रतिरूपा

**उपनिषत्**

**अथ खल्वियं दैवी वीणा भवति । तदनुकृतिरसौ मानुषी वीणा भवति । यथाऽस्याः शिर एवममुष्याः शिरः । यथाऽस्याः उदरमेवममुष्या अम्भणम् । यथाऽस्यै जिह्वैवममुष्यै वादनम् । यथाऽस्यास्तन्त्रय एवममुष्या अङ्गुलयः । यथाऽस्याः स्वरा एवममुष्याः स्वराः । यथाऽस्याः स्पर्शा एवममुष्याः स्पर्शाः । यथा ह्येवेयं शब्दवती तर्द्मवत्येवमसौ शब्दवती तर्द्मवती । यथा ह्येवेयं लोमशेन चर्मणाऽपिहिता भवत्येवमसौ लोमशेन चर्मणा पिहिता । लोमशेन ह स्म वै चर्मणा पुरा वीणा अपिदधति । स यो हैतां दैवीं वीणां वेद, श्रुतवदनो भवति, भूमिप्रास्याकीर्तिर्भवति, यत्र क्व चार्या वाचो भाषन्ते विदुरेनं तत्र ।**

### भाष्यम्

तस्य विष्णोरयं देहो वीणा साक्षात् प्रकीर्तिता ।
दैवी[७७] वीणा ततः सेयं लोकसिद्धा तु मानुषी ।।

ब्रह्मादिदेहान् यो वेद विष्णोर्वीणेति भक्तितः ।
विद्यापूर्णमुखः[७८] स स्याद्भूमिपूरितकीर्तिमान् ।।

### भावप्रदीपः

'अथ खल्वियं दैवी वीणा' इत्यादिकं व्याचष्टे– **तस्य विष्णोरिति** ।। तथा च देवस्य विष्णोरियं वीणा दैवी वीणेत्युक्तं भवति । 'तदनुकृतिरसौ मानुषी वीणा भवति इत्येतद्व्याचष्टे– **लोकसिद्धेति** ।। 'स यो हैतां दैवीं वीणां वेद' इत्यस्यार्थमाह– **ब्रह्मादिदेहानिति** ।। 'श्रुतवदनो भवति' इत्यस्यार्थो– **विद्यापूर्णमुखस्यादिति**[७९] ।। 'भूमिप्रास्य कीर्ति'रित्यस्य– **भूमिपूरितकीर्तिमानिति** ।

वाक्सिद्धिमन्त्रः

### उपनिषत्

**अथातो वाग्रसः । यस्यां संसद्यधीयानो वा भाषमाणो वा न विरुरुचिषेत तत्रैतामृचं जपेत्–**

**ओष्ठापिधाना न कुली दन्तैः परिवृता पविः ।**
**सर्वस्यै वाच ईशाना चारु मामिह वादयेत् ।। इति वाग्रसः ।।३.२.५।।**

---

७७. देवी इति ह.पाठः ७८. विद्यापूर्णसुखः इति पा.

७९. विद्यापूर्णसुखस्यादिति इति 'ख'

## ओष्ठापिधानेति ऋग्व्याख्यानम्

### भाष्यम्

**विद्याधिक्यार्थमेवैतां वाक्सारामप्यृचं जपेत् ।**
**ध्यात्वा नारायणं देवं स्त्रीरूपं वाचि संस्थितम् ।।**

**ओष्ठापिधानेत्येषा ह्यृक्सारो वाचः प्रकीर्तितः ।**
**विष्णोर्हि वाचि संस्थस्यैवोष्ठावेतौ पिधानवत् ।।**

**कुलीति चोक्तो भगवान् प्रलीनाशेषकुत्सितः ।**
**पाति सर्वं विशिष्टश्च सर्वस्मादित्यतः पविः ।।**
**सर्ववागीश्वरो विष्णुः स्त्रीरूपो मां सुवादयेत् ।। इति च ।**

### भावप्रदीपः

'यस्यां संसद्यधीयानो वा भषमाणो वा न विरुरुचिषेत तत्रैतामृचं जपेत्' इत्यस्याभिप्रायमाह– **विद्याधिक्यार्थमिति** ।। अत्र वाक्यसारामित्यनेनाद्यं तयोर्वाग्रस इत्येतद्व्याख्यातम् । ऋक्स्वरूपं दर्शयंस्तस्या वाक्सारत्वं स्पष्टयति– **ओष्ठापिधानेति** ।। ऋचं व्याचष्टे– **विष्णोरिति** ।। एतेन ओष्ठौ अपिधाने यस्यास्सा ओष्ठापिधानेति विग्रहः । नञश्च सामर्थ्यात्पिधानपदेनान्वय इत्युक्तं भवति । 'वष्टिभागुरिरल्लोपमवाप्योरूपसर्गयोः'[८०] इति वचनात्पिधानापिधानशब्दावुभावप्येकरूपाविति भवः । कुलीत्यस्यार्थमाह– **कुलीति** ।। पविशब्दं निर्वक्ति– **पातीति** ।। 'सर्वस्यै वाच ईशाना' इत्यस्यार्थः– **सर्ववागीश्वर इति** । स्त्रीलिङ्गत्वनिर्वाहय **स्त्रीरूप इति** । 'चारु मामिहवादयेत्' इत्यस्य– **मां सुवादयेदिति** ।।

---

८०. पा.सू. २.४८२. इत्यत्रोदहृता कारिका (सि.कौ)

**भाष्यम्**

**नेत्युपमानार्थम्[८१] । ओष्ठावपिधानवदस्येति । न च विष्णोरन्या सर्वस्या वाच ईशाना । स हि मुख्यतः सर्वेश्वरः । तस्यैव प्रस्तुतत्वात् वक्ष्यमाणत्वाच्च ।**

**'श्रियपतिर्यज्ञपतिर्जगत्पतिर्गिरांपतिर्लोकपतिर्धरापतिः' इति[८२] भागवते[८३] ।**

**'यो वाचि तिष्ठन् वाचोन्तरो यं वाङ् न वेद'[८४] इत्यादिश्रुतिश्च ।**

**स्त्रीलिङ्गत्वं देवतेत्यादिवदपि युज्यते । स्त्रीरूपत्वाच्च ।।३.२.५।।**

**भावप्रदीपः**

ओष्ठापिधानेति नञा ओष्ठयोः पिधानत्वनिषेधप्रतीतेः कथं पिधानवदिति व्याख्यानमित्यत आह– **नेत्युपमार्थ इति** ।। स्पष्टत्वार्थमुपमार्थस्य नञोऽन्वयं दर्शयन्विग्रहं दर्शयति– **ओष्ठाविति** ।। **अस्य** वाङ्नाम्नो विष्णोः । नन्वस्या ऋचो विष्णुपरत्वं कुत इत्यतोऽन्तरङ्गं लिङ्गं दर्शयति– **न चेति** ।। ननु रमासरस्वत्यादीनामपि सर्ववागीश्वरीणां सत्वात्कुतोऽन्यानेशानेत्यत आह– **स हीति** ।। किञ्चात्र विष्णव-न्यस्याः वाच्यत्वाङ्गीकरे प्रकृतहानाप्रकृतस्वीकारापत्तेः । स एव वाच्योऽङ्गीकार्य इत्याह– **तस्यैवेति** ।। विष्णोः सर्ववागीश्वरत्वे प्रमाणं चाह– **श्रियःपतिरिति** ।। वाग्देवतानियामकत्वाच्च विष्णुरेव वागीश्वर इति भावेन श्रुतिमपि प्रमाणयति– **यो वाचीति** ।। अत्र

---

८१. उपमार्थे इति ह.पाठः    ८२. भाग.पु.

८३. इति च इति ह.पाठः    ८४. बृह.उ. ५-७-१७

वाचीति वाक्पदेन वाग्देवता सरस्वती विवक्षिता । न जडा । 'यं वाङ् न वेदे'ति वचनात् । जडस्य ज्ञानप्रसक्तेरेवाभावत् । अप्रसक्तस्य निषेधायोगात् । ननु विष्णोरेवात्र वाच्यत्वे स्त्रीलिङ्गशब्दानुपपत्तिरित्यतोऽत्र द्वेधा समाधानमाह– **स्त्रीलिङ्गत्वमिति** ।। स्त्रीलिङ्गत्वमपीति संबन्धः ।।

ततश्चायं खण्डार्थः । अथ खलु **इयं** वक्ष्यमाणा **सर्वस्यै वाचे** सर्वस्या वाच **उपनिषत्** रहस्यरूपा लौकिकवैदिकसर्ववाग्विषयिका विद्योच्यते । विष्णुशब्दार्थप्रतिपादकत्वात्सर्ववाचाम् । एतद्विद्यापि तथाभूतैवेति । यद्यपि **सर्वाह्येवेमाः** पूर्वोक्ता विद्याः विष्णुशब्दार्थत्वात् **सर्वस्यै वाचे** सर्वस्याः वाचः **उपनिषदः** उपनिषद्रूपा एव । तथापि तदपेक्षया मुख्यत एव सर्ववाग्विषयकत्वात् **इमां** वक्ष्यमाणां त्वेव सर्वस्या वाचः उपनिषदिति सर्वेऽपि ज्ञानिन आचक्षते । का सा विद्या **पृथिव्याः** पृथिवीस्थितस्य विष्णोर्यत्पृथिवीनामकं रूपं तत् **स्पर्शाः** स्पर्शाक्षरप्रतिपाद्यम् । **अन्तरिक्षस्य** अन्तरिक्षस्थितस्य विष्णोर्यदन्तरिक्षनामकं, रूपमित्यनुवर्तते । तत् **ऊष्माणः** ऊष्माक्षरप्रतिपाद्यम् । एवमेव दिवः स्वरा इत्यादिकमपि व्याख्येयम् । एवमधिलोकमधिदैवमधिवेदमधीन्द्रियमधिप्राणं पञ्चविधानि पृथिव्यादिनामकरूपत्रिकाणि [८५]स्पर्शाक्षरदेवतानि ज्ञेयानि ।।

**अथ खलु** विद्यान्तरं निरूप्यते । **इयं** देहाख्या **दैवी** देवस्य विष्णोः संबन्धिनी वीणा भवति । **तदनुकृति**स्तदनुकरणवती तत्सदृशी **असौ** लोकसिद्धामानुषी वीणा भवति । उभयोस्सादृश्यमोवोपपादयति–

---

८५. स्पर्शाद्यक्षर इति 'ख'पाठः

**यथेत्यादिना** ।। **अस्याः** दैववीणायाः । **अमुष्याः** मानुषवीणायाः । **अंभणं** अभिरभिशब्दे, अस्मादधिकरणे ल्युट् । शब्दोत्पत्तिस्थानं, अधोभागस्थमन्तरवकाशोपेतं बृहदवयवान्तरम् । **अस्यै** अस्याः । **अमुष्मै** अमुष्याः । **वदनं** उपरितनभागस्थोऽवयवविशेषः । यथाऽस्या अङ्गुलय एवममुष्यास्**तंत्रय**स्तंत्र्य एवाङ्गुलिस्थानीया इति यथायोग्यं योजना । **स्वराः** ध्वनिविशेषाः । एतदुभयत्र सम् । **स्पर्शाः** स्पर्श-योग्या अवयवविशेषाः । **शब्दवती** नादवती, **तर्द्मवती**, तर्द हिंसायां कर्णपीडनादिहिंसावती । यथा ह्येवेयं दैवी वीणा **लोमशेन** चर्मणा **अपिहिता** आच्छादिता । एवमसौ **लोमशेन** चर्मणा पिहिता भवति । एतच्च लोके सुप्रसिद्धमित्याह– **लोमशेनेति** ।। वीणा मानुषीलोमशेन [८६]रौरवादिचर्मणा, **पुरा** वादनात्पूर्वं पश्चाच्चेत्यपि ग्राह्यम् । **अपिदधति** तद्रक्षणार्थं वादका इति शेषः । **यः** पुमान् **एतां** दैवीं वीणां **वेद** ब्रह्मादिदेहान्विष्णोर्वीणेति भक्तितो जानाति स **श्रुतवदनो भवति** श्रुतमधीतशास्त्रं वदने यस्यासौ तथोक्तः । विद्यापूर्णमुखो भवतीति यावत् । **भूमिप्रास्यकीर्तिः** भूमौ प्रास्या प्रकर्षेण क्षिप्यमाणा व्यापिनीति यावत् । कीर्तिर्यस्यासौ तथोक्तः । भूमिपूरितकीर्तिमान् भवतीत्यर्थः । अस्य कीर्तिर्भूमिप्रा भूमिपूर्णा भवतीति पूर्वटीकाकारः[८७] । यत्र क्व च **अर्याः** ज्ञानवृद्धाः **वाचो भाषन्ते** वाग्व्यवहारं कुर्वन्ति तत्रैनं विदुः नियमेन श्लाघन्त इति भावः ।।

अथ प्रसङ्गाद्विद्याधिक्यलाभाय जप्तव्यमन्त्रनिरूपणं प्रतिजानीते– **अथात इति** ।। **वाग्रसः** वाक् सारो मन्त्रविशेषो निरूप्यते ।

---

८६. रौरवादि इति पदं 'ख'पाठे नास्ति ८७. वि.ती. २६६पु

एतज्जपस्य फलं सूचयन् जपं विधत्ते– **यस्यामिति** ।। **यस्यां** संसदि अधीयनो वा **भाषमाणो** व्याचक्षाणः कथां कुर्वन्वा **न विरुरुचिषेत** सभास्थानां रोचनाविषयो न भवति चेत्, संभावनाविषयत्वार्थत्वे सन् । यथा कूलं पिपतिषति, श्वा मुमुर्षतीत्यादि । **तत्र** सभायां रोचिःप्राप्त्यर्थमेतामृचं जपेत् । तां पठति– **ओष्ठेति** ।। पविरिति वाङ्नाम । 'पविर्भारती'त्यादि तन्नामसु पाठात् । अतो वाचि संस्थस्य स्त्रीरूपस्य भगवतः प्रतिपादिकेयमृक् ।

अयमर्थः । नेत्युपमार्थे । ओष्ठौ **अपिधानेन** अपिधान इव आच्छादनवस्त्रवद्वर्तेते यस्या सा ओष्ठापिधानानेत्युच्यते । अत्र नेति भिन्नमेव पदम् । सामर्थ्यात्पिधानपदेनान्वेति । लीनाशेषकुत्सितत्वात् **कुली** । **दन्तैः परिवृता** स्वपालकत्वात्सर्वस्माद्विशिष्टत्वाच्च **पविः** । **सर्वस्यैवाचे** सर्वस्या वाचः **ईशाना** ईश्वरी वाङ्नाम्नी भगवन्मूर्तिः चारु यथा भवति तथा मामिह सभायां वादयेदिति । इत्येषा ऋक् **वग्रसः** वाचः साररूपेत्यर्थः ।।३.२.५।।

आयासपरिहाराय ब्रह्मणा हरिस्तुतिः कृता

**उपनिषत्**

**अथ हास्मा एतत्कृष्णहारीतो वाग्ब्राह्मणमिवोपोदाहरति । प्रजापतिः प्रजाः सृष्ट्वा व्यस्रंसत संवत्सरः । स च्छन्दोभिरात्मानं समदधात् । यच्छन्दोभिरात्मानं समदधात् तस्मात् संहिता ।**

**भाष्यम्**

संवत्सर इति विशेषणाद्विरिञ्च एवात्र प्रजापतिः । 'ब्रह्मा विश्वः

**कतमः स्वयम्भूः प्रजापतिः संवत्सरः' इत्यादि श्रुतेः ।**

**श्रान्तो ब्रह्मा सर्ववेदैः स्तुत्वा नारायणं प्रभुम् ।**
**तेनैव सम्यक्सन्धाय दार्ढ्यं देहस्य सोऽकरोत् ॥**

**सन्धानात् संहितेत्युक्तो विष्णुरेव सनातनः ।**

**भावप्रदीपः**

'अथ हा स्मा एतत्कृष्णहारितः' इत्येतत्खण्डं व्याचष्टे– **संवत्सर इत्यादिना** ॥ तत्र 'प्रजापतिः प्रजाः सृष्ट्वा' इत्यत्र प्रजापतिशब्दः 'प्रजापतिः शिवः शेफो लिङ्गमित्यभिधीयते' इत्यादिवचनाद्रुद्रपर इति प्रतीतिनिरासाय सोपपत्तिकं विवक्षितं तदर्थमाह– **संवत्सर इति** ॥ संवत्सरशब्दश्च विरिञ्चपर इति प्रागुपपादितमेवेति भावः । श्रुतिमप्यत्रार्थे प्रमाणयति– **ब्रह्मेति** ॥ समग्रं खण्डं प्रमाणेनैव व्याचष्टे– **श्रान्तो ब्रह्मेत्यादिना** ॥ प्रजाः सृष्ट्वा श्रान्तः सन् श्रान्तिपरिहाराय सर्ववेदैर्नारायणं स्तुत्वा **तेनैव** स्तुतेन नारायणेनैव स्वदेहं सन्धाय देहस्य दार्ढ्यमकरोदित्यन्वयः । अत्र 'श्रान्त' इति 'व्यश्रंसते'त्यस्यार्थः । 'सर्ववेदैस्तुत्वे'त्यनेन 'छन्दोभि'रित्यस्य, 'नारायणं स्तुत्वे'ति शेषेणान्वयः सूचितः । तेनैव सम्यक् सन्धायेत्यनेन 'आत्मानं स्वदेहं छन्दोभिस्स्तुतेन हरिणा समदधात्' इति मूलव्याख्यानं सूचयति । 'यच्छन्दोभिरात्मानं समदधात्तस्मात्संहिता' इत्येद्व्याचष्टे– **सन्धानादिति** ॥ स्वदेहे ब्रह्मणा सन्धितत्वादित्यर्थः ॥

विष्णुशब्दार्थकथनम्

उपनिषत्

**तस्यै वा एतस्यै संहितायै णकारो बलम् षकारः प्राण आत्मा । स यो हैतो णकारषकारावनुसंहितमृचो वेद, सबलां सप्राणां संहितां वेदायुष्यमिति विद्यात् ।**

भाष्यम्

विष्णुनाम्नि णशब्देन विष्णोर्बलमुदीर्यते ।
ण इत्याक्रियमाणत्वात् णकारोऽस्य बलं मतम् ।।

विष्णुनाम्नि षकारेण रमाब्रह्मेशपूर्विणः ।
प्रणेतृताखिलस्यैव विष्णोरुक्ता तथाऽऽत्मता[८८] ।।

आततत्वं सर्वगुणैर्देशतः कालतस्तथा ।
आत्मशब्दोदितं तच्च षशब्देनाभिधीयते ।।

ष इत्याक्रियमाणत्वं प्रणेतृत्वं च पूर्णता ।
विष्णोः षकार इत्युक्ता वीत्युक्तस्य विशिष्टता ।।

अन्त्यस्थित उकारस्तु ताच्छील्यादि[८९] हरेर्वदेत् ।
एवं विशिष्टप्राणत्वमाततत्वं च सर्वतः ।।

विशिष्टं च बलं विष्णोः सर्वस्माच्छीलमित्यपि ।
उदितं विष्णुशब्देन तस्मादृक्संहितामनु ।।

---

८८. आत्मता तथा इति ह.पाठः

८९. ताच्छील्यं हि इति ह.पाठः

**वर्णद्वयसमायोगे ष्णुशब्दस्यार्थमेव तु ।**
**विष्णोः प्राणत्वमात्मत्वं बलं चैवात्र वेत्ति यः ।।**

**स एव विष्णोर्बलवित् तथा प्राणत्वविद्भवेत् ।**
**स एव मुक्तः संसारान्नित्यायुष्मान् भविष्यति ।।**

**भावप्रदीपः**

'तस्यै वा एतस्यै संहितायै णकरारो बलं, षकारः प्राण आत्मा' इत्येतद्व्याचष्टे– **विष्णुनाम्नीति** ।। तर्हि णकारो बलमिति कथं सामानाधिरण्यमित्यतो नायं णकार इति कारप्रत्ययः । किन्तु कर्मण्यण् प्रत्ययान्तः कारशब्द एवेति भावेन णकारशब्दं निर्वक्ति– **ण इति** ।। षकारेण तु रमाब्रह्मेशपूर्विणोऽखिलस्यैव प्रणेतृता तथात्मता चोक्तेत्यन्वयः । का नामात्मतेत्यत आह– **आततत्व-मिति** ।। व्याप्तत्वमित्यर्थः । षकारेणात्मतोक्तेत्युक्तत्वात्तच्च षशब्दे-नाभिधीयत इति पुनर्वचनमादरातिशयद्योतनाय । तत्रापि 'षकारः प्राण आत्मा' इति सामानाधिकरण्यप्रयोगनिर्वाहाय, षकारशब्दं निर्वक्ति– **ष इति** ।। प्रणेतृत्वं षकार इत्युक्तम् । पूर्णता च षकार इत्युक्तेनान्वयः । नन्वत्र णकारषकारौ बलादिवाचकावित्येवोच्यते । तौ च विष्णुनामगताविति कुतः । न हि णकारषकारावेव विष्णु-नामेत्यत आह– **वीतीति** ।। सत्यम् । सन्ति विष्णुनाम्न्यन्येऽपि वर्णास्तथापि वीत्युपसर्गेण उक्तस्य णकारषकाराभ्यां प्रतिपादितस्य बलादेर्विशिष्टताभिधीयते । अन्त्यस्थित उकारस्तु **हरेस्ताच्छील्यं** बलादिशीलत्वं । आदिपदेन बलादेर्नित्यत्वं स्वतन्त्रत्वमनवधिकत्व-मप्राकृतत्वं चेत्यादिकं वदेदित्यर्थः । तथा च विष्णुशब्दस्य कोऽर्थः सम्पन्न इत्यत आह– **एवमिति** ।। **विशिष्टप्राणत्वं** विशिष्ट-

प्रणेतृत्वम् । **सर्वतः** सर्वप्रकारेण । देशतः कालतो गुणतश्च **आततत्वं** व्याप्तत्वम् । सर्वस्माद्विशिष्टं बलं विष्णोरुदितम् । तदेतत् सर्वं विष्णोः शीलमित्यप्युदितं विष्णुशब्देनेत्यर्थः । तथा च विष्णुनाम्नि वीत्यस्योपसर्गत्वेनोत्तरपदार्थविशेषकत्वादुकारस्य चोन्प्रत्ययसंबन्धित्वादुपसर्जनत्वेन णकारषकारावेव प्राधान्याद्विष्णुनामरूपावभिमताविति तद्गतावेवैतौ णकारषकाराविति ज्ञायत इति भावः । यथोक्तमनुव्याख्याने–

'उपसर्गत्वतो वेस्तु ताच्छील्यार्थादुनस्तथा ।
णकारश्च षकारश्च नामरूपतया मतौ'[१०] इति ।

'स यो हैतौ णकारषकारावनुसंहितमृचो वेद सबलां सप्राणां संहितां वेद' इत्येतद्व्याचष्टे– **तस्मादिति** ।। **तस्मात्** द्विष्णुशब्दस्य विशष्टप्राणबलादिवाचकत्वात् **ऋक्संहितामनु** सर्वास्वप्यृक्संहितासु पूर्वोत्तरवर्णद्वयसमायोगे **अत्र** विष्णुनाम्नि सतो विष्णुशब्दस्यार्थभूतं विष्णोः प्राणत्वमात्मत्वं बलं चैव यो वेत्ति स एव विष्णोर्बलवित् तथा प्राणत्ववित् । आत्मत्वविच्चेत्यपि ग्राह्यं भवेत् । 'आयुष्यमिति विद्यात्' इत्यस्य तात्पर्यमाह– **स एवेति** ।। तथा च एवमेतद्वेदनं नित्यायूरूपमोक्षसाधनमिति विद्यादिति तदर्थ उक्तो भवति ।।

**उपनिषत्**

**स यदि विचिकित्सेत्, सणकारं ब्रवाणी३, अणकारा९३ इति, सणकारमेव ब्रूयात् । सषकारं ब्रवाणी३**

---

१०. अनु. १-४-४१

**अषकाराꣳ इति सषकारमेव ब्रूयात् । ते यद्वयमनुसंहितमृचोऽधीमहे, यच्च माण्डूकेयीयमध्यायं प्रब्रूमः, तेन नो णकारषकारावुपाप्ताविति ह स्माह ह्रस्वो माण्डूकेयः । अथ यद्वयमनुसंहितमृचोऽधीमहे यच्च माण्डूकेयीयमध्यायं प्रब्रूमस्तेन नो णकारषकारावुपाप्ताविति ह स्माह स्थविरः शाकल्य ।**

वेदपुराणानि संहिताप्रतिपादकानि

**भाष्यम्**

संहितासहितत्वेन यदृचोऽधीमहे वयम् ।
वेदानन्यान्पुराणं वा तेन विष्णुपदोदितः ।।

अवाप्तो भगवान् स्यान्नस्तन्नामार्था यतोऽखिलाः ।
इत्याहुर्ऋषयः सर्वे.......................।।

**भावप्रदीपः**

'ते यद्वयमनुसंहितमृचोऽधीमहे यच्च मांडूकेयीयमध्यायं प्रब्रूमस्तेन नो णकारषकारावुपाप्तौ' इत्येतद्व्याचष्टे– **संहितेत्यादिना** ।। **संहिता** संहितात्वेन संहिताशब्दवाच्यविष्णुसंहितात्वेन । तद्गुणप्रतिपादकत्वेनेति यावत् । विष्णुपदोदितो भगवानित्यनेन 'णकारषकारावुपाप्तौ' इत्येतद्व्याख्यातम् । ननु कथमृगध्ययनेन विष्णुपदोदितभगवदवाप्तिरित्यत आह– **तन्नामार्था इति** ।। यतोऽ**खिला** ऋगादिसदागमास्**तन्नामार्था** विष्णुनामार्थास्तस्मादिति । 'इति ह स्माह ह्रस्वो माण्डूकेयः स्थविरः शाकल्यः' इत्युपलक्षणमात्रम् । सर्वेऽप्यृषय एवमेवाहुरित्यपि द्रष्टव्यमिति भावेनाह– **इत्याहुरिति** ।।

कावषेयमुनेरभिप्रायः

उपनिषत्

**एतद्ध स्म वैतद्विद्वांस आहुः ऋषयः कावषेयाः । किमर्था वयमध्येष्यामाहे । किमर्था वयं यक्ष्यामहे । वाचि हि प्राणं जुहुमः, प्राणे वा वाचम् । यो ह्येव प्रभवः स एवाप्ययः ।**

भाष्यम्

..................किमन्याध्ययनाद् भवेत् ।
यज्ञैर्वेत्यृषयोऽप्यन्ये कावषेया वदन्ति हि ॥

मौनेन विष्णुशब्दार्थं ध्यायन्तो वाचमेव वा ।
जुहुमो विष्णुनामाख्यां[९१] जपन्तो मन्त्रमेव वा ॥

नमस्कारसमायुक्तं जुहुमः प्राणमत्र हि ।
किमन्यैर्बहुभिः कार्यैरेतस्यैवाधिकत्वतः ॥

एतदर्थानुसन्धानपूर्वं वेदानथापि वा ।
अधीमहे यजामो वा नान्यथा तु कथञ्चन ॥

एष एव हि सर्वेषां वेदानामर्थ ईरितः ।
विष्णुनामोदितो योऽर्थस्तद्व्याख्यान्यद्वचोऽखिलम् ॥

एवं विशिष्टप्राणात्मबलाद्यखिलसद्गुणैः ।
पूर्णस्वभावः सर्वेषां वचसामर्थ ईरितः ॥

---

९१. नामाख्यं इति ह्.पाठः

## भावप्रदीपः

'एतद्ध स्मैवैतद्विद्वांस आहु ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे, किमर्था वयं यक्ष्यामहे' इत्यत्र ज्ञानिनामध्ययनादिना न किञ्चित्प्रयोजनमित्युच्यत इत्यन्याथाप्रतीति निरासाय तत्तात्पर्यमाह– **किमन्याध्ययनादिति** ।। 'वाचि हि प्राणं जुहुमः प्राणे वा वाचं' इत्येतद्व्याचष्टे– **मौनेनेति** ।। जुहुमः प्राण इति शेषः । एतेन 'प्राणे वा वाच'मित्युक्तार्थम् । विष्णुनामाख्यमित्याद्युत्तरेण 'वाचि हि प्राणं जुहुमः' इति । नमस्कारसमायुक्तं विष्णुनामाख्यं मन्त्रमित्यनेन 'विष्णवे नमः' इति मन्त्रस्वरूपं सूचितं भवति । **अत्र** वाचि । किमन्याध्ययनाद्भवेदित्याद्युक्तमेव विशदयति– **किमन्यैरिति** ।। विष्णुनामव्यतिरक्तवेदाध्ययनादिभिरित्यर्थः। **एकस्यैव** विष्णुनामार्थानुसन्धानपूर्वकविष्णुमन्त्रजपादेरेव । अथवा किमन्याध्ययनाद्भवेत् यज्ञैर्वेत्यस्य विष्ण्वन्यविषयकाध्ययनादितः किं प्रयोजनमित्यर्थः । तत्कुत इत्यत आह– **किमन्यैरिति** ।। **अन्यै**रन्यविषयकैरध्ययनादिभिः बहुभिः कार्यैः किं प्रयोजनम् । एकस्य विष्णोरेवाधिकत्वत इत्यर्थः । एतेन 'यो ह्येव प्रभवः स एवाप्ययः' इति यज्जगज्जन्मादिकर्तृत्वेन सर्वाधिक्यं विष्णोरुपपादितं मूले तस्योपयोगो दर्शितो भवति ।

'किमर्था वयं' इत्यादेस्तात्पर्यं प्रकारान्तरेणाप्याह– **एतदर्थेति** ।। विष्णुनामार्थेत्यर्थः । नाविद्यमानार्थस्य 'योषितमग्निं ध्यायीत' इत्यादाविवानुसन्धानमात्रमिदम् । मिथ्योपासनस्यानर्थप्रदत्वात् । किन्तु सत्यार्थमेवेति भावेनाह– **एष एवेति** ।। योऽर्थ एष एवेति योजना । अतोऽन्यदखिलं वच**स्तद्व्याख्या** विणुनाम्न एव व्याख्यान्तर-

रूपमित्यर्थः । उक्तार्थमुपसंहरति– **एवमिति** ।। [१२]विष्णुनामार्थ-कथनमेतत् । तत्र वीत्युपसर्गार्थः– **विशिष्टेति** । 'प्राणात्मे'ति षशब्दार्थः । 'षकारः प्राण आत्मे'त्युक्तत्वात् । अत्रात्मेत्यात्मत्वम् । तच्च देशतः कालतश्चाततत्वमेव । बलेति णकार्थः । 'णकारो बलं' इत्युक्तत्वात् । आत्मशब्दस्यैव गुणाततत्वरूपविशिष्टार्थान्तरकथनम् । **आद्यखिलसद्गुणैरिति** । स्वभाव इति ताच्छील्यार्थकोन्प्रत्ययार्थः । एतादृशो विष्णुरेव सर्वेषां वचसामर्थ ईरित इत्यर्थः ।।

**विद्याः अनन्तेवासिने असंवत्सरवासिने न प्रब्रूयात्**

**उपनिषत्**

**ता एताः संहिता नानन्तेवासिने प्रब्रूयात्, नासंवत्सरवासिने, नाप्रवक्त्रे इत्याचार्या आचार्याः ।।३.२.६।।**

**।। इति श्रीमन्महैतरेयोपनिषत्सु तृतीयारण्यके द्वितीयाध्याये षष्ठः खण्डः ।।**

## ।। समाप्ता च इयं उपनिषत् ।।

**भाष्यम्**

संहिताख्यानि विष्णोस्तु रूपाण्येतानि सर्वशः ।
अन्यविद्यास्वशिष्यस्य न ब्रूयात् प्रथमं क्वचित् ।।

व्याख्यानशक्तिहीनाय नैव ब्रूयात् कथञ्चन ।
वैष्णवाय सुवृत्ताय मेधाश्रद्धायुताय च ।
गुरोः शुश्रूषकायैव ब्रूयादित्यनुशासनम् ।। [१३]इति च ।

१२. विष्णुशब्दार्थकथनं इति 'ख'पाठः १३. इत्यादि च इति ह.पाठः

## भावप्रदीपः

'ता एता संहिताः' इत्यादि विवृणोति– **संहिताख्यानीति** ।। 'नानन्तेवासिने प्रब्रूयात्' इत्यस्यार्थः– **अन्यविद्यास्वशिष्यस्येति** । यो हि यस्माद्विद्यामधीते स तस्य शिष्यो भवत्येव । तथा चाशिष्यस्य न ब्रूयादिति कथं युज्यत इत्यत उक्तम्– **अन्यविद्यास्विति** ।। ऐतरेयोपनिषद्व्यतिरक्तविद्यास्वित्यर्थः । तथा चान्यविद्यासु यः स्वशिष्यस्तस्यैवैताः संहिता उपदिशेन्नान्यस्येत्यर्थः । यत्स्वन्यत्राध्ययनमकृत्वा स्वस्यैव शिष्यो भविष्यति तस्यापि प्रथमं नोपदेष्टव्यमित्याह– **प्रथममिति** ।। 'नाप्रवक्त्रे ब्रूयात्' इति निषेधो न युज्यते । स्वयं प्रवक्तुरुपदेशानपेक्षणात् । न हि तत्प्रवक्ता पुनस्तदध्ययनमपेक्षते । अध्ययनं विना प्रवक्तृत्वासंभवादन्योन्याश्रयत्वाच्चेत्याशङ्क्य अप्रवक्तृपदतात्पर्यमाह– **व्याख्यानशक्तिहीनायेति** ।। एतेन अन्तेवासिने संवत्सरवासिने व्याख्यानशक्तिसंपन्नाय च ब्रूयादित्युक्तं भवति । एतच्च गुणान्तराणामप्युपलक्षणम् । एतावन्मात्रस्यातिप्रसंञ्जकत्वादिति भावेनाह– **वैष्णवायेति** ।। अन्तर्बहिश्च वैष्णवदीक्षासंपन्नायेत्यर्थः । **अनुशासनं** वेदशिक्षा ।।

सर्वे शब्दाः विष्णुनामव्यानरूपा एव

## भाष्यम्

**य एतेन 'ण' इति शब्देनाक्रियमाणं विष्णोः पूर्णबलं षशब्देनाक्रियमाणं देशतः कालतो गुणतश्चातततत्वं च सर्वां संहितामनु तदर्थत्वेन वेद । अक्षरद्वयसंयोगरूपया संहितयैतदेव सर्वत्रोच्यत इति स सम्पूर्णबलं सर्वप्रणेतृत्वशक्त्यादियुक्तं[१४] विष्णुं वेद । अथेत्यादिका**

---

१४. युक्तं च इति ह.पाठः

**अपि संहितारूपा एव । पदवर्णयोः पृथगनभिव्याहारात् । तस्मात् सर्वशब्दा विष्णुनामव्याख्यानरूपा एव ।**

**भावप्रदीपः**

एवं प्रणाणतो व्याख्यायापि 'स यो हैतौ णकारषकारौ' इत्यादीनि कानिचित् वाक्यानि स्पष्टत्वार्थं स्ववाक्येनापि विवृणोति– **य एतेनेति** ।। तत्र णकार इत्यस्यार्थो– **ण इति शब्देनाक्रियमाणं विष्णोः पूर्णबलमिति** । षकारमित्यस्यार्थः– **षशब्देनाक्रियमाणं देशतः कालतो गुणतश्चातततत्वमिति** । अत्र प्रणेतृत्वमपि ग्राह्यम् । 'षकारः प्राण आत्मे'त्युक्तत्वात् । 'अनुसंहितमृचः' इत्यस्य– **सर्वां संहितामन्विति** । तस्य तात्पर्यकथनम्– **तदर्थत्वेनेति** । तस्यैव विशदनम्– **अक्षरद्वयेत्यादि** । इति यो वेदेति संबन्धः । 'सबलां सप्राणां संहितां वेद' इत्यस्यार्थः– **स संपूर्णबलं सर्वप्रणेतृशक्त्यादियुक्तं विष्णुं वेदेति** । आदिपदेनात्मपदोक्तातततत्वसङ्ग्रहः । तेन च सप्राणामिति प्राणपदमात्मत्वोपलक्षकमिति सूचितम् ।

नन्वक्षरद्वयसंयोगरूपया संहितयैव तदेव सर्वत्रोच्यत इति यदुक्तं तन्नातीवोपयुक्तमिवाभाति । तावतापि सर्वशब्दानां विष्णुनामव्याख्यानरूपत्वासिद्धेः । न हि सर्वे शब्दाः संहितारूपा भवितुमर्हन्ति । 'अथ हा स्मा एतत्कृष्ण' इत्यादिषु स्मा त्कृ ष्ण इत्यादिशब्दानामक्षरद्वयसंयोगरूपसंहितात्वसंभवेऽप्यथेत्यादीनामसंयुक्तानां संहितात्वासंभवादित्यत आह– **अथेत्यादिका इति** ।। तत्कथमित्यत आह– **पदवर्णयोरिति** ।। अथेत्यादावपि पदगतवर्णयोः **पृथक्** प्रत्येकं मातृकाणामिवाभिव्याहरणाभावादित्यर्थः । अभिमतार्थमुपसंहरति– **तस्मादिति** ।। अथेत्यादीनामप्युक्तरीत्या संहितारूपत्वादित्यर्थः ।।

विष्णुनाम्नि षणकारवेव मुख्यौ

**भाष्यम्**

**यद्वयं संहितायुक्तत्वेन वचोऽधीमहे तेनास्माकं णशब्दषशब्दार्थरूपो विष्णुरुपात्तः। तद्व्याख्यानत्वात् सर्ववाचाम्। वीत्युपसर्गत्वादुकारस्य च ताच्छील्यार्थत्वादुक्तार्थविशेषणरूपत्वेन प्रसिद्धत्वान्न पृथक् तयोर्व्याख्यानमत्र कृतम्। ऋच इति सर्ववाचामुपलक्षणम्। अतः सर्ववेदादिशब्दोदितः सर्वगुणपरिपूर्णो भगवान्नारायण इति सिद्धम् ।।३.२.६।।**

**भावप्रदीपः**

'ते यद्वयमनुसंहितमृचोऽधीमहे' इत्यादिकं विवृणोति– **यद्वयमिति** ।। 'अनुसंहितं' इत्यस्यार्थः– **संहितायुक्तत्वेनेति** । 'न' इत्यस्य– **अस्माकमिति** । 'णकारषकारावुपात्तौ' इत्यस्य– **णशब्देत्यादि** । तत्र हेतुमाह– **तद्व्याख्यानरूपत्वादिति** ।। विष्णुनाम्नि णकारषकारमात्रस्य 'णकारो बलं, षकारः प्राण आत्मे'ति व्याख्यानं कृत्वा विशब्दस्यान्तिमोकारस्य च मूलेऽव्याख्याने कारणमाह– **वीत्युपसर्गत्वादिति** ।। वीत्यस्योपसर्गत्वात् उकारस्य चोन्प्रत्ययसंबन्धिनस्ताच्छील्यार्थत्वात् उपसर्गाणां प्रत्ययानां च धात्वर्थविशेषणरूपत्वेन प्रसिद्धत्वात्प्रकृते च णकारषकारप्रकृतिभ्यां णु स्तुतौ षोन्तकर्मणीति धातुभ्यामुक्तो योऽर्थो बलप्राणादिरूपः । धातूनामनेकार्थत्वात् । तद्विशेषणरूपत्वात्तत्र विशिष्टत्वशीलत्वरूपत्वात्प्रकृते च णकारषकारविशेषाभिधायकत्वान्न तयोरुपसर्गप्रत्यययोर्व्याख्यानं **अत्र** उपनिषदि कृतमित्यर्थः । ननु भवेदियमुपसर्गादिरव्याख्याने निमित्तचिन्ता, यदि विष्णुनामगतावेवेमौ णकारषकाराविति मूले विवक्षितं स्यात् । न चैवं । तथात्वे विष्णुनामगतक्रमानुसारेण षकारस्यैव प्रथमं व्याख्येयत्वेन

व्यत्यासे कारणाभावादिति । मैवं । वर्गक्रमानुसारेण व्यत्यासस्य सावकाशत्वात् । उदाहृतबहुसमाख्याप्रमाणबलाच्च निर्णयोपपत्तेरिति ध्येयम् ॥

नन्वत्र सर्वशब्दानां विष्णुनामव्याख्यानरूपत्वे विवक्षितेऽ'नुसंहितमृचो वेद' 'अनुसंहितमृचोऽधीमहे' इति ऋङ्मात्रग्रहणमनुपपन्नं स्यादित्यत आह– **ऋच इति** ॥ ऋचां स्वपदेनोपादानं तु विशिष्टत्वज्ञापनायेति भावः । उपनिषत्प्रतिपाद्यमर्थमुपसंहरति– **अत इति** ॥ विष्णुनामव्याख्यानरूपत्वात्सर्वशब्दानामित्यर्थः । आदिपदेन लौकिकशब्दः मेघादिशब्दाश्च ॥

ततश्चायं खण्डार्थः । अथशब्दः कार्त्स्न्ये । इदानीं कृत्स्नशास्त्रार्थोऽभिधीयते । **कृष्णहारीतः** कृष्णो नाम्ना हरितपुत्रत्वात् हारितः । **अस्मै** योग्यजनाय **एतत्** वक्ष्यमाणं **वाग्ब्राह्मणं** सर्ववाग्विषयं ब्राह्मणं इव व्यक्तं **उपोदाहरति** उपदिशति ह । किं तत्? **संवत्सरः** कालाभिमानी संवसद्रतिदाता **प्रजापतिर्**ब्रह्मा प्रजाः सृष्ट्वा **व्यस्रंसत** श्रान्तोऽभवत् । ततः **स** ब्रह्मा श्रान्तिपरिहारार्थं **छन्दोभिः** सर्ववेदैर्नारायणं स्तुत्वा स्तुत्या प्रसन्नेन तेनैव **आत्मानं** स्वदेहं **समदधात्** सन्धितवान् । सन्धाय देहस्य दार्ढ्यं चकारेति यावत् । **यत्** यस्माच्छन्दोभिः स्तुतेन हरिणा आत्मानं समदधात् **तस्मात्** ब्रह्मणा स्वदेहे सन्धितत्वादेव भगवान् संहितेत्युच्यते ।

**तस्यै एतस्यै संहितायै** संहितानाम्नो विष्णोः **बलं णकारः** णइत्याक्रियत इति विष्णुनामगतणशब्देन प्रतिपाद्यत इत्यर्थः । तथा **प्राणः** रमाब्रह्माद्यखिलप्रणेतृत्वं **आत्मा** आत्मत्वं गुणतो देशतः कालतश्चाततत्वमित्येतत् **षकारः** ष इत्याक्रियत इति विष्णुनाम-

गतषशब्देन प्रतिपाद्यत इत्यर्थः । **यः** पुमान् **एतौ णकारषकारौ** एतेन ण इति शब्देनाक्रियमाणं विष्णोः पूर्णबलं षशब्देनाक्रियमाणं सर्वप्रणेतृत्वं देशतः कालतो गुणतश्चाततत्वं च **ऋचोऽनुसंहितम्** ऋच इत्युपलक्षणम् सर्वासां वाचां **संहिता अनु** सर्ववाक्संहितासु तदर्थत्वेन **वेद** अक्षरद्वयसंयोगरूपया संहितयैतदेव सर्वत्रोच्यत इति यो जनाति स एव हि **संहितां** संहितानामकं विष्णुं **सबलां सप्राणां** च संपूर्णबलयुक्तं सर्वप्रणेतृत्वशक्त्यादियुक्तं च वेद नान्यः । एतच्च वेदनं **आयुष्यं** नित्यायूरूपमोक्षसाधनमिति विद्यात् । अथवा इति यो विद्यात् [९५]संसारान्मुक्तः सन् **आयुष्यं** नित्यायुः प्राप्नुयादित्यर्थः ।

**स** उपासकः **सणकारं ब्रवाणीं३ अथवा अणकारां३ ब्रवाणीति यदि विचिकित्सेत्** सर्वाः संहिताः णशब्दवाच्यविष्णुबलवाचकतानुसन्धानपूर्वकं वदामि किं वा तद्रहितमिति संशयं कुर्यात्तर्हि तत्र निर्णयं ब्रूमः । किमिति? **सणकारमेव ब्रूयादिति** । एवं **सषकारं ब्रवाणि३ अषकाराँ इति सषकारमेव ब्रूयादिति** वाक्यमपि व्याख्येयम् । **सषकारं** षशब्दवाच्यविष्णुप्राणात्मत्ववाचकानुसन्धानपूर्वकमित्यर्थः । ते एवं जानन्तो **वयमनुसंहितं** संहितायुक्तत्वेन ऋचो यदधीमहे यच्च **माण्डूकेयं** माण्डूकेयदृष्टं **अध्यायं** स्वाध्यायं वेद । समस्तवेदपुराणोपलक्षणमेतत् । **प्रब्रूमः** अधीमहे । शिष्येभ्य उपदिशामो वा । तेन **नोऽस्माकं णकारषकारावुपात्तौ** णशब्दषशब्दार्थरूपो विष्णुरुपात्तः अवाप्तोऽभूत् । णकारषकारव्याख्यानरूपत्वात्सर्ववाचां इति ह्रस्वो माण्डूकेय आह स्म ।

---

९५. सः संसारान्मुक्तः इति 'ख'पाठः

अस्मिन्नेवार्थे ऋष्यन्तरसम्मतिमप्याह– **अथ यद्वयमनुसंहितमिति** ।। स्थविरः शाकल्य इत्युपलक्षणम् । सर्वेऽपि ऋषय एवमेवाहुरिति द्रष्टव्यम् । तदेतत्प्रमेयं विद्वांसः कावषेया नाम ऋषय आहुर्ह स्म वै । किमिति? **वयं किमर्थाः** किं प्रयोजनार्थिनः सन्तो**ऽध्येष्यामहे** विष्णुनामार्थानुसन्धनपूर्वकविष्णुमन्त्रजपादेरेकस्यैव अधिकत्वाद्विष्णु-नामव्यतिरिक्तवेदाध्ययनेनापि किं प्रयोजनमस्माकं भवेन्न किमपीत्यर्थः । **किमर्था वयं यक्ष्यामहे** यज्ञैर्वा नः किं प्रयोजनं भनेन्न किमपीत्यर्थः । अथवा **किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे** विष्णुनामार्थानुसंन्धानं विनाऽन्यविषयकाध्ययनयज्ञादिकर्यैः किमस्माकं प्रयोजनं न किमपि । तथा च विष्णुनामार्थानुसन्धानपूर्वकमेव वेदानध्येष्यामहे यक्ष्यामहे चेति भावः । अथवा **वाचि प्राणं जहुमः** 'विष्णवे नमः' इति मन्त्रमेव जपन्तः प्राणवृत्तिं [९६]जपाख्यव्यापारे विनियोजयाम इति यावत् । प्राणे वा वाचं जुहुम इति वर्तते । प्राणे वाचो होमो नाम मौनमेव । तथा च मौनेन विष्णुशब्दार्थं ध्यायामो वेत्यर्थः । विष्णुविषयकमेवाध्ययनादिकं कार्यं नान्यविषय-कमित्युक्तम् । तत्कुत इत्यत आह– **यो ह्येवेति** ।। **यो हि** भगवान् **प्रभव** उत्पादकः **स एवाप्यः** संहारकर्ता नान्यः । अतो जगज्जन्मादिकारणत्वेन विष्णोरेव प्राधान्यात्तद्विषयकमेवाध्ययनादिकं कर्यं नान्यदित्यर्थः[९७] ।।

उपनिषत्प्रतिपाद्यार्थस्यातिरहस्यत्वं ज्ञापयन्नुपसंहरति– **ता एता इति** ।। **संहिताः** पूर्वोत्तरवर्णसन्धिप्रतिपाद्यानि संहितानामकानि भगवद्रूपाणि

---

९६. जपाख्यवाग्व्यापारे इति 'ख'पाठः

९७. नान्यत् इति भावः इति 'ख'पाठः

**अनन्तेवासिने**ऽन्यविद्यासु स्वशिष्यत्वमप्राप्ताय **न प्रब्रूयात्** प्रथममेव नोपदिशेत् । नासंवत्सरवासिने प्रब्रूयात् । **अप्रवक्त्रे** प्रवचनशक्ति-हीनाय च न प्रब्रूयादित्या**चार्याः** उपनिषदुपेष्टारो महिदासादय आहुरिति संबन्धः । द्विरुक्तिप्रयोजनं तु प्रागेवोक्तं तदत्राप्यनुसन्धेयम् ॥३.२.६॥

**नारायणो मम सदैव तुष्टिमेतु**

**भाष्यम्**

**सर्वैश्च वैदिकपदैरपि लोकशब्दै-**
**र्मेघाग्निवारिधितलादिरवैश्च सर्वैः ।**
**एकोऽभिधेयपरिपूर्णगुणः प्रियोऽलं**
**नारायणो मम सदैव सुतुष्टिमेतु ॥**

**भावप्रदीपः**

एवं समापितभाष्यो भगवानाचार्यवर्य एतदुपनिषत्प्रतिपाद्यं स्वप्रतिपादितप्राकारं स्वस्य निरुपाधिकपरमप्रेमास्पदं नारायणं स्तुवन् तत्प्रीतिविशेषप्रार्थनरूपमङ्गलमन्तेऽप्याचरति— **सर्वैश्चेति** ॥ **वैदिकपदैः** अपौरुषेयागमस्थैः । **लोकशब्दैः** पौरुषेयागमस्थैः । **तलरवः** तलताडनोत्थः शब्दः । आदिपदेन गर्गरगोधापिङ्गादिशब्दाः । अत्र मेघादिरवशब्देन तद्व्यङ्ग्यवर्णौ ग्राह्यौ । केवलध्वनीनामवाचकत्वात् । एतच्च प्रागेवोपपादितम् । अभिधेयपदस्य नित्यसापेक्षत्वात्समासः । **ममालं प्रियो** निरुपाधिकप्रेमविषयः । स मम सदैव तुष्टिमेत्वित्यशेषमतिमङ्गलम् ॥

## वायोरवतारत्रयकथनम्

### भाष्यम्

**यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं**
**बट् तद्दर्शनमित्थमेव निहितं देवस्य भर्गो महत् ।**
**वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपु-**
**र्मध्वो यत्तु तृतीयकं कृतमिदं भाष्यं हि तेन प्रभौ ।।**

### भावप्रदीपः

अथ स्वभाषितभाष्यस्याप्तिमूलकत्वसमर्थनाय यथा भगवत्स्वरूपविज्ञानं समस्तपुरुषार्थसाधनं तथा स्वस्वरूपविज्ञानमपीति ज्ञपनाय च स्वस्वरूपाविष्करणेन स्वस्य परमाप्तत्वं दर्शयन्नाह- **यस्येति** ।। **यस्य** वायोर्देवस्य **वेदवचने** बळित्थेत्यादौ **अलं दिव्यनि** अद्भुतानि क्रीडादिगुणयुक्तानि वा । त्रीणि रूपाण्युदितानि [98]यस्य तत् तृतीयं रूपं तेनेदं भाष्यं **प्रभौ** विष्णौ विषये कृतमित्यन्वयः । कीदृशं तस्य मूलरूपं कथं भूतानि च तानि त्रीणि रूपाणीत्यत आह- **बडित्यादि ।। यस्य** वायोः **तत्** मूलरूपं **बट्** बलात्मकं **दर्शतं** ज्ञानस्वरूपं च । दृशेरौणादिकोऽतच् प्रत्ययः । अलमित्यत्रापि वर्तते । अनेन वायुशब्दो निरुक्तः । वशब्दो बलवाची । अयतिर्गत्यर्थः । गत्यर्थाश्च ज्ञानार्थाः । तत उण् । वश्चासावायुश्चेति वायुरिति । किञ्च **भर्गो** जगद्भरणगमनयोः कर्तृ । डु भृञ् धारणे गम्लृगतावाभ्यां असुन्प्रत्ययो डिच्च । इदमपि वायुशब्दव्याख्यानम् । अनेकार्थत्वाद्धातूनां भरणार्थाद्वातेरुण् । गत्यर्थत्वं तु प्रसिद्धमेव ।

---

९८. तस्य इति 'ख'पाठः

अपि च **महत्** महनीयं श्रेष्ठं वा । वय श्रेष्ठत्व इत्यस्मादुण् । न केवलं मूरूपमेव किन्तु यस्यावतारेषु **निहितं** रूपत्रयमपीत्थमेव । यदस्य वायोर्मूलरूपं बडादिलक्षणं तत् **इत्थमेव** इत्थंभूतमेव । रूपत्रयावताराय भगवता **निहितं** प्रेरितं अवतीर्णं चेति वा । यस्य **प्रथमकं** प्रथमं रूपं हनुमदाख्यं **रामवचोनयं** रामस्य वचांसि सीतां प्रति नीतवत् । रामविषयवाचांसि मूलरामायणादीनि शिष्येषु नीतवद्वा । रामवचसि यो नयो न्याय आज्ञारूपस्तद्युक्तमिति वा । **द्वितीयं वपुर्भी**मनामकं **पृक्षः** रिपुपृतनाक्षययकारि । पृतनावाचिनि पृच्छब्दे कर्मण्युपपदे क्षै क्षय इत्यस्मात् कः । उपपदतकारलोपः छान्दसः । पुल्लिङ्गं श्रुत्यनुसारेण । असुन्वा प्रत्ययः नपुंसकमेवेदं । यस्य यत् **तृतीयकं** तृतीयं तु वपु**र्मध्वः** मध्वाभिधं मधुशब्दः सुखवाची । 'मधुद्यौरस्तुनः पिता' इति प्रयोगात् । वशब्दः शास्त्रापरपर्यायतीर्थवाची । वातेरवगत्यर्थत्वात् करणे कः । सुखसाधनं तीर्थमस्येति । आनन्दरूपस्य हरेः प्रतिपादकशास्त्रंनिर्मात्रृति वा । स्वरित्यत्रोकारलोपः । अतः परमाप्ततमप्रणीतत्वादिदं भाष्यं सकलसज्जनैरादरेणाङ्गीकार्यमिति भवः ।।

### बळित्थासूक्तव्याख्यानम्

### भाष्यम्

**[९९]हनशब्दो ज्ञानवाची हनुमान् मतिशब्दितः ।**
**रामस्य स्वृतरूपस्य वाचस्तेनानयन्त हि ।।**

**भृतमो भीम इत्युक्तो वाचो मा मातरः स्मृतः ।**
**ऋगाद्या [१००]इतिहासश्च पुराणं पञ्चरात्रकम् ।।**

---

९९. हनु इति पा.  १००. इतिहासं च इति ह्.पाठः

**प्रोक्ताः सप्तशिवास्तत्र शयो भीमस्ततः स्मृताः ।**
**मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतम् ।।**

**मध्व आनन्दतीर्थः स्यात् तृतीया मारुती तनुः ।**
**इति सूक्तगतं रूपत्रयमेतन्महात्मनः ।**

**यो वेद वेदवित् स स्यात् तत्त्ववित् तत्प्रसादतः ।। इति च ।**

**भावप्रदीपः**

बळित्थेत्यादिवेदवचने रूपत्रयं कथमुक्तमित्यतः प्रमाणेन व्याचष्टे– **हन शब्द इत्यादिना** ।। 'साधते मतिः' इत्यत्र मतिशब्दो हनुमच्छब्दसमानार्थोऽतस्तद्वाक्यं हनुमद्रूपपरमिति भावेनोक्तम्– **हनशब्द इति** ।। हन हिंसागत्योरिति धातुरित्यर्थः । भावे कुप्रत्यये हनुरिति रूपमिति भावः । क्वचित् हनुशब्द इत्येव पाठः । धर्मधर्मिणोरैक्यान्मतिशब्द एव मतिमद्वाचको भवतीति हनूमान्मतिशब्दित इत्युक्तम् । 'ऋतस्य धेना अनयन्त' इत्यस्यार्थः– **रामस्येति** ।। ऋतत्वं सर्वसाधारणमिति स्वृतरूपस्येत्युक्तम् । मुख्यतो यथार्थज्ञानरूपस्येत्यर्थः । वाच इति धेनाशब्दार्थः । 'गीर्गाथागणो धेना' इति वाङ्नामसु पाठात् ।

'आशये सप्तशिवासु मातृषु' इत्येतद्भीमरूपपरमिति भावेन भीम-शब्दं तदर्थकताया निर्वक्ति– **भृतम इति** ।। भृताः संभृताः माः प्रमाणभूता वेदादिवाचो यत्रासौ भृतमः स एव भीम इत्युक्तः । भीमशब्दो भृतार्थक भृञो डः, ततः स्त्रियां ङीप् । माशब्दार्थमाह– **वाचो मा इति** ।। ता एव वाचः श्रुतौ मापयन्ति ज्ञापयन्ति इति व्युत्पत्त्या माति इत्युच्यन्त इत्याह– **मातरः स्मृता इति** ।। वाच इति वर्तते । तासां सप्तत्वं कथमित्यत आह– **ऋगाद्या इति** ।।

चत्वारो वेदा इति शेषः । इतिहास इतिहासः । **पुराणं** वैष्णवम् । मङ्गलरूपत्वाच्छिवाः । तासु यतोऽयं वृकोदरः **शयस्तदधिष्ठाता** अभिज्ञ इति यावत् । ततो भीमः स्मृत इत्यर्थः ।

'यदीमनु प्रदिवो मध्वः' इत्येतदानन्दतीर्थपरमिति भावेन मध्वानन्दतीर्थशब्दयोः समानार्थकतां दर्शयति– **मध्विति** ।। तथा च मधु आनन्दसन्दायि वं ज्ञानसाधनं तीर्थं शास्त्रापरपर्यायं यस्येति वा । मधुनः आनन्दरूपस्य विष्ण्वाख्यपरब्रह्मणः प्रतिपादकं वं शास्त्रं यस्येति वा मध्व आनन्दतीर्थः स्यात् । तस्यैव [१०१]विवरणम्– **तृतीया मारुती तनुरिति** । अनेन तृतीयमस्येत्युक्तार्थम् । एवं रूपत्रयवेत्तुः फलमाह– **इतीति** ।। एतेन भगवत्स्वरूपमिव वायुस्वरूपमपि पुरुषार्थमभीप्सुभिरवश्यं ज्ञातव्यमित्युक्तं भवति ।।

**भाष्यम्**

**साधको रामवाक्यानां तत्समीपगतः सदा ।**
**हनुमान् प्रथमो ज्ञेयो भीमस्तु बहुभुक् पितोः ।।**

**पूतनाक्षयकारी च द्वितीयस्तु तृतीयकः ।**
**पूर्णप्रज्ञस्तथानन्दतीर्थनामा प्रकीर्तितः ।।**

**दशेति सर्वमुद्दिष्टं सर्वं पूर्णमिहोच्यते ।**
**प्रज्ञा प्रमतिरुद्दिष्टा पूर्णप्रज्ञस्ततः स्मृतः ।।**

**आसमन्तात् पतित्वे तु गूढं कलियुगे हरिम् ।**
**असत्यमप्रतिष्ठं तु[१०२] जगदेतदनीश्वरम् ।।**

---

१०१. विशेषणं इति 'ख'पाठः   १०२. च इति ह.पाठः

**वदद्भिर्गूहितं सन्तं तृतीयोऽसुर्मथायति ।**
**येन विष्णोर्हि वर्पाख्यान् गुणानज्ञासिषुः परान् ।।**

**ईशानासः सूरयश्च निगूढान् निर्गुणोक्तिभिः ।**
**त्रेतायां द्वापरे चैव कलौ चैते क्रमात् त्रयः ।।**

**[१०३]येषां हि परमो विष्णुर्नेता सर्वेश्वरेश्वरः ।**
**स्वयम्भुब्रह्मसंज्ञोऽसौ परस्मै[१०४] ब्रह्मणे नमः ।। इति च ।।**

**भावप्रदीपः**

सूक्तेऽवशिष्टपदानि कानिचित्प्रमाणान्तरेण व्याचष्टे– **साधक इति** ।। एतेन 'यदीमुपह्वरते साधते' इत्येतत् **यत् ई** यदेव हनुमदाख्यं रूपं **उपह्वरते** सदा रमस्य समीप वर्तते **साधते** रामवाक्यानि तदाज्ञारूपाणि साधयति चेति व्याख्यातं भवति । भीममध्वरूपयोः श्रुतौ द्वितीयतृतीयत्वकथनेन मतिशब्दितहनुमद्रूपस्यार्थात् प्रथमत्व-मुक्तमिति भावेनोक्तम्– **हनुमान्प्रथमो ज्ञेय इति** ।। 'पृक्षो वपुः पितुमान्' इत्यस्य व्याख्या **भीमस्त्विति** ।। तुशब्द एवार्थे । **बहु** बाहुल्येनैव **पितोः** अन्नस्य भुगित्यर्थः । 'पितुः सुतः सिन' इत्यन्ननामसु पाठात् । एतेन पितुमानिति भूमार्थे मतुबित्युक्तं भवति । पृतनाक्षयकारीति पृक्ष इत्यस्यार्थः । द्वितीयस्त्ववतारो भीम इत्यन्वयः । तृतीयकोऽवतारस्तु पूर्णप्रज्ञ इत्यनेन 'तृतीयमस्य वृषभस्य दोहसे दशप्रमतिं' इत्युक्तार्थं । तथाऽऽनन्दतीर्थनामेति 'मध्व आदवे' इत्यत्र मध्वशब्दार्थकथनम् । दशप्रमतिमित्यस्य कथं पूर्णप्रज्ञमित्यर्थ इत्यत आह– **दशेति** ।। 'आधवे गुहासन्तं मातरिश्वा

---

१०३. एतेषां इति ह.पाठः   १०४. परोऽस्मै इति ह.पाठः

मथायती'त्यस्यार्थमाह– **आ समन्तादिति** ।। आ इत्यनुवादः समन्तादिति व्याख्यानम् । सर्वस्मिन्देशे काले चेत्यर्थः । धव इति भावप्रधान इति भावेनोक्तम्– **पतित्व इति** । विषयसप्तमीयम् । कलियुगे कालबलादेव गूढं तत्राप्यसत्यमप्रतिष्ठमनीश्वरं च जगदेतत् वदद्भिर्मायावादिभिर्विशेषेण गूहितं सन्तं हरिं समन्तात्**पतित्वे** सर्वोत्तमत्वविषये **तृतीयोऽसुः** तृतीयावतारो मध्वरूपी मातरिश्वा **मथायति** मथ्नाति सर्वशास्त्राण्यालोड्य प्रकाशयतीत्यर्थः । 'निर्यदीं बुध्नान्महिषस्य वर्पस ईशानासः शवसाक्रन्त सूरयः' इत्येतद्विवृणोति– **येनेति** ।। **येन** तृतीयावतारेण वायुना **ईशानासः** ईशानाः समर्थाः । ईशानो रूद्रस्तदाद्या इति वा । बहुवचनमाद्यर्थे । **निर्गुणोक्तितः** निर्गुणो विष्णुरिति प्रतिपादकमायिशास्त्रतः । तथा ह्युक्तं कौर्मे–

उद्धरस्व महाबाहो मम धर्मान् सनातनान् ।
इत्याज्ञप्तो भगवाता कलौ वायुर्भविष्यति ।।

मध्वनामा यतिरसौ सच्छास्त्राणि करिष्यति ।
निरसिष्यति पाषण्डान् दुःशास्त्राणि महामतिः ।।

स्थापयिष्यति सद्धर्मान्सच्छास्त्रं व्याकरिष्यति ।
श्रोष्यन्ति मुनयः सर्वे शुकाद्या देवरूपिणः ।। इति

अवतारत्रयस्य कालभेदमाह– **त्रेतायामिति** ।। एतेषां परमो विष्णुरित्यनेन 'प्रयत्पितुः परमान्नीयते' इत्येतदुक्तार्थं भवति । एष एव त्रिरूपो वायुर्ब्रह्मपदमाप्स्यति नान्य इत्याशयेनाह– **स्वयंम्विति** ।। एवं परब्रह्मत्वमपि कदाचित्प्राप्स्यति किं नेत्याह– **परस्मै ब्रह्मणे नम इति** ।। नमतीति नमः, परब्रह्मविषये सर्वदा नमनकर्तैवेत्यर्थः ।

अथवा स्वयंभू ब्रह्मसंज्ञायामुष्मै अपरब्रह्मणे परब्रह्मणे च नम इति ग्रन्थे प्रकृतस्योपदेष्टुर्वचनम् ।। ततश्चायं सूक्तार्थः ।

ॐ बळित्था तद्वपूषे धायि दर्शतं देवस्य भर्गः सहसो यतोऽजनि ।
यदीमुपह्वरते साधते मतिर्ऋतस्य धेना अनयन्त सस्रुतः[१] ।। (ब.सू.१-५)

**सहसः** सहोरूपस्य वायोर्देवस्य **तत्** मूलरूपं **यतो** यस्मात् विष्णोरजनि **तेन** विष्णुना **इत्था** इत्थमेव मूलरूपं यादृशसामर्थ्याद्युपेतं तथैव । **वपुषे** रूपत्रयावताराय **धायि** अधायि निहतं प्रेरितं अवतीर्णं च । कीदृशं तन्मूलरूपं **बट्** बलात्मकं **दर्शतं** ज्ञानरूपं ज्ञनेन ततं वा । **भर्गः** जगद्भरणगमनकर्तृ । कीदृशं तदवतार-रूपत्रयमित्यतस्तत्र प्रथमावतारं तावन्निरूपयति— **यदीमिति** ।। **यदीं** यदेव **मतिर्हनुमदाख्यं** प्रथमं रूपं **ऋतस्य** यथार्थज्ञानरूपस्य श्रीरामस्य **उप** समीपे एव **ह्वरते** सर्वदा तिष्ठति । **साधते** साधयति । ऋतस्य धेना इति वर्तते । रामस्य वाक्यानि तदाज्ञप्तकार्याणीति यावत् । तदेव किञ्चिद्दर्शयति— **ऋतस्येति** ।। रामस्य **धेनाः** वाचः सीतां प्रति **अनयन्त** नीताः । येनेति शेषः । अथवा **ऋतस्य धेनाः** रामविषयकमूलरामयणादिवाचः शिष्येष्वनयन्तेति । कीदृश्यो वाचः **सस्रुतः** नदीनामैतत् नदीवत्प्रवहत्यः, अमृतस्रावयुक्ता वा । अत्रोत्तरत्र च सतां यच्छब्दानां तस्मै वपुषे धायीति पूर्वेणान्वयः ।।१।।

पृक्षो वपुः पितुमान्नित्य आशये द्वतीयमा सप्त शिवासु मातृषु ।
तृतीयमस्य वृषभस्य दोहसे दशप्रमतिं जनयन्त योषणः ।।२।।

**द्वितीयं वपुः** रूपं **पृक्षः** रिपुपृतनाक्षयकारि **पितुमान्** बह्वन्नभोक्ता भीमः भीमाख्यं **सप्तशिवासु** ऋगादिचतुर्वेदा इतिहासः

पुराणं पञ्चरात्रं चेति सप्तसु मङ्गलरूपासु **मतृषु** प्रमाणेषु **नित्यः** नित्यं **आ** समन्तात् **आ** सम्यगेव **शये** शेते अधितिष्ठति । तद्विचारनिरतमिति यावत् । अथ तृतीयं रूपं निरूपयति– **तृतीयमिति ॥ वृषभस्य** श्रेष्ठस्य वृषभरूपस्य वा । **अस्य** वायोः **दशप्रमतिं** पूर्णप्रज्ञनामकं तृतीयं रूपं **योषणो** योषाः श्रीभूदुर्गाख्याः मध्यगेहपत्न्यामाविष्टाः सत्यः **दोहसे** ज्ञानामृतदोहनाय **जनयन्त** अजनयन्त ॥२॥

निर्यदीं बध्नान्महिषस्य वर्पस ईशानासः शवसा क्रन्तसूरयः ।
यदीमनु प्रदिवो मध्व आधवे गुहा सन्तं मातरिश्वा मथायति ॥३॥

**यदीं** यस्मादेव **बुध्ना** देवबुध्नात् बोधरूपात् पूर्णबोधस्य तृतीयरूपात् **महिषस्य** महन्नामैतत् । महतः सर्वोत्तमस्य, **वर्पसः** वरणात्पालकत्वाच्च वर्पोनामकान् गुणान् **ईशानासः** ईशानाः, आज्जसेरसुक् समर्थाः ईशानो रुद्रस्तदाद्या इति वा । बहुवचनमाद्यर्थे । शुकादिरूपाः देवाः सूरयस्तदितरज्ञानिनश्च **शवसा** सुखेनैव **निरक्रन्त** नितरां ज्ञातवन्तः । **यदीं** य एव **प्रदिवः** प्रकृष्टप्रकाशः **मध्वो** मातरिश्वा मध्वरूपो वायुः **गुहासन्तं** हृदयगुहायां सन्तं कलिकालबलान्निर्गुणत्ववादिनां दुर्वचनैश्च गूहितं सन्तमिति वा । हरिं **आधवे** आसमन्तात् धवत्वे सर्वस्वामित्वविषये **अनु** वेदानुकूल्येन **मथायति** मथ्नाति । सर्वशास्त्राण्यालोड्य प्रकाशयतीत्यर्थः ॥३॥

प्रयत्पितुः परमान्नीयते पर्या पृक्षुधो वीरुधो दंसुरोहति ।
उभा यदस्य जनुषं यदीन्वत आदिद्यविष्ठो अवभवद्धृणा शुचिः ॥४॥

**यत्** तृतीयं रूपं **पितुः** जकात् परमात् सर्वोत्कृष्टात् विष्णोः

विष्णुना **प्रणीयते** प्रवर्त्यते सर्वकार्येषु **पृक्षुधः** प्रश्नरूपाः **वीरुधो** लताः खण्डनार्थं **दंसु** दन्तेषु **पर्यारोहति** आरोहयति स्थापयति । यथा गजादिर्वीरुधः खण्डयितुं दन्तेषु धारयति एवं परकृतप्रश्नान् खण्डयितुमनूद्य चर्वितवच्छकलीकरोतीत्यर्थः । किञ्चास्य मध्वस्य[१०५] **यज्जनुषं** मध्वस्य जन्म **तत्** यस्मात्कारणात् **उभा** उभौ लक्ष्मी-नारायणौ **इन्वतः** प्रेरयतः तस्मात्कारणात् **आत् इत्** आभ्यां लक्ष्मी-नारायणाभ्यामेवायं **यविष्ठः** अवरोऽभवत् न त्वन्यतः । तथा **घृणाशुचिः** तयोरेव घृणया कृपया गर्भवासादिदुःखशून्यतया शुद्धश्चा-भवदित्यर्थः यविष्ठोऽभवदिति । 'प्रकृत्यान्तपादमव्यपारे' इति प्रकृति भावः ।।४।।

आदिन्मातृरा विशद्या स्वा शुचिरहिंस्यमान उर्विया विवावृधे ।
अनुयत्पूर्वा अरूहत्सना जुवो नि नव्यशीष्ववरासु धावते ।।५।।

अयं वायुः **आदित्** आभ्यामेव लक्ष्मीनारायणयोः प्रेरणादेव **मातृः** अञ्जना कुन्त्यादिका आविशत् न पुनरस्य गर्भवासनिमित्तविकर्मा अस्तीति भवः । तत्कुतः **यासु** मातृषु प्रविष्टोऽप्ययं **आ** सम्यक् **शुचिरेव** तदीयशुक्लशोणितसंबन्धरहित एव यतो अतो इत्यर्थः । **ताः** मातृराविशदित्यन्वयः । किञ्चायं **उर्विया** उरुत्वेन महिमोत्कर्षेणैव । त्रिष्वप्यवतारेष्वरिभिरहिंस्यमानः हिंसानिमित्तकविकारशून्य एव सन् विशेषेण **ववृधे** अभिवृद्धोऽभूदित्यर्थः । सप्तशिवासु मातृषु शय इत्युक्तं तत्र विशेषमाह– **अनुयदिति** ।। **पूर्वा** अनादिसिद्धाः **सनाजुवः** सदा विद्यमाना नित्या इति यावत् । ऋगाद्यपौरुषेयरूपा

---

**१०५. मध्वस्य इति पदं 'ख'पाठे अधिकम्**

वाचः यदयं मध्व **अरुहत्** अधिष्ठितवान् विचारयामास **तत् अनु** उपक्रमाद्यानुगुण्येनैव **नव्यशीषु** नूतनासु अन्यथारचनरूपोत्पत्ति-मतीषु अत एवावरासु न तु स्वतो[१०६] नीचासु । भारतादीनां वेदोत्तममतायाः स्थितत्वात् । इतिहासपुराणानां पञ्चरात्राख्यासु पौरुषेयवाक्सु तु **निधावते** नितरां धावति विस्पष्टार्थत्वादिति भावः । यद्यपि भगवदनुग्रहादनादितः स्वतःसिद्धसर्वज्ञस्य भगवतो मुनेः शास्त्र-विचारः सर्वत्रैकरूपैव । तथापि पौरुषेयापौरुषेयग्रन्थेषु विभागेनोक्तिः प्रत्येतृणां आपतप्रतीतिमपेक्ष्यैवेति ध्येयम् ।।

## अन्तिमं मङ्गलाचरणम्

### भाष्यम्

**पूर्णानन्दगुणोदारधाम्ने नित्याय वेधसे ।**
**अमन्दानन्दसान्द्राय प्रेयसे विष्णवे नमः ।।**

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महैतरेयोपनिषद्भाष्ये तृतीयारण्यके द्वितीयोऽध्यायः ।।**

**।। इति श्रीमन्महैतरेयोपनिषद्भाष्यम् ।।**

### भावप्रदीपः

भगवत्स्वरूपप्रतिपादनेनैव ग्रन्थोपसंहारः समुचित इत्याशयवान् पुनर्भगवन्तं स्तुत्वा प्रणमति– **पूर्णेति** ।। **पूर्णाः** प्रत्येकमनवधिकाः अगण्याः संख्यातुमशक्या ये गुणास्तेषा**मुदारधाम्ने** महाश्रयाय **वेधसे** जगत्कर्त्रे, **प्रेयसे** अस्मदतिप्रियाय ।।

---

१०६. स्वरूपतो इति 'ख'पाठः

अगणितगुणभूषो नित्यनिर्धूतदोषो
निखिलनिगमगेयः सर्वशब्दाभिधेयः ।
हरिरमितमतीड्यः सर्वदेवैकराड्यः
स भवतु मम तुष्टो वाक्प्रसूनस्रजेष्टः ।।

कृष्णः कीटमधात्कथं नृपमिति व्यग्रां मतिं मा कृथाः
त्वं त्वामेव निदर्शनं विकलयन्नात्मन् समाधिं भज ।
क त्वं कामरबुद्ध्यगम्यभगवत्पादीयवाग्व्याकृतिः
चित्रं ब्रूहि किमस्त्यतः परमरे कृष्णानुकम्पामृते ।।

महाभूतिमहाभाष्यव्याख्ययाऽजनियच्छुभम् ।
तत्सर्वं सत्यसङ्कल्पः प्राप्नोतु गुरुराट् किटिः ।।

इयं भावप्रदीपाख्या व्याख्या व्याख्योपकारिणी ।
भूयात्सतां भगवता कृता क्रोडार्यसेविता ।।

**इति**

**श्रीमदान्दतीर्थभगवदाचार्यविरचितश्रीमन्महैतरेयोपनिषद्भाष्यभावप्रदीपे श्रीमद्भास्करी वेङ्कटवराहाचार्यपूज्यपादाराधकेन भगवन्नाम्ना विरचिते तृतीयारण्यके द्वितीयोऽध्यायः**

**।। श्रीकृष्णार्पणमस्तु ।।**

## श्लोकार्धानुक्रमणिका

### अ

अगणितगुणभूषो नित्यनिर्धूतदोषो
निखिलनिगमगेयः सर्वशब्दाभिधेयः ।
हरिरमितमतीड्यः सर्वदेवैकराड्यः
स भवतु मम तुष्टो वाक्प्रसूनस्रजेष्टः ।।

कृष्णः कीटमधात्कथं नृपमिति व्यग्रां मतिं मा कृथाः
त्वं त्वामेव निदर्शनं विकलयन्नात्मन् समाधिं भज ।
क्व त्वं क्वामरबुद्ध्यगम्यभगवत्पादीयवाग्व्याकृतिः
चित्रं ब्रूहि किमस्त्यतः परमरे कृष्णानुकम्पामृते ।।

महाभूतिमहाभाष्यव्याख्ययाऽजनियच्छुभम् ।
तत्सर्वं सत्यसङ्कल्पः प्राप्नोतु गुरुराट् किटिः ।।

इयं भावप्रदीपाख्या व्याख्या व्याख्योपकारिणी ।
भूयात्सतां भगवता कृता क्रोडार्यसेविता ।।

**इति**

**श्रीमदानन्दतीर्थभगवदाचार्यविरचितश्रीमन्महैतरेयोपनिषद्भाष्यभावप्रदीपे श्रीमद्भास्करी वेङ्कटवराहाचार्यपूज्यपादाराधकेन भगवन्नाम्ना विरचिते तृतीयारण्यके द्वितीयोऽध्यायः**

**।। श्रीकृष्णार्पणमस्तु ।।**

## श्लोकार्धानुक्रमणिका

### अ

अगणितगुणभूषो नित्यनिर्धूतदोषो
निखिलनिगमगेयः सर्वशब्दाभिधेयः ।
हरिरमितमतीड्यः सर्वदेवैकराड्यः
स भवतु मम तुष्टो वाक्प्रसूनस्रजेष्टः ।।

कृष्णः कीटमधात्कथं नृपमिति व्यग्रां मतिं मा कृथाः
त्वं त्वामेव निदर्शनं विकलयन्नात्मन् समाधिं भज ।
क्व त्वं क्वामरबुद्ध्यगम्यभगवत्पादीयवाग्व्याकृतिः
चित्रं ब्रूहि किमस्त्यतः परमरे कृष्णानुकम्पामृते ।।

महाभूतिमहाभाष्यव्याख्ययाऽजनियच्छुभम् ।
तत्सर्वं सत्यसङ्कल्पः प्राप्नोतु गुरुराट् किटिः ।।

इयं भावप्रदीपाख्या व्याख्या व्याख्योपकारिणी ।
भूयात्सतां भगवता कृता क्रोडार्यसेविता ।।

इति
श्रीमदानन्दतीर्थभगवदाचार्यविरचितश्रीमन्महैतरेयोपनिषद्भाष्यभावप्रदीपे
श्रीमद्भास्करी वेङ्कटवराहाचार्यपूज्यपादाराधकेन भगवन्नाम्ना
विरचिते तृतीयारण्यके द्वितीयोऽध्यायः

।। श्रीकृष्णार्पणमस्तु ।।

# श्लोकार्धानुक्रमणिका

## अ

## इ

## ऐ



## ओ



## क

ब

म

## य

## र



## ल



## व

## श

## ष



## स

## परिशिष्टम्–२

# भाष्योदहृतोपनिषन्मन्त्रसूची

# परिशिष्टम्–३

## अकारादिक्रमेण भाष्योदहृतऋङ्मन्त्रसूची

# परिशिष्टम्–४

## अकारादिक्रमेण भाष्योदाहृतब्रह्मसूत्रसूची

## परिशिष्टम्–५

## अकारादिक्रमेण भावप्रदीपोदाहृतोपनिषन्मन्त्रसूची

## परिशिष्टम्–६

# अकारादिक्रमेण भावप्रदीपोदाहृतऋङ्मन्त्रसूची

| मन्त्रः | आकरः | पत्रसंख्या |
|---|---|---|
| **अ** | | |
| अदितिर्द्यौरदितिरन्तरिक्षं | ऋक्.सं. १-१९-१० | ६५२ |
| अन्तिषद्भूतुमामव | ऋक्.सं. १०-३१-२ | ४८१ |
| अपश्यं गोपां | ऋक्.सं १-१६४-३१ | ६१ |
| अपाङ् प्राङेति | ऋक्.सं १-१६४-३८ | १३७ |
| अप्रक्षितं वसु | ऋक्.सं १-५५-८ | ६३ |
| अविन्दन् ते अतिहितं | ऋक्.सं.१-१६५-३ | ६५७ |
| अहं कक्षीवा ऋषि | ऋक्.सं.१-१६८-३ | २१७ |
| अहं कुत्समार्जुनेयं | ऋक्.सं.१-१६८-५ | २१७ |
| अहं मनुरभवं | ऋक्.सं. १-२३-१ | २१९,५५१ |
| **आ** | | |
| आ तेन यातं | ऋक्.सं. १०-३१-१२ | ४८१ |
| आदिन्मातृरा विशद्या | ब.सू.१०-३१-१० | ७६८ |
| आवृतासोवतासो न | ऋक्.सं १-५५-८ | ६३ |
| **इ** | | |
| इन्द्रं कुत्सो वृत्रहणं | ऋक्.सं.१-२३-१ | १०७ |
| इन्द्रवायू इमे सुता | ऋक्.सं. १-२-४ | ४०५ |
| इन्द्राग्नी युवं सुनः स्वस्तये | ऋक्.सं.१-२३-१ | १८४ |

## उ



## ओ



## क



## त



## न

प



ब



म



यं

## परिशिष्टम्–७

## अकारादिक्रमेण भावप्रदीपोदाहृतप्रमाणवचनसूची

## आ



## इ

## परिशिष्टम्–७

## अकारादिक्रमेण भावप्रदीपोदाहृतप्रमाणवचनसूची

| प्रमाणम् | आकरः | पुटसंख्या |
|---|---|---|
| **अ** | | |
| अकारेणाधिकं प्रोक्तं | छान्दो.भा.१-१-१ | १६९ |
| अज्ञानं तु निशा प्रोक्ता | भाग.ता. ३-१०-१० | ४६७ |
| अतो दोषातिदूरत्वात् | अनु.१-४-७ | १८९ |
| अतो विष्ण्वात्मका | भाग.ता. ६-१-१० | १६० |
| अदेहं भूतदेहं वा | बृ.भा.३-५-४(११५-११७पु) | ७०२ |
| अद्भुतत्वं हरेर्बूयात् | ऋक्.भा.२-५(१६३पु) | १७१ |
| अधिभूतं निविष्टश्च | महा.मोक्ष.प. १२८-३८ | १९७ |
| अध्यायान्ते द्विरुक्तिः | ऐत.भा. २-२-४ | १३९ |
| अनात्मन्यात्मशब्दस्तु | ब्र.सू.भा. १-१६ | २९२ |
| अन्यत्वात्सर्वजीवेभ्यः | ऐत.भा.२.३.६ (३८४.पु) | ३९१ |
| अभेदज्ञाः प्रकृत्यापि | बृ.भा.३-५-४(११५-११७.पु) | ७०२ |
| अमृतह्रदेषु केचिच्च | बह.भा. ३-४(६१८पु) | २३८ |
| अमोघः पुण्डरीकाक्षः | वि.स.ना.२५ | १४२ |
| अयनं तस्य ताः | ब्र.सू.भा. १-१-२० | १४९ |
| अर्वाक्तु द्वादशावृत्तेः | ऋक्.भा | १३ |
| अल्पतेजस्तथैवाल्पं | बृ.भा.६-६-४ | ५९९ |
| अल्पाक्षरमसन्दिग्धं | ब्र.सू.भा. १-१-१ | २५४ |
| अवधारणार्थं सर्वस्य | ब्र.सू.भा. १-४-२९ | १३८ |
| अविद्धो विद्धवद्विष्णुः | अनु. ३-४-१५० | ३८९ |

## त

## द



## ध



## न

# परिशिष्टम्–८

## अकारादिक्रमेण भावप्रदीपोदाहृतब्रह्मसूत्रसूची

# परिशिष्टम्–१

## अकारादिक्रमेण भावप्रदीपोदाहृतपाणिनीयसूत्रसूची

## परिशिष्टम्–९

## अकारादिक्रमेण भावप्रदीपोदाहृतपाणिनीयसूत्रसूची

# परिशिष्टभागः– १०

## परामृष्टग्रन्थसूची

**१. श्रीमद्भागवतम् (मूलमात्रम्)**

वि. पि.एस्.शेषगिरि आचार्यः पूर्णप्रज्ञसंशोधनमन्दिरम्

पूर्णप्रज्ञविद्यापीठम् बेङ्गळूरु-२८. २००९

**२. श्रीमद्विष्णुतत्त्वविनिर्णयः**

श्रीमन्मध्वराद्धान्तसंवर्धिनीसभा

श्रीमन्मध्वराद्धान्तसंवर्धिनीसभासम्पादकमण्डळिः ३५-ए,

गङ्गाधरेश्वरकोयिल् मद्रपुरी. १९६३

**३. वैयाकरणसिद्धान्तकौमुदी (मूलमात्रम्)**

चौखम्भा पब्लिशर्श वाराणसी श्रीकृष्णस्वरूपकाव्यतीर्थाः २००४

२०१०

**४. तैत्तरीयोपनिषद्भाष्यम् (षट्टिप्पणीयुतम्)**

पं. वेङ्कटेशाचार्यः बी.आर् विश्वमध्वमहापरिषत् उत्तरादिमठः बेङ्गळूरु-४

**५. बृहदारण्यकोपनिषद्भाष्यम्**

डा.ए.वि.नागसम्पिगे, वि.आर्.वि.नागसम्पिगे

पूर्णप्रज्ञसंशोधनमन्दिरम् पूर्णप्रज्ञविद्यापीठम् बेङ्गळूरु-२८ २००६

**६. ऐतरेयोपनिषद्भाष्यम्**

डा.व्यासनकेरे प्रभञ्जनाचार्यः आनन्दतीर्थप्रतिष्ठानम् बेङ्गळूरु-२८

१९९७

**७. ऐतरेयोपनिषद्भाष्यम्**

वि. पी.वी.उपाध्यायः पूर्णप्रज्ञसंशोधनमन्दिरम् पूर्णप्रज्ञविद्यापीठम् बेङ्गळूरु-२८. २०१०

**८. छान्दोग्योपनिषद्भाष्यम्**

वि. रङ्गनाथ कट्टिः, वि. शङ्करनारायण अडिगः
पूर्णप्रज्ञसंशोधनमन्दिरम् पूर्णप्रज्ञविद्यापीठम् बेङ्गळूरु-२८, २००४

**९. श्रीमद्ब्रह्मसूत्रभाष्यम् (भागः-१)**

वि. शङ्करनारायण अडिगः पूर्णप्रज्ञसंशोधनमन्दिरम् पूर्णप्रज्ञविद्यापीठम् बेङ्गळूरु-२८, २००८

**१०. श्रीमद्ब्रह्मसूत्रभाष्यम् (भागः-२)**

वि. रङ्गनाथ कट्टिः पूर्णप्रज्ञसंशोधनमन्दिरम् पूर्णप्रज्ञविद्यापीठम् बेङ्गळूरु-२८. २००८

**११. श्रीमद्ब्रह्मसूत्रभाष्यम् (भागः-३)**

डा. ए.वि. नागसम्पिगे पूर्णप्रज्ञसंशोधनमन्दिरम् पूर्णप्रज्ञविद्यापीठम् बेङ्गळूरु-२८. २००९

**१२. श्रीमद्ब्रह्मसूत्रभाष्यम् (भागः-४)**

वि. पि.वि.उपाध्यायः पूर्णप्रज्ञसंशोधनमन्दिरम् पूर्णप्रज्ञविद्यापीठम् बेङ्गळूरु-२८. २००९

**१३. श्रीमद्ब्रह्मसूत्रभाष्यम् (भागः-१-४)**

वि. आर्.एस्.पञ्चमुखी विद्यारत्न आर्.एस्.पञ्चमुखी इण्डोलोजिकल् रीसर्च सेन्टर्. १९९४

**१४. सर्वमूलग्रन्थाः(भागः-३)**

प्रो.कृ.त. पाण्डुरङ्गी द्वैतवेदान्ताध्ययनसंशोधनप्रतिष्ठानम् बेङ्गळूरु-०४ २०१०

**१५. श्रीमहाभारततात्पर्यनिर्णयः**

सत्यध्यानविद्यापीठम् मुम्बई. २००२

**१६. श्रीमहाभारततात्पर्यनिर्णयः**

डा.व्यासनकेरे प्रभञ्जनाचार्यः श्रीव्यासमध्वसेवाप्रतिष्ठानम् बेङ्गळूरु-१९ १९९८

**१७. उपनिषच्चन्द्रिका(प्रथमो मयूखः)**

बन्नञ्जे गोविन्दाचार्यः ईशावास्यप्रतिष्ठानम् उडुपि २००५

**१८. सस्वरवेदमन्त्राः**

स्वामि चिदानन्द श्रीरामकृष्णाश्रम मैसूरु-२०. २००१

**१९. सर्वमूलग्रन्थाः (सम्पुटम्-१)**

बन्नञ्जे गोविन्दाचार्यः अखिलभारतमध्वमहामण्डलम् उडुपि. १९६९

**२०. सुमध्वविजयः (भागः-१,२)**

ए.बि. शामाचार्यः, एस्.आर्.पाण्डुरङ्गी
द्वैतवेदान्ताध्ययनसंशोधनप्रतिष्ठानम् बेङ्गळूरु-०४. २०००

**२१. काठकोपनिषाष्यम्**

वादिराजाचार्यः करणम् विश्वमध्वमहापरिषत् उत्तरादिमठः बेङ्गळूरु-४

२२. ऋग्वेदसंहिता
चौखम्बा प्रकाशनम् वाराणसि

२३. उपनिषद्भाष्यम्
प्रो.डि.प्रह्लादाचार्यः पूर्णप्रज्ञसंशोधनमन्दिरम् पूर्णप्रज्ञविद्यापीठम् बेङ्गळूरु-२८. १९९७

२४. ईशावास्योपनिषद्भाष्यम् (त्रयोदशव्याख्याविभूषितम्)
पं. वादिराजाचार्यः करणम् विश्वमध्वमहापरिषत् उत्तरादिमठः बेङ्गळूरु-४ २००६

२५. श्रीमन्न्यायसुधा(भागः-१-६)
विश्वमध्वमहापरिषत् उत्तरादिमठः बेङ्गळूरु-४

२६.षट्प्रश्नोपनिषत्
पं. वादिराजाचार्यः करणम् विश्वमध्वमहापरिषत् उत्तरादिमठः बेङ्गळूरु-४ २००५

२७. तलवकारोपनिषद्भाष्यम्
पं.बि.आर्.वेङ्कटेशाचार्यः विश्वमध्वमहापरिषत् उत्तरादिमठः बेङ्गळूरु-४ २००७

२८. ऐतरेयोपनिषत् (व्याख्याचतुष्टयोपेतम्)
एम्.ए.लक्ष्मीताताचार्यः संस्कृतसंशोधनासंसत् मेलुकोटे-३१ १९९७

२९. माण्डूकोपनिषाष्यम्
पं. कृष्णाचार्यः उपाध्यायः विश्वमध्वमहापरिषत् उत्तरादिमठः बेङ्गळूरु-४ १९९८

